# THE RAM CHARITA (BHATTIKAVYA.)

OF

# BHATTI

WITH

## JAYAMANGALA'S COMMENTARY.



EDITED BY

KAVIRATAN PANDIT SHIV DUTTA,



REVISED BY

LEARNED SHASHTRIS OF THE PRESS,



**PRINTED & PUBLISHED**

BY

KHEMRAJ SHRIKRISHNADASS,

AT THEIR SHRI VENKATESHWAR STEAM PRESS.

7TH KHETWADI KHAMBATA LANE

Bombay.

1928.

॥ श्रीः ॥

वैयाकरणशिरोमणिश्रीभट्टिमहाकविप्रणीतं

# रामचरितम् ।

## ( भट्टिकाव्यम् )

श्रीजयमङ्गलाविरचितया जयमङ्गलया
व्याख्यया समवेतम् ।

पण्डितप्रवरश्रीदेवीसहायचरणोपासनया-
ऽधीतविद्येन शिवदत्तकविरत्नेन कृतया
टिप्पण्या परिष्कृतम् ।

तदेव

शोधनकार्याधिकृतैः शास्त्रिप्रवरैः संशोध्य
श्रीक्षेमराज-श्रीकृष्णदासेन
मुम्बापुर्यां
स्वीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालये
समुद्रय प्रकाशितम् ।

वैक्रमाब्दाः १९८४,
खिस्ताब्दाः १९२८.

॥ श्रीः ॥

# प्रस्तावः ।



यद्यपि 'काव्यालापांश्च वर्जयेत्' इत्याद्युक्त्या काव्यं न कदाऽप्याराधनीयं प्रतिपद्यते, तथाऽपि 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥' इत्याद्युक्त्या लोकोत्तरफलकं तत् कथं परिहेयतया तादृशं शास्त्रमनुशास्तीति विमर्शनीयं साम्प्रतं विवेकिभिर्महद्भिः । अथैवं विमर्शने व्यतिकरावसरे इदमेव निश्चीयते यत् निर्गुणमुद्दिश्य निषेध-शास्त्रं सगुणमुद्दिश्य पुनः प्रशंसयोपादेयताप्रत्यायकं शास्त्रम् । तत्राश्लीलत्वा-दिभिः काव्यस्य सदोषत्वं, तदन्यथा सगुणत्वं च । यद्वा पामरजनानां गुणारो-पणेन श्लाघने काव्यस्य दुष्टत्वं परमेश्वरचरितवर्णने पुनः सगुणत्वं स्यात् इत्येतत् सर्वं विचार्य परोपकारैकप्रवणस्तत्रभवान् महावैयाकरणः श्रीभट्टि-कविर्व्याकरणशास्त्रोपदेश्यार्थसमर्पणपुरःसरम्मर्यादापुरुषोत्तमस्य भगवतः श्रीरामचन्द्रस्य चरितमुपनिबबन्धेति विदितचरं विदुषाम् । तदिदं प्रकृतं महा-काव्यं समस्तशास्त्रान्तरावगमोपकारकं व्याकरणशास्त्राध्ययनफलं समर्प-यन् समस्तशास्त्राधिकारितामुपनीय परमेश्वरचरणानुरागौपयिकतानिदर्शन-च्छलेन परमश्रेयःसाधनरूपतामपि समर्थयते । एवं चेदं समस्तपुरुषार्थसाध-कमिदं **भट्टिकाव्या**परपर्यायं **रामचरितं** काव्यमिति सिद्धम् । अथ यद्यपि प्रायः प्रसादगुणशाल्येवेदम्, तथाऽपि विषयदुरवबोधतया व्याख्यासापेक्षमिति करुणापारावारीणैर्विबुधैरनेकैर्व्याख्याय स्फुटार्थतां नीतम् । तासु च यादृशी पण्डितमणिना जयमङ्गलेन प्रणीता व्याख्याऽन्तेवासिनां झटिति हिताय प्रस्तुता न तादृशी काचिदप्यन्या इति विचार्य तया समवेतमिदं विहितम् । तत्र च यानि सूत्राणि न सर्वात्मनोपन्यस्तानि यानि वा कालमहिम्ना विपरीतात्मतयोपलब्धानि तथैवान्यान्यपि दुरुद्धरशल्यायितानि यानि कानि चिन्मूलटीकासंवलितानि तानि सर्वाणि यथामति परिष्कृत्य सर्वेषां विदुषां छात्राणां चोपकृतये स्थलविशेषे टिप्पण्या प्रसाधितम् ।

एवं सर्वात्मना टिप्पण्या व्याख्यया च परिष्कृत्येदमनवद्यं भट्टिकाव्यापराभिधं रामचरितं नाम महाकाव्यं समस्तशास्त्रोद्धारविधौ. बद्धपरिकरेभ्यो धर्म्मरत्नाद्यनेकबिरुदावलिमहितेभ्यः श्रीक्षेमराजश्रीकृष्णदासश्रेष्ठिभ्यः समर्पितम्। तैश्चैतैर्दानमानाभ्यां संतोषितः सधन्यवादमितःप्रभृति एतत्प्रकाशनादिसर्वाधिकारभारमपि तेभ्य एव समर्प्य विरमामि। यद्यपि अस्य सर्वथोपयोगिताविधौ परं यतितम्, अथाऽपि कथमिवेदं संवृत्तमित्यत्र महान्त एव प्रमाणम्। उक्तं हि–आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्। बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ इति शम्।

इति सहृदयानुचरस्य.

शिवदत्तस्य ।



अथ

# रामचरित ( भट्टिकाव्य ) स्य

## श्लोकानुक्रमणिका ।

समाप्तेयं रामचरित ( भट्टिकाव्य ) स्य श्लोकानुक्रमणिका ।



श्रीहरिः ।

महावैयाकरणश्रीभट्टिकविप्रणीतं

# भट्टिकाव्यम्

अथवा—

# श्रीरामचरितं काव्यम् ।



श्रीजयमङ्गलोल्लासितया जयमङ्गलया व्याख्यया समुल्लासितम् ।

## प्रथमः सर्गः ।

प्रणिपत्य सकलवेदिनमतिदुस्तरभट्टिकाव्यसलिलनिधेः[1] ।
जयमङ्गलेति नाम्ना नौकेव विरच्यते टीका ॥ १ ॥

लक्ष्यं[2] लक्षणं[3] चोभयमेकत्र विदुषः प्रदर्शयितुं श्रीस्वामिसूनुः कविर्भट्टिनामा रामकथाश्रयं श्रीरामचरितं नाम महाकाव्यं चकार । तस्य चोपनिबन्धनं कविना द्विधा कृतम् । एकं लक्षणसूचकं प्रकीर्णाधिकारप्रसन्नतिङन्तकाण्डैश्चतुर्भिः । द्वितीयं लक्ष्यसूचकं रामसंभवादिभिर्द्वाविंशत्या सर्गैः । तत्र लक्षणं द्विविधम् । शब्दलक्षणं काव्यलक्षणं च । तत्र प्रथमस्य त्रीणि प्रकीर्णाधिकारतिङन्तकाण्डानि, द्वितीयस्य त्वेकं प्रसन्नकाण्डम् । यत्रोच्चावचेन बहूनां लक्षणानां प्रकरणं तत्प्रकीर्णकाण्डं, तदेव चात्र प्रथममुक्तं तस्य व्यापित्वात्; 'उत्तरत्रापि द्रष्टव्यम्' इति प्रदर्शनार्थम् । अत्र यद्यप्यादौ कविना देवतानमस्कारो न कृतस्तथापीष्टदेवतासंकीर्तनमपि विघ्नोपशमनहेतुर्भवतीति मन्यमान आह—

अभून्नृपो विबुधसखः परन्तपः श्रुतान्वितो दशरथ इत्युदाहृतः ।
गुणैर्वरं भुवनहितच्छलेन यं सनातनः पितरमुपागमत् स्वयम् ॥ १ ॥

---

१ अतिदुस्तरो यो भट्टिकाव्यं भट्टिप्रणीतं रामचरितं काव्यमेव सलिलनिधिस्तस्येति रूपकम्, नतूपमा; अतिदुस्तरत्वस्य तथैवोपपत्तेः । २ लक्ष्यमुदाहरणम् । ३ लक्ष्यते इतरव्यावृत्ततया ज्ञायत अनेनेति लक्षणं सूत्रम् । ४ यं पितरमित्यनेनास्य (पातीति पितेति) पितृत्वं स्वाभाविकमिति सूचितम् । ५ इदं तस्य गुणगौरवाहितं पुत्रात्मना भवने स्पृहित्वे हेतुरिति सूचयति ।

अभूदित्यादि—तस्य हीष्टदेवता सनातनो विष्णुः स चादौ कीर्तितः। तत्प्रतिबन्धना चेयं कथेति प्रबन्धेनैवात्र संकीर्तनं रामायणवत्। तत्र विष्णुना यस्मिन्काले जगत्कार्यवशादवतारः कृतस्तदेव प्रथमं दर्शयति। अभूदिति भूतसामान्ये लुङ् भूत इत्यर्थः; अन्यथा राज्ञश्चिरातीतत्वात् कवेः परोक्षत्वाच्च लिट् स्यात् 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २। ४। ७७।' इति सिचो लुक्। 'भूसुवोस्तिङि। ७। ३। ८८।' इति गुणप्रतिषेधः॥ 'नयतेर्डिच्च' इति नयतेरौणादिक ऋन्। नरो मनुष्यास्तान्नॄन्पातीति। 'अतोऽनुपसर्गे कः। ३। २। ३।' 'आतो लोप इटि च। ६। ४। ६४।' नृपो राजा। अत्यन्तधर्मविजयित्वाद्देवराजस्य मित्रमासीदित्याह—विबुधसख इति। विबुध्यन्त इति विबुधा देवास्तेषामपि प्रधानत्वात्। तत्रेगुपधलक्षणः कः। सामान्यशब्दोऽपि देवेषु वर्तमानोऽप्यर्थवशाच्छक्रे प्रयुक्तस्तस्य सखेति। 'राजाऽहः सखिभ्यष्टच्। ५। ४। ९१।' विबुधसखः। अनेन धर्मविजयित्वं दर्शयति, विबुधसखत्वस्य धर्मकार्यत्वात्। सुरलोकविजयिनश्च ये राजानस्तेषां धर्मविजयी प्रधानम्। परे शत्रवस्त्रिविधाः—उच्छेदनीयोपपीडनीयकर्षणीयाः। तत्र ये उपपीडनीयकर्षणीयास्तान्परांस्तापयतीति परन्तपः। 'द्विषत्परयोस्तापेः। ३। २। ३९।' इति खच्। 'खचि ह्रस्वः। ६। ४। ९४।'। 'अरुर्द्विषदजन्तस्य मुम्। ६। ३। ६७।' इति मुम्। नृप इत्यनेन स्वमण्डले वृत्तिराख्याता। परन्तप इति परमण्डले। श्रूयन्त इति श्रुतानि वेदादीनि तैरन्वितः सम्बद्धः, ग्रन्थतोऽर्थतश्च गृहीतत्वात्। दशरथ इत्यनेन नाम्नोदाहृतो लोके गीतः। गुण्यन्तेऽभ्यस्यन्त इति गुणाः। 'गुण आमन्त्रणे।' इति चौरादिकोऽदन्तः। तस्मात् 'अकर्तरि च कारके संज्ञायाम्। ३। ३। १९।' इति घञ्, येषाम् 'एरजण्यन्तानाम्' इति दर्शनम्, येषां तु तन्नास्ति तेषामरच्; स्वरं प्रति विवादो न रूपं प्रति। गुणैरभिरामत्वादिभिर्वरं श्रेष्ठं यं नृपं पितरमुपागमादिति सम्बन्धः। व्रियत इति वरः। 'ग्रहवृदृनिश्चिगमश्च। ३। ३। ५८' इति कर्मण्यप्। केन हेतुनोपगतवान् तं पितरं सनातन इत्यत आह—

---

१ कवेः। २ स च इष्टदेवो विष्णुश्च। ३ 'अकारो वासुदेवः स्यात्' इत्यकारोपन्यासात्। ४ न च तथा प्रथमं तत्कीर्तनमेव कृतम्, किंतु स सनातनो विष्णुरेव प्रतिबध्यते प्रधानत्वेन प्रस्तूयते, अनया, अत्र वेति तथोक्ता। ५ भट्टिप्रणीतायां रामचरितापरपर्यायभूतायां कथायाम्। ६ न तु भूतविशेषे परोक्षे, तस्यापि ततोऽनतिरिच्यमानत्वात्।

भुवनहितच्छलेनेति । भवन्त्युत्पद्यन्त इति भुवनानि । भूर्भुवःस्वरिति त्रय लोकाः । 'रजः क्युन्' इत्यनुवर्तमाने 'भूसूधूसर्जिभ्यश्छन्दसि' इत्यौणादिकः क्युन्, बहुलवचनाद्भाषायामपि भवति, तेभ्यो हिता भुवनहिता विष्णोर्देशवताराः, इह तु रामो द्रष्टव्यः । तस्य च्छलेन व्याजेन भुवनहितच्छलेन । इदानीं रावणादिकण्टकोद्धरणात् । तथा चोक्तम्—'परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥' इति । सनेत्यव्ययं सदार्थे वर्तते । सना भवतीति । 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च । ४ । ३ । २३ ।' इति ट्युट्युलौ तुट् च । सनातनो विष्णुरुपागमदुपजगाम । लृदित्वादङ् । सत्स्वन्येषु राजसु गुणैर्वरत्वाद्यं पितरं जनकमंगीकृतवान्सोऽभूदिति योज्यम् । स्वयमित्यात्मना न कर्मणाऽन्येन वा प्रेरित इत्यर्थः ॥ १ ॥

**सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनपारीत् सममंस्त बन्धून् ।**
**व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥ २ ॥**

सोऽध्यैष्टेत्यादि—क्षत्रियस्य धर्मः अध्ययनं, यजनं, दानम्, शस्त्राजीवो, भूतरक्षणं च । तत्र अन्तिममुभयं नृप इत्यनेनोक्तम् । भूतरक्षणे शस्त्रमङ्गम् । स दशरथनामा नृपो वेदानध्यैष्ट—अधीतवानिति स्वाध्याय उक्तः । वेदयन्ति ज्ञापयन्ति धर्माधर्माविति वेदाः सामादयः । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।३।१।१३४।' इत्यच् । इङोऽधिपूर्वस्य 'विभाषा लुङ्लृङोः ।२।४।५०।' इति गाङ् । विभाषयेति गाङभावपक्षे रूपम् । अजादित्वादाट् । 'आटश्च । ६।१।९०।' इति वृद्धिः । ङित्त्वादात्मनेपदम् । 'आदेशप्रत्यययोः ।८।३।५९।' इति षत्वं, ष्टुत्वं च । त्रिदशान्देवानयष्टाग्निष्टोमादिभिः पूजितवान् । यजनमुक्तम् । यजेः 'स्वरितञितः कर्त्रभिप्राये क्रियाफले ।१।३।७२।' इति तङ् । अनिक्समीपत्वाद्धलः 'लिङ्सिचावात्मनेपदेषु १।२।११।' इति कित्त्वं न भवति । व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः । ८ । २ । ३६ ।' इति षत्वम् । 'झलो झलि ।८।२।२६।' इति सिचो लोपः ॥ पितॄनपारीदाप्यायितवान् । पितॄनुद्दिश्य यजनम् 'पॄ पालनपूरणयोः' इत्यस्मात्पूरणार्थाल्लुङि रूपम् । 'सिचि वृद्धिः परस्मैपदेषु ।७।२।१।' 'इट ईटि ।८।२।२८।' इति सिचो लोपः । अथवा 'पितॄनतार्प्सीत्' इति पाठः । 'तृप प्रीणने ।' इत्यस्माल्लुङि 'स्पृशमृशकृषतृपदृपां

---

१ अत्र रुचिरं वृत्तम् 'जभौ सजौ गिति रुचिरा चतुर्ग्रहैः' इति लक्षणात् ।
२ आदिपदेनर्ग्यजुरथर्वणां ग्रहणम् ।

च्लेः सिज्वक्तव्यः' इति च्लेः सिचि 'अनुदात्तस्य च यत्रोदात्तलोपः । ६।१ ५९। ' इत्यमभावपक्षे रूपम् । पितॄंस्तार्पितवानित्यर्थः । सममंस्त बन्धून् मातृपित्रादिज्ञातीन् सम्मतवान्, सदा दानमानादिभिः पूजितवानित्यर्थः । मन्यतेरनुदात्तत्वात्तङ्, इट्प्रतिषेधश्च । येषां सिच इकार उच्चारणार्थस्तेषाम् 'हनः सिच् ।१।२।१४।' इति कित्करणज्ञापकान्नलोपाभावः । येषां तु इकार इत्तेषामिदित्त्वान्नकारलोपाभावः । आभ्यन्तरं शत्रुमजित्वा कथं परन्तप इत्याह-व्यजेष्ट षड्वर्गमिति । कामक्रोधलोभमोहमदमात्सर्याणां षण्णां वर्गः षड्वर्गः । तमभिभूतवान् । विपूर्वस्य जयतेः 'विपराभ्यां जेः ।१।३।१९।' इति तङ् अरंस्त नीतौ सामादिषु सन्ध्यादिषु च रतः, नीतिमानित्यर्थः । समूलघातं न्यवधीत् समूलान्निःशेषानरीञ्शत्रून्निहतवान् । उच्छेदनीया ये शत्रवस्तेष्विदं विधानम् । समूलोपपदाद्धन्तेः 'समूलाकृतजीवेषु हन्कृञ्ग्रहः ।३।४।३६।' इति णमुल् । 'हो हन्तेर्ञ्णिन्नेषु । ७ । ३ । ५४ ।' इति घत्वत्वं, वृद्धिः । 'हनस्तः ।७।३।३२।' इति तत्वम् । 'कषादिषु यथाविध्यनुप्रयोगः ।३।४।४६।' इति यथाविध्यनुप्रयोगः । अनुप्रयोगे 'लुङि च ।२।४।४३।' इति वधादेशः । तस्याकारान्तत्वादुपदेशेऽनेकान्त्वादिण्णिषेधो न भवति । अतो लोपे कृते तस्य स्थानिवद्भावात् 'अतो हलादेर्लघोः ।७।२।७।' इति विभाषावृद्धिर्न भवति ॥ २ ॥

वसूनि तोयं घनवद्[3] व्यकारीत् सहाऽऽसनं गोत्रभिदाऽध्यवात्सीत् ।
न त्र्यम्बकादन्यमुपास्थिताऽसौ यशांसि सर्वेषुभृतां निरास्थत् ॥३॥

वसूनित्यादि—वसूनि द्रव्याणि बन्धुव्यतिरेकेण बालादिभ्यो व्यकारीद्दत्तवान्, विक्षिप्तवानिति वा । किरतेर्लुङि रूपम् । कः किमिवेत्यपेक्षायामाह—तोयं घनवदिति । तोयमुदकम् । घनो मेघः फलनिरपेक्षतया यथा विकिरति तद्वत् । एवं सम्यक्पालनादिन्द्रेण तुल्यत्वमाह—सहासनं गोत्रभिदाऽध्यवात्सीदिति । गोत्रभिदन्द्रेण सहासनमध्यवात्सीदध्युषितवान् । अनेनात्यन्तध-

१ लुब्धान् दानेन, वृद्धान् महतो वा मानेन, दीनान् आश्रयणेन चेति यथायोगं सम्भाव्यम् । २ इदमारभ्य प्रायः समाप्त्यन्तमिन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः, 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति, 'उपेन्द्रवज्रा जतजास्ततो गौ' इति, 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ।' इति तल्लक्षणात् । ३ मेघवदित्यर्थः । इदं प्रत्युपकारापेक्षाशून्यत्वं सूचयति । ४ त्र्यम्बकमेवोपास्थितेति भावः । अनेन सनातनस्य विष्णोराराधनमन्तरेव स्वापेक्षयाऽधिकगुणत्वमपेक्ष्य पितृत्वप्रख्यापनं सूचितम् ।

मेविजयित्वस्य फलं दर्शयति । 'वस निवासे ।' इत्यस्य रूपम् । 'वसिः सम्प्रसारणम्' इति वचनादिडभावः । 'अस्तिसिचऽऽपृक्ते ।७।३।९६।' इति ईट् 'वदव्रजहलन्तस्याचः ।७।२।३।' इति वृद्धिः । 'सः स्यार्धधातुके ।७।४।४९।' इति तत्वम् । आसनामिति 'उपान्वध्याङ्वसः ।१।४।४८।' इत्याधिकरणस्य कर्मसञ्ज्ञा । त्रीण्यम्बकान्यक्षीणि[1] अस्येति त्र्यम्बको[2] महादेवस्तस्मादन्यं नोपास्थित न पूजितवानित्यर्थः । उपपूर्वात्तिष्ठतेः 'देवपूजासंगतिकरणमित्रकरणपथिपु ।' इति देवपूजायां तङ् । 'स्थाघ्वोरिच्च ।१।२।१७।' इत्युत्वं कित्त्वं च । 'ह्रस्वादङ्गात् ।८।२।२७।' इति सिचो लोपः। इषूनिष्यतीति 'अन्येभ्योऽपि दृश्यन्ते ।३।२।७५।' इति क्विप् । इषुभृतो धनुर्धराः तेषां सर्वेषां यशांसि निरास्थत् । निरस्तवानित्यर्थः । एतेनास्यासाधारणीकृतास्त्रत्वं दर्शितम् । 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति वार्त्तिकवचनाद्यदा तङ् नास्ति, तदा तिप् । 'अस्यतिवक्तिख्यातिभ्योऽङ् ।३।१।५२।' इति च्लेरङ् । 'अस्यतेः स्थुक् ।७।४।१७।' ॥ ३ ॥

पुण्यो महाब्रह्मसमूहजुष्टः सन्तर्पणो नाकसदां वरेण्यः ।
जज्वाल लोकस्थितये स राजा यथाऽध्वरे वह्निरभिप्रणीतः ॥ ४ ॥

पुण्य इत्यादि—पुनातीति पुण्यः । 'पूञो यन् णुक् ह्रस्वश्च' इत्यौणादिको यन् । णुगागमश्च ह्रस्वश्च । अत्यन्तपुण्यकरणाद्राजापि पुण्य इत्युच्यते । तन्मयत्वाद्राजा । अग्निरपि पुण्यः पावनात्पुण्यः । यागादिः पुण्यस्तेन पुरुषः पूयते । महतां वेदविदां ब्रह्मणां ब्राह्मणानां समूहेन जुष्टः सेवितो राजाऽग्निश्च । ब्रह्मशब्दोऽत्र ब्राह्मणपर्यायः । नाके स्वर्गे सीदन्तीति 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामनुपसर्गेऽपि क्विप् ।३।२।६१।' इति क्विप् । नाकसदो देवास्तेषां कर्मणि षष्ठी । सन्तर्पयति प्रीणयतीति सन्तर्पणः । सन्तर्पयतेः 'कृत्यल्युटो बहुलम् ।३।३।११३।' इति कर्तरि ल्युट् । राजा यागादिना तर्पयति । अग्निरपि सदा शुद्धत्वेन परशुद्धिकृत्त्वेन च पुण्यः महतां वेदानां समूहेन प्रतिपाद्यत्वेन जुष्टश्चासन्तर्पकः पुनराग्निमुखत्वाद्देवानां वरेण्यश्चैवं श्रेष्ठो राजाऽग्निश्च सर्वेषां धर्म्मविदामिति यथातथमूह्यम् । 'वृङ एण्यः' । जज्वाल प्रदीप्तवान् ।

---

१ सूर्यचन्द्रपावकभेदेन त्रिसङ्ख्याकानि । २ 'अम्बकं च' इति त्रिकाण्डशेषः । ३ 'त्र्यम्बकस्त्रिपुरान्तकः ।' इत्यमरः । ४ अत्रोपमाऽलङ्कारसमर्थनायैव वेदब्राह्मणोभयवाचकस्य ब्रह्मपदस्योपादानम् । ५ किं तु 'स्वे स्वे धर्म्ये कर्म्मणि सर्वेऽपि प्रवर्त्तेरन्' इति भावः । ६ एतेन लोकस्थित्यतिक्रमेणापराधासहिष्णुत्वं सूचितम् ।

लोकस्थितये माभूल्लोकस्य स्थित्यतिक्रम इत्येवमर्थम् । अग्निरपि लोकस्य स्थितये ज्वलति । यथोक्तम् 'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' अभिप्रणीत इत्यग्निविशेषणम् । आभिमुख्येन प्रणीत इति प्रादिसमासः । 'उपसर्गादसमासेऽपि णोपदेशस्य ।८।४।१४।' इति णत्वम् । मन्त्रेणाभिमुखीकृत इत्यर्थः । यथाऽध्वरे यागेऽभिप्रणीतो वह्निर्ज्वलति तथा राजाऽपीत्यर्थः ॥ ४ ॥

यत्रस्थो राज्यं चकार तां राजनगरीं दर्शयन्नाह—

स पुण्यकीर्तिः शतमन्युकल्पो महेन्द्रलोकप्रतिमां समृद्ध्या ।
अध्यास्त सर्वर्तुसुखामयोध्यामध्यासितां ब्रह्मभिरिद्धबोधैः ॥ ५ ॥

स पुण्येत्यादि—स्वामिगुणपूर्वका हि निवासस्य गुणा भवन्तीति प्रदर्शनार्थं पश्चात्तदभिधानम् । तथा चोक्तम्—'स तु यच्छीलस्तच्छीला अस्य प्रकृतयो भवन्ति ।' इति । स राजा पुण्यकीर्तिः पुण्याः पवित्राः कीर्तयो यस्य सः । शतमन्युकल्प इति प्रभावं दर्शयति । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ।५।३।६७।' इति कल्पप् । शतमन्युरिन्द्रः महेन्द्रलोकप्रतिमामयोध्यामिति योज्यम् । प्रतिमीयते तुल्यत इति प्रतिमा । 'आतश्चोपसर्गे ।३।३।१०६।' इत्यङ् । महेन्द्रलोकेन प्रतिमा तुल्या । 'तृतीया सप्तम्योर्बहुलम् ।२।१।३०।' इति 'तृतीया' इति योगविभागात्समासः । अमरावतीमिवेत्यर्थः । कया । समृद्ध्या । सम्यगतिशयेनर्द्धिः समृद्धिः । कुगतिप्रादयः ।२ । २ । १८ ।' इति प्रादिसमासः । अध्यास्ताध्यासितवान् । भूतसामान्ये लङ् । आस्तेरनुदात्तत्वात्तङ् । 'अधिशीङ्स्थासां कर्म्म । १।४।४६ ।' इत्याधिकरणस्य कर्मसञ्ज्ञा । सुखयतीति सुखा, पचाद्यच् । सुखहेतुत्वाद्वा सुखा । सर्वेषु ऋतुषु सुखेति । 'सप्तमीविशेषणे बहुव्रीहौ ।२।२।४०।' इति योगविभागात्समासः । अध्यासितामध्युषिताम् । ब्रह्मभिर्ब्राह्मणैरिद्धबोधैः । सर्वशास्त्रपरिज्ञानात्पटुबुद्धिभिरित्यर्थः । इन्धेर्निष्ठायामनुनासिकलोपः ॥ ५ ॥

निर्माणदक्षस्य समीहितेषु सीमेव पद्माऽऽसनकौशलस्य ।
ऊर्ध्वस्फुरद्रत्नगभस्तिभिर्या । स्थिताऽवहस्येव पुरं मघोनः ॥ ६ ॥

---

१ 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः ।' इत्यमरः

निर्माणेत्यादि—पद्मासनो ब्रह्मा । पद्मासनं यस्येति कृत्वा । तस्य कौशलं नैपुण्यमिति षष्ठीसमासः । तस्य 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन । २।२ ११' इति न प्रतिषेधः । तत्र विशिष्टा एव गुणा रूपरसगन्धस्पर्शास्तद्विशेषाश्च शुक्लनीलादयः कटुकाम्लादयः सौरभ्यादयः शीतोष्णादयश्च गृहीताः । तत्र रूपादिभिः समासो भवत्येव । 'तत्स्थैश्च गुणैः षष्ठी समस्यते न तु तद्विशेषगुणैः ।' इति वचनात् । अन्यैस्तु समासप्रतिषेधः । [ एवं च कृत्वा मुनित्रयवचनमर्थवद्भवति । तद्यथा 'अधिकरणैतावत्त्वे च । २।४।१५।' 'तदशिष्यं सञ्ज्ञाप्रमाणत्वात् ।१।२।५३' इति पाणिनेः, 'युगपद्देशपृथक्त्वदर्शनात्' इति 'रूपसामान्याद्वा' इति वचनप्रामाण्यादिति चेदुलोपप्रतिषेधः' इति कात्यायनस्य, 'नकारग्रहणसामर्थ्याल्लोपो न भविष्यतीति किं पुनरत्रार्थसत्तत्वम्, इति भाष्यकारस्येति ] तस्य सीमेव मर्यादेवायोध्या । ततो न सृष्ट्यन्तरं शोभनमस्तीत्यर्थः । कीदृशस्य । निर्माणदक्षस्य । निर्मितिर्निर्माणं सृष्टिस्तत्र दक्षस्य पटोः । क विषयेषु । समीहितेषु । स्रष्टुमीप्सितेष्वित्यर्थः । ऊर्ध्वमुपरिष्टात्स्फुरद्रत्नगभस्तिभिः स्फुरन्तो ये रत्नानां गभस्तयो रश्मयस्तैर्हासभूतैर्मघोन इन्द्रस्य पुरममरावतीमवहस्येव स्थिता या, तामध्यास्त । 'मघवन्श्वन् उक्षन्' इत्यौणादिकः।'श्वयुवमघोनामतद्धिते।६।४।१३३।' इति सम्प्रसारणम्॥६॥

सद्रत्नमुक्ताफलवज्रभाञ्जि विचित्रधातूनि सकाननानि ।
स्त्रीभिर्युतान्यप्सरसामिवौघैर्मेरोः शिरांसीव गृहाणि यस्याम्॥ ७॥

सद्रत्नेत्यादि—सन्ति शोभनानि यानि रत्नादीनि तानि भजन्ते यानि गृहाणि तानि सद्रत्नमुक्ताफलवज्रभाञ्जि । मुक्ताफलवज्रयो रत्नान्तर्भावेऽपि प्राधान्यख्यापनार्थं वचनम्, गोबलीवर्दन्यायाद्वा । रत्नशब्देन मरकतपद्मरागवैदूर्यादयो गृह्यन्ते । सद्रत्नादि–'युञ्जि' इति पाठान्तरम् । 'युजेरसमासे ।७।१।७१।' इति प्रतिषेधो न भवति, अनपुंसकविषयत्वात्, नपुंसके तु तल्लक्षणस्य नुमः विधानात् । विचित्रधातूनि विचित्रा नानाप्रकारा धातवो मनःशिलादयो येषु गृहेषु तेषां विरचितचित्रकर्मत्वात् । सकाननानि सोद्यानानि । स्त्रीभिर्युतान्यप्सरसामिवौघैस्तत्रत्याभिः स्त्रीभिरप्सरोभिरिवेत्यर्थः । मेरोः शिरांसिव मेरोः शृंगाणीव एवंविधानि गृहाणि यस्यामयोध्यायां

१ अत्रोत्प्रेक्षयोर्युगलम् । २ 'गहनं काननं वनम्' इत्यमरः ।

तामध्यास्त। गृह इति 'गेहे कः।३।१।१४४' इति कः तत्र गृहशब्दो वेश्मनि नपुंसकलिंगः। तत्स्थायिषु पुँल्लिंगो नित्यं बहुवचनेनान्तः॥ ७॥

अन्तर्निविष्टोज्ज्वलरत्नभासो गवाक्षजालैरभिनिष्पतन्त्यः।
हिमाऽद्रिटङ्कादिव[1] भान्ति यस्यां गङ्गाऽम्बुपातप्रतिमा[2] गृहेभ्यः॥८॥

अन्तरित्यादि—अन्तर्गृहमध्ये निविष्टानि निहितान्युज्ज्वलरत्नानि यानि तेषां भासो रश्मयो गृहेभ्यो गवाक्षजालैरभिनिष्पतन्त्यो निर्गच्छन्त्यो यस्यां भान्ति तामध्यास्तेति योज्यम्। पर्वतस्योन्नतप्रदेशष्टङ्क इत्युच्यते। तस्माद्धिमवत्पर्वतटङ्कादिव गङ्गाम्बुपातप्रतिमाः गंगाजलप्रवाहतुल्याः, स्वच्छत्वात्॥८॥

धर्म्यासु कामाऽर्थयशस्करीषु मतासु लोकेऽधिगतासु काले।
विद्यासु विद्वानिव[3] सोऽभिरेमे पत्नीषु राजा तिसृषूत्तमासु॥ ९॥

धर्म्यास्वित्यादि—धर्मादनपेतासु। 'धर्मपथ्यर्थन्यायादनपेते। ४। ४। ९२।' इति यत्। कामार्थयशांसि कर्तुं शीलं यासां तासु। कृञो हेतुताच्छील्यानुलोम्येषु।३।२।२०।' इति ताच्छील्ये टः। 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य।८।३।४६।' इति विसर्जनीयस्य सत्वम्। टित्त्वान्ङीप्। मतासु पूजितासु लोके तासां प्रतीतत्वात्। अधिगतासु काले विवाहयोग्ये काले परिणीतासु। सोऽभिरेमे स राजाऽभिरतवान्। पत्नीषु 'पत्युर्नो यज्ञसंयोगे।४।१।३३।' इति नकारः। तिसृषु कौसल्याकैकेयीसुमित्रासूत्तमास्विति सन्नारीगुणैः श्रेष्ठासु। विद्यास्विति विदन्त्याभिर्धर्माधर्माविति विद्याः 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः।३।३।९९' इति क्यप्। तिसृषु सामर्ग्यजुराख्यासु। धर्म्यास्वित्यादिकं तुल्यम्। विद्वानिव यथाधिगतविद्य इत्यर्थः। 'विदेः शतुर्वसुः।७।१।३६। दीर्घः हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्। संयोगान्तलोपाः॥ ९॥

तस्य राज्ञः पत्नीभिस्ताभिः सह रममाणस्य सुता नवासन्। ऋष्यशृंगनामा मुनिः पुत्रीयं क्रतुं जानातीति पुरोधसो वशिष्ठादुपश्रुत्य राज्ञा वारविलासिनीभिरानायितो मुनिरित्येतत्कथयितुमाह—

पुत्रीयता तेन वराऽङ्गनाभिरानायि विद्वान्[4] क्रतुषु क्रियावान्[5]।
विपक्षिमज्ञानगतिर्मनस्वी मान्यो मुनिः स्वां पुरमृष्यशृङ्गः॥१०॥

---

१ अत्रोपमाऽलङ्कारः। २ अत्रोत्प्रेक्षा। ३ अत्रोपमा। ४ अत्रोपमा। ५ इदं न केवलं क्रतुषु तस्य क्रियावत्त्वं, किं तु कर्मान्तरेष्वपि तदिति सूचयति।

पुत्रीयतेत्यादि–पुत्रीयताऽऽत्मनः पुत्रमिच्छता । इच्छायाम् 'सुप आत्मनः क्यच् । ३ । १ । ८ ।' इति क्यच् । 'क्यचि च । ७ । ४ । ३३ ।' इतीत्वम् । तेन राज्ञा प्रयोजककर्त्रा वराङ्गनाभिर्वरस्त्रीभिः प्रयोज्यकर्त्रीभिरानायि स्वां पुरमिति योज्यम् । 'नीवह्योः' इत्यादेरपि 'अकथितं च । १ । ४ । ५१ ।' इति चकारेण संगृहीतत्वान्नयतिर्द्विकर्मकः । तत्र प्रधानकर्मणि लुङ् । चिण्णि-लोपौ 'चिणो लुक् । ६ । ४ । १०४ ।' इति तशब्दस्य लुक् । गुणकर्मणि तु पुर-मिति द्वितीया । गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ । १ । ४ । ५२ । ' इति प्रयोज्यकर्तरि द्वितीया न भवति । 'नीवह्योः प्रतिषेधः' इति वचनात् । विद्वान्वेदार्थतत्त्ववित् । एवं च कृत्वा क्रतुषु क्रियावान्प्रशस्तक्रियः । प्रशंसायां मतुप् । विपक्त्रिमज्ञानगतीरिति विपाकेन निर्वृत्तम् । पचतेः क्त्रिः क्त्रेर्मप् । यत्पूर्वजन्मकृतमनिवर्तनीयं कर्म तस्योग्रतपःप्रत्ययाद्विनोपदेशाज्ज्ञानात्प्रवृत्तिर्बुद्धावस्य जातेत्यर्थः । मनस्वी प्रशस्तमनाः । प्रशंसायाम् 'अस्मायामेधास्रजो विनिः । ५ । २ । १२१ ।' इति विनिः । मान्यो मानार्हः । 'अर्हे कृत्यतृचश्च । ३ । ३ । १६९ ।' इति ण्यत् । धर्मादिमननान्मुनिः । 'मनेरुच्चोपधायाः' इति इन् । उपधाया उकारः । ऋष्यस्य शृङ्गमृष्यशृङ्गं तच्छृङ्गमिव शृंगं यस्य स ऋष्यशृङ्गः । 'सप्त-म्युपमान–' इत्यादिनोत्तरपदलोपी समासः ॥ १० ॥

**ऐहिष्ट तं कारयितुं कृताऽऽत्मा क्रतुं नृपः पुत्रफलं मुनीन्द्रम् ।**
**ज्ञाताऽऽशयस्तस्य ततो व्यतानीत् स कर्मठः कर्म सुताऽनुबन्धम् ॥ ११ ॥**

ऐहिष्टेत्यादि–तं मुनीन्द्रं क्रतुं कारयितुं नृप ऐहिष्ट ईहितवान् । ईहतेरात्मने-पदिनो लुङि सेट्त्वादिटि च रूपम् । द्विकर्मकता तु 'हृक्रोरन्यतरस्याम् । १ । ४ । ५३ । इति । कृतात्मा वशीकृतात्मेति भावः । पुत्रफलं पुत्रः फलं कार्यं यस्य क्रतोः । तत उत्तरकालम् । स मुनिः परचित्तज्ञत्वाज्ज्ञाताशयो ज्ञाताभिप्रायो राजाभि-मतं कर्म कारयितुं तस्य नृपस्य कर्म व्यतानीत्प्रारब्धवान् । तनोतेः 'नेटि । ७।२।४। ' इति हलन्तलक्षणायां प्रतिषिद्धायाम् 'अतो हलादेर्लघोः । ७।२।७' इति विभाषा वृद्धिः । कर्मठः कर्मणि घटते 'कर्मणि घटोऽठच् । ५ । २ । ३५ ।' इत्यठच् यागक्रियानिष्पादक इत्यर्थः । सुतानुबन्धं सुताननुबध्नातीति कर्म-ण्यण् । 'सुतानुबन्धि' इति पाठान्तरम् । सुताननुबद्धुं शीलमस्येति । 'सुप्य-जातौ णिनिस्ताच्छील्ये । ३ । २ । ७८ ।' सुपीत्यनुवर्तमाने सुब्ग्रहणमुपसर्ग-

---

१ पुत्रफलमिति भावः ।

निवृत्त्यर्थमिति केवलस्योपसर्गस्य निवृत्त्यर्थं द्रष्टव्यम् । अन्यथा जाताविति किं ब्राह्मणानामन्त्रायितेति न युज्यते, आङ्स्त्यिस्योपसर्गत्वात् ॥ ११ ॥

रक्षांसि वेदीं परितो निरास्थदङ्गान्ययाक्षीदभितः प्रधानम् ।
शेषाण्यहौषीत् सुतसम्पदे च वरं वरेण्यो नृपतेरमार्गीत् ॥ १२ ॥

रक्षांसीत्यादि—वेदीं परितो यजनवेद्याः समन्तात् । विघ्नायोपस्थितानि रक्षांसि । रक्ष्यते येभ्य इत्यसुन् । तानि रक्षोघ्नैर्मन्त्रैर्निरास्थन्निरस्तवान् । पर्यभिभ्यां सर्वोभयार्थे तासिल् । 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इति द्वितीया । अङ्गान्ययाक्षीदभितः प्रधानमिति । यद्देवतामयो यागः सा देवता तत्र प्रधानम् । पुत्रफलत्वाद्विष्णुः प्रधानम् । तमिष्ट्वा । तस्योभयतः पार्श्वयोर्यान्यङ्गानि चक्षुरादीनि देवतान्तराणि तान्ययाक्षीत् अग्नावाहुत्या पूजितवान् । कर्तुः क्रियाफलाभावात्तङ् न भवति । एतवकत्वे । शेषाण्यहौषीदिति स्वाङ्गं विष्णुमिष्ट्वा शेषाणि प्रतिकृतानि पिष्टकमयानि सुतानां सम्पदर्थमग्नौ हुतवान् । जुहोतेः सिचि वृद्धाविटि च रूपम् । वरेण्यः श्रेष्ठः । हे देवा अग्निप्रभृतयो नृपतेः सुता भूयासुरिति वरं चामार्गीन्मार्गितवान् । 'मार्ग अन्वेषणे' । 'आधृषाद्वा' इति यदा णिच् नास्ति तदा चङभावात्सिजेव भवति ॥ १२ ॥

निष्ठां गते दत्रिमसभ्यतोषे विहित्रिमे कर्मणि राजपत्न्यः ।
प्राशुर्हुतोच्छिष्टमुदारवंश्यास्तिस्रः प्रसोतुं चतुरः सुपुत्रान् ॥ १३ ॥

निष्ठामित्यादि—निष्ठां समाप्तिं गते कर्मणि यागक्रियायां समाप्तायां राजपत्न्यो हुतोच्छिष्टं हुतावशेषं शिष्टचरुं प्राशुर्भक्षितवत्यः । अश्नातेर्लिटि उसिरूपम् । दत्रिमसभ्यतोषे दानेन निर्वृत्तो दत्रिमः सभ्यानां ब्राह्मणानां तोषो यत्र कर्मणि । विहित्रिमे विधानेन निर्वृत्ते कर्मणि दात्रो धात्रश्च ड्वितः क्त्रिः । ३ । ३ । ८८ ।' इति क्त्रौ विहिते प्रथमस्य 'दोदद्घोः । ७ । ४ । ४६ ।' इति ददादेशः । द्वितीयस्य 'दधातेर्हिः ।७।४।४२।' इति हिरादेशः । मप् । सभायां साधव इति सभ्याः । 'सभाया यः । ४ । ४ । १०५ ।' उदारवंश्या महावंशोद्भवाः । शेषे यत् । कौसल्या कैकेयी च क्षत्रिये । सुमित्रा तु वर्णसंकरजा । किमर्थं प्राशुः । प्रसोतुं सुपुत्रान्विनीतान्प्रसावितुम् । तत्र कौसल्या केकयी चैकैकं पिण्डं प्राशितवत्यौ । ताभ्यां चावयोः परिचारिकेति पिण्डभागद्वयं दत्तं सुमित्रा प्राशितवती । ततश्च पुत्रद्वयं जनयिष्यति । एवं

चाभिसंधाय चतुर इत्युक्तं न तु त्रीनिति। ,पूङ् प्राणिगर्भविमोचने। 'स्वरतिसूतिसूयतिधूञूदितो वा। ७। २। ४४।' इति विभाषितेट्॥ १३॥

**कौसल्ययाऽसावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूत्।**
**प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन॥ १४॥**

कौसल्ययेत्यादि—कोसलस्य राज्ञोऽपत्यमिति 'वृद्धेत्कोसलाजादाञ्ञ्यङ्। ४। १। १७१।' 'यङश्चाप्। ४। १। ७४।' कौसल्यया प्राक् प्रथमम् असावि रामो जन्यते स्म। पूङः कर्मणि लुङि चिणि रूपम्। सुखेनेति प्रकृत्यादित्वात्तृतीया। महतां जन्मनि न काचिदपि पीडास्ति। तदनन्तरं केकयीतो भरतोऽभूत्। केकयानाचष्टेति णिच्। सा हीदृशास्तादृशाः केकया इति कथयति। तदन्तात् 'अच इः' इति इकारप्रत्यय औणादिकः। णिलोपः। 'कृदिकारादक्तिनः इति ङीप्। 'अपादाने चाहीयरुहोः। ५। ४। ४५।' इति तसिः। यदा च केकयस्यापत्यम् 'जनपदशब्दात्क्षत्रियादञ्। ४। १। १६८।' इत्यञ् 'केकयमित्रयुप्रलयानां यादेरियः। ७। ३। २।' इतीयादेशः। 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः। ४। १। १५।' इति ङीप्। तदा कैकयीति द्वितीयं रूपम्। सुमित्रा शत्रुघ्नमुदारचेष्टम्। उदार चेष्टा यस्येति। प्रासोष्ट प्रसूतवती। कर्तरि लुङ्। ङित्त्वात्तङ्। जातमात्रस्य हि तस्य किल महासत्त्वतया तादृश्येव चेष्टाऽभूदिति श्रूयते। एकेति। एकैवेति गम्यमानत्वादेवशब्दो न प्रयुक्तः। सह लक्ष्मणेन लक्ष्मणेन सह[2]॥ १४॥

**आर्चीद्द्विजातीन्परमार्थविन्दानुदेजयान्भूतगणान्न्यषेधीत्।**
**विद्वानुपानेष्ट च तान्स्वकाले यतिर्वशिष्ठो यमिनां वरिष्ठः॥ १५॥**

आर्चीदित्यादि—तेषु जातेषु द्विजातीन्द्वे जाती येषामिति तान्ब्राह्मणक्षत्रियवैश्यान्परमार्थविन्दान्। विन्दतीति विन्दाः। 'विद्लृ लाभे' इत्यस्माद् 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिहेतिभ्यश्च। ३। १। १३८।' इति शः। मुचादित्वान्नुम्। परमार्थस्य विन्दाल्लाभिन इति कर्मणि षष्ठी। तस्याः 'कृद्योगा च षष्ठी समस्यत इति वक्तव्यम्' इति समासः। तानार्चीत्स्रगादिभिः पूजितवान्। 'अर्च पूजायाम्' इत्यस्माल्लुङि

---

१ यथा तिस्रः सामर्ग्यजूरूपविद्या धर्मार्थकाममोक्षरूपान् चतुरः पुत्रान् तथेति ध्वन्यते। २ कथं तिसृणां चत्वारः पुत्रा उदपद्यन्तेति निर्देशार्थमस्यावतारणम्।

तिप् इट् सिचो लोपः । भूतगणान्राक्षसादिगणान् । उदेजयानुत्कम्पान् तस्मिन्नेव सूत्र उत्पूर्व एजिर्ण्यन्तो निर्दिष्टः । तस्मादुदेजयतीति शः । तान्न्यषेधीदुत्सादितवान् । षिधेः 'नेटि । ७ । २ । ४ ।' इति हलन्तलक्षणायाः प्रतिषेधः । विद्वान्पौरोहित्यकर्माणि कुशलः । उपानेष्ट च तान्रामादीन् । तेषामुपनयनादिक्रियां चकार । 'सम्माननोत्सनञ्चाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः । १ । ३ । ३६ ।' इत्याचार्यकरणे तङ् । स्वकाल इति 'गर्भादेकादशे वर्षे जातस्य गर्भैकादशे' इत्यादिना वचनेन उपनयनकाल उक्तः । यमनियमेषु यतत इति यतिः । 'सर्वधातुभ्य इन्' इति इन् । 'अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्मषम् ।इति पञ्च यमा येषां सन्तीति यमिनः स्मृताः' । तेषां वरिष्ठ उत्तमः । 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्यंहिगर्वर्षित्रपुद्राघिवृन्दाः । ६ । ४ । १५७ ।' इत्युरुशब्दस्य वरादेशो महत्पर्यायस्य । वशिष्ठः[1] ॥ १५ ॥

वेदोऽङ्गवांस्तैरखिलोऽध्यगायि शस्त्राण्युपायंसत जित्वराणि ।
ते भिन्न-वृत्तीन्यपि मानसानि समं जनानां गुणिनोऽध्यवात्सुः[2] ॥१६॥

वेद इत्यादि—'शिक्षा कल्पो व्याकरणं छन्दोविवृतिर्निरुक्तं ज्योतिषं च' इति षडङ्गानि शास्त्राणि तानि विद्यन्ते यस्य वेदस्येत्यङ्गवान् । तैरुपनीतै रामादिभिः । अखिलो निश्शेषो वेदोऽध्यगायि । अधीत इत्यर्थः । इङोऽधिपूर्वात्कर्मणि लुङि 'विभाषा लुङ्लृङोः ।२।४।५०।' इति गाङादेशः । चिण् युक् तलुक् शस्त्राणि धनुरादीनि जित्वराणि जयशीलानि ।'इण्नश्जिसर्तिभ्यः क्वरप् ।३।२। १६३ ।' इति क्वरप् । तैरुपायंसत स्वीकृतानि । उपपूर्वो यमिः स्वीकरणे वर्तते । तस्मात्कर्मणि लुङ् । 'आत्मनेपदेषु । ७ । १ । ५ । इत्यदादेशः ।' 'हनः सिच् । १ ।२ । १४ ।' इति ज्ञापकादनुनासिकलोपाभावः । ततस्ते रामादयो गुणिनो मानसानि मनांसि । प्रज्ञादित्वात्स्वार्थे णः । भिन्नवृत्तीनि नानाविधप्रवृत्तीनि विषयेषु तानि मानसान्यपि जनानां समं साधारणम् । क्रियाविशेषणम् । अध्यवात्सुरध्युषितवन्तः । अधिपूर्वाद्वसेः सिचि 'वदव्रजहलन्तस्या चः । ७ । २ । ३ ।' इति वृद्धिः । 'सः स्यार्द्धधातुके । ७ । ४ ।४९ ।' इति तत्वम् । 'सिजभ्यस्तविदिभ्यश्च । ३ ४ । १०९ । इति जुस् । उपानुध्याङ्वसः । १ । ४ । ४८ । ' इत्यधिकरणस्य कर्मससंज्ञा ॥ १६ ॥

---

१ अनेन वशिष्ठस्य पुरो हिताधायित्वं सूचितम् । २ स्वयमभिन्नवृत्तित्वेन समम- ध्यवात्सुरिति सूचयितुमप्युपनिवेशः ।

ततोऽभ्यगाद् गाधिसुतः क्षितीन्द्रं रक्षोभिरभ्याहतकर्मवृत्तिः ।
रामं वरीतुं परिरक्षणार्थं राजाऽऽर्जिहत् तम्मधुपर्कपाणिः ॥ १७ ॥

तत इत्यादि—तेषु रामादिषु तथाभूतेषु । गाधिसुतो विश्वामित्रः । क्षितीन्द्रं राजानमभ्यगात् अभिगतवान् । इणो गादेशः । 'गातिस्थाघुपाभूभ्यः २ । ४ । ७७ ।' इति सिचो लुक् । रक्षोभिर्निशाचरैरभ्याहताभिभूता यागादेः कर्मणो वृत्तिः प्रवृत्तिर्यस्येति । रामं वरीतुं प्रार्थयितुम् । 'वृतो वा । ७ । २ । ३८ ।' इति इटो दीर्घत्वम् । परिरक्षणार्थं विहन्यमानस्य कर्मण इत्यर्थः । तं गाधिसुतम् । आर्जिहत् पूजितवान् । 'अर्ह पूजायाम्' । इति स्वार्थिकण्यन्तश्चौरादिको गृह्यते, न तु भौवादिकः । तस्माद्धेतुमण्यिचात्र न भवितव्यम् । 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् । ३ । १ । ४८ । इति चङ् णिलोपः । द्विर्वचनेऽचि । १ । १ । ५९ ।' इति स्थानिवद्भावात् । 'अजादेर्द्वितीयस्य । ६ । १ । २ ।' इति हिशब्दो द्विरुच्यते । रेफस्य न 'नन्द्राः संयोगादयः । ६ । १ । ३ ।' इति प्रतिषेधः । चुत्वम् । आट् । वृद्धिः मधुपर्कपाणिः । दधिघृतमधून्येकीकृतानि मधुपर्क इत्युच्यते । तस्मिन् पात्रे स्थितः पाणिर्यस्येति विग्रहः । 'सप्तम्युपमानपूर्वपदस्योत्तरलोपः' इत्युत्तरपदलोपी समासः । पात्रादुद्धृत्य मधुपर्केण पूजितवानित्यर्थः ॥ १७ ॥

ऐषीः पुनर्जन्मजयाय यत् त्वं, रूपाऽऽदिबोधान् न्यवृतच्च यत् ते ।
तत्त्वान्यबुद्धाः प्रतनूनि येन ध्यानं नृपस्तच्छिवमित्यवादीत् ॥ १८ ॥

ऐषीरित्यादि— मुक्तिस्तत्त्वावबोधस्तस्या ध्यानं प्रयोजनं तत्र पुनर्जन्म भूयोजन्म तस्य जयाय यद्ध्यानं त्वमैषीः एषितवानसि । इषेर्लुङ् । मध्यमैकवचने 'इट ईटि । ८ । २ । २८ ।' इति सिचो लोपे रूपम् । रूपादिबोधान्न्यवृतच्च । यत्ते—रूपादिषु शब्दस्पर्शरूपरसगन्धेषु चक्षुरादिद्वारेण यो बोधोऽध्यवसायलक्षणा बुद्धिः तस्माच्च यद्ध्यानं न्यवृतत् निवृत्तम् । वृत्तेर्द्युतादित्वात् 'द्युद्भ्यो लुङि । १ । ३ । ९१ ।' इति तिप् । च्लेरङ् । तत्त्वानि पञ्चविंशतिः पुरुषप्रधानमहदहङ्कारादीनि । प्रतनूनि सूक्ष्माणि येन ध्यानेनाबुद्धाः ज्ञातवानसि । बुधेरनुदात्तेतो लुङ् । थासः सिच् 'लिङ्सिचावात्मनेपदेषु । १ । २ । ११ ।' इति सिचः कित्त्वाद्गुणाभावः । सिज्लोपधत्वजश्त्वादि । तद्ध्यानं शिवं शोभनं कच्चिदिति नृपोऽवादीत् । न तस्य व्याघात इति 'वदव्रज-

---

१ गाधेः तदाख्यस्य राजर्षेः सुतः । ' अस्यैव गाधेयेत्यपि अन्वर्था संज्ञा । ' अथ गाधेयो विश्वामित्रश्च कौशिकः ।' इत्यभिधानात् । २ कांस्यपात्रपिहितानीति शेषः ।

हलन्तस्याचः । ७ । २ । ३ ।' इति वृद्धिः । 'ध्यै चिन्तायाम्' भावे ल्युट् । ध्यानम् ॥ १८ ॥

आख्यन् मुनिस्तस्य शिवं समाधेर्विघ्नन्ति रक्षांसि वने क्रतूंश्च ।
तानि द्विषद्वीर्यनिराकरिष्णुस्तृणेढु रामः सह लक्ष्मणेन[1] ॥ १९ ॥

आख्यदित्यादि—पृष्टो मुनिस्तस्य समाधेर्ध्यानस्य शिवमनुपद्रवमाख्यत् कथितवान् । 'चक्षिङः ख्याञ् । २ । ४ । ५४ ।' 'अस्यतिवक्तिख्यातिभ्योऽङ् ३ । १ । ५२ ।' इति च्लेरङ् । आतो लोपः । किन्त्वयं दोषः—विघ्नन्ति रक्षांसि वने क्रतून् । 'गमहनजनखनघसां लोपः क्ङित्यनङि । ६ । ४ । ९८ ।' इत्युपधालोपः । 'हो हन्तेर्ञ्णिन्नेषु ।७।३।५४।' इति कुत्वम् । किं क्रियतामिति चेदाह-तानि रक्षांसि । द्विषतां वीर्यं सामर्थ्यम् । वीरेः स्वार्थिकण्यन्तात् 'अचो यत् । ३ । १ । ९७ ।' इति यत् । तस्य निराकरिष्णुः निराकरणशीलः । 'अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् । ३ । २ । १३६ ।' इतीष्णुच् तृणेढु हिनस्तु । तृहेर्विधौ लोट । 'एरुः ।३।४।८६।' रुधादित्वात् श्नम् । 'तृणह इम् । ७ । ३ । ९२ ।' होढः । ८ । २ । ३१ ।' ष्टुत्वम् । 'ढो ढे लोपः । ८ । ३ । १३ ।' इति ढलोपः । सह लक्ष्मणेन लक्ष्मणेन सह ॥ १९ ॥

स शुश्रुवांस्तद्वचनं मुमोह[2] राजाऽसहिष्णुः सुतविप्रयोगम् ।
अहंयुनाऽथ क्षितिपः शुभंयुरूचे वचस्तापसकुञ्जरेण ॥ २० ॥

स इत्यादि—स राजा तस्य मुनेस्तद्वचनं शुश्रुवान् श्रुतवान् सन् सुतविप्रयोगमसहिष्णुरसहनशीलो मुमोह मोहमुपगतः । शृणोतेः 'भाषायां सदवसश्रुवः ।३।२।१०८।' इत्यनेन क्वसुः । सुतेन विप्रयोगमिति 'कर्तृकरणे कृता बहुलम् ।२।१।३२।' इति समासः । 'न लोकाव्ययनिष्ठा-।२।३।६९।' इति षष्ठ्याः प्रतिषेधः । अथानन्तरम् । अहंयुना अहंकारवता । 'अहंशुभमोर्युस् ।५।२।१४०।' इति युस् । तापसकुञ्जरेण 'तपःसहस्राभ्यां विनीनी ।५।२।१०२।' इत्यनुवर्तमाने 'अण् च ४।२।१०३।' इति मत्वर्थेऽण् । तापसश्च स कुञ्जरश्चेति ।

---

१ लक्ष्मणेन सह रामस्तृणेढु इत्याख्यत्, इत्याख्यादित्यन्वयः इत्यध्याहार्यम् । २ तद्वचनश्रवणमात्रेण मूर्छित आसीदित्यत्र हेतुः सुतविप्रयोगासहिष्णुत्वमिति परिकरोऽत्रालङ्कारः ।

'वृन्दारकनागकुञ्जरैः पूज्यमानम् ।२।१।६२।' इति समासः तेन ( तादृशेन क्षितिपो राजा । शुभंयुः कल्याणवान् । पूर्ववद्युस् । वचो वक्ष्यमाणमूचे उक्तः कर्मणि लिट् सम्प्रसारणम् । "अहंयुनाथः" इति विसर्गान्तं पाठान्तरम् । तत्र अहंयूनां क्षत्रियाणां नाथ इति योज्यम् ॥ २० ॥

**मया त्वमाप्थाः शरणं भयेषु वयं त्वयाऽप्याप्स्महि धर्मवृद्ध्यै ।**
**क्षात्रं द्विजत्वं च परस्परार्थं शङ्कांकृथा मा प्रहिणु स्वसूनुम्॥ २१ ॥**

मयेत्यादि—भयेषु त्वं शरणम् आप्थाः प्राप्तोऽसि मया । आपेः कर्मणि लुङ् । सिज्लोपः । त्वयापि धर्मवृद्ध्यै धर्मोपचयाय वयमाप्स्महि प्राप्ताः । पूर्ववल्लुङादि । उत्तमबहुवचनम् । सिचो लोपाभावः । मकारस्याझल्त्वात् तदित्थं क्षात्रं द्विजत्वं च धर्मवृद्ध्यै परस्परार्थम् अन्योन्यप्रयोजनम ।'कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः । 'समासवच्च बहुलम्' इति यदा न समासवत् तदायम् । तस्मान्मा शङ्कां कृथाः माकार्षीः । कथमस्मिन् संकटे पुत्रं नियोजयामीति । 'माङि लुङ् ।३।३।१७५' अडभावः । 'उश्च ।१।२।१२' इति कित्त्वाद्गुणाभावः । 'ह्रस्वादङ्गात् ।८।२।२७।' इति सिचो लोपः प्रहिणु प्रेषय । स्वं पुत्रम् । हिनोतेः प्रार्थनायां लोट् । श्नुः । अपित्त्वात् ङित्त्वम् । गुणाभावः । 'उतश्च प्रत्ययात् । ६ । ४ । १०४ ।' इति हेर्लुक् 'हिनुमीना । ८ । ४ । १५ ।' इति णत्वम् ॥ २१ ॥

**घानिष्यते तेन महान् विपक्षः स्थायिष्यते येन रणे पुरस्तात् ।**
**मा मां महाऽऽत्मन् परिभूयोग्ये न मद्विधो न्यस्यति भारमग्र्यम्॥२२॥**

घानीत्यादि—अनागतमर्थं ज्ञानेन समीक्ष्याह—महान्विपक्षो रावणः त्रैलोक्यविजयित्वात् । सोऽपि तेन रामेण घानिष्यते किमुतेतरे राक्षसाः । हन्तेः कर्मणि लृट् । 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ।६।४।६२।' इति चिण्वदिट् उपधावृद्धिः । 'हो हन्तेः—७।३।५४।' इति कुत्वम् । पुरस्तादग्रतो यद्रणं युद्धं भावि परशुरामेण सार्धमिति भावः ।

---

१अत एव 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः।' 'इति सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ।' इति चामरः सङ्गच्छते । २ एतेन स्वाभाविकमहङ्कारित्वं सूचितम् । ३ अत एव भगवताऽपि गीतायाम् ' परस्परम्भावयन्तः श्रेयः परमवाप्स्यथ ।' इत्युपदिष्टम् । ४ एवमस्थाने सशोकेन न त्वया भवितव्यमिति सूचयितुम् महाऽऽत्मन् इत्युक्तम् । न हि महात्मानः सहसा तथा क्षुभ्यन्तीति भावः ।

तत्र येन स्थायिष्यते तेन घानिष्यत इति योज्यम् । अत्र तिष्ठतेर्भावे लृट् । चिण्वदिड्वा । 'आतो युक् ।७।३।३३।' इति युक् हे महात्मन् महासत्त्व मा मां परिभूर्मावज्ञासीः । किमेवं वदसीति । परिपूर्वो भवतिर्निराकरणे वर्तते मद्विध इति विधानं विधा प्रकारः 'आतश्चोपसर्गे ।३।३।१०६।' इत्यङ् । विधा भेदः सादृश्यं च । इह सादृश्यं गृह्यते मया विधा सादृश्यं यस्येति मद्विधः । 'प्रत्ययोत्तरपदयोश्च ७ । २ । ९८ ।' इति मदादेशः । मद्विधो मत्सदृशोऽन्यो न भारमग्र्यम् 'अग्राद्यत् । ४ । ४ । ११६ ।' अयोग्ये असमर्थे न्यस्यति निक्षिपति । किमहं येनानागतं समीक्षितमिति भावः । योगाय प्रभवति योग्यः 'योगाद्यच्च । ५ । १ । १०२ । ॥ २२ ॥

**क्रुध्यन् कुलं धक्ष्यति विप्रवह्निर्यास्यन् सुतस्तप्स्यति मां समन्युम् ।**
**इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य ॥ २३ ॥**

क्रुध्यन्नित्यादि—यद्यहं भूतरक्षणेऽधिकृतोऽस्य वचनं न कुर्यां तदा क्रुध्यन्सन् । दिवादित्वात् श्यन् । विप्रो वह्निरिव । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे २।१।५६।' इति समासः । धक्ष्यति कुलं भस्मसात्करिष्यति । दहेर्लृट् 'दादेः-८।२।३२।' इति घः । भषभावः । चर्त्वम् । घकारस्य ककारः । 'इण्कोः ।८।३।५७।' इति षत्वम यास्यन्गमिष्यन्सुतो मां समन्युं सशोकं तप्स्यति सन्तापयिष्यति । तपेर्लृट् ॥ इत्थमेवंप्रकारं नृपः पूर्वमादाववालुलोचेऽवलोचितवान् । अवाङ्पूर्वाल्लोचेर्लिट् तत उत्तरकालं सुतस्य गमनमनुजज्ञे । अनुज्ञातं नृपेणेति विभक्तिविपरिणामेन तेनेति योज्यम् । कर्मणि लिट् । 'ज्ञा अवबोधने' इति परस्मैपदित्वात् । नचानुपूर्वादस्मादात्मनेपदं विहितम् ॥ २३ ॥

**आशीर्भिरभ्यर्च्य मुनिः क्षितीन्द्रं प्रीतः प्रतस्थे पुनराश्रमाय ॥**
**तं पृष्ठतः प्रष्ठमियाय नम्रो हिंस्रेषुदीप्ताऽऽत्तधनुः कुमारः ॥ २४ ॥**

---

१ कुलदाहापेक्षया वियोगतापस्याल्पकष्टदत्वात् । २ रामस्य । लक्ष्मणस्य तु गमनं तद्गमनेनैव । अत एव 'सह लक्ष्मणेन' इति निर्दिशता मुनिना तद्गमनाप्राधान्यं प्रथमत एव सूचितम् । न हि लक्ष्मणो रामेण वियुज्य स्थातुं क्षमत इति निश्चयश्चात्र हेतुः । अत एवं तं 'पृष्ठतः' इत्यादि च वक्ष्यति । ३ अत्र बहुवचनं सर्वाभिलषितपूर्तिं सूचयति । ४ प्रार्थनाभावेऽपि तथाऽऽशिषां प्रयोग एवाभ्यर्चनम् एतेन सुतगमनानुज्ञानस्य सद्यो महाफलत्वं सूचितम् ।

आशीर्भिरित्यादि—रामगमनस्यानुज्ञातत्वात् प्रीतो मुनिः क्षितीन्द्रं राजानमाशीर्भिरभ्यर्च्य पूजयित्वा । आङः शासेः क्विप्युपसंख्यानात् उपधाया इत्वम् । प्रतस्थे पुनराश्रमाय—आश्रमं पुनः प्रस्थितवान् । तिष्ठतेः । 'समवप्रविभ्यः स्थः ।१।३।२२।' इति लिटि तङ् । प्रष्ठम् अग्रयायिनं तं 'प्रष्ठोऽग्रगामिनि ।८।३।९२।' इति षत्वम् । पृष्ठतः पश्चात् इयाय कुमारः । इणो णलि वृद्धिरायादेशः 'द्विर्वचनेऽचि ।१।१।५९।' इति स्थानिवद्भावाद् द्विर्वचनमिकारस्य । 'अभ्यासस्याऽसवर्णे ।६।४।७८।' इतीयङ् । नम्रोऽनुकूलः । हिंसनशीला इषवः शराः हिंस्रेषवः । आप्तमविसंवादि यद्धनुस्तत् । हिंस्रेषु दीप्तमाप्तं धनुर्यस्य कुमारस्येति विग्रहः । अत्र 'धनुषश्च ।५।४।१३२।' इत्यनङ् न भवति 'समासान्तविधिरनित्यः' इति । दीप्तास्त्रधनुरिति पाठान्तरम् । दीप्तमस्त्रं धृष्टतया यस्य धनुषस्तद्दीप्तास्त्रं धनुर्यस्येति सः कस्मिन्विषये हिंस्रेषु नान्येषु । नम्रादयो नमिकम्पिस्म्यजसकमहिंसदीपो रः ।३।२।१६७।' इति रप्रत्ययान्ताः ॥ २४ ॥

**प्रयास्यतः पुण्यवनाय जिष्णो रामस्य रोचिष्णुमुखस्य धृष्णुः।**
**त्रैमातुरः कृत्स्नजिताऽस्त्रशस्त्रः सध्र्यङ् रतः श्रेयसि लक्ष्मणोऽभूत्२५**

प्रयास्यत इत्यादि—प्रयास्यतो गमिष्यतो रामस्य लक्ष्मणः सध्र्यङ् अभूत् सहायीभूतः । 'सहाञ्चति इति क्विन् अनुषङ्गलोपः' 'उगिदचां सर्वनामस्थाने धातोः ।७।१।७०। इति नुम् । हल्ङ्यादिसंयोगान्तलोपौ 'क्विन्प्रत्ययस्य कुः।८।२ ६२।' इति कुत्वम् नकारस्य ङकारः। 'सहस्य सध्रिः ।६।३।९५।' इति सध्र्यादेशः । पुण्यवनाय पुण्यहेतुत्वात्पुण्यं वनम् । गत्यर्थात् कर्मणि चतुर्थी जिष्णोः जयशीलस्य 'ग्ला-जि-स्थश्चग्स्नुः ।३।२।१३९।' इति ग्स्नुः । रोचिष्णु रोचनशीलं मुखं यस्य तस्य रामस्य पितुराज्ञया तुष्टत्वात् । अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ।३।२।१३६।' इतीष्णुच् । धृष्णुः शत्रुविध्वंसने प्रगल्भः । 'त्रसिगृधिधृषिक्षिपेः क्नुः ।३।२।१४०।' इति क्नुः । त्रैमातुरः तिसृणां मातॄणामपत्यमिति तद्धितार्थविषये समासः। पश्चात् 'मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः।४।१।११५।' इत्यण् उत्वं च। 'द्विगोर्लुगनपत्ये।४।१।८८।' इति लुक् न भवति । स हि पिण्डद्वयप्राशनात्ताभ्यां च जनितः अस्त्रं च शस्त्रं चेति द्वन्द्वः । कृत्स्नं समग्रं जितमाधिगतमस्त्रशस्त्रं येनेति विग्रहः। रतः

---

१ 'यः सहाञ्चति सध्र्यङ् सः' इत्यमरः । २ जेता जिष्णुश्च जित्वरः ' इत्यमरः ।
३ 'विभ्राड् भ्राजिष्णुरोचिष्णू' इत्यमरः । ४ 'धृष्टे धृष्णुर्वियातश्च ' इत्यमरः ।
५ अत्यन्तमासक्तचेता इत्यभिप्रायः ।

श्रेयसि कल्याणे। 'प्रकृत्यैकाच् ।६।४।१६३।' प्रशस्यस्य श्रः ।५।३।६०।' इति श्रः लक्ष्मीरित्यौणादिकः। लक्षेर्मुट् ईप्रत्ययश्च। सा यस्य विद्यत इति लक्ष्मणः। लोमादिषु 'लक्ष्म्या अच्च' इति न प्रत्ययः अत्त्वं च ॥ २५ ॥

इषुमति रघुसिंहे दन्दशूकाञ्जिघांसौ
धनुररिभिरसह्यं मुष्टिपीडं दधाने।
व्रजति पुरतरुण्यो बद्धचित्राऽङ्गुलित्रे
कथमपि गुरुशोकान्मा रुदन् माङ्गलिक्यः ॥ २६ ॥

इषुमतीत्यादि--रघुसिंहे रामे रघुषु रघुवंशभवेषु सिंह इव शौर्यादियोगात्। व्रजति सति। इषुमति सनिषङ्गे। प्रशंसायां मतुप्। तदुक्तं कौमुद्यां 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः।' इति दन्दशूकान् हिंस्रान्। दंशे 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ।३।१।२४।' इति यङ्। 'जपजभदहदशभञ्जपशां च' इत्यभ्यासस्य नुक्। तदन्तात् 'यजजपदशां यङः ।३।२।१६६।' इत्यूकः। 'अतो लोपः ।६।४।४८।' इत्यतो लोपः 'यस्य हलः। ६। ४। ४९।' इति यलोपः। जिघांसौ हन्तुमिच्छौ। 'अज्झन गमां सनि ।६।४।१६।' इति दीर्घः। 'अभ्यासाच्च गमांसनि ।७।३।५५।' इति कुत्वम् 'सनाशंस भिक्षउः ।३।२।१६८।' इति उः। 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ।२।३।६९।' इति षष्ठीप्रतिषेधात् द्वितीयैव। धनुर्दधाने बिभ्राणे अरिभिरसह्यं सोढुमशक्यम्। 'शकिसहोश्च ।३।१।९९।' इति यत्। मुष्टिपीडं मुष्टिना पीडयित्वा। मुष्टिशब्दे तृतीयान्ते उपपदे 'सप्तम्यां चोपपीडरुधकर्षः ।३।४।४९।' इति णमुल्। तत्र चकारेण तृतीयानुकर्षणात्। बद्धं चित्रमङ्गुलित्रं येन। अंगुलिं त्रायत इति कः। पुरे तरुण्यः पुरतरुण्यः। 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानम्' इति ङीप्। यदि तद्वचोऽर्थवत्। नो चेद्गौरादिपाठात् ङीप्। रामो गत इति गुरुः शोको यासां ताः। कथमपि मा रुदन् न रुदितवत्यः। रुदः 'इरितो वा ।३।१।५७।' इति च्लेरङ्। यतो माङ्गलिक्यः मंगलप्रयोजनाः। तदस्येत्यनुवृत्तौ 'प्रयोजनम्। ५।१।१०९।' इति ठञ् ' टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः। ४। १। १५।' इति ङीप् ॥ २६ ॥

---

१ अत्र पञ्चभिश्च पद्ये मालिनी वृत्तम्। (ननमयययुतेयम्मालिनी भोगिलोकैः।) इति तल्लक्षणात्।

अथ जगदुरनीचैराशिषस्तस्य विप्रा-
स्तुमुलकलनिनादं तूर्यमाजघ्नुरन्ये ।
अभिमतफलशंसी चारु पुस्फोर बाहु-
स्तरुषु चुकुवुरुच्चैः पक्षिणश्चाऽनुकूलाः ॥ २७ ॥

अथेत्यादि—तस्य रामस्य व्रजतो विप्रा अनीचैर्महता ध्वनिनाऽऽशिष इष्टवचनानि जगदुर्गदितवन्तः । अन्ये वादकास्तूर्यं कांस्यतालपटहादिसमूहमाजघ्नुस्ताडितवन्तः । 'आङो यमहनः । १ । ३ । २८ ।' इत्यात्मनेपदं न भवति । अकर्मकादित्यनुवर्तते । तुमुलो महान्कलो मधुरो निनादो ध्वनिर्यस्येति । अभिमतामिष्टं फलं शंसितुं शीलं यस्य बाहोः स चारु पुस्फोर सुतरां स्फुरितवान् । अत्र दक्षिणो बाहुः सामर्थ्याद्गम्यते स्वाङ्गत्वान् । अनेन सीताप्राप्तिबीजमुपन्यस्तम् । स्फुरतेरभ्यासस्य 'शर्पूर्वाः खयः । ७ । ४ । ६१ ।' इति खयः शेषः । चर्त्वम् । पक्षिणश्च तरुषु स्थिता अनुकूलाः सन्त उच्चैः सुष्ठु चुकुवुः कूजितवन्तः । 'कु शब्दे' इत्यस्य लिटः कित्त्वादुवङादेशः । २७ ॥

इति श्री-जयमङ्गलविरचितया जयमङ्गलाऽऽख्यया व्याख्याया समलंकृते श्री-भट्टिप्रणीते रामचरिते काव्ये प्रथमे प्रकीर्ण-काण्डे लक्षण-रूपे प्रथमो वर्गः । लक्ष्य-रूपे कथानके श्रीराम-संभवो नाम सर्गश्च ।

---

## द्वितीयः सर्गः ।

इदानीं विजिगीषूणां कण्टकान् समुद्धर्तुं शरत्काले समुद्योग इति तमेव वर्णयन्नाह—

वनस्पतीनां सरसां नदीनां तेजस्विनां कान्तिभृतां दिशां च ।
निर्याय तस्याः स पुरः समन्ताच्छ्रियं दधानां शरदं ददर्श ॥ १ ॥

वनस्पतीनामित्यादि-स रामः । तस्याः प्रसिद्धायाः प्रकृतायाश्च पुरः अयोध्याया निर्याय निर्गत्य । समन्तात् सर्वतः शरदं ददर्श दृष्टवान् । कालस्याप्रत्यक्षत्वात् कार्याणां दर्शनात्तद्दर्शनमिति मन्यते । श्रियं दधानां धारयन्तीम् । केषां श्रियम्-वनस्पतीनाम् । पारस्करादिदर्शनात् सुट् । अत्र लोकप्रतीत्या वृक्षा द्रष्टव्याः । न तु

---

१ एवं च शुभान्तरमपि भावीति सूचितम् । २ सर्गेऽस्मिन् प्राय उपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक् । ३ सर्वे वृक्षा इत्यर्थः । न तु वृक्षविशेषा इत्यभिप्रायः । एतेन 'वानस्पत्यः फलैः पुष्पात् तैरपुष्पाद्वनस्पतिः ।' इति पारिभाषिकाणां वृक्षविशेषाणां व्यवच्छेदः ।

पारिभाषिकाः । तथा सरसां तडागानां नदीनां गङ्गादीनां तेजस्विनां चन्द्रतारादीनां कान्तिं नैर्मल्यं बिभ्रतां दिशां च । तदा हि निर्मला दिशो भवन्ति । वनस्पत्यादीनां श्रियं दधानां शरदं ददर्श ॥ १ ॥

तां रामव्यापारं विना सामान्येन वर्णयन्नाह-

**तरङ्गसङ्गाच्चपलैः पलाशैर्ज्वालाश्रियं साऽतिशयां दधन्ति ।**
**सधूमदीप्ताऽग्निरुचीनि रेजुस्ताम्रोत्पलान्याकुलषट्पदानि ॥ २ ॥**

तरङ्गेत्यादि-तरङ्गसङ्गान् सलिलोर्मिसम्पर्काच्चपलैः चञ्चलैः पलाशैः पत्रैः ज्वालाश्रियं सातिशयां दधन्ति । सधूमदीप्ताग्निरुचीनि सधूमदीप्ताग्नेरिव रुचिर्येषां रक्तोत्पलानां तानि रेजुः दीप्यन्ते स्म । राजेर्लिटि 'फणां च सप्तानाम् ६ । ४ । १२५ ।' इति एत्वाभ्यासलोपौ । आकुलाः इतस्ततो यायिनः षट्पदा येष्विति । चलितपत्राणामग्निशिखातुल्यत्वात् षट्पदानां च धूमतुल्यत्वात् सधूमदीप्ताग्निरुचीनीत्युक्तम् ॥ २ ॥

**बिम्बाऽऽगतैस्तीरवनैः समृद्धिं निजां विलोक्याऽपहृतां पयोभिः ।**
**कूलानि साऽमर्षतयेव तेनुः सरोजलक्ष्मीं स्थलपद्महासैः ॥ ३ ॥**

बिम्बेत्यादि-बिम्बं प्रतिबिम्बं तेनागतैर्निपतितैरिति, तृतीयेति योगविभागात् समासः । तीरवनैः कुसुमितैरित्यर्थात् । तैः करणभूतैः । पयोभिः कर्तृभिः समृद्धिं विभूतिं निजामात्मीयाम् अपहृतां विलोक्य कूलानि कर्तृभूतानि सामर्षतयेव साक्षमतयेव सरोजलक्ष्मीं कमलशोभां पयःसम्बन्धिनीं तेनुः विस्तारितवन्ति ।'अत एकहल्मध्येऽनादेशादेर्लिटि ६।४।१२०।' इत्येत्वाभ्यासलोपौ । कूले सरोजासम्भव इति चेदाह-स्थलपद्महासैरिति स्थलकमलविकासैरित्यर्थः।।३॥

**निशातुषारैर्नयनाऽम्बुकल्पैः पत्रान्तपर्यागलदच्छबिन्दुः ।**
**उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरुर्दिनाऽऽदौ ॥ ४ ॥**

निशेत्यादि—निशायां तुषारैः हिमैः । नयनाम्बुकल्पैः अश्रुतुल्यैः । नयनानुकारिषु पत्रेषु स्थितत्वात् । तैर्हेतुभूतैः पत्रान्तपर्यागलदच्छबिन्दुः । पत्रान्तात्पर्यागलन्तः अच्छास्तुषारबिन्दवो यस्य तीरतरोः । स दिनादौ दिनारम्भे कुमुद्वतीमुपारुरोदेव आक्रन्दितवानिव भाति शशिवियोगादीदृशी त्वं भूतासीति । रोदनक्रियया आक्रन्दनविशिष्टया कुमुद्वत्या ईप्सिततमत्वात् रुदिः सकर्मकः । तदाक्रन्दनं योजयन्नाह—नदत्पतंग इति कूजत्पक्षीत्यर्थः । 'पतेरंगच

पक्षिणि' इत्यौणादिकः । कुमुद्वती 'कुमुदनडवेतसेभ्यो ड्मतुप् ।४।२।८७।' इति ड्मतुप् । 'झयः ।८।२।१०।' इति वत्वम् । उगित्त्वान् ङीप् ॥ ४ ॥

**वनानि तोयानि च नेत्रकल्पैः पुष्पैः सरोजैश्च निलीनभृङ्गैः ।**
**परस्परां विस्मयवन्ति लक्ष्मीमालोकयाञ्चक्रुरिवाऽऽदरेण ॥ ५ ॥**

वनानीत्यादि–वनानि पुष्पैर्निलीनभृङ्गैः स्थितभ्रमरैः । लीयतेः 'स्वादय ओदितः ।२।८।४५।' इति निष्ठानत्वम् । नेत्रकल्पैः नेत्रतुल्यैः । तोयानि च सरोजैः निलीनभृङ्गैर्नेत्रकल्पैः । विस्मयवन्ति जातविस्मयानि । परस्परामन्योन्यस्य लक्ष्मीं शोभाम् आलोकयाञ्चक्रुरिव । आदरेण तात्पर्येण ॥ ५ ॥

**प्रभातवाताऽऽहतिकम्पिताऽऽकृतिः कुमुद्वतीरेणुपिशङ्गविग्रहम् ।**
**निरास भृङ्गं कुपितेव पद्मिनी न मानिनी संसहतेऽन्यसङ्गमम् ॥६॥**

प्रभातेत्यदि—प्रभाते यो वातस्तस्याघातेन कम्पिता चालिता आकृतिराकारो यस्याः पद्मिन्याः सा भृङ्गं निरास निरस्तवती । कुमुद्वतीरेणुना पिशङ्गः कपिशः विग्रहो यस्य भृङ्गस्य । कुपितेव । यथा अन्यया स्त्रिया सहोषितं तदङ्गसंक्रान्तपरिमलकण्ठमालमात्मदयितं काचित् कुपिता निरस्यति तद्वत् । सा किमिति निरस्यति—यतो मानिनी मानवती अन्यसंगमम् अन्यया सह संगमं न सहते । आत्मसंगादन्यसंगमं न संसहते न क्षमते ॥ ६ ॥

**दत्ताऽवधानं मधुलेहिगीतौ प्रशान्तचेष्टं हरिणं जिघांसुः ।**
**आकर्णयन्नुत्सुकहंसनादान् लक्ष्ये समाधिं न दधे मृगावित् ॥ ७ ॥**

दत्तेत्यादि–मधुलेहिगीताविति मधु लेढुं शीलमेषामिति णिनिः । मधुलेहगीताविति पाठान्तरम्, तत्र लिहन्तीति लेहाः पचाद्यच् । मधुनो लेहा इति षष्ठीसमासः । मधु लिहन्तीति वा कर्मण्यण् । दत्तावधानं दत्तमानसं हरिणं प्रशान्तचेष्टं जिघांसुः हन्तुमिच्छुरपि मृगावित् व्याधः । मृगानविध्यतीति क्विप् । ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६।१।१६।' इतिसम्प्र-

---

१ अत्र पतङ्गानां नाद एवोपारोदनमिति बोध्यम् । दिनादावित्यनेन 'पतङ्गौ पक्षिसूर्यौ च' इत्यमरोक्त्या पक्षिसूर्योभयवाचकपतङ्गशब्दन्यासेन च तीरतरोः पतङ्गनदनमेवोपारोदनमिव जातमिति तु सूच्यत एव, किं तु सूर्यो दिने कुमुद्वतीमप्राप्य यथा रोदिति तथा तेन समं तां प्राप्तुमिच्छन्नपि देशभेदेनाप्राप्य रुदितवानिव तथा प्रतीयत इत्यपि ध्वन्यते । २ अत्र सहोक्तिरभिव्यज्यते, समुच्चय उत्प्रेक्षा चालङ्कारौ । ३ अत्र वंशस्थविलं छन्दः 'वदन्ति वंशस्थविलं जतौ जरौ इति तल्लक्षणात् ।

सारणम् । 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ।६।३।११६ ।' इति दीर्घः । लक्ष्ये वध्ये समाधिं चित्तैकाग्रतां न दधे न धारितवान् । चित्त्वात्तङ् । लिटः कित्त्वे आतो लोपः । उत्सुकानां हंसानां नादानाकर्णयन् शृण्वन् तत्राभिरतचित्तत्वात् । वर्तमानकालो भूतेनाभिसम्बध्यमानः साधुः । 'धातुसम्बन्धे प्रत्ययाः ।३।४।१।' इति च । आकर्णयन्निति 'प्रातिपदिकाद्धात्वर्थे बहुलम्' इति णिच् । 'लक्षणहेत्वोः क्रियायाः ।३।२।१२६।' इति शतृप्रत्ययः ॥ ७ ॥

गिरेर्नितम्बे मरुता विभिन्नं तोयाऽवशेषेण हिमाऽऽभमभ्रम् ।
सरिन्मुखाभ्युच्चयमादधानं शैलाधिपस्यानुचकार लक्ष्मीम् ॥ ८ ॥

गिरेरित्यादि—गिरेः कस्यचित् नितम्बे मध्यभागे स्थितमभ्रं कर्तृ, मरुता विभिन्नं विह्वलीकृतं तोयावशेषेण पयसोऽवशिष्टतया हिमाभं हिमसदृशं सरिन्मुखानां गिरिनदीनिर्गमाणामभ्युच्चयं वृद्धिम् आदधानं कुर्वाणं शैलाधिपस्य हिमवतः लक्ष्मीं शोभामनुचकार अनुकृतवत्[1] ॥ ८ ॥

गर्जन् हरिः साऽम्भसि शैलकुञ्जे प्रतिध्वनीनात्मकृतान् निशम्य ॥
क्रमं बबन्ध क्रमितुं सकोपः प्रतर्कयन्नन्यमृगेन्द्रनादान् ॥ ९ ॥

गर्जन्नित्यादि—हरिः सिंहः[3] गर्जन् शब्दं कुर्वन् । क शैलनिकुञ्जे गिरेर्गहने । साम्भसि ससलिले । एवंविधे प्रदेशे प्रतिध्वनीन् प्रतिशब्दान् आत्मकृतान् निशम्य श्रुत्वा सकोपः सरोषः क्रमं बबन्ध क्रमितुमुत्पतितुं यत् सामर्थ्यं तच्चकारेत्यर्थः । अनेकार्थत्वाद्धातूनां बन्धिरत्र करणे वर्तते । किमिति प्रतर्कयन्नन्यमृगेन्द्रनादान्[2] ॥ ९ ॥

इदानीं रामव्यापारेण वर्णयन्नाह—

अदृक्षताम्भांसि नवोत्पलानि रुतानि चाऽश्रोषत षट्पदानाम् ।
आघ्रायि वान् गन्धवहः सुगन्धस्तेनाऽरविन्दव्यतिषङ्गवांश्च ॥ १० ॥

अदृक्षतेत्यादि—नवान्युत्पलानि येष्वम्भस्सु जलेषु तानि रामेणादृक्षत दृष्टानि । दृशेः कर्मणि लुङ् । 'शल इगुपधादनिटः क्सः ।३।१।४५।' इति प्राप्तस्य क्सादेशस्य 'न दृशः ।३।१।४७।' इति प्रतिषेधात् सिजत्र भवति। लिङ्सिचावात्मनेपदेषु ।१।२।११।' इति कित्त्वे गुणाभावः । षट्पदानां[5] रुतानि अश्रोषत

१ अत्र परिकरालङ्कारः । २ अत्रोपमाऽलङ्कारः।३ 'हर्यक्षः केसरी हरिः' इत्यमरः।
४ अत्र स्वभावोक्तिरलङ्कारः।५ भ्रमराणामित्यर्थः ।'षट्पदभ्रमरालयः।' इत्यमरः।

श्रुतानि । शृणोतेः कर्मणि लुङ् । वहतीति वहः पचाद्यच् । गन्धस्य वह इति कृद्योगे षष्ठी समस्यते । गन्धवहो वायुराघ्रायि आघ्रातः । कर्मणि लुङ् । अरविन्देन पद्मेन व्यतिषंगः संपर्कः सोऽस्ति यस्य वायोः सः । वातीति वान् वातेः शतृप्रत्ययः । सुगन्धः । शोभनो गन्धो यस्य सः । अरविन्दव्य- तिषङ्गत्वात् 'गन्धस्येदुत्पूतिसुसुरभिभ्यः ।।५।४।१३५।' इतीकारः समासान्तो न भवति । 'गन्धस्येत्त्वे तदेकान्तग्रहणम्' इति वचनात् सुगन्ध आपणिक इति यथा ॥ १० ॥

लताऽनुपातं कुसुमान्यगृह्णात् स नद्यवस्कन्दमुपास्पृशच्च ॥
कुतूहलाच्चारु शिलोपवेशं काकुत्स्थ ईषत् स्मयमान आस्त ॥११॥

लतेत्यादि--'विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ।३।४।५६।' इति द्वितीयान्त उपपदे णमुल्विधीयते । तत्र व्याप्यमाने द्रव्यवचनस्य आसेव्यमाने च क्रियावचनस्य'नित्यवीप्सयोः ।८।१।४।' इति द्विर्वचनं विधीयते । अत्र तु समासेनैवोक्तत्वात् नोपयुज्यत इति स्थितम् । स काकुत्स्थो रामो गच्छन् लतां लतामनुपात्य कुसुमान्यगृह्णान् गृहीतवान् । लतामनुपात्यानुपात्य च । 'तृतीयाप्रभृतीन्यन्यतरस्याम् ।२।२।२१।' इति समासः । ग्रहेर्लङ् । श्नाप्रत्ययस्य, अपिदिति ङित्त्वे 'ग्रहिज्यावयिव्यधिवष्टि- विचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६।१।१६' इति सम्प्रसारणम् । नद्यवस्कन्दमिति नदीं नदीम् अवस्कन्द्य सर्वां नदीमवस्कन्द्य ढौकित्वा नदीं वा अवस्कन्द्यावस्कन्द्य, उपास्पृशन्, आचमनं कृतवान् । कुतूहलादिति सर्वत्र योज्यम् । चारुशिलोपवेशमिति चारुशिला चारुशिलाः उपविश्य चारुशिला उपविश्यापविश्य वा आस्त आसितवान् । आसेर्लङि रूपम् । ईषत् स्मयमानः ईषद्धसन् ॥ ११ ॥

तिग्मांशुरश्मिच्छुरितान्यदूरात् प्राञ्चि प्रभाते सलिलान्यपश्यत् ।
गभस्तिधाराभिरिव द्रुतानि तेजांसि भानोर्भुवि सम्भृतानि ॥१२॥

तिग्मांश्वित्यादि--अदूरात्समीपे सलिलान्यपश्यन् । दृशेर्लङि 'पाघ्रा- ध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीय- सीदाः ।७।३।७८।' इति पश्यादेशः । तिग्मांशोरादित्यस्य रश्मिभिः छुरितानि रञ्जितानि । तुक् । प्राञ्चि पूर्वस्यां दिशि अवस्थितानि । प्रपूर्वादञ्चतेः 'ऋत्वि-

१ अत्रोत्प्रेक्षा ।

गृदधृकृसृगृदिगुष्णिगञ्चुयुजिक्रुञ्चां च ।३।२।५९।' इति क्विप् । अनुषंगलोपः । नपुंसकस्य नुम् । भानोरिव तजांसि भुवि संभृतानि पिण्डीकृतानि । गभस्तिभि; रश्मिभिः धाराभिरिव द्रुतानि गलितानि । धारा प्रपात इति भिदा पाठाद्द्रष्टव्यम् ॥ १२ ॥

दिग्व्यापिनीर्लोचनलोभनीयामृजाऽन्वयाः स्नेहमिव स्रवन्तीः ।
ऋज्वाऽऽयताः सस्यविशेषपङ्क्तीस्तुतोष पश्यन्वितृणाऽन्तरालाः ॥१३॥

दिग्व्यापीत्यादि—सस्यविशेषाणां शाल्यादीनां पङ्क्तीः पश्यंस्तुतोष तुष्टवान् । दिग्व्यापिनीः सर्वदिग्व्यापनशीलाः । लोभयन्तीति लोभनीयाः । बहुलवचनात्कर्तर्यनीयः । लोचनानां लोभनीया इति षष्ठीसमासः । मार्जनं मृजा शुद्धिः । 'षिद्भिदादिभ्योऽङ् । ३ । ३ । १०४ ।' तया, अन्वयोऽनुगमो यासां शुद्ध्यनुगता इत्यर्थः । ततः स्नेहमिव स्रवन्तीः । ऋजवश्च ता आयताश्च वितृणान्तरालाः उत्पाटितानि तृणानि अन्तराले मध्यभागे यासां ताः ॥ १३ ॥

वियोगदुःखाऽनुभवाऽनभिज्ञैः काले नृपांशं विहितं ददद्भिः ।
आहार्यशोभारहितैरमायैरैक्षिष्ट पुम्भिः प्रचितान्स गोष्ठान् ॥१४॥

वियोगेत्यादि—पुम्भिः गोपैः प्रचितान् व्याप्तान गोष्ठान् गावस्तिष्ठन्ति येष्विति 'सुपि स्थः । ३ । २ । ४ ।' इति कः । 'अम्बाम्ब—। ८ । ३ । ९७ ।' इत्यादिना मूर्धन्यः । तान् स राम ऐक्षिष्ट दृष्टवान । अनुदात्तेत्त्वात्तङ् । इट् । वियोगदुःखस्य योऽनुभवः अनुभवनं तस्यानभिज्ञैः तेषां पुत्रदारैः सह सर्वत्र गमनात् एतावता कालेन एतावद्देयमिति विहितं कृतम । 'दधातेर्हिः' । नृपांशं करं ददद्भिः । आहार्या कटकादिभिः आहरणीया शोभा दीप्तिः तया रहितैः । अमायैः ऋजुभिः । आहार्येति, 'ऋहलोर्ण्यत् । ३ । १ । १२४ ।' इति ण्यत् शोभयतीति शोभा पचाद्यच् । 'ण्यासश्रन्थो युच । ३ । ३ । १०७ ।' इति युच् न भवति,तस्य स्त्रीलिङ्गे भावे अकर्तरि कारके विधानात्[1] । नन्द्यादिपाठान् ल्युर्न भवति, तस्य 'वाऽसरूपोऽस्त्रियाम् । ३ । १ । ९४ ।' इति विकल्पितत्वात् । अथवा शोभनं शोभा स्त्रीलिंगे भावे घञ् । ' 'कृत्यल्युटो बहुलम् । ३ । ३ । ११३ ।' इति बहुलवचनादन्येऽपि कृतः प्राप्तमपि स्वाभिधेयं व्यभिचरन्ति ॥ १४ ॥

---

१ अत्र विषये सप्तमी ।

स्त्रीभूषणं चेष्टितमप्रगल्भं चारूण्यवक्राण्यपि वीक्षितानि ।
ऋजूंश्च विश्वासकृतः स्वभावान् गोपाऽङ्गनानां मुमुदे विलोक्य १५

स्त्रीभूषणमित्यादि—गोपाङ्गनानां चेष्टितं गमनागमनादि । अप्रगल्भं लज्जावत् । तच्च स्त्रीभूषणं स्त्रीणामलङ्कारः तथा वीक्षितानि विलोकितानि अवक्राण्यपि कटाक्षादिरहितान्यपि चारूणि शोभनानि । स्वभावान् स्वाभिप्रायान् ऋजून् अकुटिलान् विश्वासकृतो विश्वासस्य जनकान् विलोक्य मुमुदे हृष्टवान् । स रामः । लिटोऽपित्त्वात्किच्त्वे गुणाभावः । कार्याणां दर्शनात् स्वभावानां दर्शनमित्युक्तम् ॥ १५ ॥

विवृत्तपार्श्वं रुचिराऽङ्गहारं समुद्वहच्चारुनितम्बरम्यम् ।
आमन्द्रमन्थध्वनिदत्ततालं गोपाङ्गनानृत्यमनन्दयत्तम् ॥ १६ ॥

विवृत्तेत्यादि—गोपाङ्गनानां दधिमन्थनाय यत् स्थानं कृतं तत् नृत्यमिवेति[2] गोपाङ्गनानृत्यं कर्तृ तं रामम् अनन्दयत् सन्तोषितवत् । नन्देर्ण्यन्तस्य लङि रूपम् । विवृत्ते तिर्यक् चलिते पार्श्वे यत्र नृत्ये । रुचिरः शोभनोऽङ्गहारोऽङ्गविक्षेपो यत्र । समुद्वहता तिर्यक् समुद्गच्छता चारुनितम्बेन कटिभागेन रम्यं मनोहरम् । आमन्द्र ईषद्गम्भीरो यो मन्थकृतो ध्वनिः तेन दत्तस्तालो यत्र ॥ १६ ॥

विचित्रमुच्चैः प्लवमानमारात् कुतूहलं त्रस्नु ततान तस्य ।
मेघाऽत्ययोपात्तवनोपशोभं कदम्बकं वातमजं मृगाणाम् ॥ १७ ॥

विचित्रमित्यादि—मृगाणां कदम्बकं वृन्दं तस्य रामस्य कौतूहलं ततान विस्तृतवत् । विचित्रम् कृष्णश्वेतत्वात् । उच्चैः प्लवमानम् ऊर्ध्वं जिहानम् । आरात् समीपे । त्रस्नु त्रसनशीलम् । 'त्रसिगृधिधृषिक्षिपेः क्नुः ।३।२।१४०।' इति क्नुः । मेघात्ययेन मेघापगमेन उपात्तवनोपशोभम् । उपात्तं गृहीतं वनम् उपशोभा च येनेति व्यधिकरणबहुव्रीहिः । वातमजति वातमजम् । वाताभिमुखं गच्छतीत्यर्थः । 'वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्य खश्' इति खश् । अरुर्द्विषदजन्तस्य मुम् ।६।३।६७।' इति मुम् ॥ १७ ॥

सिताऽरविन्दप्रचयेषु लीनाः संसक्तफेनेषु च सैकतेषु ॥
कुन्दाऽवदाताः[3] कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः ॥ १८ ॥

---

१ इदं प्रकृतानुप्रसक्तम् । २ उत्प्रेक्षा ध्वन्यते । ३ अत्र गम्योपमा ।

सितेत्यादि—सितारविन्दानां प्रचयेषु समूहेषु । 'एरच् ।३।३।५६। इत्यच् 'सङ्घे चानौत्तराधर्ये । ३ । ३ । ४२ । ' इति घञ्कौ न भवतः प्राणिषुः सङ्घशब्दस्य रूढत्वात् । लीनाः कलहंसमालाः । तथा संसक्तफेनेषु च सैकतेषु पुलिनेषु लीनाः । सिकता येषु विद्यन्त इति । 'देशे लुबिलचौ च । ५ । १ । १०५ ।' इति चकारादण् । कुन्दावदाताः कुन्दमिवावदाताः शुक्लाः । 'उपमानानि सामान्यवचनैः । २ । १ । ५५ ।' इति समासः । प्रतीयिरे ज्ञाताः । तेन रामेणेति विभक्तिविपरिणामेन सम्बन्धः । कर्मणि लिट् । 'इणो यण् । ६ । ४ । ८१ ।' इति यण् । द्विर्वचनेऽचि । १ । १ । ५९ ।' इति स्थानिवद्भावाद्द्विर्वचनम् । श्रोत्रसुखैर्मधुरैर्निनादैः करणभूतैः । 'नौ गदनदपठस्वनः ३ । ३ । ६४ । ' इति घञ् ॥ १८ ॥

शरद्वर्णनमुपसंहरन्नाह--

**न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् ।**
**न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः॥१९॥**

न तज्जलमित्यादि--किम्बहुनोक्तेन सर्वथा न तज्जलं यत् सुचारुपङ्कजं न बभूव । पङ्कजमपि यदलीनषट्पदं तदपि न । असौ षट्पदोऽपि तथाविधो नाभूत् । यः कलं मधुरं न जुगुञ्ज न गुञ्जितवान् । 'गुजि अव्यक्ते शब्दे ।' 'इदितो नुम् धातोः । ७ । १ । ५८ । ' इति नुमि लिटि रूपम । गुञ्जितमपि तत् नैवासीत् । यन्मनो न जहार न हृतवत् । रामस्य लोकस्य वा ॥ १९ ॥

**तं यायजूकाः सह भिक्षुमुख्यै तपः कृशाः शान्त्युदकुम्भहस्ताः ।**
**यायावराः पुष्पफलेन चाऽन्ये प्राणर्चुरर्च्यां जगदर्चनीयम् ॥ २० ॥**

तमित्यादि--यायजूकाः, अत्यर्थं यजनशीलाः । 'यजजपदशां यङः ३ । २ । १६६ । ' इत्यूकः । 'अतो लोपः । ६ । ४ । ४८ ।' 'यस्य हलः । ६ । ४ । ४९ । ' ते तपोवनस्थितास्तं राममागच्छन्तमानर्चुः सुष्ठु पूजितवन्तः । अर्चेर्लिटि द्विर्वचनम् । अत आदेः । ७ । ४ । ७० ।' इति दीर्घत्वम् । तस्मन्नुड् द्विहलः । ७ । ४ । ७१ । ' इति नुट् । सह भिक्षुमुख्यैः । भिक्षण-

---

१ अत्र वंशस्थविलं छन्दः तल्लक्षणं चोक्तं प्राक् । एकावल्यलङ्कारश्च 'स्थाप्यतेऽपोह्यते वाऽपि यथापूर्वं परं परम् । विशेषणतया वस्तु यत्र सैकावली द्विधा॥' इति तल्लक्षणात् । प्रकृते पुनराद्येति विशषः । २ 'भिक्षुः परिव्राट् कर्म्मन्दी पाराशर्य्यपि मस्करी ।' इत्यमरः ।

शीला भिक्षवः परिव्राजकाः । 'सनाशंसभिक्ष उः । ३ । २ । १६८ ।' तेषां ये प्रधानास्तैः सह । तपःकृशाः तपसा दुर्बलाः । शान्त्यर्थमुदकं तेन पूर्णः कुम्भः । 'एकहलादौ पूरयितव्येऽन्यतरस्याम् । ६ । ३ । ५९ ।' इति उदकस्य उद्भावः । स हस्ते येषामिति बहुव्रीहिः । परनिपातश्चात्र वाहिताग्न्यादिदर्शनात् । प्रहरणार्थेभ्य इति वा । शान्त्युदकुम्भस्त्वहितनिवारणसाधर्म्यात् उपचारेण प्रहरणम् । ते शिरःसूदकदानेन प्राणर्चुः । अन्ये मुनयो यायावरा एकत्रानियतनिलयाः । यातेर्यङन्तात् 'यश्च यङः । ३ । २ । १७६ ।' इति वरच् । अतो लोपादि । पुष्पफलेन प्राणर्चुः पुष्पाणि च फलानि चेति 'जातिरप्राणिनाम् । २ । ४ । ६ ।' इत्येकवद्भावः । अर्च्या अर्चनार्हाः । 'अर्हे कृत्यतृचश्च । ३ । ३ । १६९ ।' अर्चनीयमित्यत्रापि । जगतां जगद्भिर्वा, अर्चनीयम् । 'कृत्यानां कर्तरि वा । २ । ३ । ७१ ।' इति पक्षे षष्ठी । न तु 'कर्तृकर्मणोः कृति । २ । ३ । ६५ ।' इति षष्ठी ॥ २० ॥

विद्यामथैनं विजयां जयां च रक्षोगणं क्षिप्नुमविक्षताऽऽत्मा ।
अध्यापिपद्गाधिसुतो यथावन्निघातयिष्यन्युधि यातुधानान् ॥२१॥

विद्यामित्यादि—तपोवनं प्राप्तः गाधिसुतः एनं रामम् 'द्वितीयाटौस्स्वेनः २ । ४ । ३४ ।' इत्येनादेशः । विद्यां नाम्ना विजयां जयां च । यथावत् यथाविधि । अध्यापिपत् पाठितवान् । 'णौ च संश्चङोः । ६ । १ । ३१ ।' इति गाङभावपक्षे रूपम् । अधिपूर्वादिङो हेतुमण्णिचि 'क्रीङ्जीनां णौ । ६ । १ । ४८ ।' इत्यात्वम् । पुगादिविधयः । रक्षोगणं । क्षिप्नुं[1] प्रेरयितारम् 'त्रसिगृधिधृषिक्षिपेः क्नुः । ३ । २ । १४० ।' इति क्नुः । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् । २ । ३ । ६९ ।' इति षष्ठीप्रतिषेधात् द्वितीयैव । आविक्षतात्मा रागादिभिरनभिभूतचित्तवृत्तिः । तस्य हि विद्या अमोघा भवति । युधि संग्रामे । यातुधानान् रक्षांसि । निघातयिष्यन् मारयिष्यन् । हन्तेर्हेतुमण्णिच् । घत्वं । लृट् लटः सदादेशः ॥ २१ ॥

आयोधने स्थायुकमस्त्रजातममोघमभ्यर्णमहाऽऽहवाय ।
ददौ वधाय क्षणदाचराणां तस्मै मुनिः श्रेयसि जागरूकः ॥२२॥

आयोधन इत्यादि—स मुनिः तस्मै रामायास्त्रजातम्, अस्त्रसमूहं ददौ दत्तवान् । ददातेर्लिट् । णल् 'आत औ णलः । ७ । १ । ३४ ।' आयुध्यन्ते अस्मिन्निति आयोधनं संग्रामः । अधिकरणे ल्युट् । तत्र स्थायुकं स्थितिकरण-

1 निराकरिष्णुः क्षिप्नुः स्यात्' इत्यमरः ।

शीलम् । जयावहत्वात् । ‘ लषपतपदस्थाभूवृषहनकमगमशृभ्याउकञ् ।३।२।१५४।’ इति उकञ् । आतो यक् । अत एवामोघम् अवन्ध्यम् । अवृथामोक्षत्वात् । अभ्यर्णो निकटो महाहवो यस्य तस्मै । अभिपूर्वादर्देर्निष्ठायाम्, ‘अभेश्चाविदूर्ये ।७।२।२५।’ इतीट्प्रतिषेधः । ‘रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।८।२।४२।’ इति नत्वम् । अभ्यर्णः । आहव इति, आहूयन्ते अस्मिन्युद्धायेति ह्वयतेराङ्पूर्वात् ‘आङि युद्धे ।३।३।७३।’ इति सम्प्रसारणम् । अप् प्रत्ययः, गुणावादेशौ । वधाय क्षणदाचराणामिति, क्षणदा[1] रात्रिः तत्र चरन्तीति, ‘चरेष्टः ३।२।१६।’ इति तेषां रक्षसामित्यर्थः । तत्र हि[2] महाहवे रामो राक्षसान् हनिष्यतीति । ‘हनश्च वधः ।३।३।७६।’ इति वधादेशः । कृत्प्रयोगे क्षणदाचराणामिति कर्मणि षष्ठी । श्रेयसि जागरूकः तत्कल्याणे सावधानः । जागर्तेरूकः[3] ॥ २२ ॥

तं विप्रदर्शं कृतघातयत्ना यान्तं वने रात्रिचरी डुढौके ।
जिघांसुवेदं धृतभासुराऽस्त्रस्तां ताडकाऽऽख्यां निजघान रामः॥२३॥

तमित्यादि—विश्वामित्रजातं चादाय यज्ञकर्मणि विघ्नोपशमनार्थं वने यान्तं रामम् रात्रिचरी राक्षसी ताडकाभिधाना डुढौके ढौकते स्म । ढौकतेरात्मनेपदिनो लिटि रूपम् । तां च रामो निजघान निहतवान् । विप्रदर्शं कृतघातयत्ना विप्रान् ब्राह्मणान् दृष्ट्वा कृतमारणाभियोगा रात्रिचरी । रामोऽपि जिघांसुवेदं धृतभासुरास्त्रः । जिघांसुं विदित्वा धृतं भासुरं भासनशीलम् अस्त्रं येनेति बहुव्रीहिः । विप्रदर्शं जिघांसुवेदमिति ‘कर्मणि दृशिविदोः साकल्ये ।३।४।२९।’ इति णमुल् ॥ २३ ॥

अथाऽऽलुलोके[4] हुतधूमकेतुशिखाऽञ्जनस्निग्धसमृद्धशाखम् ।
तपोवनं प्राध्ययनाऽभिभूतसमुच्चरच्चारुपतत्रिशिञ्जम् ॥ २४ ॥

अथेत्यादि—अथासौ रामो राक्षसीं हत्वा तपोवनम् आलुलोके दृष्टवान् । कथम्भूतम् । हुतधूमकेतुशिखाञ्जनस्निग्धसमृद्धशाखम् । हुतश्चासौ धूमकेतुरग्निश्च हुतधूमकेतुः । तस्य शिखाञ्जनेन स्निग्धाः समृद्धाश्च फलादिना शाखा यस्य तपोवनस्य । प्राध्ययनेन वेदपाठेन अभिभूता तिरस्कृता समुच्चरन्ती चार्वी शोभना पतत्रिणां पक्षिणां शिञ्जा ध्वनिर्यत्र । ‘शिजि अव्यक्ते शब्दे ।’

---

१ ‘ त्रियामा क्षणदा क्षपा ’ इत्यमरः । २ यतो विश्वामित्रयज्ञे इत्यर्थः । ३ जागरणपरा हि सावधानो भवतीति दृष्टचरम् । ४ ‘अथालुलोच इति पाठान्तरम् ।

शिञ्जनं शिञ्जा 'गुरोश्च हलः ।३।३।१०३।' इत्यकारप्रत्ययः । पतन्तं त्रायन्त इति पतत्राणि पक्षाः । 'आतोऽनुपसर्गे कः ।३।२।३।' । तानि येषां सन्तीति पतत्रिणः । पतङ्गशिञ्जामिति पाठान्तरम् ॥ २४ ॥

**क्षुद्रान्न जक्षुर्हरिणान्मृगेन्द्रा विशश्वसे पक्षिगणैः समन्तात् ।**
**नन्नम्यमानाः फलदित्सयेव चकाशिरे तत्र लता विलोलाः ॥२५॥**

क्षुद्रानित्यादि—तत्र तस्मिंस्तपोवने तपोधनानां मित्रभावात् क्षुद्रानितरानपि हरिणान्मृगेन्द्राः सिंहाः न जक्षुः । न बाधितवन्तः । क्षुद्यन्त इति क्षुद्राः । स्फायितञ्चीत्यादिना औणादिको रक् । 'लिट्यन्यतरस्याम् ।२।४।४०।' इति अदेर्घस्लृ । 'गमहनजनखनघसां लोपः क्ङित्यनङि ।६।४।९८।' इत्युपधालोपः 'खरि च ।८।४।५५।' इति चर्त्वम् । शासिवसिघसीनां च ।८।३।६०।' इति षत्वम् । पक्षिगणैः समन्तात्सर्वत्र विरुद्धैरपि काकोलूकादिभिः परस्परं विशश्वसे विश्वस्तम् । भावे लिट् । लताश्च विलोलाश्चपलाश्चकाशिरे शोभन्त स्म । फलदित्सयेव मुनिभ्यः फलं दातुमिच्छयेव यन्नम्यमानाः अत्यर्थं नमन्त्यः। दातुमिच्छा दित्सा । ददातेः सन् । 'सनि मीमाघुरभलभशकपतपदामच इस्।७।४।५४।' इति इस् 'अत्र लोपोऽभ्यासस्य ।७।४।५८।' इति अभ्यासलोपश्च । 'सः स्यार्धधातुके ।७।४।४९।' इति सकारस्य तकारः । 'अ प्रत्ययात् ।३।३।१०२।' इत्यकारप्रत्ययः । फलानां दित्सेति कर्मणि षष्ठीं विधाय कृद्योगे समासः । नन्नम्यमाना इति नमेर्यङि 'नुगतोऽनुनासिकान्तस्य ।७।४।८५।' इति नुक् । यङन्ताच्छानच् । आने मुक् ॥ २५ ॥

**अपूपुजन्विष्टरपाद्यमाल्यैरातिथ्यनिष्णा वनवासिमुख्याः ।**
**प्रत्यग्रहीष्टां मधुपर्कमिश्रं तावासनाऽऽदि क्षितिपालपुत्रौ ॥ २६ ॥**

अपूपुजन्नित्यादि—वनवासिमुख्याः महर्षयो विष्टरादिभिः अपूपुजन् पूजितवन्तः । तौ क्षितिपालपुत्रावित्यर्थात् द्वितीयान्तेन योज्यम् । वनवासीति शयवासवासिष्वकालात् । ६ । ३ । १८ ।' इति विकल्पेन सप्तम्या अलुक् । पूजेः स्वार्थिकण्यन्तस्य णौ चङि ह्रस्वः । 'दीर्घो लघोः । ७ । ४ । ९४ ।' इति अभ्यासस्य दीर्घः । विष्टरमासनम् । 'वृक्षासनयोर्विष्टरः । ८ । ३ । ९३ ।' इति निपातनात् । पाद्यं पादार्थमुदकम् । 'पादार्घाभ्यां च । ५ । ४ । २५ ।' इति यत् । तदर्थत्वात्पद्भावाभावः । माल्यानि कुसुमानि । मालायां साधूनि । 'तत्र साधुः । ४ । ४।९८ ।' इति यत् । आतिथ्यनिष्णाः अतिथ्यर्थम् आतिथ्यम् । 'अतिथेर्ञ्यः । ५ । ४ । २६ । तत्र निष्णाः कुशलाः । 'निनदीभ्यां स्नातेः

कौशले । ८ । ३ । ८९ ।' इति षत्वम् । तौ च क्षितिपालपुत्रौ रामलक्ष्मणौ तदासनादि प्रत्यग्रहीष्टां प्रतिगृहीतवन्तौ । प्रतिपूर्वाद् ग्रहेर्लुङ् । तसस्ताम् । 'ग्रहोऽलिटि दीर्घः । ७ । २ । ३७ ।' इति दीर्घः । षत्वष्टुत्वे । मधुपर्कमिश्रम् मधुपर्केण सहेत्यर्थः ॥ २६ ॥

दैत्याऽभिभूतस्य युवामवोढं मग्नस्य दोर्भिर्भुवनस्य भारम् ।
हवींषि सम्प्रत्यपि रक्षतं तौ तपोधनैरित्थमभाषिषाताम् ॥ २७ ॥

दैत्येत्यादि--दितेरपत्यानि दैत्याः । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । ४ । ३ । ८५ ।' इति ण्यः । तैराभिभूतस्य मग्नस्य शरण्यस्य भुवनस्य भारमिति-कर्तव्यतालक्षणं दोर्भिर्भुजैः युवामवोढम् ऊढवन्तौ । नरनारायणौ युवामित्युक्तौ । त्वं च त्वं चेति एकशेषः । अवोढमिति वहेर्लुङ् । थसस्तम् । हलन्तलक्षणा वृद्धिः। सिजूलोपः ।'साहिवहोरोदवर्णस्य ।६।३। ११२।'इत्योत्वम्।ढत्वष्टुत्वढलोपाः । दोरिति दमेर्डोसिन्त्यौणादिको डोस् । हवींषि होतव्यानि । सम्प्रत्यपि रक्षतम् । अर्चिरुचिहुसृपिच्छादिच्छर्दिभ्य इसिरित्यौणादिक इसिः । राक्षसैरुपहन्यमानानि रक्षतम् । प्रार्थनायां लोट् । शप् । थसस्तम् । इत्थमिति 'इदमस्थमुः । ५ ।३। २४ ।' अनेनोक्तप्रकारेण । तपोधनैस्तप एव धनं येषामिति । अभाषिषाताम् अभिहितौ । भाषेः कर्मणि लुङ् । सिजिटौ ।।२७।।

तान्प्रत्यवादीदथ राघवोऽपि यथेप्सितं प्रस्तुत कर्म धर्म्यम् ।
तपोमरुद्भिर्भवतां शराऽग्निः संधुक्ष्यतां नोऽरिसमिन्धनेषु ॥२८॥

तानित्यादि--अथैतस्मिन् प्रस्तावे राघवोऽपि रघुसुतः तान्मुनीन प्रत्यवादीत् 'वदव्रजहलन्तस्याचः । ७ । २ । ३ ।' इति वृद्धिः । यथेप्सितं यथाभिमतम् । आप्नोतेः 'आप्ज्ञप्यृधामीत् । ७ | ४। ५५ ।' इतीत्वम् अभ्यासलोपश्च । सन्नन्तात्कर्मणि निष्ठा । धर्मादनपेतं धर्म्यम् यागादि कर्म । प्रस्तुत प्रारभध्वम् । प्रपूर्वः स्तौतिः प्रारम्भे वर्तते । तस्मान्निमन्त्रणे नियोगकरणे लोट् । थस्य तः। शपो लुक् । तपांसि मरुत इव तपोमरुद्भिः । भवतां तपोमरुद्भिर्नोऽस्माकम् । 'बहुवचनस्य वस्नसौ । ८ । १ । २१ ।' इति नसादेशः । शराग्निः शरोऽग्निरिव । संधुक्ष्यतां दीप्यताम् । 'धुक्ष, धिक्ष, सन्दीपनक्लेदनजीवनेषु । ' तस्मात्कर्मणि लोट् । अरिसमिन्धनेषु अरिकाष्ठेषु । समिध्यते एभिरिति समिन्धनानि । करणे ल्युट् । अरयः समिन्धनानीव ॥ २८ ॥

प्रतुष्टुवुः कर्म ततः प्रक्लृप्तैस्ते याज्ञियैर्द्रव्यगणैर्यथावत् ।
दाक्षिण्यदिग्धं कृतमार्त्विजीनैस्तद्यातुधानैश्चिचिते प्रसर्पत् ॥ २९ ॥

प्रतुष्टुवुरित्यादि—ततो रामवधनादनन्तरं तपोधनाः कर्म यागक्रियां प्रतुष्टुवुः। यथावत् यथाविधि प्रारब्धवन्तः। यज्ञियैः यज्ञकर्मार्हैः द्रव्यगणैः प्रक्लृप्तैः मिलितैः। 'कृपो रो लः।८।२।१८।' दक्षिणामर्हन्तीति दाक्षिण्याः महामुनयः। 'कडङ्करदक्षिणाच्छ च।५।१।६९।' इति चकाराद्यत्। तैर्दिष्टमुक्तम्। कृतमार्त्विजीनैः। ऋत्विक्कर्मार्हैरनुष्ठितम्। ऋत्विजश्च ब्रह्मादयः षोडश पठिताः तच्च कर्म प्रसर्पत् वृद्धिं गच्छत्। यातुधानैः राक्षसैः चिचिते ज्ञातम्। 'चिती संज्ञाने' इत्यस्मात् कर्मणि लिट्। यज्ञियैरार्त्विजीनैरिति 'यज्ञर्त्विग्भ्यां घखञौ।५।१।७१।' इति तत्कर्मार्हतीति॥ २९॥

आपिङ्गरूक्षोर्ध्वशिरस्यबालैः शिरालजङ्घैर्गिरिकूटदघ्नैः॥
ततः क्षपाटैः पृथुपिङ्गलाक्षैः खं प्रावृषेण्यैरिव चाऽऽनशेऽब्दैः॥३०॥

आपिङ्गेत्यादि—ततः कर्मप्रवर्तनादनन्तरम्। क्षपाटैः निशाचरैः। अटन्तीत्यटाः पचाद्यच्। क्षपायामटा इति सप्तमीति योगविभागात् समासः। खमाकाशमानशे व्याप्तम्। अश्नोतेः कर्मणि लिट्। 'अश्नोतेश्च।७।४।७२।' इति नुट्। शिरसि जाताः शिरस्याः। 'शरीरावयवाद्यत्।५।१।६।' आपिङ्गा आ समन्तात् पिङ्गा विद्युदिव। रूक्षाः सूक्ष्माः उर्ध्वशिरस्या बाला येषां तैः अन्योऽपि शिरस्यो भवति इति बालग्रहणम्। अमंगलवाला इत्यर्थः। शिराः सन्ति यासामिति 'प्राणिस्थादातो लजन्यतरस्याम्।५।२।९६।' इति लच्। शिराला जङ्घा येषां तैः। गिरिकूटदघ्नैगिरिकूटप्रमाणैः। 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः।५।२।३७।' इति दघ्नच्। पृथूनि विस्तीर्णानि पिंगलानि चाक्षीणि येषां तैः। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्।५।४।११३।' इति षच्। प्रावृषेण्यैरिवेति प्रावृष एण्यः।४।३।१७।' अब्दैर्मेघैः कृष्णसाधर्म्यात्। अपो ददतीति अब्दाः। चकारः पादपूरणार्थः॥३०॥

अधिज्यचापः स्थिरबाहुमुष्टिरुदञ्चिताक्षोऽञ्चितदक्षिणोरुः।
ताँल्लक्ष्मणः सन्नतवामजङ्घो जघान शुद्धेषुरमन्दकर्षी॥३१॥

अधीत्यादि—तान् क्षपाटान् गगनस्थान् लक्ष्मणो जघान हतवान्। कीदृशः अधिज्यचापः। अध्यारूढा उत्कलिता ज्या गुणो यस्य चापस्य तदधिज्यम्। प्रादिभ्यो धातुजस्येति समासः। अधिज्यं चापं यस्य लक्ष्मणस्य। स्थिरो निश्चलो बाहुर्मुष्टिश्च यस्य। उदञ्चिते उत्क्षिप्ते अक्षिणी येन स उदञ्चिताक्षः। आकाशस्थापितदृष्टिरित्यर्थः। अञ्चितः सङ्कोचितो दक्षिणोरुर्येन

१ इदमुपमाद्योतकम्।

सोऽञ्चितदक्षिणोरुः । अञ्चेः पूजायामितीटोऽनुत्पन्नत्वात् ण्यन्तस्य रूपम् न चात्र पूजा गम्यते, किन्तु गतिविशेष एव । अनुषङ्गलोपोऽपि न भवति णि लोपस्य स्थानिवद्भावात् । समन्तात् नता वामजङ्घा यस्य स सन्नतवामजङ्घः । शुद्धेषुः निशितबाणः । अमन्दमत्यन्त कर्षुं शीलमस्यासावमन्दकर्षी । कर्णान्ताकृष्टचाप इत्यर्थः ॥३१॥

गाधेयदिष्टं विरसं रसन्तं रामोऽपि मायाचणमस्त्रचुञ्चुः ।
स्थास्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महाऽर्थम् ॥ ३२ ॥

गाधेयेत्यादि—गाधेरपत्यं गाधेयो विश्वामित्रः । द्व्यच इत्यनुवर्तमाने 'इतश्चानिञः ।४।१।१२२।' इति ढक् । तेन दिष्टं कथितं मारीचं नाम राक्षसं रामो जगाद गदितवान् । रसन्तम् वदन्तम । विरसमश्राव्यमिति क्रियाविशेषणम् । मायाचणं मायया वित्तम । अस्त्रचुञ्चुः अस्त्रैः प्रतीतो रामः । तेन वित्तश्चुञ्चुप्चणपौ ।५।२।२६।' इति । स्थास्नुं रणे स्थितिशीलम । तस्य सेनापतित्वात् । स्मेरमुखः चित्तस्याक्षोभादीषद्धसनशीलवदनः । 'नमिकम्पिस्म्यजसकम् हिंसदीपो रः ।३।२।१६७।' इति रः । उच्चैस्तरां जगादेति क्रियाविशेषणम् । वचनं वक्ष्यमाणं महार्थं प्रधानार्थम । ब्रुविशासित्यत्र ब्रुवीत्यर्थग्रहणाद्विकर्मकता । मारीचं वचनं च ॥३२॥

आत्मम्भरिस्त्वं पिशितैर्नराणां फलेग्रहीन् हंसि वनस्पतीनाम् ।
शौवस्तिकत्वं विभवा न येषां व्रजन्ति तेषां दयसे न कस्मात् ३३॥

आत्मेत्यादि—नराणां पिशितैर्मांसैः आत्मानं बिभर्षि पुष्णासि । नान्यदपि शरीरस्थितिहेतुर्भवतीति भावः । स त्वमात्मम्भरिः[1] आत्मभरणाय फलानि गृह्णन्ति ये वनस्पतीनां तान् फलेग्रहीन् फलाशिनो मुनीन् हंसि मारयसि । शपो लुक् । 'फलेग्रहिरात्मम्भरिश्च ।३।२।२६।' इति निपातितौ । श्वो भवितारः शौवस्तिकाः । 'श्वसस्तुट् च ।४।३।१५।' इति ठञ् तुडागमश्च । द्वारादित्वादैजागमः । शौवस्तिकत्वं तेषां विभवा न व्रजन्ति तेषामश्वस्तनिकवृत्तीनां कस्मान्न दयसे न रक्षसि । 'अधीगर्थदयेशां कर्मणि ।२।३।५२।' इति कर्मणि षष्ठी ॥ ३३ ॥

अघ्नो द्विजान् देवयजीन्निहन्मः कुर्मः पुरं प्रेतनराऽधिवासम् ।
धर्मो ह्ययं दाशरथे निजो नो नैवाऽध्ययकारिष्महि वेदवृत्ते॥३४ ॥

---

१ 'उभौ त्वात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके ।' इत्यमरः ।

अद्म इत्यादि—राक्षसः प्राह । द्विजान् ब्राह्मणक्षत्रियवैश्यान् अद्मो भक्षयामः देवयजीन् देवान् यजन्ति आराधयन्ति ये तान्निहन्मः । 'अच इः' इत्यनुवर्तमाने खनीत्यादिपूह्यमानेष्वौणादिकेषु सूत्रेषु यद्यपि यजिर्न पठितस्तथापि यजेरि प्रकृतेश्च तदूह्यमिति वचनात् । 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ।२।३।५६।' इत्यत्र सङ्घातविगृहीतविपर्यस्तग्रहणात् षष्ठी प्राप्तापि न भवति । कर्मणः शेषत्वेनाविवक्षितत्वात् । पुरं नगरं प्रेतनराणां मृतनराणाम् । अधिवा-समवस्थानं कुर्मः । नित्यहननेन श्मशानतुल्यमित्यर्थः । कस्मादेवमित्यत आह—धर्म इति । दशरथस्यापत्यं दाशरथिः । 'अत इञ् ।४।१।९५।' इतीञ् । हे दाशरथे । हि यस्मादर्थे वर्तते । यस्मादयं धर्मः आचारः । निजो नित्यः । न इत्य-स्माकम् । वेदविरुद्ध इति चेत्—नैवाध्यकारिष्महि वेदवृत्ते । वेदविहितं वृत्त-मिति मध्यमपदलोपी समासः । यद् ब्राह्मणानामुक्तमनुष्ठानं तत्र वयं नैवा-ध्कृता इत्यर्थः । अधिपूर्वात्करोतेः कर्मणि लुङ् । 'स्यसिच्सीयुट्तासिषु भावक-र्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वादिट् च ।६।४।६२।' इति चिण्वादिट् ॥३४॥

धर्मोऽस्ति सत्यं तव राक्षसाऽयमन्यो व्यतिस्ते तु ममाऽपि धर्मः।
ब्रह्मद्विषस्ते प्रणिहन्मि येन राजन्यवृत्तिर्धृतकार्मुकेषुः ॥ ३५ ॥

धर्म इत्यादि—रामः प्राह । हे राक्षस । रक्ष एव राक्षसः । प्रज्ञादित्वादण् । स्वार्थिका अतिवर्तन्त इति पुँल्लिङ्गता । तत्रायं पूर्वोक्तः पराभिद्रोहलक्षणो धर्मो-ऽस्तीति सत्यमेतत् । किन्तु ममापि रामस्य अन्यो धर्मोऽशिष्टनिग्रहलक्षणो व्यतिस्ते व्यतिभवते । इदमुक्तं भवति—यद्यप्येवंप्रकारस्त्वद्धर्मो भविष्यति तथापीदानीमेव या त्वद्धर्मेण विद्यमानतया निष्पाद्या सा अस्मद्धर्मेणैव निष्पा-दकत्वेन व्यतिस्ते । ततश्चान्यसम्बन्धिनीं क्रियामन्यः करोति इतरसम्बन्धिनी-मितर इति धर्मव्यतिहारसम्भवात् । अस्तेः 'कर्तरि कर्मव्यतिहारे ।१।३।१४।' तङ् । तथा हि यो यदवसरे यां कांचित् क्रियां करोति स तत्क्रियाकारीत्युपचा-राल्लोक उच्यते । येन धर्मेण हेतुना ब्रह्मद्विषस्ते प्रणिहन्मि मारयामि स व्यति-स्ते इति योज्यम् । 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्साति-वपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ।८।४।१७।' इति णत्वम् । 'जासि-निप्रहणनाटक्राथपिषां हिंसायाम्—२ । ३ । ५६ ।' इति कर्मणि षष्ठी । तथा कथं तव धर्म इति चेदाह—राजन्यवृत्तिरिति । क्षत्रियवृत्तिः ततो राज्ञोऽपत्यम् । 'राजश्वशुराद्यत् ।४।१।१३७।' इति यत् 'ये च । ६ । ४ । १६८ ।' इति प्रकृति-

भावः । धृतं कार्मुकम् इषवश्च येन सः । यतः अहं राजन्यवृत्तिः ततोऽहं धृतकार्मुकेषुरिति । 'धृतकार्मुकेषु' इति पाठान्तरम् । क्व राजन्यवृत्तिः सायुधेष्वित्यर्थः ॥ ३५ ॥

इत्थंप्रवादं युधि संप्रहारं प्रचक्रतू रामनिशाविहारौ ।
तृणाय मत्वा रघुनन्दनोऽथ बाणेन रक्षः प्रधनान्निरास्थत् ॥३६॥

इत्थमित्यादि—इत्थम् अनेन प्रकारेण प्रवादः अन्योन्याभिवादो यत्र संप्रहारे तं संप्रहारं परस्पराभिभवलक्षणं प्रकृतवन्तौ । युधि रणभूमौ । युध्यन्ते अस्यामिति सम्पदादित्वादधिकरणे क्विप् । रामनिशाविहारौ । रामो निशाविहारो निशाचरो मारीचश्चेत्यर्थः । निशायां विहारो यस्येति समासः । अथानन्तरं रघुनन्दनो रघुवंशस्य नन्दयिता रामो मारीचं बाणेन तत्सम्बन्धिनि सत्यपि तृणाय मत्वा तृणमिव अवमन्य । 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु-२।३।१७' इति चतुर्थी । तत्र प्रकृष्टकुत्सितग्रहणं कर्तव्यम् । इह मा भूत् । तृणं मत्वेति ।' प्रधनात् संग्रामात् । निरास्थत् अपनीतवान ॥ ३६ ॥

जग्मुः प्रसादं द्विजमानसानि, द्यौर्वर्षुका पुष्पचयं बभूव ।
निर्व्याजमिज्या ववृते वचश्च भूयो बभाषे मुनिना कुमारः ॥ ३७॥

जग्मुरित्यादि—यागविघ्नकारिषु निरस्तेषु द्विजानां मानसानि मनांस्येव मानसानि । 'प्रज्ञादिभ्यश्च ५।४।३८।' इत्यण् । प्रसादम् अव्याकुलत्वं जग्मुः गतानि । 'गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८।' इत्युपधालोपः । द्यौः पुष्पचयं वर्षुका वर्षणशीला बभूव भवति स्म । 'लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् ३ । २ । १५४ ।' इति उकञ् । ' न लोकाव्ययनिष्ठाखलर्थतृनाम्-२ । ३ । ६९ । ' इति षष्ठीप्रतिषेधः । निर्व्याजं निर्विघ्नम् । इज्या यागः । 'व्रजयजोर्भावे क्यप् ३।३।९८।' इति क्यप् । ववृते वृत्तः । लिट् । भूयः पुनरपि मुनिना गाधेयेन । कुमारः । अकृतदारकर्मत्वात् । वचो वक्ष्यमाणं बभाषे । कर्मणि लिट् । ब्रुवीत्यर्थग्रहणात् द्विकर्मकता वचः कुमारश्च ॥ ३७ ॥

महीयमाना भवताऽतिमात्रं सुराऽध्वरे घस्मरजित्वरेण ।
दिवोऽपि वज्राऽऽयुधभूषणाया ह्रिणीयते वीरवती न भूमिः ॥३८॥

---

१ 'अत्र विषये सप्तमी । २ 'युद्धमायोधनं जन्यं प्रधनम् प्रविदारणम्' इत्यमरः
३ 'प्रसादस्तु प्रसन्नता' इत्यमरः । ४ 'दशरथस्य' इति प्रकृतम् । दशरथस्येति विशिष्यावचनेन च तत्र तस्य वात्सल्यं ध्वन्यते । राम इत्यर्थः ।

महीत्यादि—भवता भूमिः पृथिवी महीय्यमाना पूज्यमाना । अतिमात्रं सुष्ठु सम्यक् पालनादिभिर्योऽपि स्वर्गस्य न ह्रिणीयते न लज्जते किंतु प्रतिस्पर्धत इति भावः । 'ह्रिणी, महीङ्' इति कण्ड्वादिपाठाद्यक् । ( ङित्वात्तङ् । अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति ? ) महीयशब्दात्कर्मणि लकारः । शानच् । यक् । अतो लोपः । मुक् । महीय्यमानेति रूपम् । सुराध्वरे सुरानुद्दिश्य योऽध्वरो यज्ञः क्रियते तत्र । ये घस्मराः अदनशीला राक्षसा इति यावत् । 'सृघस्यदः क्मरच् ३ । २ । १६० । तेषां जित्वरेण जयशीलेन भवता । 'इण्णशजिसर्तिभ्यः क्वरप् ३ । २ । १६३ ।' इति क्वरप् । वज्रायुधभूषणायाः शक्र एवालङ्कारो यस्याः दिवः । वीरवती त्वद्विधो वीरो यस्यां भूमाविति ॥ ३८ ॥

संक्षेपेण स्तुतिमाह—

बलिर्बबन्धे जलधिर्ममन्थे जह्रेऽमृतं दैत्यकुलं विजिग्ये ।
कल्पाऽन्तदुःस्था वसुधा तथोहे येनैष भारोऽतिगुरुर्न तस्य॥ ३९ ॥

बलिरित्यादि—येन भवता बलिर्बबन्धे बद्धः । जलधिर्ममन्थे मथितः । मन्दरं दोर्भिर्गृहीत्वा । 'मन्थ विलोडने' इत्यस्य रूपम् । संयोगान्तत्वाल्लिटोऽकित्त्वेन अनुनासिकलोपो न भवति । जह्रेऽमृतम् । स्त्रीरूपधारिणा । दैत्यकुलं विजिग्ये विजितमनेकधा । 'सँल्लिटोर्जेः ७ । ३ । ५७ ।' इति कुत्वम् । 'एरनेकाचोऽसंयोगपूर्वस्य ६ । ४ । ८२ ।' इति यणादेशः । तथा कल्पान्ते प्रलये दुःस्था दुःस्थिता वसुधा पृथिवी ऊहे उद्धृता । वराहरूपिणा । वहेर्यजादित्वात् संप्रसारणम् । तस्य भवत एष भारो मुनिजनरक्षणम् अतिगुरुर्न भवति । सर्वत्र कर्मणि लिट् ॥ ३९ ॥

इति ब्रुवाणो मधुरं हितं च तमाञ्जिहन् मैथिलयज्ञभूमिम् ।
रामं मुनिः प्रीतमना मखाऽन्ते यशांसि राज्ञां निजिघृक्षयिष्यन् ।४०॥

इतीत्यादि—इति यथोक्तप्रकारेण मधुरं श्रोत्रसुखं हितं च ब्रुवाणः अभिदधानः । 'लक्षणहेत्वोः क्रियायाः ३।२।१२६।' इति शानच् । मुनिः प्रीतमनाः मखान्ते यज्ञावसाने तं रामं मैथिलस्य यज्ञभूमिं आञ्जिहत् गामितवान् । मिथिलानां राजेति । 'जनपदशब्दात्क्षत्रियादञ् ४।१।१६८।' इत्यत्र तस्य राजन्यपत्यवदित्यतिदेशादञ् । 'अहि गतौ '। 'इदितो नुम् धातोः ७ । १ । ५८ ।'

१ 'अनुपयुक्तोऽयं कोष्ठकान्तर्गतः पाठः' । २ 'भक्षको घस्मरोऽद्मरः ' इत्यमरः । राक्षसपरत्वं तल्लक्षणया । ३ 'जता जिष्णुश्च जित्वरः ।' इत्यमरः ।

प्रयोजकव्यापारे णिच् । लुङ् आट् चङि णिलोपः । 'द्विर्वचनेऽचि । १ । १ । ५९ ।' इति स्थानिवद्भावात् 'अजादेर्द्वितीयस्य ६ । १ । २ ।' इति ह्शब्दस्य द्विर्वचनम् । 'नन्द्राः संयोगादयः ६ । १ । ३ ।' इति नकारस्य प्रतिषेधः । अभ्यासकार्यम् । आञ्जिहदिति रूपम् । राज्ञां यशांसि निजिघृक्षयिष्यन् निग्रहीतुमभिभवितुमेषयिष्यन् । ग्रहेः सन् । 'सनि ग्रहगुहोश्च ।७।२।१२ ।' इति इट्प्रतिषेधः । द्विर्वचनादि । 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च । १ । २ । ८ ।' इति सनः कित्त्वम् । 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । ६ । १ । १६ ।' इति सम्प्रसारणम् । ढत्वभष्भावौ । गकारस्य घकारः । कत्वषत्वे । पश्चाण्णिच् । तदन्ताद्भाविष्यत्सामान्याविवक्षायां लट् । तेन भविष्यदनद्यतने लुट् न भवति ॥ ४० ॥

एतौ स्म मित्रावरुणौ किमेतौ किमश्विनौ सोमरसं पिपासू ।
जनं समस्तं जनकाऽऽश्रमस्थं रूपेण तावौजिहतां नृसिंहौ ॥ ४१ ॥

एतावित्यादि—एतौ तत्रागतौ नृसिंहौ नरौ सिंहाविव । जनकाश्रमस्थं जनं रूपेण स्वरूपतया औजिहतां वितर्कं कारितवन्तौ । सिंहाविव । 'ऊह वितर्के' इत्यस्माद्धातोः ण्यन्तात् कर्तुः क्रियाफलाविवक्षायां 'णिचश्च । १ । ३ । ७४ ।' इति तङ् न भवति । चङि णिलोपस्य स्थानिवद्भावात् । अजादेर्द्वितीयस्य । ६ । १ । २ ।' इति द्विर्वचनम् । ऊहमाह—मित्रावरुणौ आदित्यवरुणौ । 'देवताद्वन्द्वे च । ६ । ३ । २६ ।' इत्यानङ् । तयोर्महानुभावत्वात् । सोमरसं पिपासू पातुमिच्छू । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ।२। ३ । ६९ ।' इति षष्ठीप्रतिषेधः । एतावागतौ । आङ्पूर्वस्येणो निष्ठायां रूपम् । किमश्विनौ अश्विनीकुमारौ सोमरसं पिपासू एताविति । एवं जनम् औजिहताम् । सुशब्दपाठे एतौ सुमित्रेति पाठः । एतौ स्म मित्रेति स्मशब्दो निपातः पादपूरणार्थः ॥ ४१ ॥

अजिग्रहत्तं जनको धनुस्तद् येनाऽर्दिदद्दैत्यपुरं पिनाकी ।
जिज्ञासमानो बलमस्य बाह्वोर्हसन्नभाङ्क्षीद्रघुनन्दनस्तत् ॥ ४२ ॥

अजिग्रहदित्यादि—येन धनुषा दैत्यपुरं पिनाकी महादेव आर्दिदत् हिंसितवान् । अर्देः स्वार्थिकण्यन्तात् चङि 'अजादेर्द्वितीयस्य ।७।१।२।' इति दिशब्दो द्विरुच्यते रेफस्य प्रतिषेधः । 'तद्धनुस्तं रामं जनकः अजिग्रहत् बोधितवान् । अनेन धनुषा त्रिपुरं दग्धमिति । ग्रहेर्हेतुमण्ण्यन्ताच्चङि णिलोपः । 'णौ चङ्युपधाया ह्रस्वः ।७।४।१।' इति ह्रस्वः । सन्वद्भावादित्वम् । ग्रहेश्च

बुद्ध्यर्थत्वात्। 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ ।१।४।५२।' इति रामस्य कर्मसंज्ञा। अस्य रामस्य बाह्वोर्भुजयोर्बलं जिज्ञासमानो जनकः। एवंभूतं धनुः हसन् स्मयमानो रघुनन्दनो रामः अभांक्षीत् भग्नवान्। भञ्जेर्लुङि सिचि हलन्तलक्षणा वृद्धिः। तत्र हि हल्ग्रहणं समुदायप्रतिपत्त्यर्थमित्युक्तम्[1] ॥ ४२ ॥

ततो नदीष्णान्पथिकान्गिरिज्ञानाह्वायकान्भूमिपतेरयोध्याम्।
दित्सुः सुतां योधहरैस्तुरङ्गैर्व्यसर्जयन्मैथिलमर्त्यमुख्यः ॥ ४३ ॥

तत इत्यादि—धनुर्भङ्गादनन्तरं महानयमिति ज्ञात्वा जनकः सुतां दुहितरं दित्सुः दातुमिच्छुः। दादतेः। 'सनि मीमाघुरभलभशकपतपदामच इस् ।७।४।५४।' इति अच इस्। द्विर्वचनम्। 'अत्र लोपोऽभ्यासस्य ।७।४।५८।' इत्यभ्यासलोपः। 'सः स्यार्धधातुके ७।४।७९।' इति तत्वम्। 'सनाशंसभिक्ष उः ।३।२।१६८।' भूमिपतेर्दशरथस्य आह्वायकान् आह्वयन्ति आकारयन्तीति कर्तरि ण्वुल्। 'आतो युक् चिण्कृतोः।७।३।३३।' कृत्प्रयोगे भूमिपतेः कर्मणि षष्ठी। तान् अयोध्यां व्यसर्जयत् विसर्जितवान्। विपूर्वस्य सृजेर्हेतुमण्ण्यन्तस्य लङि रूपम्। गत्यर्थत्वात् द्विकर्मकता। नद्यां स्नान्तीति नदीष्णाः। 'सुपि स्थः ।३।२।४।' योगविभागात्कः। 'आतो लोप इटि च ।६।४।६४। 'निनदीभ्यां स्नातेः कौशले ।८।३।८९।' इति षत्वम्। नदीं तरीतुं कुशलानित्यर्थः। पथिकान् पथि कुशलान्। 'तत्र कुशलः पथः ।५।२।६३।' इति ठक्। गिरिज्ञान् यथाप्रदेशं गिरिज्ञान् 'इगुपधज्ञाप्रीकिरः कः।३।१।१३५।' इति कः। तुरंगैः अश्वैः करणभूतैः। युध्यन्त इति योधाः। पचाद्यच्। तानाहर्तुं क्षमैः। 'वयसि च ।३।२।१०।' इत्यच् 'हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्' इत्यौणादिकस्तन्। म्रियन्ते प्राणिनोऽस्मिन्निति मर्तो भूर्लोकः तत्र भवा मर्त्या मनुष्याः। दिगादेराकृतिगणत्वात् यत्। आकृतिगणत्वस्य लिंगं 'देवमनुष्यपुरुषपुरुमर्त्येभ्य' इति निर्देशः। मुखमेव मुख्यः प्रधानम्। 'शाखादिभ्यो यः ।५।३।१०३।' मर्त्येषु[2] मुख्यो मर्त्यमुख्यः। मैथिलश्चासौ मर्त्यमुख्यश्चेति विशेषणसमासः। जनक इत्यर्थः ॥४३॥

क्षिप्रं ततोऽध्वन्यतुरङ्गयायी यविष्ठवद्वृद्धतमोऽपि राजा।
आख्यायकेभ्यः श्रुतसूनुवृत्तिरग्लानयानो मिथिलामगच्छत् ॥४४॥

---

१ अत्र समासपुनरात्तत्वं दोषः। २ अत्र 'मर्त्यानाम्' इति तु न युक्तः पाठः, 'न निर्धारणे २।२।१०' इति षष्ठीनिषेधात्।

क्षिप्रमित्यादि—आख्यान्ति कथयन्ति ये ते आख्यायकास्तेभ्यः श्रुता सूनुवृत्तिर्येन स राजा दशरथः। सूयत इति सूनुः पुत्रः 'दाभाभ्यां नुः' इति वर्तमाने 'सुवः किच्च' इत्यौणादिको नुप्रत्ययः। ततोऽनन्तरमेव क्षिप्रं शीघ्रम्। 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्।' इति रक्। क्रियाविशेषणं चैतत्। मिथिलामगच्छत्। भरतशत्रुघ्नाभ्यां सहेत्यर्थादनुपक्तव्यम्। गमेर्लङि 'इषुगमियमां छः।७।३।७७।' अध्वानम् अलं गामिनो ये तुरंगा अश्वाः ते अध्वन्यः। अलं गामीत्यस्मिन्नर्थे'अध्वनो यत्खौ।५।२।१६।' इति यत्। 'ये चाभावकर्मणोः।६।४।१६८।' इति प्रकृतिभावः। तैः साधु यानीति साधुकारिणि णिनिः। अध्वन्यतुरंगयायी। एवं च कृत्वा अग्लानयानः न विद्यते ग्लानं ग्लानिर्यस्मिन्याने तत् अग्लानं यानं यस्येति। तादृशः तादृशैस्तुरङ्गैः सुखयान इति भावः। ग्लानेति भावे निष्ठा। संयोगादेरातो धातोर्यण्वतः।८।२।४३।' इति नत्वम्। वृद्धतमोऽपि यविष्ठवत्। युवशब्दस्येष्ठनि 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरम्पूर्वस्य च गुणः।६।४।१५६।' इति यणादिपरलोपः पूर्वस्य च गुणः। पश्चात् 'तेन तुल्यं क्रियाचेद्वतिः।५।१।११५।' इति वतिः॥ ४४॥

वृन्दिष्ठमार्चीद्वसुधाऽधिपानां तं प्रेष्ठमेतं गुरुवद्गरिष्ठम्।
सदृङ्‌ महान्तं सुकृताऽधिवासं बंहिष्ठकीर्तिर्यशसा वरिष्ठम्॥ ४५॥

वृन्दिष्ठमित्यादि—तं राजानमेतमायान्तं जनक आर्चीत् पूजितवान्। अर्चेर्लुङि रूपम्। वृन्दिष्ठं वृन्दारकतमम् प्रशस्ततममित्यर्थः। केषां वसुधाधिपानां पृथ्वीपतीनाम्। प्रेष्ठं प्रियतमम्। गुरुवत् गुरुणा तुल्यं वर्तमानं गरिष्ठम् गुरुतमम्। सदृक् समानान्ययोश्चेत्युपसंख्यानाद् दृशेः क्विन्। रूढिशब्दश्चायम्। नात्र दर्शनक्रिया विद्यते। अभिजनादिभिस्तुल्यो जनक इत्यर्थः। महान्तं महानुभावं सदृशां मध्ये महान्तम्। सुकृताधिवासं सुकृतानिलयम्। अधिवसत्यस्मिन्निति अधिकरणे घञ्। बंहिष्ठा बहुलतमा कीर्तिर्यस्य स बंहिष्ठकीर्तिः। यशसा वरिष्ठं गुरुतमम्। अत्र वृन्दारकप्रियगुरुबहुलोरुगामिष्ठनि

---

१ अध्वनि यथेष्टं गमने योग्यैः अध्वन्यैः इत्यर्थः। २ 'साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः' इत्यमरः। ३ 'प्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः' इत्यमरः।

यथासंख्यं प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ।६।४।१५७।' इति वृन्दप्रगर्वंहवर इत्येते आदेशा भवन्ति ॥ ४५ ॥

त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्रः ।
विवेकदृश्वत्वमगात्सुराणां तं मैथिलो वाक्यमिदं बभाषे ॥ ४६ ॥

त्रिवर्गेत्यादि—तं दशरथं मैथिलो जनकः वाक्यमिदं बभाषे । ब्रवीत्यर्थग्रहणात् द्विकर्मकता । किं तद्वाक्यमित्याह—असाविन्द्रो भवन्तम् एकासनमध्यासयन् आरोपयन् विवेकदृश्वत्वमगादिति संबन्धः । आसनस्य 'अधिशीङ्स्थासां कर्म । १ । ४ । ४६ ।' इत्यधिकरणे कर्मसंज्ञा । भवन्तमिति 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माकर्म्मकाणामणि कर्त्ता स णौ ।१ । ४ । ५२ ।' इत्यस्तेरण्यन्तावस्थायामकर्मकत्वात् । पारंगामीत्यस्मिन्वाक्ये । 'अवारपारात्यन्तानुकामंगामी । ५ । २ । ११ ।' इति पारशब्दात् खः । तत्र विगृहीतात्रिपर्यस्तग्रहणात् । त्रिवर्गस्य[1] धर्मार्थकामस्य पारीणमिति षष्ठीसमासः । त्रिवर्गपारीणं भवन्तम् । सुराणां मध्ये स एवैको विवेकदृश्वत्वं विवेकज्ञतामगात् । 'इणो गा लुङि । २ । ४ । ४५ ।' 'गातिस्थाघुपाभूभ्यः—२ । ४ । ७७ ।' इति सिचो लुक् । विवेकं दृष्टवानिति दृशेः क्वनिप् ॥ ४८ ॥

हिरण्मयी साललतेव जङ्गमा च्युता दिवः स्थास्नुरिवाऽचिरप्रभा ।
शशाङ्ककान्तेरधिदेवताऽऽकृतिः सुता ददे तस्य सुताय मैथिली ४७

हिरण्मयीत्यादि—तस्य दशरथस्य सुताय रामाय । सूयत इति सुतः । 'षु प्रसवैश्वर्ययोः' इत्यस्मात् कर्माणि निष्ठा । सुता मैथिली सीता ददे जनकेनेत्यर्थात् । कर्मणि लिट् । मैथिलस्यापत्यं 'अत इञ् । ४ । १ । ९५ ।' तदन्तात् 'इतो मनुष्य जातेः । ४ । १ । ६५ ।' इति ङीप् । रामस्य ज्येष्ठत्वात्तस्यैव कविना परिणय उक्तः न शेषाणाम् । तेन अन्या अपि तदैव दुहितरो दत्ताः । हिरण्मयी सुवर्णनिर्मितेव साललता वृक्षलता । सुवर्णच्छवित्वात् तस्याः हिरण्यविकार इति मयटि' दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि । ६ । ४ । १७४ ।' इति यलोपनिपातनम् । जङ्गमा संचारिणी नतु स्थावरा । अत्यर्थं गच्छतीति यङि 'नुगतः ७ । ४ । ८५ ।' इतिः नुक् । यङन्तात्पचाद्यचि यङोऽचि च । २ । ४ । ७४ ।' इति यङो लुक् च्युता दिवः आकाशात्पतिता । अचिरप्रभेव विद्युदिव तेजस्वित्वात् तन्वत्वाच्च । किन्तु स्थास्नुरचञ्चला । सा तु

---

१ 'त्रिवर्गो धर्म्मकामार्थैः' इत्यमरः ।

चञ्चलेति व्यतिरेकः। 'ऊङुतः। ४। १। ६६।' इति ऊङ् न भवति क्रियाशब्दत्वात्। तत्र मनुष्यजातेरिति वर्तते। शशाङ्ककान्तेर्याधिदेवता अधिष्ठात्री 'देवता तस्या आकृतिर्यस्याः। सौम्यात्वात्। आक्रियते अनयेत्याकृतिः संस्थानम् 'अकर्तरि च कारके सञ्ज्ञायाम्। ३। ३। १९।' इति स्त्रियां क्तिन्॥ ४७॥

**लब्धां ततो विश्वजनीनवृत्तिस्तामात्मनीनामुदवोढ रामः।**
**सद्रत्नमुक्ताफलभर्मशोभां सम्बंहयन्तीं रघुवर्ग्यलक्ष्मीम्॥ ४८॥**

लब्धामित्यादि—ततो दानानन्तरम् लब्धां तामात्मनीनाम् आत्मने हिताम्। 'आत्मन्विश्वजनभोगोत्तरपदात्खः।५।१।९।' इति खः। रामः उदवोढ। वहेः स्वरितेत्त्वात्कर्तुः क्रियाफलविवक्षया तङ्। विश्वजनीना विश्वजनाय हिता वृत्तिः प्रवृत्तिर्यस्य रामस्य सः पूर्ववत् खः। सती उत्कृष्टा रत्नादिशोभा यस्याः। तैरलंकृतत्वात्। तां सद्रत्नमुक्ताफलभर्मशोभाम्। भर्म स्वर्णम्[1]। सर्वधातुभ्यो मनिन्। 'भर्मभूषाम्' इति पाठान्तरम्। सद्रत्नादि भूषा अलङ्कारो यस्या इति योज्यम्। 'गुरोश्च हलः। ३। ३। १०३।' इत्यकारः। सम्बंहयन्तीं संबहुलामतिस्थिरां कुर्वाणाम्। बहुलशब्दात् 'तत्करोति तदाचष्टे' इति णिचि इष्ठवद्भावात् 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः। ६। ४। १५७।' इति बंहादेशः। पश्चात्तदन्तस्य संपूर्वस्य साधनेन योगः। कामित्याह—रघुवर्ग्यलक्ष्मीमिति। रघुवर्गे भवां विभूतिम्। 'वर्गान्ताच्च। ४। ३। ६३।' इत्यनुवृत्तौ 'अशब्दे यत्खावन्यतरस्याम्। ४। ३। ६४।' इति यत्॥ ४८॥

**सुप्रातमासादितसंमदं तद् वन्दारुभिः संस्तुतमभ्ययोध्यम्।**
**अश्वीयराजन्यकहास्तिकाऽऽढ्यमगात् सराजं बलमध्वनीनम्॥ ४९॥**

सुप्रातेति—विवाहं निर्वर्त्य प्रभाते अयोध्याभिमुखं तद्बलं दशरथस्यागात् गतवत्। सुप्रातं निरुपद्रवत्वात्। शोभनं प्रातर्दिनमुखं यस्य बलस्य। 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः। ५। ४। १२०।' इति समासान्तष्टिलोपश्च निपात्यते। आसादितसंमदं[2] प्राप्तहर्षम्। 'प्रमदसम्मदौ हर्षे। ३। ३। ६८।' इति निपातनम्। वन्दारुभिः संस्तुतं कृतस्तवम्। अभ्ययोध्यम् अयोध्याभिमुखम्। 'लक्षणेनाऽभिप्रती आभिमुख्ये। २। १। १४।' इति अव्ययीभावः। अश्वानां समूहो अश्वीयम्[3]। 'केशा-

---

१ 'भर्म स्यात् काञ्चने भृतौ' इति मेदिनी २ आसादितः सम्मदो येन तादृशमित्यर्थः। 'प्रमोदामोदसम्मदाः' इत्यमरः। ३ 'वृन्दे त्वश्वीयमाश्ववत्' इत्यमरः।

भ्याभ्यां यञ्छौ– ४ । २ । ४८ ।' इति छः । राजन्यानां क्षत्रियाणां समूहो राजन्यकम् 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ।४।२।३९।' इति वुञ् । 'प्रकृत्याके राजन्यमनुष्ययुवानः' इति प्रकृतिभावादपत्ययकारलोपो न भवति । हस्तिनां समूहो हास्तिकम् । 'अचित्तहस्तिधेनोष्ठक् ।४।२।४७।' इति ठक् । एषां सेनाङ्गत्वात् द्वन्द्व एकवद्भावः । तेनाढ्यमुपचितमिति तृतीयेति योगविभागात् समासः । सह राज्ञेति विगृह्य साकल्यवचने यौगपद्ये वाव्ययीभावः । 'अव्ययीभावे चाकाले । ६ । ३ । ८१ ।' इति सभावः । 'अनश्च' ।५।४।१०८।' इति टच् समासान्तः । अध्वनीनमध्वानमलंगामीति तं तादृशम् 'अध्वनो यत्खौ ।५।२।१६।' 'आत्माध्वानौ खे ६।४।१६९।' इति प्रकृतिभावः ॥ ४९ ॥

विशङ्कटो वक्षसि बाणपाणिः सम्पन्नतालद्वयसः पुरस्तात् ।
भीष्मो धनुष्मानुपजान्वरत्निरैति स्म रामः पथि जामदग्न्यः॥५०॥

विशङ्कटेत्यादि—एवमस्य गच्छतः पथि मार्गे । सप्तम्यां 'भस्य टेर्लोपः ७।१।८८।' पुरस्तादग्रतः । 'अस्ताति च । ५।३।४०। ' इति पूर्वस्य पुरादेशः । रामो जामदग्न्यः । जमदग्नेरपत्यं रामोऽयम् । गर्गादिपाठाद्यञ् । स ऐति स्म आगतवान् । आङ्पूर्वादिणो लट् । 'एत्येधत्यूठ्सु ।६।१।८९।' इति वृद्धिः । उरसि विशङ्कटो वक्षसि विशालः 'वेः शालच्छङ्कटचौ । ५।२।२८।' इति शङ्कटच् । बाणः पाणावस्येति बाणपाणिः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ, सप्तम्यन्तस्य परनिपातः । संपन्नो निष्पन्नो यस्तालवृक्षः स प्रमाणं यस्य स तथोक्तः । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५ । २ । ३७ ।' भीयते अस्मादिति भीष्मः । 'भियः षुग्वा' इति औणादिको मक्प्रत्ययः । वा षुगागमश्च । 'भीमादयोऽपादाने ।३।४।७४।' इत्यपादाने साधुः । धनुष्मान् धनुषा युक्तः । संसर्गे मतुप् । जानुनोः समीपमुपजानु । सामीप्येऽव्ययीभावः । उपजानु अरत्निर्यस्य स तथोक्तः प्रलम्बबाहुरित्यर्थः ॥ ५० ॥

उच्चैरसौ राघवमाह्वतेदं धनुः सबाणं कुरु माऽतियासीः ।
पराक्रमज्ञः प्रियसन्ततिस्तं नम्रः क्षितीन्द्रोऽनुनिनीषुरूचे ॥ ५१ ॥

---

१ 'अथ राजकम् । राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् । ' इत्यमरः । २ 'हास्तिकं गजता वृन्दे' इत्यमरः । ३ 'अध्वनीनोऽध्वगोऽध्वन्यः' इत्यमरः । ४ 'विशङ्कटं पृथु बृहत्' इत्यमरः । ५ भयङ्कर इत्यर्थः । 'दारुणं भीषणं भीष्मम्' इत्यमरः ।

उच्चैरित्यादि—उच्चैर्महता ध्वनिना राघवं दाशरथिम् एवं वक्ष्यमाणमाह्वत आहूतवान् । 'स्पर्धायामाङः ।१।३।३१' इत्यात्मनेपदम् । 'आत्मनेपदेष्वन्यतरस्याम् ।२।४।४४'। इति च्लेरङ् । धनुः सबाणं कुरु । धनुषि बाणमारोप्य युद्धाय सज्जीभवेत्यर्थः । मातियासीः मातिक्रम्य गमनं कार्षीः । यातेर्माङि लुङ् । अडभावः । 'यमरमनमातां सक् च ।७।२।७३।' इति इट् । 'इट ईटि ८।२।२८।' इति सिचा लोपः । अथ क्षितीन्द्रो दशरथः तमूचे । 'ब्रुवो वचिः ।२।४।५४।' आदेशस्य स्थानिवद्भावेन कर्तुः क्रियाफलविवक्षायां तङ् न । वचेः परस्मैपदित्वात् । 'वचिस्वपियजादीनां किति ।६।१।१५।' इति सम्प्रसारणम् । पराक्रमज्ञः यतस्तस्य पराक्रमं जानाति राजा । प्रियसन्तानिः प्रिया सन्ततिर्यस्य सः । रामे व्यापादिते मा भूत्सन्तानविच्छेद इति नम्रः प्रणतो भूत्वा अनुनिनीषुः अनुनेतुमिच्छुः ॥ ५१ ॥

तदनुनयमाह—

अनेकशो निर्जितराजकस्त्वं पितॄनतार्प्सीर्नृपरक्ततोयैः ।
सङ्क्षिप्य संरम्भमसद्विपक्षं काऽऽस्थाऽर्भकेऽस्मिंस्तव राम रामे ५२

अनकश इत्यादि—संरम्भं कोपं संक्षिप्य उपसंहर । क्षिपः लोटि मध्यमैकवचने रूपम् । श्यन् । एकमेकमिति विगृह्य । 'सङ्ख्यैकवचनाच्च वीप्सायाम् ।५।४।४३।' इति शस् । पश्चान्नञ्समासः । अनेकशोऽनेकप्रकारमिति क्रियाविशेषणमेतत् । निर्जितं पराजितं राजकं राज्ञां समूहो येन स निर्जितशत्रुभूतराजमण्डलः । 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ।४।२।३९।' इति वुञ् । त्वं पुनः पितॄनतार्प्सीः प्रीणितवानसि । कैः—नृपरक्ततोयैः । 'तृप प्रीणने ।' इत्यस्माल्लुङ् । सिच् । हलन्तलक्षणा वृद्धिः । असद्विपक्षम् असन्नविद्यमानो विपक्षो यस्मिन् संरम्भे । निर्जितराजकत्वात् । रामो विपक्ष इति चेदाह—"काऽऽस्थार्भकेऽस्मिंस्तव राम रामे।"इति । हे परशुराम अर्भके बालके रामे तव का आस्था क आदरोऽस्ति । नैवेत्यभिप्रायः ॥ ५२ ॥

अजीगणद्दाशरथं न वाक्यं यदा स दर्पेण तदा कुमारः ।
धनुर्व्यकार्क्षीद्गुरुबाणगर्भं लोकानलावीद्विजितांश्च तस्य ॥ ५३ ॥

अजीगणदित्यादि—दाशरथं दशरथस्येदं दाशरथम् । 'तस्येदम्

1 शत्रुप्रधानानामिति भावः ।

।४।३।२०।' इत्यण् । वाक्यं वचनम् । यदा दर्पेण मदेन हेतुना स जामदग्न्यः नाजीगणत् न गणितवान् । 'गण संख्याने ।' इत्यस्यादन्तत्वान्न वृद्धिः। 'चङि । ६ । १ । ११ ।' इति द्विर्वचनम् । 'ई च गणः । ७ । ४ ९७ ।' इति अभ्यासस्येकारः । तदा कुमारो रामो धनुर्व्यकार्क्षीत् आकृष्टवान् । 'कृष आकर्षणे । ' स्पृशमृशेत्यादिनोपसंख्यानेन सिचि पक्षे रूपम् । हलन्तलक्षणा वृद्धिः । 'षढोः कः सि । ८ । २ । ४१ । ' इति कत्वम् । कृतदारकर्मापि पुत्रः पितरि जीवति कुमार इति व्यपदिश्यते । गर्भयतीति गर्भः । गुरुर्बाणो गर्भो यस्य धनुषः । लोकांश्च स्वप्रभावाद्विजितान् । तस्य परशुरामस्य । अलावीत् छिन्नवान् । लुनातेर्लुङि सिचि वृद्धौ रूपम् । समुच्छिद्यन्तामस्या लोका इति अमोघमस्त्रं मुक्तवानित्यर्थः । ततःप्रभृति तस्य सर्वं तेजोऽपहृतम्॥५३॥

जिते नृपारौ सुमनीभवन्ति शब्दायमानान्यशनैरशङ्कम् ।
वृद्धस्य राज्ञोऽनुमते बलानि जगाहिरेऽनेकमुखानि मार्गान् ॥५४॥

जित इत्यादि—जिते नृपारौ परशुरामे बलानि सैन्यानि मार्गान् पथः-जगाहिरे अवष्टब्धवन्ति । वृद्धस्य राज्ञो दशरथस्यानुमते सति गच्छतेति । जामदग्न्यसंरम्भादसुमनांसि सुमनांसि सन्ति सुमनीभवन्ति बलानि । 'अरुर्मन-श्चक्षुश्चेतोरहोरजसां लोपश्च । ५ । ४ । ५१ ।' इति च्व्यन्तस्य लोपे 'अस्य च्वौ । ७ । ४ । ३२ ।' इतीत्वे रूपम् । शब्दायमानानि । अशनैः सुष्ठु शब्दं कुर्वाणानि । एवं जितस्तथा जितो नृपारिरिति । ' शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे । ३ । १ । १७ ।' इति क्यङ् । अशङ्कं निर्भयं जगाहिर इति क्रियाविशेषणम् । अनेकमुखानि पृथग्भूतानि पूर्वं भयेन बहुलीभूतत्वादनीकानां बहुवचनमिति ॥ ५४ ॥

अथ पुरुजवयोगान्नेदयद्दूरसंस्थं
द्रवयदतिरयेण प्राप्तमुर्वीविभागम् ।
क्रमरहितमचेतन्नीरजीकारितक्ष्मां
बलमुपहितशोभां तूर्णमायादयोध्याम् ॥ ५५ ॥

अथेत्यादि—अथेत्यानन्तर्ये । बलं दाशरथम् । तूर्णं शीघ्रम् । 'रुष्यमत्वर-संघुषाऽऽस्वनाम् । ७ । २ । २८ ।' इति पक्षे इडभावः । 'ज्वरत्वरस्रिव्य-

---

१ लूञ् छेदने । २ नृपा अरयः वध्यत्वेन वधकत्वेन च शत्रवः यस्य तस्मिन् । रामो हि पूर्वं नृपान् हतवान् सम्प्रति च स्वयं जित इति तथोक्तत्वम् ।

विमवामुपधायाश्च । ६ । ४ । २० ।' इति वकारोपधयोरूठ् । 'रदाभ्याम्- । ८ । २ ४२ । ' इति नत्वम् । अयोध्यामायात् आगतम् । आङ्- पूर्वाद्यातेर्लङि रूपम् । पुरुर्महान् वेगो जवः तेन योगात् । पूर्यते वर्धते इति पुरुः । 'कुभ्रश्च' इत्यधिकृत्य 'प्राभिदिव्यधिगृधिधृपिभ्यः' इति कुप्रत्ययः । दूरसंस्थं दूरे सन्तिष्ठत इति कः । उर्वीविभागम् । नेदयन् अन्तिकं कुर्वन् । अन्तिकशब्दात् समीपवाचिनः तत्करोतीति णिच् । इष्ठवद्भावात् 'अन्तिक- बाढयोर्नेदसाधौ । ५ । ३।६३।' इति नेदादेशः पश्चाट्टिलोपः । शतरि शप् । अया- देशः । प्राप्तं विपयीकृतं चोर्वीविभागं भूविभागम् । अतिरयेण अतिवेगेन । दवयत् दूरीकुर्वन् पश्चाद्भागेन । दूरशब्दात् पूर्ववण्णिचि इष्ठवद्भावे च 'स्थूल- दूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः । ६ । ४ । १५६ ।' इति यणादिपरलोपः पूर्वस्य च गुणः । पश्चात्तथा एव लडादयः । क्लमरहितम् अप- गतश्रमम् । अचेतन् कियद्दूरमागतोऽहमित्यबुध्यमानम् । 'चिती संज्ञाने' इत्येतस्य शतरि रूपम् । अनीरजा नीरजाः कारितेति 'अरुर्मनश्चक्षुश्चेतोरहो- रजसां लोपश्च । ५ । ४ । ५१ ।' इति च्वावन्त्यलोपः । 'अस्य च्वौ ।७।४।३२।' इतीत्वम् । नीरजीकारिता क्ष्मा भूमिर्यस्यामयोध्यायां ताम् । सिक्तसंमृष्टभूत- लामित्यर्थः । उपहितशोभाम् छत्रध्वजपताकाभिरारोपितशोभाम् ॥ ५५ ॥

इति श्रीजयमङ्गलसूरिविरचितया जयमङ्गलाऽऽख्यया व्याख्यया समलंकृते श्रीभट्टिकाव्ये प्रथमे प्रकीर्णकाण्डे लक्षणरूपे द्वितीयः परिच्छेदः लक्ष्यरूपे कथानके सीतापरिणयो नाम द्वितीयः सर्गश्च ॥

---

## तृतीयः सर्गः ।

**वधेन सङ्ख्ये पिशिताऽशनानां क्षत्राऽन्तकस्याऽभिभवेन चैव ।**
**आढ्यंभविष्णुर्यशसा कुमारः प्रियंभविष्णुर्न स यस्य नाऽऽसीत् ॥ १ ॥**

वधेनेत्यादि-संङ्ख्ये संग्रामे पिशिताशनानां राक्षसानाम् । पिशितं मांसम् अशनं येषामिति । तेषां वधेन हननेन । 'हनश्च वधः । ३ । ३ । ७६ ।' इति अप्प्रत्यये वधादेशः । कृत्प्रयोगे कर्माणि षष्ठी । क्षत्रान्तकस्य परशुरामस्य । अभिभवेन पराजयेन च 'ऋदोरप् । ३ । ३।५७ ।' चैवशब्दो निपातसमुदायः समुच्चये । तेन हेतुभूतेन । यशसा आढ्यंभविष्णुः । अनाढ्य आढ्यो भूतः । 'कर्तरि भुवः खिष्णुच्खुकञौ ।३।२।५७।' इति खिष्णुच् 'अरुर्द्विषदजन्तस्य मुम् ।

---

१ अत्र 'मालिनी' वृत्तं तल्लक्षणं चोक्तं प्राक् ।

६।३।६७।' इति मुम्। कुमारो यस्य स प्रियंभविष्णुः। यस्यापि प्राक् प्रियो न जातः पश्चादपि तथैव न प्रियो भूतः स नासीत् न बभूव ॥ १ ॥

**ततः सुचेतीकृतपौरभृत्यो राज्येऽभिषेक्ष्ये सुतमित्यनीचैः।**
**आघोषयन्भूमिपतिः समस्तं भूयोऽपि लोकं सुमनीचकार ॥ २ ॥**

तत इत्यादि—ततः प्रियम्भविष्णुताया अनन्तरं भूमिपतिर्दशरथो लोकं सुमनीचकार[1]। किमयं सम्यक् पालयिष्यति न वेति असुचेतसः पौरा भृत्याश्च जाताः ते सम्यक्पालनात् सुचेतसः कृता येन स सुचेतीकृतपौरभृत्यः। भूयोऽपि पुनरपि लोकं समस्तं सुमनीचकार। कथमित्याह—राज्ये राजकर्मणि पालनलक्षणे सुतं रामं अभिषेक्ष्ये तदभिषेकं करिष्यामीति। सिचेरुभयपदित्वात्तङ्। अनीचैर्महता ध्वनिना। आघोषयन् घोषणां कारयन्। सुचेतीसुमनीशब्दौ 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।५।४।५१।' इति साधू ॥ २ ॥

**आदिक्षदादीप्तकृशानुकल्पं सिंहासनं तस्य सपादपीठम्।**
**सन्तप्तचामीकरवल्गुवज्रं विभागविन्यस्तमहार्घरत्नम् ॥ ३ ॥**

आदिक्षदित्यादि—तस्य रामस्य सिंहासनमादिक्षत् आदिष्टवान् एवंविधं कारयेति। दिशेः स्वरितेतो लुङि 'शल इगुपधादनिटः क्सः ।३।१।४५।' इति च्लेः क्सः। अकर्तृगामिक्रियाफलत्वात्तिप्। आदीप्तकृशानुकल्पं ज्वलिताग्नितुल्यम्। तस्य कारणमाह—सन्तप्तचामीकरवर्णानि उत्तप्तसुवर्णवर्णानि वज्राणि यास्मन्। तथा विभागेषु विन्यस्तानि अतिमहार्घाणि रत्नानि पद्मरागादीनि यत्र। सपादपीठं सह पादपीठेन ॥ ३ ॥

**प्रास्थापयत्पूगकृतान्स्वपोषंपुष्टान्प्रयत्नाद्दृढगात्रबन्धान्।**
**सभर्मकुम्भान्पुरुषान्समन्तात् पत्काषिणस्तीर्थजलाऽर्थमाशु ॥ ४ ॥**

प्रास्थेत्यादि—तीर्थजलार्थं पुरुषान् प्रयत्नात् आदरेण। समन्तात् सर्वासु दिक्षु। आशु शीघ्रं प्रास्थापयत् प्राहिणोत्। प्रपूर्वस्तिष्ठतिर्गमने वर्तते। तस्य हेतुमण्ण्यन्तस्य लङि रूपम्। पूगकृतान् अपूगाः पूगाः कृताः इति 'श्रेण्यादिषु च्व्यर्थवचनम्' इति समासः। संघीकृतानित्यर्थः। स्वपोषं पुष्टान्। 'स्वे पुषः ।३।४।४०।' इति णमुल्। 'अमैवाव्ययेन ।२।२।२०।'इति समासः। यथाविध्यनुप्रयोगश्च। दृढो गात्रबन्धो येषां तान्। संयतकायान्। महाभारोद्वहनक्षम-

---

१ प्रसन्नं चकार। २ तत एवाह किमयमित्यादि। ३ आङ्पूर्वकस्य 'दिश अतिसर्जने' इत्यस्य लुङि रूपमिदम्।

श्वान् सभर्मकुम्भान् ससुवर्णकलशान् । पत्काषिणः । पादौ काषितुं हिंसितुं शीलं येषामिति । 'सुप्यजातौ णिनिस्ताच्छील्ये ।३।२।७७।' 'हिमकापिहतिषु च ।६।३।५४।' इति पदादेशः । पदातीनित्यर्थः । आश्विति 'कृवापाजिमिस्वादिसाध्यशूभ्य उण्' इत्युणादिकादुण ॥ ४ ॥

**उक्षान्प्रचक्रुर्नगरस्य मार्गान् ध्वजान्बबन्धुर्मुमुचुः खधूपान् ।**
**दिशश्च पुष्पैश्चकरुर्विचित्रैरर्थेषु राज्ञा निपुणा नियुक्ताः ॥ ५ ॥**

उक्षानित्यादि—ये निपुणा अर्थेषु कार्येषु राज्ञा दशरथेन नियुक्ताः अधिकृतास्ते नगरस्य मार्गान् पथः । उक्षान् सेकवतः प्रचक्रुः । उक्षणमुक्षा । 'गुरोश्च हलः ।३।३।१०३।' इत्यकारः । सा विद्यते येषामिति 'अर्शआदिभ्योऽच् । ५।२।१२७।' 'इजादेश्च गुरुमतोऽनृच्छः ।३।१।३६।' इत्याम्प्रत्यये प्रचक्रुरित्यनुप्रयोगो न घटते । 'कृञ्चानुप्रयुज्यते लिटि ।३।१।४०।'इत्यनुशब्दस्य व्यवहितानि वृत्त्यर्थत्वात् । ध्वजान् बबन्धुः उच्छ्रायितवन्तः । मुमुचुः खधूपान् आकाशे घटिकादिभिर्धूपान्मुमुचुः प्रमुक्तवन्तः । दिशश्च पुष्पैश्चकरुः छादितवन्तः । 'कॄ विक्षेपे ।' इत्यस्य लिटि 'ऋच्छत्यॄताम् ।७।४।११।' इति गुणः । विचित्रैः नानाप्रकारैः ॥ ५ ॥

**मातामहाऽऽवासमुपेयिवांसं मोहादपृष्ट्वा भरतं तदानीम् ।**
**तत्कैकयी सोढुमशक्नुवाना ववार रामस्य वनप्रयाणम् ॥ ६ ॥**

मातेत्यादि—तत्पूर्वोक्तमभिषेकसंविधानं सोढुमशक्नुवाना असहमाना केकयी केकयस्य देशविशेषस्य, लक्षणया तद्देशस्येति यावत् । इयं पुत्रीति तथोक्ता रामस्य वनप्रयाणं ववार प्रार्थितवती राज्ञ इत्यर्थात् । सहः शक्नोतावुपपदे 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ।३।४।६५।' इति तुमुन् । तत्र नञा शक्यर्थस्य प्रतिषेधेऽपि न दोषः प्रतिषेधस्य बहिरङ्गत्वात् । शक्नोतेः परस्मैपदित्वात् शानच् नास्ति । 'ताच्छील्यवयोवचनशक्तिषु चानश् ।३।२।१२९।' इति चानश् । स्वादित्वात् श्नुः । 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ।६।४।७७।' इत्युवङ् । किं कृत्वेत्याह—तदानीं प्रार्थनाकाले देशान्तरावस्थितत्वात् किमेवं क्रियते न वेति न भरतं पृष्टवती । देशान्तरावस्थितिं दर्शयन्नाह—मातामहावासमिति ।

---

१ अश्वादियानसाहाय्यमन्तरेण गमने चरणपीडावहत्वमिति यथाक्रमम् ।

मातुः पिता मातामहः । 'पितृव्यमातुलमातामहपितामहाः ।४।२।३६।' इति निपातनात् डामहच् । आवासः निलयम्। आवसत्यस्मिन्निति अधिकरणे घञ् । उपेयिवांसम्। 'उपेयिवाननाश्वाननूचानश्च।३।२।१०९।'इति निपातितः। मोहादज्ञानात् । दूतप्रेषणनाप्रष्टा। रामस्येति कर्तरि षष्ठी। वनाय प्रयाणं गमनमिति चतुर्थीति योगविभागात् समासः । 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ।२।३।१२।' इति चतुर्थी । परत्वात्कृल्लक्षणया षष्ठ्या भवितव्यमिति चेत् न । पुनर्द्वितीयाग्रहणात्परामपि षष्ठीं बाधित्वा द्वितीयैव यथा स्यादिति । यद्येवं द्वितीयैव स्यात् न चतुर्थी । नैष दोषः । द्वितीयाग्रहणस्योपलक्षणार्थत्वात् । तथा च वृत्तावुभयमुक्तं—ग्रामं गन्ता ग्रामाय गन्तेति ॥ ६ ॥

**कर्णेजपैराहितराज्यलोभा स्त्रैणेन नीता विकृतिं लघिम्ना ।**
**रामप्रवासे व्यमृशन्न दोषं जनाऽपवादं सनरेन्द्रमृत्युम् ॥ ७ ॥**

कर्णेइत्यादि—कर्णे जपन्ति कर्णेजपाः सूचकाः मन्थरादयः । 'स्तम्बकर्णयो रमिजपोः ।३।२।१३।' इत्यच् । 'तत्पुरुषे कृति बहुलम् ।६।३।१४।' इति सप्तम्या अलुक् । तैराहितः आनायितो राज्यलोभो यस्याः सैवम् । स्त्रैणेन स्त्रिया अयम् । 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् । ४। १ । ८७ ।' इति नञ् । लघोर्भावो लघिमा 'पृथ्वादिभ्य इमनिज्वा । ५ । १ । १२२ ।' इतीमनिच् । टिलोपः । तेन विकृतिमन्यथात्वं नीता कैकयी रामप्रवासे सति दोषं न व्यमृशन् नालोचितवती । 'मृश आमर्शने ।' इति तौदादिकस्य लङि रूपम् । किंस्वरूपं दोषम्—जनापवादं लोकवैमुख्यम् । राज्यार्हो ज्येष्ठः पुत्रोऽनया प्रव्राजित इति । नरेन्द्रस्य दशरथस्य मृत्युना सह वर्तमानम्[२] ॥ ७ ॥

**वसूनि देशांश्च निवर्तयिष्यन् रामं नृपः संगिरमाण एव ।**
**तयाऽवजज्ञे भरताऽभिषेको विषादशङ्कश्च मतौ निचख्ने ॥ ८ ॥**

वसूनीत्यादि—रामं निवर्तयिष्यन् रामं निवर्तयितुं वसूनि द्रव्याणि देशांश्च सङ्गिरमाण एव प्रतिजानान एव दास्यामीति नृपो राजा कैकेय्या तदनङ्गीकरणादवजज्ञे अवज्ञातः । ज्ञा इत्ययं धातुरवपूर्वोऽवज्ञाने वर्तते । तस्मात्कर्मणि लिट् । 'गमहनजनखनघसां लोपः क्ङित्यनङि । ६ । ४ । ९८ ।' इत्युपधालोपः । तत्र वृतेर्हेतुमण्ण्यन्तात् क्रियार्थोपपदे लट् । सङ्गिरणं च क्रिया । गिरेस्तौदादिकात् 'अवाद्ग्रः।१।३।५१।' इति अधिकृत्य 'समः प्रतिज्ञाने ।१।३।५२।' इति तङ् । शानच् । 'ॠत इत् । ७ । १ । १०० ।' 'आने मुक् ।७।२।८२।'

---

१ अत्र परिकरः । २ अत्र समाप्तपुनरात्तत्वमिति तृतीयचतुर्थपादौ व्यत्ययेन पठनीयौ ।

इदं चापरमनुष्ठितं तथा भरता राज्येऽभिषिच्यतामिति भरताभिषेको मतौ मनसि निचखे निखातः । कर्मणि लिट् । 'गहमनजनखनघसां लोपः क्ङित्यनङि ।६ । ४ । ९८। इत्युपधालोपः।तथा विषादः शंकुरिव शल्यमिव निचखे । ज्येष्ठत्वात् नायं समभिषिच्यत इति विषादः । संग्रामात्किल परिश्रान्तमागतं दशरथं केकयी परिचचार तेन परितुष्टेनोक्तं किं ते दास्यामीति । सा प्राह यदार्थयिष्यते तदा यूयं दास्यथेति सा तदवसरं बुद्ध्वा वरद्वयं प्रार्थितवती । एको रामस्य वनगमनं द्वितीयो राज्ये भरतोऽभिषिच्यतामिति ॥ ८ ॥

**ततः प्रविव्राजयिषुः कुमारमादिक्षदस्याभिगमं वनाय ।**
**सौमित्रिसीतानुचरस्य राजा सुमन्त्रनेत्रेण रथेन शोचन् ॥ ९ ॥**

तत इत्यादि—केकयीप्रार्थनानन्तरं राजा कुमारं रामं प्रविव्राजयिषुः प्रव्रजन्तमेनं प्रव्राजयितुमिच्छुः व्रजेर्हेतुमण्ण्यन्तात्सन् । अस्य कुमारस्य । रथेन वनाभिगममभिगमनम् । 'ग्रहवृदृनिश्चिगमश्च । ३ । ३ । ५८।' इत्यप् । आदिक्षत् आदिष्टवान् । अस्येति कर्तरि षष्ठी । वनायेति । 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि । २ । ३ । १२ ।' इति चतुर्थी । सौमित्रिसीतानुचरस्य लक्ष्मणसीतासहायस्य । सुमित्राया अपत्यम् । बाह्वादित्वादिञ् । सहचरत्वेनाभ्यर्हितत्वात् पूर्वनिपातः । अनु पश्चाच्चरतीति अनुचरः 'भिक्षासेनादायेषु च । ३ । २ । १७।' इति चकारस्यानुक्तसमुच्चयार्थत्वात् टः । अनुचरश्चानुचरी च । 'पुमान् स्त्रिया । १।२।६७।' तावनुचरौ सौमित्रिसीते अनुचरौ सहायौ यस्य । कालापिकास्ततोऽन्यत्रापि पठन्ति अधिकरणोपपदे 'चरेष्टः' इत्यर्थः । नीयतेऽनेनेति नेत्रं लोचनम् । 'दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे । ३ ।२।१८२ ।'इति ष्ट्रन् । सुमन्त्रनामा रथवाहको नेत्रमिव यस्य रथस्य तद्वशात्तस्य प्रवृत्तेः । शोचन् परिदेवयमानो राजा ॥ ९ ॥

**केचिन्निनिन्दुर्नृपमप्रशान्तं विचुक्रुशुः केचन साऽस्रमुच्चैः ।**
**ऊचुस्तथाऽन्ये भरतस्य मायां धिक्केकयीमित्यपरो जगाद ॥ १० ॥**

केचिदित्यादि—राज्ञा वनगमने समादिष्टे सति केचिज्जना नृपं निनिन्दुः कुत्सितवन्तः । 'णिदि कुत्सायाम् ।' अप्रशान्तं वृद्धभावेऽपि स्त्रीवशम् । केचन केचित्सास्रं सबाष्पमुच्चैः सुष्ठु विचुक्रुशुः सुतरामाक्रन्दितवन्तः । तथान्ये भरतस्य मायां शाठ्यमूचुः उक्तवन्तः । तत्कृतोऽयं प्रयोगो येनात्मरक्षणार्थं मातामहनिवासे स्थित इति । अपरो धिक्केकयीं ययैवमनुष्ठितामिति जगाद गदितवान् । 'धिगुपर्यादिषु त्रिषु' इति धिग्योगे द्वितीया ॥ १० ॥

१ अत्र 'तुल्ययोगिता'।

**गतो वनं श्वो भवितेति रामः शोकेन देहे जनताऽतिमात्रम् ।**
**धीरास्तु तत्र च्युतमन्यवोऽन्ये दधुः कुमाराऽनुगमे मनांसि ॥११॥**

गत इत्यादि—श्व आगामिनि दिवसे वनं गतो रामो भवितेति तास् । जनता जनसमूहः । 'ग्रामजनबन्धुभ्यस्तल् ।४।२।४३।' इति तल् । देहे दग्धा । कर्मणि लिट् । 'अत एकहल्मध्येऽनादेशादेर्लिटि ।६।४।१२०।' इत्येत्वाभ्यासलोपौ । गत इति भूतकालः श्वो भवितेति भविष्यत्कालेन सम्बध्यमानः साधुः । 'धातुसम्बन्धे प्रत्ययाः ।३।४।१।' इति । ये तु तत्र धीरा[1]: ते च्युतमन्यवो विगतशोकाः सन्तः कुमारानुगमे कुमारस्य पश्चाद्गमननिमित्तं मनांसि दधुः कृतवन्तः । राममनुव्रजाम इति । निमित्तात्कर्मसंयोगे सप्तमीति । मनांसीति कर्मणा योगात् ॥ ११ ॥

**प्रस्थास्यमानावुपसेदुषस्तौ शोशुच्यमानानिदमूचतुस्तान् ।**
**किं शोचतेहाभ्युदये बताऽस्मान् नियोगलाभेन पितुः कृताऽर्थान् १२**

प्रस्थेत्यादि—ता रामलक्ष्मणौ प्रस्थास्यमानौ गमिष्यन्तौ । 'समवप्रविभ्यः स्थः ।१।३।२२।' इति तङ् । जनान् इदं वक्ष्यमाणमूचतुः उक्तवन्तौ । ब्रुवीत्यर्थग्रहणात् वचेर्द्विकर्मकता । उपसेदुषस्तौ ढौकितवतः जनान् । 'भाषायां सद्वसश्रुवः ।३।२।१०८।' इति क्वसुः । शोशुच्यमानान् अत्यर्थं शोकं कुर्वतः । भृशार्थे यङ् । किमूचतुरित्याह—किं शोचतेति । हे जनाः ! कस्मादस्मान् शोचत परिदेवयध्वम् । विधावपूर्वार्थप्रकाशने लोट् । इहाभ्युदये बतशब्दो विस्मये । तस्मिन् आश्चर्यभूते अभ्युदये वृद्धौ सत्याम् । कुत इत्याह—पितुर्नियोगलाभेन वनगमनाज्ञालाभेन कृतार्थान् लब्धप्रयोजनान् । कृतार्थत्वादशोच्या वयमित्यर्थः ॥ १२ ॥

**असृष्ट यो यश्च भयेष्वरक्षीद् यः सर्वदाऽस्मानपुषत्स्वपोषम् ।**
**महोपकारस्य किमस्ति तस्य तुच्छेन यानेन वनस्य मोक्षः ॥१३॥**

असृष्टेत्यादि—असृष्ट जनितवान् । सृजेर्दैवादिकस्यात्मनेपदित्वात् लुङि रूपम् । न तौदादिकस्य परस्मैपदित्वात् 'सृजिदृशोर्झल्यमकिति ।६।१।५८।' इत्यम् । यश्च भयेषु सत्सु अरक्षीत् पालितवान् । 'रक्ष पालने' इत्यस्य लुङि रूपम् । यः सर्वदा सर्वकालम् । 'सर्वैकान्यकिंयत्तदः काले दा ।५।३।१५।' इति दाप्रत्ययः । यश्चापुषत् पुष्टवान् । स्वपोषं धनेनास्मानपुषत् । पुषेर्लुङि रूपम् । 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु ।३।१।५५।' इत्यङ् । 'स्वे पुषः । ३ ।४ ।४० ।'

---

१ च्युतशोकत्वे धीरत्वं हेतुः ।

इति णमुल् । ‘ अमैवाव्ययेन ।२।२।२०।’ इति समासः । ‘ यथाविध्यनुप्रयोग—। ३ । ४।४।’ तस्य पितुः सम्बन्धिनो महोपकारस्य किमस्ति मोक्षः प्रत्युपकारो नैवेति भावः । केनेत्याह—तुच्छेन असारेण वनस्य यातेन । यातेभावे ल्युट् । वनस्येति शेषसामान्ये षष्ठी । कुलक्षणायास्तु षष्ठ्या गत्यर्थकर्मणि चतुर्थ्या बाध्यमानत्वात् ॥ १३ ॥

**विद्युत्प्रणाशं स वरं प्रनष्टो यद्वोर्ध्वशोषं तृणवद्विशुष्कः ।**
**अर्थे दुरापे किमुत प्रवासे न शासनेऽवास्थित यो गुरूणाम् ॥१४॥**

विद्युदित्यादि—अर्थे कार्यविशेषे दुरापेऽपि कृच्छ्रप्राप्येऽपि । ‘ईषद्दुःसुपु-३।३।१२६।’ इति खल् । गुरूणां यच्छासनमादेशः तस्मिन् यो नावास्थित नावस्थितवान् । अवपूर्वात्तिष्ठतेर्लुङ् । ‘समवप्रविभ्यः स्थः ।१।३।२२।’ इति तङ् ‘स्थाघ्वोरिच्च ।१।२।१७।’ इति कित्त्वमित्त्वं च । ‘ह्रस्वादङ्गात् ।८।२।२७।’ इति सिचो लोपः । स वरं विद्युत्प्रणाशं प्रनष्टः । विद्युदिवोत्पत्त्यनन्तरमेव विनाशं गतः । ‘उपमाने कर्मणि च ।३।४।४५।’ इति चकारात् ‘कर्त्रोर्जीवपुरुषयोः—३।४।४३।’ इत्यतः कर्तृग्रहणानुवृत्तौ कर्तृवाचिनि विद्युच्छब्द उपपदे णमुल् । ‘उपसर्गादसमासेऽपि णोपदेशस्य।८।४।१४’ इति णत्वम् । यद्वेत्यथवा । स ऊर्ध्वशोषं तृणवद्विशुष्कः । ‘ऊर्ध्वे शुषिपूरोः ।३।४।४४।’ इति णमुल् । उभयत्रामैवत्यादिना समासः । ‘यथाविध्यनुप्रयोग—। ३ । ४ । ४ ।’ किमु प्रवासे किम्पुनः प्रवासविषये यच्छासनं तत्र तावदनवस्थितस्य सुतरामेव पूर्वोक्तं प्रयुज्यते॥१४॥

**पौरा निवर्त्तध्वमिति न्यगादीत् तातस्य शोकाऽपनुदा भवेत ।**
**मा दर्शताऽन्यं भरतं च मत्तो निवर्तयेत्याह रथं स्म सूतम् ॥१५॥**

पौरा इत्यादि—हे पौराः ! यथागतं निवर्तध्वम् । विधौ लोट् । इति तान् न्यगादीत् उक्तवान् रामः । गदेः ‘अतो हलादेर्लघोः ।७।२।७।’इति वृद्धिः । ‘इट ईटि ।८।२।२८।’ इति सिचो लोपः । तातस्य पितुः । शोकापनुदाः शोकस्यापहर्तारो भवेत । तुन्दशोकयोरित्यादिना कः । भवतेर्विधौ प्रार्थनायां वा लिङ् । मध्यमपुरुषबहुवचनम् । भरतं च मत्तो मत्तः सकाशात् । ‘अस्मदः पञ्चम्यास्तसिल् ।५।३।७।’ ‘ प्रत्ययोत्तरपदयोश्च ।७।२।९८।’ इति मदादेशः । अन्यं भरतं मा दर्शत मा द्रष्टारः स्थ। अपि तु योऽहं स एव भरत इति भावः । स च प्रतिष्ठितः राज्यं पालयिष्यतीत्येव न्यगादीत् । दृशेर्माङि लुङ् । ‘इरितो वा ।३।१।५७।’ इत्यङ् । ‘ऋदृशोऽङि गुणः ।७।४।१६।’

---

१ मत्त इति शेषः ।

निवर्तय रथमिति सूतं च सुमन्त्रमाह स्म । 'लट् स्मे ।३।२।११८।' इति लट् । ' ब्रुवः पञ्चानामादित आहो ब्रुवः।३।४।८४।' इत्याहादेशः तिपो णल् ॥ १५॥

**ज्ञात्वेङ्गितैर्गत्वरतां जनानामेकां शयित्वा रजनीं सपौरः ।**
**रक्षन्वनेवासकृताद्भयात्तान् प्रातश्छलेनाऽपजगाम रामः॥ १६ ॥**

ज्ञात्वेत्यादि--निवर्तध्वमित्युक्ते ये तत्रानिवृत्ताः तेषां जनानां रामो गत्वरतां गमनशीलतां ज्ञात्वा । ' गत्वरश्च ।३।२।१६४।' इति निपातितः । तैरिङ्गितैरभिप्रायसूचकैश्चेष्टितैः । इङ्गतेर्भावे निष्ठा । वनेवास इति सप्तमीति योगविभागात् समासः । ' शयवासवासिषु-६ ।३।१८।' इति विभाषासप्तम्या अलुक् । तेन कृतात्सिंहादिभयात् रक्षन् पालयन् तान् पौरान् सपौरः पौरैः सह एकां नतु ततोऽधिकां रजनीं शयित्वा । एकरात्रिपर्यन्तमेव तैः सममेकत्र न्युष्येत्यर्थः । 'कालाध्वनोरत्यन्तसंयोगे २।३।५।' इति द्वितीया । शयित्वेति 'न क्त्वा सेट् ।१।२।१८।' इति । कित्त्वप्रतिषेधात् गुणो भवति । प्रातः प्रातःकाले । छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम गतवान् ॥ १६ ॥

**अस्राक्षुरस्रं करुणं रुवन्तो मुहुर्मुहुर्न्यश्वसिषुः कवोष्णम् ।**
**हा राम हा कष्टमिति ब्रुवन्तः पराङ्मुखैस्ते न्यवृतन्मनोभिः॥१७॥**

अस्राक्षुरित्यादि—ते पौरा राममपश्यन्तः । करुणं रुवन्तो विलपन्तः । ' रु शब्दे ।' इत्यस्य शतरि रूपम् । अस्रम्[1] अश्रु । अस्राक्षुः मुक्तवन्तः । सृजेस्तौदादिकस्य परस्मैपदिनः सिचि 'सृजिदृशोर्झल्यमकिति ।६।१।६८।' इत्यम् । हलन्तलक्षणा वृद्धिः । ' चोः कुः ।८।२।३०।' ' खरि च ।८।४।५५।' इति चर्त्वम् । मुहुर्मुहुः भूयोभूयः कवोष्णमीषदुष्णमन्तःसन्तापात् । 'कवं चोष्णे ६।३।१०७।' इति कोः कवादेशः । न्यश्वसिषुः । श्वसेर्लुङ् । ' ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ।७।२।५।' इति श्वसेर्वृद्धिप्रतिषेधः । 'अतो हलादेर्लघोः ।७।२।७।' इति विकल्पस्य प्राप्तत्वात् । हा राम हा कष्टं कृच्छ्रमिति ब्रुवन्तः । पराङ्मुखैः येन गतो रामस्तेन गतैर्मनोभिरित्थंभूतैः । न्यवृतन् निवृत्तवन्तः । 'द्युद्भ्यो लुङि ।१।३।९१।' । इति परस्मैपदविकल्पात् । द्युतादित्वादङ् ॥ १७ ॥

**सूतोऽपि गङ्गासलिलैः पवित्वा सहाऽश्वमात्मानमनल्पमन्युः ।**
**ससीतयो राघवयोरधीयन् श्वसन्कदुष्णं पुरमाविवेश ॥ १८ ॥**

---

१ 'रक्तरूपमश्रु'इति तु ध्वन्यते । अश्रुशोणितोभयवाचित्वात् । 'अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते ।' इति मेदिनी ।

सूत इत्यादि—सूतोऽपि सुमन्त्रः सहाश्वमश्वैः सह । अनल्पमन्युः प्रवृद्ध- शोकः । राघवयोः रामलक्ष्मणयोः । 'सरूपाणामेकशेष एकविभक्तौ । १।२। ६४।' इत्येकशेषः । ससीतयोः सीतासहितयोः । अधीयन् स्मरन् । 'इक् स्मरणे' इत्यस्य शतरि रूपम् । यणादेशः । 'अधीगर्थदयेशां कर्म्मणि २। ३।५२।' इति कर्मणि षष्ठी । श्वसन् । कदुष्णं ईषदुष्णम् । 'कवं चोष्णे । ६। ३।१०७।' इति चकारात् कदादेशः ।गङ्गातटात्प्रतिनिवृत्त्य पुरमयोध्यामाजगाम आगतवान् । गङ्गासलिलैः आत्मानं बाह्यमाभ्यन्तरं च पवित्रीकृत्य । 'पूङश्च ।७।२।५१।' इति विकल्पेनेट् । 'पूङः क्त्वा च ।१।२।२२।' इति कित्त्वप्रति- षेधात् गुणः ॥ १८ ॥

प्रतीय सा पूर्ददृशे जनेन द्यौर्भानुशीतांशुनिराकृतेव ।
राजन्यनक्षत्रसमन्विताऽपि शोकाऽन्धकारक्षतसर्वचेष्टा ॥ १९ ॥

प्रतीयेत्यादि—जनेन रामानुयायिना प्रतीय प्रतिनिवृत्त्य । पूरयोध्या ददृशे दृष्टा । कर्मणि लिट् । प्रतीय इति इङ् गतावित्यस्य रूपं न पुनरिणः । तस्य हि तुकि प्रतीत्येति स्यात् ।'षत्वतुकोरसिद्धः ।६।१।८६।'इत्येकादेशस्यासिद्धत्वात् । 'प्रतीयुषा सा ददृशे' इति पाठान्तरम् । प्रतिनिवृत्तेन सा पूर्ददृशे दृष्टेत्यर्थः । अस्मिन् पाठे तु 'उपेयिवाननाश्वाननूचानश्च ।३।२।१०९।' इतीणः क्वसौ रूपं द्रष्टव्यमत्रोपसर्गस्यातन्त्रत्वात् । शोकोऽन्धकार इव शोकान्धकारः । तेन क्षता नीतानुष्ठेयकर्माणि चेष्टा परिस्पन्दो यस्यां पुरि सा तथोक्ता । राज्ञोऽपत्यानि 'राजश्वशुराद्यत् ।४।१।१३७।' राजन्याः क्षत्रियाः । 'ये चाभावकर्मणोः ।६। ४।१६८।' इति प्रकृतिभावः । राजन्याः नक्षत्राणीव तैः समान्वितापि द्यौः भानुशीतांशुविनाकृतेव द्यौराकाशः यथा नक्षत्रसमन्वितापि रात्रौ भानुचन्द्राभ्यां विनाकृता रहिता अन्धकारच्युतसर्वचेष्टा तद्वत्सापि भानुचन्द्रस्थानीययो राघवयोर्विरहात् ॥ १९ ॥

विलोक्य रामेण विना सुमन्त्रमच्योष्ट सत्त्वान्नृपतिश्च्युताऽऽशः ।
मधूनि नैषीद्व्यलिपन्न गन्धैर्मनोरमे न व्यवसिष्ट वस्त्रे ॥ २० ॥

विलोक्येत्यादि—रामेण विना सुमन्त्रं विलोक्य दृष्ट्वा नृपतिर्दशरथः सत्त्वात् स्वभावादच्योष्ट च्युतः । च्यवतेरकर्मकाल्लुङ् । गतोऽपि मद्वचनम- तिक्रम्य आगच्छेद्राम इति अस्य या आशा सा च्युता यस्य स च्युताशः ।

---

१ तन्नामानं रथयन्तारम् । वनात् निवृत्तमिति शेषः ।

सत्वात् च्युतश्च मधूनि पातुं नैषीत् नेष्टवान् । 'नेटि । ७ । २ । ४ ।' इति सिचि वृद्धिप्रतिषेधः । गन्धैश्चन्दनादिभिर्नालिपत् । लिपेः 'लिपिसिचिह्वश्च । ३ । १ । ५३ ।' इत्यङ् । मनोरमे चेतोहारिणी वस्त्रे न व्यवसिष्ट न परिहितवान् । 'वस आच्छादने ।' इत्यस्मात् लुङ् । अनुदात्तेत्त्वात्तङ् ॥ २० ॥

आसिष्ट नैकत्र शुचा व्यरंसीत् कृताऽकृतेभ्यः क्षितिपालभाग्भ्यः ।
स चन्दनोशीरमृणालदिग्धः शोकाग्निनाऽगाद्द्युनिवासभूयम् ॥२१॥

आसिष्टेत्यादि—एकत्र स्थाने शुचा शोकेन नासिष्ट नोपविष्टः । 'आस उपवेशने' इत्यत आत्मनेपदिनो लुङ् । कृतानि चाकृतानि चेति । 'क्तेन नञ्विशिष्टेनानञ् । २ । १।६०।' इति समासः । असमापितेभ्य इत्यर्थः । क्षितिपालं भजन्ते यानि दूतप्रेषणादीनि तेभ्यः क्षितिपालभाग्भ्यः । व्यरंसीत् विरतः । विमुखोऽभूदित्यर्थः । 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति अपादानसंज्ञा । रमेर्लुङ् ।'व्याङ्परिभ्यो रमः । १ । ३ । ८३ ।' इति तिप् । 'यमरमनमातां सक्च ।७।२।७३।' इति सगिटौ । स एवम्भूतो राजा चन्दनोशीरमृणालैः शोकाग्निप्रतीकारभूतैर्दिग्ध उपलिप्तोऽपि उद्वेगाग्निनैव द्युनिवासभूयं देवत्वमगात् गतवान् । दिहेर्निष्ठायां 'दादेर्धातोर्घः ।८।२।३२।' इति घः ।'झषस्तथोर्धो धः । ८ । २ । ४० ।' 'झलां जश् झशि । ८ । ४ । ५३ ।' इति जश्त्वम् । दिवि निवासो येषां ते द्युनिवासाः देवाः तेषां भाव इति 'भुवो भावे ३ । १ । १०७ ।' इति क्यप् ॥ २१ ॥

विचुक्रुशुर्भूमिपतेर्महिष्यः केशाँल्लुलुञ्चुः स्ववपूंषि जघ्नुः ।
विभूषणान्युन्मुमुचुः क्षमायां पेतुर्बभञ्जुर्वलयानि चैव ॥ २२ ॥

विचुक्रुशुरित्यादि—भूमिपते राज्ञो महिष्यः पत्न्यः । 'अविमह्योष्टिषच्' इत्यौणादिकष्टिषच् । विचुक्रुशुः रुदितवत्य इत्यर्थः । हा स्वामिन्निति । तथा केशान् लुलुञ्चुः उत्पाटितवत्यः । स्ववपूंषि स्वशरीराणि जघ्नुस्ताडितवत्यः । विभूषणानि हारादीनि उन्मुमुचुर्मुक्तवत्यः । क्षमायां भुवि पेतुः । वलयानि अवैधव्यचिह्नानि बभञ्जुः चूर्णितवत्यः । एते लिडन्ताः । पतेरेत्वाभ्यासलोपौ ॥ २२ ॥

ताः सान्त्वयन्ती भरतप्रतीक्षा तं बन्धुता न्यक्षिपदाशु तैले ।
दूतांश्च राजाऽऽत्मजमानिनीषून् प्रास्थापयन्मन्त्रिमतेन यूनः ॥२३॥

---

१ अत्र राज्ञो दशरथस्य स्वर्गं प्रति प्रयाणमुक्तम् । २ अत्र बहुवचनेन लोकानुगतिकन्यायेन केकय्या अपि तथा प्रवृत्तौ ग्रहणम् । ३ अत्र स्वभावोक्तिस्तुल्ययोगिता समुच्चयश्च ।

ता इत्यादि—बन्धुता बन्धुसमूहः । 'ग्रामजनबन्धुभ्यस्तल् । ४ । २ । ४३ ।' ता महिषीः सान्त्वयन्ती तूष्णीं स्थापयन्ती । सान्त्वं करोतीति णिच् । तं दशरथं मृतं तैले न्यक्षिपत् निक्षिप्तवती । आशु शीघ्रम् । मा भूत्पूतिरिति । क्षिपेर्लुङ् । 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु । ३ । १ । ५५ ।' इत्यङ् । कस्मात्तमक्षिपादित्याह—भरतप्रतीक्षा तेन संस्कारः कर्तव्य इति सा भरतं प्रतीक्षते । 'ईक्षिक्षमिभ्यां च ।' इत्युपसंख्यानाण्णः । दूतान् प्रास्थापयत् प्रहितवती । राजात्मजं भरतमानिनीषून् आनेतुमिच्छून् । अन्यथा केकयीवैमुख्याद्भरतेऽपि वैमुख्याद्दूता अपि नानेतुमिच्छन्ति । तत्रापि मन्त्रिमतेन न स्वमतेन । यूनः तेषां गन्तुं समर्थत्वात् ॥ २३ ॥

सुप्तो नभस्तः पतितं निरीक्षांचक्रे विवस्वन्तमधः स्फुरन्तम् ।
आख्यद्वसन्मातृकुले सखिभ्यः पश्यन्प्रमादं भरतोऽपि राज्ञः ॥२४॥

सुप्त इत्यादि—भरतोऽपि मातृकुले वसन् सखिभ्यो मित्रेभ्यः आख्यत् कथितवान् । ख्यातेर्लुङ् । 'अस्यतिवक्तिख्यातिभ्योऽङ् । ३ । १ । ५२ ।' इत्यङ् । क्रियाग्रहणं कर्तव्यमिति संप्रदानसंज्ञायां चतुर्थी । किमाख्यदित्याह—अहं सुप्तः सन् नभस्तो नभस्तलात् आकाशात्पतितं विवस्वन्तमादित्यं स्फुरन्तं चलन्तं निरीक्षांचक्रे निरीक्षितवान् । ईक्षेः 'इजादेश्च गुरुमतोऽनृच्छः ।३।१।३६।' इत्याम् । उत्तमविषये सुप्तप्रमत्तावस्थायां चित्तव्याक्षेपात् परोक्षे लिट् । पश्यन् विलोकयन् । राज्ञो दशरथस्य । प्रमादमनिष्टम् ॥ २४ ॥

अशिश्रवन्नात्ययिकं तमेत्य दूता यदाऽर्थं प्रयियासयन्तः ।
आंहिष्ट जाताऽञ्जिहिषस्तदाऽसावुत्कण्ठमानो भरतो गुरूणाम् २५॥

अशीत्यादि—दूता एत्य आगत्य भरतमातृकुलमित्यर्थः । अङ्पूर्वादिणः क्त्वाप्रत्ययस्य ल्यपि तुकि च रूपम् । यदा तं भरतमर्थं वचनमशिश्रवन् श्रावितवन्तः । अर्थ्यतेऽनेनेति णिच् घञ्च । शृणोतेर्ण्यन्तात्लुङि 'चङि ।६।१।११।' इति द्विर्वचनम् । 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ।७।४।८१।' इत्यभ्यासस्येत्वम् । आत्ययिकम् अत्ययो विनाशः स प्रयोजनमस्येति तदस्य प्रयोजनमिति ठञ् । पिता ते म्लानस्त्वां द्रष्टुमिच्छतीति आत्ययिकं वचनम् । तामिति 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माकर्म्मकाणामणि कर्त्ता सणौ ।१।४।५२।' इति कर्मसंज्ञा । शृणोतेः शब्दकर्मत्वात् अर्थमिति 'कर्तुरीप्सिततमं कर्म्म ।१।४।४९।' इत्यनेन कर्म्म । प्रयियासयन्तः प्रयातुमिच्छन्तं भरतं प्रयोजितवन्तः । सन्नन्तण्यन्तोऽयम् । तदा असौ भरतो जाताऽञ्जिहिषः । जाता अञ्जिहिषा

गमनेच्छा यस्य सः । 'अहि गतौ ।' 'इदितो नुम् धातोः । ७ । १ । ५८ ।' तस्मादंहितुमिच्छतीति सन् । इट् । 'अजादेर्द्वितीयस्य ।६।१।२।' इति हिशब्दो द्विरुच्यते । नकारस्य 'न न्द्राः संयोगादयः ।६।१।३।' इति प्रतिषेधः । अभ्यासकार्यम् । अनुस्वारपरसवर्णौ । 'अ प्रत्ययात् ।३।३।१०२।' इत्यकारप्रत्ययः।टाप्।आंहिष्ट गतवान्।तस्मादेवात्मनेपदिनो लुङ् । उत्कण्ठमानः स्मरन् । 'मठि कठि शोके ।' इत्यस्मादात्मनेपदिनो रूपम् । अनेकार्थत्वाद्धातूनाम् । गुरूणां पितामहादीनाम् । 'अधीगर्थदयेशां कर्म्मणि । २ । ३ । ५२ ।' इति कर्मणि षष्ठी ॥ २५ ॥

बन्धूनशङ्किष्ट समाकुलत्वा–दासेदुषः स्नेहवशादपायम् ।
गोमायुसारङ्गगणाश्च सम्यङ्नाऽयासिषुर्भीममरासिषुश्च ॥ २६ ॥

बन्धूनित्यादि—दुःस्वप्रदर्शनेन अकस्माच्च पितृदूतागमनेन स्नेहवशात् चेतसि समाकुलत्वाद्भरतो बन्धूनशङ्किष्ट शङ्कितवान् उत्प्रेक्षितवानित्यर्थः । शङ्कतेरात्मनेपदिनो लुङि रूपम् । कीदृशान् आसेदुषः अपायं विनाशं गतवतः । 'भाषायां सदवसश्रुवः ।३।२।१०८।' इति क्वसुः । 'अत एकहल्मध्येऽनादेशादेर्लिटि ।६।४।१२०।' इत्येत्वाभ्यासलोपौ । अस्मद्बन्धुः कश्चित् व्यसनमापन्नोऽभूदिति । गच्छतस्तस्य गोमायुसारङ्गगणाः शृगालमृगगणाश्च सम्यगनुकूलं नायासिषुः नागताः । यातेर्लुङि 'यमरमनमातां सक् च ।७।२।७३।' इति सगिटौ । शृगालाः प्रदक्षिणं गताः मृगाश्च सव्यमित्यर्थः । भीममुद्वेगकरमरासिषुः रसिताः । रसेः परस्मैपदिनो लुङि । 'अतो ह्लादेर्लघोः।७।२।७।' इति वृद्धौ रूपम् । न रासेः । तस्यात्मनेपदित्वात् ॥ २६ ॥

स प्रोषिवानेत्य पुरं प्रवेक्ष्यन् शुश्राव घोषं न जनौघजन्यम् ।
आकर्णयामास न वेदनादान् न चोपलेभे वणिजां पणाऽयान् ॥२७॥

स इत्यादि—स भरतः प्रोषिवान् मातामहकुलात् प्रोषितः सन् । 'भाषायां–।३।२।१०८।' इति क्वसुः । यजादित्वात् सम्प्रसारणं द्विर्वचनम् । 'वस्वेकाजाद्घसाम् ।७।२।६७।' इति इट् । पुरमयोध्यामेत्य आगत्य प्रवेक्ष्यन् गृहमित्यर्थात् पुरं प्रविष्टः।घोषं शब्दं न शुश्राव न श्रुतवान्।जनौघजन्यं जनसमूहेन जन्यमुत्पाद्यम् । 'जनेर्यक्' इति जनेर्यक् । तथा वेदध्वनीन्नाकर्णयामास न श्रुतवान् । 'प्रातिपदिकाद्धात्वर्थे' इति णिच् । तदन्तात् लिट्यामि । 'अयामन्ताल्वाय्येत्न्विष्णुषु । ६ । ४ । ५५ ।' इत्ययादेशः । न चोपलेभे नोपलब्धवान् । वणिजां पण्यजीविनाम् । पणायान् पणलाभान् । क्रयविक्रय-

रूपव्यवहारस्योच्छिन्नत्वात् । पणन्ते इति वणिजः पणेरिजादेश्च व इत्यौणादिकः । पण्यन्त इति पणाः । 'नित्यं पणः परिमाणे ।३।३।६६।' इत्यप् । व्यवहर्तव्याः ईयन्ते प्राप्यन्ते वणिग्भिरित्ययाः लाभाः । 'एरच् ।३।३।५६।' इति इणः कर्मणि अच् । पणानामयाः पणायाः तान् । पणायामिति पाठान्तरम् । वणिजां स्तुतिं संव्यवहारविषयां नोपलेभे । संव्यवहारकुशलाः साधव इति गुपादिषु स्तुत्यर्थपणिना साहचर्यात् पणेरपि तदर्थादेवायप्रत्ययः । 'अ प्रत्ययात् ।३।३।१०२।' इत्यकारः । टाप् । 'वणिजां प्रलापान्'इति तृतीयः पाठः । वणिक्प्रसारकलहानित्यर्थः ॥ २७ ॥

**चक्रन्दुरुच्चैर्नृपतिं समेत्य तं मातरोऽभ्यर्णमुपागतास्राः ।**
**पुरोहितामात्यमुखाश्च योधा विवृद्धमन्युप्रतिपूर्णमन्याः ॥२८॥**

चक्रन्दुरित्यादि--तं भरतं गृहगतमभ्यर्णं समीपीभूतं समेत्य ढौकित्वा मातरः कौशल्याद्याः नृपतिमुच्चैरत्यर्थं चक्रन्दुः क्रन्दितवत्यः । हा स्वामिन् ! हा राजन् ! क गतोऽसीति । उपागतं प्राप्तमस्रमश्रुजलं यासां ताः । एवंविधाः । युध्यन्त इति योधाः पचादित्वादच् । ते च तं समेत्य नृपतिं चक्रन्दुः । पुरो धीयत इति पुरोहितः । 'निष्ठा ।३।२।१०२।' 'दधातेर्हिः ।७।४।४२।' अमाशब्दः सहार्थे । सह राज्ञा कार्येषु भवतीत्यमात्यः । 'अमेहक्वतसित्रेभ्य एव ।'इति नियमात् । पुरोहितामात्यौ मुखं प्रधानं येषां योधानां ते पुरोहितामात्यमुखाः । अमात्यस्याजाद्यदन्तत्वेऽपि पुरोहितस्याभ्यर्हितत्वात् पूर्वनिपातः । विवृद्धमन्युना शोकेन प्रतिपूर्णे मन्ये गलशिरे येषामिति ॥ २८ ॥

**दिदृक्षमाणः परितःससीतं रामं यदा नैक्षत लक्ष्मणं च ।**
**रोरुद्यमानः स तदाऽभ्यपृच्छद्यथावदाख्यन्नथ वृत्तमस्मै ॥ २९ ॥**

दिदृक्षमाण इत्यादि—स भरतो यदा ससीतं रामं लक्ष्मणं च परितः सर्वतो दिदृक्षमाणः द्रष्टुमिच्छन् । 'ज्ञाश्रुस्मृदृशां सनः १।३।५७।' इति तङ् । 'हलन्ताच्च ।१।२।१०।' इति सनः कित्त्वे 'सृजिदृशोः- ।६।१।५८।' इत्यम् न भवति । नैक्षत न दृष्टवान् । तदा रोरुद्यमानः अत्यर्थं रुदन् । यङि रूपम् । अभ्यपृच्छत् पृष्टवान् । ऐक्षताभ्यपृच्छदिति भूतसामान्यविवक्षया लङ् । अन्यथा कवेः परोक्षत्वात् लिट् स्यात् । अथैतस्मिन् प्रस्तावे यथावत् यादृशं वृत्तं भूतं तथावत् आख्यन् कथितवन्तः पुरोहितामात्यमुखा अस्मै भरताय । ख्यातेः 'अस्यतिवक्तिख्यातिभ्योऽङ् ।३।१।५२।' इति च्लेरङ् । आतो लोपः ॥२९॥

आबद्धभीमभ्रुकुटीविभङ्गः शेश्वीयमानाऽरुणरौद्रनेत्रः।
उच्चैरुपालब्ध स कैकयीं च शोके मुहुश्चाविरतं न्यमाङ्क्षीत् ॥३०॥

आबद्धेत्यादि—स भरत उच्चैर्महता ध्वनिना कैकयीं च मुहुर्मुहुर्भूयो भूय उपालब्ध उपालब्धवान्। उपाङ्पूर्वो लभिरुपालम्भे वर्तते। तस्मादात्मनेपदिनो 'झलो झलि।८।२।२६।' इति सिज्लोपे धत्वजश्त्वे रूपम्। शोके च मन्यौ अविरतमजस्रं न्यमाङ्क्षीत् निमग्नः। मस्जेर्लुङि 'मस्जिनशोर्झलि।७।१।६०।' इति नुम्। तत्रापि मस्जेरन्त्यादिनियमात् नुम्। संयोगादिलोपः। हलन्तलक्षणा वृद्धिः। हल्ग्रहणं समुदायप्रतिप्रत्त्यर्थमित्युक्तम्। कीदृशः। आबद्धभीमभ्रुकुटीविभङ्गः। भ्रमेश्च डुरित्यौणादिको डुः। 'कुडे स्त्रीलिङ्गे भावे कृशादिभ्यः' इतीः। तदन्तात् कृदिकारादिति ङीप्। भ्रुवोः कुटी कौटिल्यं भ्रुकुटी। 'इको ह्रस्वोऽङ्यो गालवस्य।६।३।६१।' इति ह्रस्वः। तस्या विभङ्गो विरचनम्। आबद्धः कृतः प्रयत्नेनायासवृत्तेन भीमो भयानको भ्रुकुटीविभङ्गो येन यस्य वेति। शेश्वीयमाने अत्यर्थं शूयमाने अरुणे लोहिते रौद्रे भयानके नेत्रे यस्य सः। श्वयतेर्याङि 'विभाषा श्वेः।६।१।३०।' इति वा सम्प्रसारणम् ॥३०॥

तमुपालम्भमाह—

नृपाऽऽत्मजौ चिक्लिशतुः ससीतौ ममार राजा विधवा भवत्यः।
शोच्या वयं भूरनृपा लघुत्वं कैकय्युपज्ञं बत बह्वनर्थम् ॥ ३१ ॥

नृपेत्यादि—नृपात्मजौ रामलक्ष्मणौ ससीतौ सीतया सह चिक्लिशतुः क्लिष्टौ। ममार मृतो राजा। 'म्रियतेर्लुङ्लिङोश्च।१।३।६१।' इति नियमात्तङोऽभावः। विधवाः धवो भर्ता तेन विना भवत्यो जाताः। शोच्याः शोचनीया वयम् अयशोभाजनत्वात्। 'ऋहलोर्ण्यत्।३।१।१२४।' 'शङ्क्याः' इति पाठान्तरम्। शङ्कनीया वयम्। एतत्कृतोऽयं प्रयोग इति। भूश्चानृपा। न विद्यते नृपो यस्यामिति। नञोऽस्त्यर्थनामिति बहुव्रीहिः। लघुत्वं राज्यप्रार्थनालक्षणं कैकय्युपज्ञम्। कैकय्याः प्रथमतो ज्ञातं नान्यस्य कस्यचित्पूर्वज्ञातम्। उपज्ञायत इत्युपज्ञम् 'आतश्चोपसर्गे।३।१।१३६।' इति स्त्रियामङ्। कृल्लक्षणा षष्ठी कैकय्या उपज्ञेति समासः। 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्।२।४।२१।' इति नपुंसकता। बत कष्टम्। बह्वनर्थं बहुदोषम्। क्लेशमरणाद्यनिष्टानां सम्भवात् ॥३१॥

भरतकृत एवायं प्रयोग इत्येतत्परिहरन्नाह—

---

१ अश्लीलोऽपि प्रयोगोऽत्रादुष्टः। प्रकृते तथोक्तौ शोकोद्गारकत्वात्।

नैतन्मतं मत्कमिति ब्रुवाणः सहस्रशोऽसौ शपथानशप्यत् ।
उद्वाश्यमानः पितरं सरामं लुठन्सशोकी भुवि रोरुदावान्॥३२॥

नैतदित्यादि—यदेतत्कैकय्यनुष्ठितं मतमभिप्रायः। न मत्कृतं तत् । नाहमस्य ग्रामणीर्न प्रभुरिति । अस्मच्छब्दात् 'स एषां ग्रामणीः ।५।२।७८।' इति कन्। 'प्रत्ययोत्तरपदयोश्च ।७।२।९८।' इति मपर्यन्तस्य मादेशः । नास्मन्मतादनुष्ठितमनयेत्यर्थः। इत्येवं ब्रुवाणः सहस्रशो बहुवारानसौ भरतः शपथान् सम्प्रत्ययकारणवचनानि अशप्यन् कृतवान् । अनेकार्थत्वाद्धातूनां शपेर्दैवादिकस्य उभयपदिनो लङि रूपम् । उद्वाश्यमानः आह्वयन् । 'वाशृ शब्दे ।' दैवादिकः । अनुदात्तेत् । पितरं सरामं हा तात ! हा रामेति । लुठन्न् भुवि लुठन् । 'लुठ विलोडने ।' दैवादिकः परस्मैपदी । सशोक इति शाठ्यपरिहारार्थम् । रोरुदावान् अत्यर्थं रोदनं कुर्वन् । यङन्तात् 'अ प्रत्ययात्।३।३।१०२।' इत्यकारः। 'अतो लोपः ।६।४।४८।' 'यस्य हलः ।६।४।४९।' स्त्रियामतष्टाप् । सा विद्यते यस्येति मतुप् ॥३२॥

तं सुस्थयन्तः सचिवा नरेन्द्रं दिधक्षयन्तः समुदूहुरारात् ।
अन्त्याऽऽहुतिं हावयितुं सविप्राश्चिचीपयन्तोऽध्वरपात्रजातम्॥३३॥

तमित्यादि—सचिवा अमात्याः । कार्येषु सचन्ते समवयन्तीति सचेरिचन्नित्यौणादिक इचन् । तं भरतं सुस्थयन्तः सुस्थं कुर्वाणाः । तत्करोतीति णिच् । नरेन्द्रं दशरथम् समुदूहुः उद्वाहितवन्तः । शिबिकायामारोप्य । बहिरन्तर्भावितण्यर्थोऽत्र द्रष्टव्यः । यजादित्वात्सम्प्रसारणम् । आरात् नातिदूरे । दिधक्षयन्तः । दग्धुमिच्छन्तं भरतं प्रयोजितवन्तः । दहेः सनि 'दादेर्धातोर्घः ।८।२।३२।' भष्भावचर्त्वे । प्रयोजकव्यापारे णिच् । अन्ते विनाशे भवा या आहुतिः । 'दिगादिभ्यो यत् ।४।३।५४।' इति यत् । तामन्त्याहुतिं हावयितुमग्नौ प्रक्षेपयितुं सविप्राः ब्राह्मणैः सहिताः सचिवाश्चिचीपयन्तः । चेतुं निधातुमिच्छन्तः प्रयोजितवन्तः । किं तत् अध्वरपात्रजातं यज्ञोपयोगिपात्राणां स्रुवादीनां समूहम् ॥ ३३ ॥

उदक्षिपन्पट्टदुकूलकेतूनवादयन्वेणुमृदङ्गकांस्यम् ।
कम्बूंश्च तारानधमन्समन्तात् तथाऽऽनयन् कुङ्कुमचन्दनानि॥३४॥

उदेत्यादि–पट्टदुकूलविरचितान् केतून् ध्वजानुदक्षिपन् उच्छ्रितवन्तः ये

१ अत्र दीपकमलङ्कारः ।

नियुक्ताः । क्षिपेस्तौदादिकस्य ग्रहणम् । वेणुमृदङ्गकांस्यं वंशमुरजकांस्यतालम- वादयन् वादितवन्तः । वदेर्ण्यन्तस्यैव प्रयोगः । 'जातिरप्राणिनाम् । २ । ४ । ६ ।' इत्येकवद्भावः । न पुनस्तूर्याङ्गत्वात् । तत्र हि प्राणिनां तूर्याङ्गाणां द्वन्द्वैकवद्भावः । यथा मार्दङ्गिकपाणविकमिति । 'वृतॄवदिहनिकमिकषिभ्यः सः ।' इत्यौणादिकः कंसशब्दः । तदर्थाय हितं कंसीयम् । त्रपुणा दृढद्रव्यम्। प्रकृतिविकारभावे छः । तस्य विकार इति । 'कंसीयपरशव्ययोर्यञञौ लुक् च । ४ । ३ । १६८ ।' इति छस्य लुक् यञ् च प्रत्ययः । कम्बून् शङ्खान् । तारान् उच्चैस्तरध्वनीन्। अधमन् शब्दितवन्तः। 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । ७ । ३ । ७८ ।' इति धमादेशः । तथा कुंकुमचन्दनानि आनयन् आनीतवन्तः । सर्वत्र लङि रूपम् ॥ ३४ ॥

अन्त्येष्टिं दर्शयन्नाह—

श्रोत्राऽक्षिनासावदनं सरुक्मं कृत्वाऽजिने प्राक्छिरसं निधाय ।
सञ्चित्य पात्राणि यथाविधानमृत्विग्जुहाव ज्वलितं चिताऽग्निम्॥ ३५॥

श्रोत्रेत्यादि—अजिने कृष्णसारचर्मणि प्राक् पूर्वं शिरो मूर्धा यस्येति तं प्राक्शिरसं शवं निधाय स्थापयित्वा पश्चात् श्रोत्राक्षिनासावदनम् । प्राण्यङ्गत्वादेकवद्भावः । वृतॄवदीत्यादिसूत्रस्यानन्तरं नयतेराचेति प्रकृतेराकारे नासेत्यौणादिकं रूपम्। सरुक्मं ससुवर्णं कृत्वा। सञ्चित्य विन्यस्य अङ्गप्रत्यङ्गेषु। पात्राणि स्रुगादीनि । यथाविधानं यादृशं विधानमुक्तं गृह्यशास्त्रे । ऋत्विग्याजकः । ऋतौ यजतीति । 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च । ३ । २ । ५९ ।' इति निपातितः । ज्वलितं चिताग्निम् । ज्वलनं चितं तदर्थमग्निं जुहाव जुहोति स्म ॥ ३५ ॥

कृतेषु पिण्डोदकसञ्चयेषु हित्वाऽभिषेकं प्रकृतं प्रजाभिः ।
प्रत्यानिनीषुर्विनयेन रामं प्रायादरण्यं भरतः सपौरः ॥३६ ॥

कृतेष्वित्यादि—पिण्डोदकदानास्थिसञ्चयेष्वनुष्ठितेषु प्रजाभिः प्रकृतं प्रस्तुतमभिषेकमादिकर्मणि क्तः । हित्वा त्यक्त्वा । 'जहातेश्च क्त्वि । ७।४। ४३ ।' इति हिरादेशः । रामं प्रत्यानिनीषुः प्रत्यानेतुमिच्छुः । विनयेन प्रसादनया न भयादरण्यं वनं प्रायात् गतवान् । भरतः सपौरः सह पौरैः । अयोध्याभवैर्जनर्मयैकेन प्रसाद्यमानः कदाचिन्नागमिष्यतीति मया प्रसाद्यमानोऽपि यदि न प्रत्यागच्छेत्तदा लोके तथा मृषाप्रवादो माभूदिति च हेतोः पौरैः सह प्रयाणम् ॥ ३६ ॥

शीघ्रायमाणैः ककुभोऽश्नुवानैर्जनैरपन्थानमुपेत्य सृप्तैः ।
शोकादभूषैरपि भूश्चकासाञ्चकार नागेन्द्ररथाश्वमिश्रैः ॥३७॥

शीघ्रेत्यादि–जनैर्हेतुभूतैर्भूश्चकासाञ्चकार शोभते स्म । कर्तुः क्रियाफलयोगेऽपि नात्मनेपदम् । आम्प्रत्ययवदित्यत्र पूर्वग्रहणानुवृत्तेः ।चकासश्च परस्मैपदित्वादिति विधिनियमौ स्थितौ । शीघ्रायमाणैः अशीघ्रैः शीघ्रैर्भवद्भिर्झटिति गच्छद्भिरित्यर्थः । 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ।३ । १ । १२ ।' इति क्यङ् । ङित्त्वात्तङ् । ककुभोऽश्नुवानैः दिशो व्याप्नुवद्भिः । अश्नोतेः सौवादिकस्य आत्मनेपदिनो रूपम् । अपन्थानमुपेत्य सृप्तैः बहुत्वादमार्गमपि गत्वा गतैः । 'ऋक्पूरब्धूःपथामानक्षे ।५ । ४ ७४ ।' इति समासान्तः प्राप्तो 'नञस्तत्पुरुषात् । ५ । ४।७१ ।' इति प्रतिषिद्धः सन् 'पथो विभाषा । ५ ।४।७२।' इति विकल्पितः । शोकाद्धेतोरभूषैरनलङ्कारैरपि चकासाञ्चकार । भूः भूमिः । भूषेति 'गुरोश्च हलः । ३ । ३ । १०३ ।' इत्यकारप्रत्ययः । 'चकासृ दीप्तौ' इत्यस्मात् कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्याम् । नागेन्द्ररथाश्वमिति द्वन्द्वे एकवद्भावः । अल्पाच्तरस्य न पूर्वनिपातः । 'बहुष्वनियमः ।' इति वचनात् । तेन सेनाङ्गत्वात् कृतैकवद्भावेन मिश्रैर्युक्तैः । 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ।२।१।३१।' इति तृतीयासमासः ॥ ३७ ।

उच्चिक्यिरे पुष्पफलं वनानि सस्नुः पितॄन्पिप्रियुरापगासु ।
आरेटुरित्वा पुलिनान्यशङ्कं छायां समाश्रित्य विशश्रमुश्च॥३८॥

उच्चीत्यादि—ते जनाः गच्छन्तः पुष्पफलं पुष्पाणि फलानि चेति 'जातिरप्राणिनाम् ।२।४।६।' इत्येकवद्भावः । उच्चिक्यिरे उच्चितवन्तः । ञित्वात्तङ् कर्तुः क्रियाफलयोगात् । 'विभाषा चेः ।७।३।५८।' इति धातोः कुत्वम् । 'एरनेकाचः–६।४।८२।' इति यणादेशः । 'उच्चिचच्यिरे इति पाठान्तरं युक्तम्। वनानीति हेतुत्वेन 'अकथितं च।१।४।५१।' कर्म । वनानि विघट्टयन्तः फलानि जगृहुरित्यर्थः । ततः सस्नुः स्नातवन्तः । स्नातेर्लिटि 'उस्यपदान्तात् । ६ । १ । ९६ ।' इति पररूपम् । पितॄन् पिप्रियुः उदकाञ्जलिना तर्पितवन्तः । प्रीणातेर्लिटि इयङादेशः । आपगासु नदीषु । एतत् कृत्वा पुलिनानि सैकतानि इत्वा आरेटुः आरटिताः । आरेमुरिति पाठान्तरम् । शोकापनोदनार्थं कियन्तमपि कालमारमन्ति स्म । 'व्याङ्परिभ्यो रमः । १ । ३ । ८३ ।' इति परस्मैपदम् । अशङ्कं विस्रब्धम् । छायां समाश्रित्य विशश्रमुः विश्रान्ताः॥३८॥

सम्प्राप्य तीरं तमसाऽऽपगाया गङ्गाम्बुसम्पर्कविशुद्धिभाजः ।
विगाहितुं यामुनमम्बु पुण्यं ययुर्निरुद्धश्रमवृत्तयस्ते ॥ ३९ ॥

सम्प्राप्येत्यादि—तमसापगायाः तमसाख्यायाः आपगायाः नद्याः । 'अत्यविचमितमिनमिरभिलभितपिपतिजनिपणिगाहिभ्योऽसच् ' । यस्याः स्मरणात्पापं ताम्यति सा तमसा । 'तरसा' इति पाठान्तरम् । तत्र तरसा वेगेन आपगाया अर्थात्तमसाया नद्या गङ्गाम्बुसम्पर्कात् विशुद्धिं पवित्रतां भजते या तस्यास्तीरं कूलं सम्प्राप्य गत्वा ते जना निरुद्धश्रमवृत्तयः ययुः गताः । गङ्गेति गन् गम्यद्योरित्यौणादिको गन् । विगाहितुं विगाहिष्यामह इति कृत्वा । यामुनमम्बु यमुनाया इदं यमुनासम्बन्धि जलम् । पुण्यं पुण्यहेतुत्वात् पुण्ययुक्तत्वाद्वा ॥ ३९ ॥

ईयुर्भरद्वाजमुनेर्निकेतं यस्मिन्विशश्राम समेत्य रामः ।
च्युताऽशनायः फलवद्विभूत्या व्यस्यन्नुदन्यां शिशिरैः पयोभिः॥४०॥

ईयुरित्यादि—भरद्वाजमुनेर्निकेतं आश्रममीयुः गताः । 'इणो यण् । ६ । ४ । ८१ ।' इति यत्वम् । अभ्यासस्य 'दीर्घ इणः किति । ७ । ४ ६९।' इति दीर्घत्वम् । यस्मिन्निकेते रामो विशश्राम विश्रान्तः । समेत्य मिलित्वा । तमीयुर्जना इति योज्यम् । फलवद्विभूत्या फलवतां वृक्षाणां समृद्ध्या हेतुभूतया च्युताशनायोऽपगतबुभुक्षः । 'अशनायोदन्यधनायाबुभुक्षापिपासागर्धेषु । ७ । ४।३४।' इति निपातितः । व्यस्यन् उदन्यां वारयन् । असेर्दैवादिकस्य रूपम् । उदन्यां पिपासां शिशिरैः शीतलैः पयोभिः ॥ ४० ॥

वाचंयमान्स्थण्डिलशायिनश्च युयुक्षमाणाननिशं मुमुक्षून् ।
अध्यापयन्तं विनयात्प्रणेमुः पद्गा भरद्वाजमुनिं सशिष्यम् ॥ ४१ ॥

वाचमित्यादि—ते भरद्वाजमुनिं सशिष्यं शिष्यैः सह वर्तमानं प्रणेमुः प्रणमन्ति स्म । विनयात् विनयेन । अत एव पद्गाः पदातयः पादाभ्यां गच्छन्तीति । 'अन्येष्वपि दृश्यते । ३ । २ । १०१ ।' इति डः । 'हिमकाषिहतिषु च । ६ । ३।५४।' इति चकारस्य अनुक्तसमुच्चयार्थत्वात् गमोत्तरपदे पदादेशः । पदिति योगविभागाद्वा । कीदृशम् । अध्यापयन्तं पाठयन्तम् । कान् वाचंयमान् मौनव्रतान् । 'वाचि यमो व्रते । ३ । २ । ५० ।' इति खच् । 'वाचंयमपुरंदरौ च । ६ । ३ । ६९ ।' इति निपातनात् पूर्वपदस्य अमन्तता । स्थण्डिलशायिनः भूशायिनः । 'स्थण्डिलाच्छयितरि व्रते । ४ । २ । १५ ।' इति णिनिः । युयुक्षमाणान् योक्तुमिच्छतः । योगाभ्यासनिष्ठानित्यर्थः । अनिशमविच्छेदेन मुमुक्षून्मोक्षाभिलाषिण इत्यर्थः । अतएव योगाभ्यासमिच्छून् ॥ ४१ ॥

आतिथ्यमेभ्यः परिनिर्विवप्सोः कल्पद्रुमा योगबलेन फेलुः ।
धामप्रथिम्नो म्रादिमाऽन्वितानि वासांसि च द्राघिमवन्त्युदूहुः॥४२॥

आतिथ्यमित्यादि—अतिथ्यर्थमातिथ्यमन्नपानादि । 'अतिथेर्ञ्यः । ५ । ४ । २६ ।' एभ्यो भरतादिजनेभ्यः इति संप्रदाने चतुर्थी । परिनिर्विवप्सोः निर्वप्तुमिच्छोर्दातुमिच्छोरित्यर्थः । निर्पूर्वो वपिर्दाने वर्तते । धामप्रथिम्नः । धाम्ना तेजसा प्रथिमा पृथुत्वं यस्य । तेजसो बहिर्निर्गतत्वात् शरीरस्य पृथुत्वं जायते । तस्य भरद्वाजमुनेर्योगबलेन समाधिबलेन । 'युज समाधौ ।' इत्यस्य रूपम् । कल्पद्रुमाः फेलुः फलिताः । भक्ष्यान्नपानादिकमित्यर्थः । 'तृफलभजत्रपश्च । ६ । ४ । १२२ ।' इत्येत्वमभ्यासलोपश्च । वासांसि च वस्त्राणि उदूहुः उद्वहन्ति स्म । यजादित्वात् संप्रसारणम् । म्रदिमान्वितानि मृदुत्वमुपगतानि । द्राघिमवन्ति दैर्घ्ययुक्तानि । पृथुमृदुदीर्घशब्देभ्यस्तस्य भाव इत्यर्थे 'पृथ्वादिभ्य इमनिज्वा । ५ । १ । १२२ ।' । पृथुमृदुशब्दयोः 'र ऋतो हलादेः । ६ । ४ । १६१ ।' इति रादेशः । दीर्घशब्दस्य 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः।६।४।१५७।' इति द्राघादेशः पश्चान्मतुप् ॥ ४२ ॥

आज्ञां प्रतीपुर्विनयादुपास्थुर्जगुः सरागं ननृतुः सहावम् ।
सविभ्रमं नेमुरुदारमूचुस्तिलोत्तमाऽऽद्या वनिताश्च तस्मिन् ॥४३॥

आज्ञामिति—तस्मिंस्तपोवने तिलोत्तमाद्या वनिता दिव्यस्त्रियः आगता आज्ञामादेशं मुनेः प्रतीपुः प्रतीष्टवत्यः । चेटीभवन्त्य इत्यर्थः । प्रतिपूर्व इषिर्ग्रहणे वर्तते तस्य लिटि रूपम् । विनयादुपास्थुः उपस्थिताः । पादप्रक्षालनादिदानेन उपस्थानं कृतवत्यः । उपपूर्वात्तिष्ठतेर्लुङि सिच् । 'गातिस्थाघुपाभूभ्यः—२।४।७७। इति सिचो लुक् । 'सिजभ्यस्तविदिभ्यश्च । ३ । ४ । १०९ ।' इति झेर्जुस् । 'उस्यपदान्तात् । ६ । १ । ९६ ।' इति पररूपम् । जगुः सरागं सरक्तं गीतवत्यः । ननृतुः सहावं सशृङ्गारचेष्टं नर्तितवत्यः । सविभ्रमं नेमुः सविलासं प्रणताः । उदारमूचुः अग्राम्यमुक्तवत्यः ॥ ४३ ॥

वस्त्राऽन्नपानं शयनं च नाना कृत्वाऽवकाशे रुचिसम्प्रकॢप्तम् ।
तान्प्रीतिमानाह मुनिस्ततः स्मानिवध्वमाध्वं पिबताऽत्त शेध्वम् ।४४॥

वस्त्रेत्यादि—ततो वनितोपस्थानानन्तरमवकाशे प्रदेशे यथाभिमते वस्त्रान्नपानम् । सर्वो द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भावः । शयनमित्यधिकरणे ल्युट् । नाना कृत्वा पृथक् कृत्वा । रुचिसंप्रकॢप्तम् । यस्य यावदभिरुचितं तत्तथैव संपादितम् । 'कृपो रो लः ।८।२।१८।' । प्रीतिमान्मुनिस्तान् भरता-

१ 'इति' इति शेषः । अन्यथा समाप्तपुनरात्तत्वं दोषः ।

दीनाह स्म उक्तवान् । किमाह—निवध्वं परिधत्त वस्त्राणि । 'वस आच्छादने।' इत्यस्य विधौ लोट् । 'झलां जश् झशि ।८।४।५३।' इति सकारस्य दकारः । आध्वं उपविशत । आसेः पूर्ववत् दादेशः । अत्त खादत अन्नादिकम् । 'अद भक्षणे ।' इत्यस्मात् लोट् । पानादिकं पिबत । पिबतेः 'पाघ्राध्मास्थाम्नादाणदृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ' इति सूत्रेण पिबादेशः । शेध्वम् स्वपित शयने । सर्वत्र विधौ लोट् ॥ ४४ ॥

**ते भुक्तवन्तः सुसुखं वसित्वा वासांस्युषित्वा रजनीं प्रभाते ।**
**द्रुतं समध्वा रथवाजिनागैर्मन्दाकिनीं रम्यवनां समीयुः ॥ ४५ ॥**

ते भुक्तेत्यादि—ते भरतादयः सुसुखमिति क्रियाविशेषणम् । भुक्तवन्तः सन्तो वासांसि वसित्वा परिधाय । रजनीमुषित्वा रजनीं रात्रिं 'वसतिक्षुधोः—।७।२।५२।' इतीट् । 'कालाऽध्वनोरत्यन्तसंयोगे ।२।३।५।' इति द्वितीया । द्रुतं शीघ्रं प्रभाते मन्दाकिनीं नदीं समीयुः संभूय गताः । समध्वा अविच्छिन्नाध्वानः । सङ्गता अध्वन इति प्रादिसमासः । 'अपसर्गादध्वनः-५।४।८५ ।' इति समासान्तष्टच् । रथवाजीति द्वन्द्वैकवद्भावः । तेन सहिता नागा इति शाकपार्थिवादित्वात् समासः अन्यथा सेनाङ्गत्वात् समुदायस्यैकवद्भावः स्यात् । रम्यवनां रमणीयकाननां रमणीयजलां वा ॥ ४५ ॥

**वैखानसेभ्यः श्रुतरामवार्तास्ततो विशिञ्जानपतत्रिसङ्घम् ।**
**अभ्रंलिहाऽग्रं रविमार्गभङ्गमानंहिरेऽद्रिं प्रति चित्रकूटम् ॥ ४६ ॥**

वैखानसेत्यादि—ततो मन्दाकिनीगमनान्तरं वैखानसेभ्यस्तृतीयाश्रमिभ्यः । चित्रकूटे रामोऽस्तीति श्रुतरामवार्ताः। चित्रकूटनामानमद्रिं पर्वतं प्रति। 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः ।१।४।९०।' इति कर्मप्रवचनीयसंज्ञा । 'कर्मप्रवचनीययुक्ते द्वितीया ।२।३।८।' इति द्वितीया तं लक्ष्यीकृत्य आनंहिरे जग्मुः । अंहतेर्लिटि द्विवचनम् । 'हलादिः शेषः ।७।४।६०।' 'अत आदेः ।७।४।७०।' इति दीर्घः । 'तस्मान्नुड् द्विहलः ।७।४।७१।' इति नुट् । विशिञ्जानपतत्रिसंघं कूजत्पक्षिगणम् । अभ्रंलिहाग्रं अभ्रस्पृक्शिखरम् । 'वहाऽभ्रे लिहः ।३।२।३२।' इति खश् । 'अरुर्द्विषदजन्तस्य मुम् ।६।३।६७।' इति मुम् । रविमार्गभङ्गम् । उच्चैस्तरत्वात् रवेर्मार्गभङ्गो यस्मिन्नद्राविति ॥ ४६ ॥

**दृष्ट्वोर्णुवानान्ककुभो बलौघान् वितत्य शार्ङ्गं कवचं पिनह्य ।**
**तस्थौ सिसंग्रामयिषुः शितेषुः सौमित्रिरक्षिभ्रुवमुज्जिहानः ॥ ४७ ॥**

दृष्ट्वेत्यादि—बलौघान्दृष्ट्वा सौमित्रिस्तस्थौ स्थितः। अभ्यासस्य 'शर्पूर्वाः खयः ।७।४।६१।' इति खयः शेषः। कीदृशः ककुभो दिश ऊर्णुवानान् आच्छादयतः। ऊर्णोतेरदादिकस्योभयपदिनः शानचि उवङादेशे च रूपम्। शार्ङ्गं शृङ्गस्य विकारं धनुर्वितत्य आरोपितगुणं कृत्वा। 'वा ल्यपि ।६।४।३८।' इत्यनुनासिकलोपः। कवचं पिनह्य बद्ध्वा। 'णह बन्धने' इत्यस्य ल्यपि। अपिशब्दाकारलोपस्तु—'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। धाञ्कृञोस्तनिनह्योश्च बहुलत्वेन शौनकिः॥' इति। सिसंग्रामयिषुः संग्रामयितुमिच्छुः। 'संग्राम युद्धे।' इति चौरादिको णिच्। तदन्तस्य सनि प्रथमस्यैकाचो द्विवचनम्। शितेषुः तीक्ष्णशरः अक्षिणी च भ्रुवौ च आक्षिभ्रुवम्। 'अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्व०—।५।४।७७।' इत्यत्र निपातितः। उज्जिहानः ऊर्ध्वं नयन्। 'ओहाङ् गतौ। इत्यस्य जुहोत्यादिकस्य 'भृञामित् ।७।४।७६।' इतीत्वम्॥ ४७॥

शुक्लोत्तरासङ्गभृतो विशस्त्रान् पादैः शनैरापततः प्रमन्यून्।
औहिष्ट तान्वीतविरुद्धबुद्धीन् विवन्दिषून्दाशरथिः स्ववर्ग्यान्॥४८॥

शुक्लेत्यादि—दाशरथिस्तान् स्ववर्ग्यान् स्ववर्गे भवान्। 'अशब्दे यत्खौ -४।३।६४।' इति यत्। आत्मीया अपि कदाचित् दुष्टबुद्धयो भवन्तीत्याह—वीतविरुद्धबुद्धीन्। औहिष्ट ऊहितवान्। ऊहतेरात्मनेपदिनो लुङि आट् वृद्धिः। तदेवाविरुद्धबुद्धित्वं दर्शयन्नाह—शुक्लोत्तरासङ्गभृतः शुक्लो य उत्तरासङ्गः उत्तरीयं तं बिभ्रतीति क्विप्। विशस्त्रान् निरायुधान्। पादैरापतत आगच्छतो मुक्तवाहनत्वात्। शनैर्न त्वरया। प्रमन्यून् प्रकृष्टशोकान आगतशोकान् वा। विवन्दिषून वन्दितुमिच्छून॥ ४८॥

समूलकाषं चकषू रुदन्ता रामाऽन्तिकं बृंहितमन्युवेगाः।
आवेदयन्तः क्षितिपालमुच्चैःकारं मृतं रामवियोगशोकात्॥ ४९॥

समूलेत्यादि—ते रामान्तिकं रामसमीपं प्राप्ताश्चकषुः पिष्टवन्तः समूलकाषं समूलं कषित्वा भूमेरधोभागमुत्खन्य। 'निमूलसमूलयोः कषः। ३।४। ३४।' इति कषेर्णमुल्। 'कषादिषु यथाविध्यनुप्रयोगः।३।४।४।' रुदन्तः रोदनं कुर्वन्तः बृंहितमन्युवेगा विवृद्धशोकवेगाः। 'बृहि वृद्धौ' इत्यस्य रूपम्। रामवियोगशोकात् कारणात् क्षितिपालं दशरथमुच्चैःकारं कृत्वा। मृतं निधनं गतम् आवेदयन्तः। 'अव्यये यथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ३। ४।५९।' इति कृञो णमुल्। एतद्यथाभिप्रेताख्यानमिति नीचैराख्यातुमभिप्रेतत्वात् उच्चैरावेदयन्ति॥ ४९॥

**चिरं रुदित्वा करुणं सशब्दं गोत्राऽभिधायं सरितं समेत्य ।**
**मध्येजलाद्राघवलक्ष्मणाभ्यां प्रत्तं जलं द्व्यञ्जलमन्तिकेऽपाम्॥५०॥**

चिरमित्यादि—चिरं महान्तं कालं करुणं समन्यु सशब्दं प्रतिकृत्य रुदित्वा 'रलो व्युपधाद्धलादेः संश्च।१।२।२६।' इति कित्त्वे विकल्पिते 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च १ । २ । ८ ।' इत्यनेन नित्यं कित्त्वम् । सरितं समेत्य नदीं संभूय गत्वा । मध्येजलात् । जलस्य मध्यात् तस्माद्वा स्नात्वोत्थाय अवतीर्य ल्यब्लोपे पञ्चमी । 'पारेमध्ये षष्ठ्या वा ।२।१।१८।' इत्यव्ययीभावः । 'नाव्ययीभावादतोऽम् त्वपञ्चम्याः । २ । ४ । ८३ ।' इति लुक्प्रतिषेधश्च । अपञ्चम्या इति प्रतिषेधात् अमपि न भवति । राघवलक्ष्मणाभ्याम् । अपामन्तिके समीपे जलं प्रत्तं दत्तम् । 'अच उपसर्गात्तः ।७।४।४७।' गोत्राभिधायं नामाभिधायम् । 'द्वितीयायां च ।७।२।८७।' इति णमुल् । द्व्यञ्जलमिति । अञ्जलिपरिच्छिन्नम् । जलमञ्जली द्वौ विगृह्य । तद्धितार्थे समासः 'द्वित्रिभ्यामञ्जलेः ।५।४।१०२।' इति टच् । ताभ्यां प्रत्येकमञ्जलिप्रदानात् द्वावञ्जली प्रमाणमस्येत्यस्मिन्वाक्ये प्रमाणप्रत्ययस्य 'प्रमाणे लः । द्विगोर्नित्यम्' इति लुक् । ततः समासान्तो न प्राप्नोति । अतद्धितलुकीत्यधिकारात् ॥ ५० ॥

**अरण्ययाने सुकरे पिता मां प्रायुङ्क्त राज्ये बत दुष्करे त्वाम् ।**
**मा गाः शुचं वीर! भरं वहाऽमुमाभाषि रामेण वचः कनीयान्॥५१॥**

अरण्ययान इत्यादि–अरण्याय यानम् अरण्ययानं तस्मिन् सुकरे सुखसाध्ये पिता मां प्रायुङ्क्त नियुक्तवान् । युजेः रौधादिकस्य लङि रूपम् । कर्त्रभिप्राये 'प्रोपाभ्यां युजेरयज्ञपात्रेषु ।१।३।६४।' इत्यात्मनेपदम् । राज्ये दुष्करे दुःखसाध्ये त्वां प्रायुङ्क्त । एवं च सति हे वीर, शुचं शोकं मा गाः । मा कार्षीरित्यर्थः । 'इणो गा लुङि।२।४।४५।'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।२।४।७७।' इति सिचो लुक् । बत इति खेदे । किन्तु भरममुं पितुर्नियोगम् ।'भृञ् भरणे ।' इत्यस्मात् 'ऋदोरप् ।३।३।५७।' वह सपादय । विधौ लोट् । एवं वचः रामेण कनीयान् अनुजो भ्राता भरतः आभाषि भाषितः । कर्मणि लुङ् । ब्रू इत्यर्थग्रहणात् द्विकर्मकता । अल्पशब्दादीयसुनि 'युवाल्पयोः कनन्यतरस्याम् ।५।३।६४।' इति कनादेशः ॥ ५१ ॥

**कृती श्रुती वृद्धमतेषु धीमांस्त्वं पैतृकं चेद्वचनं न कुर्याः ।**
**विच्छिद्यमानेऽपि कुले परस्य पुंसः कथं स्यादिह पुत्रकाम्या॥५२॥**

कृतीत्यादि—वृद्धानां पण्डितानां मतेषु श्रुतानि कृतानि चानुष्ठितानि येनेति। 'श्राद्धमनेन भुक्तमिनिठनौ ५।२।८५।' इत्यधिकृत्य 'इष्टादिभ्यश्च।५।२।८८।' इतीनिः । 'क्तस्येन्विषयस्य०--' इत्यादिना कर्मणि सप्तमी । स्वमते भावक्तान्तादस्त्यर्थे इन् । स त्वमेवंविधः धीमान् पैतृकं पितुरागतम् । 'पितुर्यच्च । ४ । ३ । ७९ ।' इति चकारादृतष्ठञ् 'इसुसुक्तान्तात्कः ७।३।५१।' वेत्यादि वचनं न कुर्याः । मध्यमपुरुषैकवचने लिङि रूपम् । तदा विच्छिद्यमाने कुले वंशे परस्यापि अन्यस्यापि पुंसः । अपिशब्दो भिन्नक्रमः । कथं स्यादिह लोके पुत्रकाम्या । आत्मनः पुत्रेच्छा नैवेत्यर्थः । पुत्रशब्दात् 'काम्यच्च ।३।१।९।' इति काम्यच् । तदन्तादप्रत्ययः । टाप् ॥ ५२ ॥

**अस्माकमुक्तं बहु मन्यसे चेद् यदीशिषे त्वं न मयि स्थिते च ।**
**जिह्रेष्यतिष्ठन्यदि तातवाक्ये जहीहि शङ्कां व्रज शाधि पृथ्वीम्॥५३॥**

अस्माकमित्यादि—अस्माकमुक्तम् अस्मत्सम्बन्धि वचनं चेद् यदि बहु मन्यसे आद्रियसे। पितृतुल्यो भ्राता अस्यानुमतः कथमेवं न कुर्यामिति यदि च मयि स्थिते नेशिषे न प्रभुत्वं करोषि । प्रभुस्त्वमहं त्वदाज्ञाकर इति ईशेरादादिकस्य 'ईशः से ।७।२।७७।' इतीडागमः । गुरुवचनमनतिक्रमणीयं विशेषतस्तातवाक्यं तस्मिन्नतिष्ठन् वचनमकुर्वाणः यदि जिह्रेषि लज्जसे । 'श्लौ ।६।१।१०।' इति द्विर्वचनम् । एतान्निश्चित्याह—जहीहि शङ्कां त्यज विकल्पम् । व्रज गच्छ अयोध्याम् । शाधि पालय पृथ्वीम् । 'जहातेश्च ।६।४।११६।' इति इत्वे विकल्पिते । 'ई हल्यघोः ।६।४।११३' इतीत्वम् । शासेः 'शा हौ ।६।४।३५।' इति शाभावः । तस्याभीयत्वेनासिद्धत्वात् 'हुझल्भ्यो हेर्धिः ।६।४।१०१।' ॥ ५३ ॥

**वृद्धौरसां राज्यधुरां प्रवोढुं कथं कनीयानहमुत्सहेय ।**
**मा मां प्रयुक्थाः कुलकीर्तिलोपे प्राह स्म रामं भरतोऽपि धर्म्यम्॥५४॥**

वृद्धौरसामित्यादि–भरतः प्राह । धूर्वहनशीला । धूर्नयनशीला इत्यर्थः। अनेकार्थत्वाद्धातूनाम् 'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।३।२।१७७।' इति क्विप् 'राल्लोपः।६।४।२१।'इति वलोपः।राज्यस्य सप्ताङ्गस्य धूर्धात्री।प्रकृतिरिति विगृह्य 'ऋक्पूरब्धूःपथामानक्षे।५।४।७४।' इत्यकारप्रत्ययः । 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ।२।४।२६।' इति धूरिति स्त्रीलिङ्गम् । ततष्टाप् । कीदृशीं वृद्धौरसां वृद्धो ज्येष्ठः औरसः पुत्रो यस्याम् । उरसा निर्मित इति छन्दसो 'निर्मिते' इत्यनुवृत्तौ 'उरसोऽण् च ।४।४।९४।' इत्यण् । तां तिष्ठति रामे प्रवोढुं कथमु-

१ एतेन रामस्य धीरोदात्तत्वं च सूचितम् ।

त्सहेय । कनीयान् सन् । नैवेत्यर्थः 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ।३।४।६५।' इति वहेः सहावुपपदे तुमुन् । 'गर्हायां लडपिजात्वोः' इत्यनुवृत्तौ 'विभाषा कथमि लिङ् च ।३।३।१४३।' इति लिङ् । सहेरुत्पूर्वस्य आत्मनेपदित्वात् सीयुट् । इटोऽत् '।३।४।१०६।' लिङः सलोपोऽनन्त्यस्य ।७।२।७९।' अतो मा मां प्रयुक्थाः मा नियोजय 'माङि लुङ् ।३।३।१७५।' 'झलो झलि ।८।२।२६।' इति सिचो लोपः । कुलकीर्तिलोपे । लोपयतीति लोपः पचाद्यच् । रघुवंशस्य या कीर्तिः तस्या लोप इति समासः । पूर्वैरनाचरितत्वात् । एवं च धर्म्यं धर्मादनपेतं भरतोऽपि प्राह स्म उक्तवान् ॥ ५४ ॥

पुनश्चाह—

ऊर्जस्वलं हस्तितुरङ्गमेतदमूनि रत्नानि च राजभाञ्जि ।
राजन्यकं चैतदहं क्षितीन्द्रस्त्वयि स्थिते स्यामिति शान्तमेतत् ॥ ५५ ॥

ऊर्जेत्यादि—एतद्धस्तितुरङ्गं सेनाङ्गत्वादेवकद्भावः । ऊर्जस्वलं बलवत् । ऊर्जनमूर्क् । संपदादित्वात् क्विप् । सा विद्यते यस्येति । 'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः । ५ । २। ११४ ।' इति वलच्, असुगागमश्च । अमूनि च रत्नानि राजभाञ्जि राजगृह्याणि । एतच्च राजन्यकं क्षत्रियसमूहः । क्षितीन्द्रो राजा अहं त्वयि स्थिते स्यामिति भवामीति शान्तमेतत् । स्यामिति निमन्त्रणे नियोगकरणे लिङ् ॥ ५५ ॥

इति निगदितवन्तं राघवस्तं जगाद व्रज भरत! गृहीत्वा पादुके त्वं मदीये।
च्युतनिखिलविशङ्कः पूज्यमानो जनौघैः
सकलभुवनराज्यं कारयाऽस्मन्मतेन ॥ ५६ ॥[1]

इतीत्यादि—इति एवं निगदितवन्तं उक्तवन्तं तं भरतं राघवो रामो जगाद उक्तवान् । किमित्याह—हे भरत मदीये पादुके उपानहौ गृहीत्वा त्वं व्रज गच्छ । विधौ लोट् । अस्मदस्त्यदादित्वे 'त्यदादीनि च ।१।१।७४।' इति वृद्धसञ्ज्ञायां तस्येदमर्थे 'वृद्धाच्छः ।४।२।११४।' 'प्रत्ययोत्तरपदयोश्च ।७।२।९८।' इति मदादेशः । ततश्च पूज्यमानो जनौघैर्जनसमूहैः । च्युतनिखिलविशङ्कः अपगताशेषविकल्पः सकलभुवनराज्यं सर्वत्र भूमण्डले राज्यं कारय अनुष्ठापय । पादुके इति योज्यम् । अस्मन्मतेन अस्माकमभिप्रायेण । अत्र मदादेशो न भवति । अस्मदो बहुवचनान्तस्य विवक्षितत्वात् । तत्र ह्येकवचन इति वर्तते । ननु कथं मदीय इत्यत्र

---

१ अत्र 'मालिनी' वृत्तं तल्लक्षणं चोक्तं प्राक् ।

मदादेशः बहुवचनान्तत्वादिति विरोधः । पादुके रामस्यैव तदस्मन्मतेन इत्यत्रापि एकवचनम् । आवयो रामलक्ष्मणयोर्मतेनेति षष्ठीसमासे न दोषः ॥

इति श्रीजयमङ्गलाऽऽख्यया व्याख्यया समलङ्कृते श्रीभट्टिकाव्ये
प्रथमे प्रकीर्णकाण्डे लक्षणरूपे तृतीयः परिच्छेदः, लक्ष्यरूपे
कथानके श्रीरामप्रवासो नाम तृतीयः सर्गश्च ।

---

## चतुर्थः सर्गः ।

**निवृत्ते भरते धीमानत्रे रामस्तपोवनम् ।**
**प्रपेदे पूजितस्तस्मिन्दण्डकाऽरण्यमीयिवान् ॥ १ ॥**

**निवृत्त** इत्यादि--धीमान् बुद्धिमान् अत्र स्थिते मयि कदाचिद्भरतः पुनरेष्यतीत्येवं बुद्धिमान् रामः अत्रेर्महर्षेस्तपोवनं प्रपेदे गतः । तस्मिंश्च तपोवने अर्घ्यपाद्यादिभिः पूजितः । दाण्डक्यो नाम भोजो भार्गवकन्यामहरन् । तच्छापात् पांसुवर्षेणाक्रान्तः सबन्धुराष्ट्रविनाशो यस्मिन् स्थाने तत्त्वोपलक्षितम् अरण्यमभूत् । तदीयिवान् गतवान् । 'उपेयिवाननाश्वाननूचानश्च ।३।२।१०९।' इत्यत्र उपसर्गस्यातन्त्रत्वात्केवलादपीणः क्सुः ॥१॥

**अटाट्यमानोऽरण्यानीं ससीतः सहलक्ष्मणः ।**
**बलाद्बुभुक्षुणोत्क्षिप्य जह्रे भीमेन रक्षसा ॥ २ ॥**

अटाट्येत्यादि—महदरण्यमरण्यानी । 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ।४।१।४९।' इति हिमारण्ययोर्महत्त्वे ङीपानुकौ । ताम् अटाट्यमानः अत्यर्थमटन् रामः । 'सूचिसूत्रिमूत्र्यटयर्त्यशूर्णोतिभ्यो यङ् वाच्यः' इति यङ् । ससीतः सहलक्ष्मणः 'वोपसर्जनस्य ।६।३।८२।' इति विकल्पेन सभावः । बलात् बलवत्तया जह्रे हृतः गृहीत इत्यर्थः । कर्मणि लिट् । उत्क्षिप्य उत्थाप्य हस्ताभ्यां केनापि रक्षसा । वैश्रवणशापात् तुम्बुरुनाम्ना गन्धर्वेण राक्षसीभूतेन विराधाख्येन बुभुक्षुणा भोक्तुमिच्छुना । भीमेन भयानकेन । 'भियः षुक्' इत्यौणादिकषुगभावपक्षे रूपम् ॥ २ ॥

**अवाक्छिरसमुत्पादं कृतान्तेनाऽपि दुर्दमम् ।**
**भङ्क्त्वा भुजौ विराधाऽऽख्यं तं तौ भुवि निचख्नतुः ॥ ३ ॥**

अवागित्यादि—तं विराधाख्यं राक्षसं कृतान्तेनापि यमेनापि । दुर्दमं दुःखेन दम्यत इति खल् । तौ रामलक्ष्मणौ भुवि निचख्नतुर्निखातवन्तौ । कीदृ

शम् अवाक्शिरसं अधोमस्तकम् अवाक् शिरो यस्येति । ऊर्ध्वं पादौ यस्येति ऊर्ध्वपादम् । भुजौ भङ्क्त्वा मोटायित्वा । 'जान्तनशां विभाषा ।६।४।३२।' इत्यनुनासिकलोपाभावपक्षे रूपम् ॥ ३ ॥

**आंहिषातां रघुव्याघ्रौ शरभङ्गाऽऽश्रमं ततः ।**
**अध्यासितं श्रिया ब्राह्म्या शरण्यं शरणैषिणाम् ॥ ४ ॥**

आंहीत्यादि—ततो विराधवधानन्तरं रघुव्याघ्रौ शरभङ्गनाम्नो मुनेराश्रमं आंहिषातां गतवन्तौ । अंहेर्लुङि रूपम् । अध्यासितं आश्रयीकृतम् । श्रिया लक्ष्म्या ब्राह्म्या ब्रह्मसम्बन्धिन्या । ब्रह्मण इयमित्यण् । 'ब्राह्मोऽजातौ ।६।४।१७१।' इति निपातनात् टिलोपः । 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ।४।१।१५।'इति ङीप् । शरणे अवस्थाने साधु अनुकूलं शरण्यम् । 'तत्र साधुः ।४।४।९८।' इति यत् । शरणैषिणां शरणं त्राणमेषितुं शीलं येषाम् ॥४॥

**पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः ।**
**शरभङ्गः प्रदिश्याऽऽरात्सुतीक्ष्णमुनिकेतनम् ॥ ५ ॥**

पुर इत्यादि—शरभङ्गो रामस्य पुरः अग्रतः वपुः शरीरं ज्वलने अग्नौ जुहवाञ्चकार कुष्ठित्वात्तस्य । 'भीह्रीभृहुवां श्लुवच्च ।३।१।३९।' इति आम् । आमि श्लुभावे द्विर्वचनम् । किं कृत्वेत्याह—प्रदिश्य कथयित्वा । किम् आरात् समीपे सुतीक्ष्णनाम्नो मुनेः केतनम् आश्रमम् । तत्र वासमुपकल्पयेति ॥ ५ ॥

तत्र किमत्रावस्थानमिति चेदाह—

**यूयं समैष्यथेत्यस्मिन्नासिष्महि वयं वने ।**
**दृष्टाः स्थ स्वस्ति वो यामः स्वपुण्यविजितां गतिम् ॥ ६ ॥**

यूयमित्यादि—अपि नाम यूयं समैष्यथ आगमिष्यथ । आङ्पूर्व इण् आगमने वर्तते । 'एत्येधत्यूठ्सु ।६।१।८९।' इति वृद्धिः । इत्यस्मात्कारणात् । अस्मिन्वने वयमासिष्महि स्थिताः । आसेर्लुङि रूपम् । 'अस्मदो द्वयोश्च ।१।२।५९।' इति चकारस्यानुक्तसमुच्चयत्वादेकत्वे बहुवचनम् । अस्मदागमने किं ते फलमिति चेदाह—दृष्टाः स्थ अधुना दृष्टा भवथ । अस्तेर्मध्यमपुरुषबहुवचने 'श्नसोरल्लोपः ।६।४।१११।' इत्यकारलोपः । स्वस्ति कल्याणम् । वः युष्मभ्यम् । 'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च । २ । ३।१६ ।' इति चतुर्थी । 'बहुवचनस्य वस्नसौ ।८।१।२१।' स्वपुण्येन विजितां लब्धां गतिं जन्म । यामः व्रजामः । रामरूपेण विष्णुरवतीर्णः तं दृष्ट्वा यास्याम इत्यत्र वयं स्थिता इति ॥६॥

तस्मिन्कृशानुसाद्भूते सुतीक्ष्णमुनिसन्निधौ ।
उवास पर्णशालायां भ्रमन्ननिशमाऽऽश्रमान् ॥ ७ ॥

तस्मिन्नित्यादि—तस्मिन् शरभङ्गे कृशानुसाद्भूते कात्स्न्र्येनाग्नीभूते । 'विभाषा साति कात्स्न्र्ये ।५।४।५२।' इति सातिः । रामः सुतीक्ष्णस्य मुनेः सन्निधौ समीपे पर्णशालायां पर्णकुट्यामुवास उषितवान् । तत्र कृताधिवासस्य वृत्तिमाह भ्रमन्ननिशमाश्रमान् पर्यटन् सदा तपोवनानि मुनीन् उपासितुम्॥७॥

वनेषु वासतेयेषु निवसन्पर्णसंस्तरः ।
शय्योत्थायं मृगान्विध्यन्नातिथेयो विचक्रमे ॥ ८ ॥

वनेष्वित्यादि—वासतेयेषु वसतौ साधुषु । 'पथ्यतिथिवसतिस्वपतेर्ढञ् ।४।४।१०४।' इति ढञ् । निवसन् शयानः । संस्तीर्यत इति संस्तरः । 'ऋदोरप् ।३।३।६७।' पर्णानि संस्तरो यस्येति पर्णसंस्तरः । शय्योत्थायं शय्याया उत्थाय । उत्पूर्वात्तिष्ठतेः 'अपादाने परीप्सायां ।३।४।५२।' इति णमुल् । शय्यते अस्यामिति शय्या । 'संज्ञायाम ।३।३।९९।' इति क्यप् । त्वरया मुखधावनादीन्यपि न कृत्वा । मृगान्विध्यन् ताडयन । 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । ६। १ । १६ ।' इति सम्प्रसारणम् 'तत्रापि नात्मार्थं लुब्ध इत्याह आतिथेयः अतिथौ साधुः। पूर्ववत् ढञ् । विचक्रमे विहरति स्म । 'वेः पादविहरणे ।१।३।४१।' इति तङ् ॥ ८ ॥

ऋग्यजुषमधीयानान् सामान्यांश्च समर्चयन् ॥
बुभुजे देवसात्कृत्वा शूल्यमुख्यं च होमवान् ॥ ९ ॥

ऋग्यजुषमित्यादि—ऋक् च यजुश्च ऋग्यजुषम् । 'अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः । ५ । ४ । ७७ ।' इति निपातितम् । 'द्वन्द्वाच्चुदषहाऽन्तात् समाहारे । ५ । ४ । १०६ ।' इति टच् । ऋग्वेदं यजुर्वेदं च अधीयानान् पठतः । इङोऽधिपूर्वस्य लटि शानचि रूपम् । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ।२।३।६९।' इति षष्ठीप्रतिषेधः । सामान्यांश्च सामसु साधून् द्विजान् । 'तत्र साधुः ।४।४।९८।' इति यत् । 'ये चाभावकर्मणोः ।६।४।१६८।' इति प्रकृतिभावः । समर्चयन् पूजयन् । शूल्यमुख्यं च मांसं बुभुजे भुक्तवान् । शूले उखायां च स्थाल्यां संस्कृतम् । 'शूलोखाद्यत् ।४।२।१७।' । 'भुजोऽनवने । १। ३।६६।' इति तङ् । किं कृत्वा—देवसात्कृत्वा देवेभ्यो दत्त्वा । तदधीनं कृत्वा ।

'दंये त्रा च ।५।४।५५।' इति चकारात् सातिश्च । होमवान् होमो विद्यते यस्येति कृताग्निकार्य इत्यर्थः ॥ ९ ॥

अथ द्वाभ्यां युग्मकम्[1] ।

**वसानस्तन्त्रकनिभे सर्वाङ्गीणे तरुत्वचौ ॥**
**काण्डीरः खाड्गिकः शार्ङ्गी रक्षन् विप्रांस्तनुत्रवान् ॥ १० ॥**

वसान इत्यादि—असौ रामो वनेष्वानभ्र भ्रान्तवानिति वक्ष्यमाणेन श्लोकेन सम्बन्धः । वसानः परिदधानः । 'वस आच्छादने ।' इत्यस्मात् शानच् । तरुत्वचौ वल्कले प्रत्यग्रे । तन्त्रकः 'तन्त्रादचिरापहृते । ५।२।७०।' इति कन् । तन्निभे तत्तुल्ये । सर्वाङ्गीणे सर्वाङ्गाणि व्याप्नुवत्यौ । 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ।५।२।७।' इति खः । काण्डीरः काण्डोऽस्यास्तीति । 'काण्डाण्डादीरन्नीरचौ ।५।२।१११।' खाड्गिकः खड्गोऽस्यास्तीति । 'अत इनिठनौ ।५।२।११५।' 'खाड्गिक' इति पाठान्तरम् । तत्र खड्गः 'प्रहरणम् ।४ ।४ ।५७।' इति ठक् । शार्ङ्गी सधनुः । तनुत्रवान् तनुं शरीरं त्रायत इति तनुत्रम् । 'आतोऽनुपसर्गे कः ।३।२।३।'। संसर्गे मतुप् । पिनद्धकवच इत्यर्थः । स एवंविधो विप्रान् ब्राह्मणान् रक्षन् ॥

**हित्वाऽऽशितङ्गवीनानि फलैर्येष्वाशितम्भवम् ॥**
**तेष्वसौ दन्दशूकाऽरिर्वनेष्वानभ्र निर्भयः ॥ ११ ॥**

हित्वेत्यादि—आशितास्तृप्ता गावो येषु भवन्ति तृणप्रायत्वात् । 'अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात् खः।५।४।७।'इति खः । पूर्वपदस्य च मान्तत्वं निपात्यते। तान्यरण्यानि हित्वा येषु वनेषु फलैराशितम्भवमाशितस्य भवनं तृप्तिर्वर्तते । 'आशिते भुवः–।३।२।४५।' इति भावे खच् । तेष्वानभ्र । 'अभ्र, वभ्र' इति गत्यर्थो धातुः । लिटि 'अत आदेः ।७।४।७०।' इति दीर्घे 'तस्मान्नुड्द्विहलः ।७।४।७१।' इति नुट् । दन्दशूकारिः व्यालानां हन्ता । 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् । ३ । १ ।२४ ।' इति दंशेर्यङ् । तदन्तात् 'यजजपदशां यङः ।३।२।१६६।' इति ऊकः ॥१०–११॥

**व्रातीनव्यालदीप्राऽस्त्रः सुत्वनः परिपूजयन् ॥**
**पर्षद्वलान् महाब्रह्मैराट नैकटिकाऽऽश्रमान् ॥ १२ ॥**

व्रातीनेत्यादि—तेषु वनेषु भ्रमन् नैकटिकाश्रमानाट गतवान् । अटेरभ्यासस्य 'अत आदेः । ७ । ४ । ७० ।' इति दीर्घत्वम् । ग्रामस्यान्तिके क्रोशमात्रं

[1] 'द्वाभ्यामेकत्र सम्बन्धे युग्मकं परिकीर्त्यते । त्रिभिर्विशेषकं प्रोक्तं चतुर्भिश्च कलापकम् ॥ कुलकं चाधिकैस्तेभ्यः इति वचनात् । एवं परत्रापि ।

त्यक्त्वा यतयो भिक्षवो ये निवसन्ति ते नैकटिकाः। 'निकटे वसति।४।४।७३।' इति ठक् । तेषामाश्रमांस्तपोवनानि । कीदृशः । व्रातीनव्यालदीप्रास्त्रः । नानाजातीया अनियतवृत्तयः शरीरमायास्य ये जीवन्ति ते व्रातास्तेषां यत्कर्म तदपि व्रातं तेन जीवन्ति इति व्रातीनाः । 'व्रातेन जीवति ।५।२।२१।' इति खञ् । तेषां व्याला हिंस्राः उपघातकाः तेषु दीप्रास्त्रः ज्वलदायुधः । सप्तमीति योगविभागात्सः । सुत्वनः सुतवतः परिपूजयन् । सोमपायिन इत्यर्थः । 'सुयजोर्ङ्वनिप् । ३।२।१०३।' तुक् ।'न संयोगाद्वमन्तात् ६।४।१३७।' इत्यल्लोपो न । पर्षद्वलानिति । 'पर्ष स्नेहने' अस्मात्पर्षते स्निह्यतीति । शृण्णसोदिरित्यत्र पर्षेर्बाहुलकादौणादिको दिः, पर्षत्।तत्र यदि'रजःकृष्यासुतिपर्षदो वलच्।५।२।११२।' इति तदा पर्षत् विद्यते येषां सुत्वनामिति वलच् । अत्र परिषीदतीति परिषत् क्विबन्तो यथा 'परिषदप्येषा गुणग्राहिणी' तदा परिषद्बलं सहायो येषामिति बहुव्रीहिः । महाब्रह्मैर्महद्भिर्ब्राह्मणैः 'कुमहद्भ्यामन्यतरस्याम् ।५ । ४ । १०५ ।' इति टच् । तैः सहाट ॥ १२ ॥

युग्मकम् ( २ )—

परेद्यव्यद्य पूर्वेद्युरन्येद्युश्चचापि चिन्तयन् ॥
वृद्धिक्षयौ मुनीन्द्राणां प्रियम्भावुकतामगात् ॥ १३ ॥

परेद्यवीत्यादि—परेद्यवि परस्मिन् आगामिनि दिवसे इत्यर्थः । अद्यैतस्मिन्नहनि । पूर्वेद्युः पूर्वस्मिन्नहनि अन्येद्युरन्यस्मिन्नहनि चिरातिक्रान्ते चिरगामिनि दिवसे परेद्यवीत्यादिषु दिवसेषु मुनीन्द्राणां वृद्धिक्षयौ उदयापचयौ चिन्तयन् । प्रियम्भावुकतां पूर्वं प्रियाप्रियस्वभावनिर्मुक्तत्वादतथाभूतः सन् प्रियो भवतीति प्रियम्भावुकः । आढ्यसुभगेत्यधिकृत्य 'कर्तरि भुवः खिष्णुच् खुकञौ । ।३।२।५७।' इति खुकञ् । तद्भावः । तामगात् गतः । अर्थान्मुनीन्द्राणामेव । परेद्यव्यादयः शब्दाः 'सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः । ५ । ३ । २२ ।' इति निपातिताः ॥ १३ ॥

आतिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवम् ॥
प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन् रविम् ॥ १४ ॥

आतीत्यादि—जपन्मन्त्रमिति सामर्थ्यलभ्यम् । सन्ध्याकालोऽधिकरणम् । तेन अत्यन्तसंयोगे 'कालाध्वनोरत्यन्तसंयोगे २ । ३ । ५ ।' इति द्वितीया । सम्यक् ध्यायन्त्यस्यामिति । 'आतश्चोपसर्गे । ३ । ३ । १०६ ।' इत्यङ् । किम-

वधिं सन्ध्यामित्याह—प्रक्रान्तामायतीगवम् । आयत्यः आयान्त्यो भवन्ति यस्मिन् काले गावः अस्मिन्नायतीगवम् आरब्धाम् । ' तिष्ठद्गुप्रभृतीनि च ।२।१।१७।' इत्यव्ययीभावसमासत्वात्साधुः । नाव्ययीभावादतोऽम्०—।२।४। ८३ ।' इत्यादिना सप्तम्या अम्भावः । आङ्पूर्वादिणः शतरि ' इणो यण् ।६।४। ८१ ।' इति यणि ङीपि च रूपम् आयतीति । गावोऽपि गोचरात् गोष्ठमायान्ति दिनस्यार्धनाडिकावशेषे सन्ध्यापि तदैव प्रवर्तते । कियन्तमेवं जपन्नित्याह— आतिष्ठद्गु इति । तिष्ठन्ति गावो यस्मिन् काले दोहाय। गावो हि रात्रिप्रथम-यामस्य नाडिकायामतीतायां विश्रान्ताः सत्यः उत्थाप्य दुह्यन्ते । आतिष्ठदिति 'आङ् मर्यादाभिविध्योः । २ । १ । १३ ।' इत्यव्ययीभावः । 'तिष्ठद्गु प्रभृतीनि च । २ । १ । १७ ।' इति चकारस्यानुक्तसमुच्चयार्थत्वादव्ययीभाव एव । पुनः समासान्तरं न भवति । प्रातस्तरामिति । प्रातरित्यव्ययं प्रभातवाचि । प्रकर्ष-विवक्षायां तरप् । तदन्तात् ' किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । ५ । ४।११ । इत्यनेन आम् अतिप्रभाते । पतत्रिभ्यः कुक्कुटादिभ्यः प्रथमं प्रवुद्ध उत्थितः । 'पञ्चमी विभक्ते । २ । ३ । ४२ ।' इति पञ्चमी । रविमादित्यं प्रणमन् यदा चरति तदा प्रियम्भावुकतामगादिति पूर्वेण योज्यम् ॥ १३ ॥ १४ ॥

ददृशे पर्णशालायां राक्षस्याऽभीकयाऽथ सः ।
भार्योढं तमवज्ञाय तस्थे सौमित्रयेऽसकौ ॥ १५ ॥

ददृश इत्यादि—पर्णानां शालायां स्थितः स रामः राक्षस्या ददृशे दृष्टः । कीदृश्या । अभीकया कामुकया । ' अनुकाऽभिकाऽभीकः कमिता । ५ । २ । ७४ ।' इति निपातितः । दृशेः कर्मणि लिट् । अथ दर्शनानन्तरं भार्योढं ऊढभार्यमूढा भार्या यस्येति । आहिताग्न्यादिषु दर्शनात् निष्ठान्तस्य परनिपातः। अवज्ञाय अनादृत्य । सद्भार्यत्वात् । असकौ राक्षसी पापासौ । कुत्सायाम् 'अव्ययसर्वनाम्नामकच् प्राक् टेः।५।३।७१।' सौमित्रये लक्ष्मणाय । 'श्लाघह्नुङ्-स्थाशपां ज्ञीप्स्यमानः इति।१। ४ । ३४ ।' सम्प्रदानसंज्ञा । तस्थे स्वाभिप्रायं मैथुनायाविष्कृतवती । ' प्रकाशनस्थेयाख्ययोश्च । १ । ३ । २३ । ' इति प्रकाशने तङ् ॥ १५ ॥

अथ चतुर्भिः कलापकम् ।

दधाना वलिभं मध्यं कर्णजाहविलोचना ।
वाक्त्वचेनाऽतिसर्वेण चन्द्रलेखेव पक्षतौ ॥ १६ ॥

---

१ पर्णकुट्यामित्यर्थः । २ सुमित्राया अपत्यं पुमानिति सौमित्रिर्लक्ष्मणः । 'अत इञ् ४।१।९५' इतीञ् ।

दधानेत्यादि—सा तं प्रार्थयाञ्चक्रे इति वक्ष्यमाणेन सम्बन्धः । कीदृशी मध्यं स्तनजघनयोरन्तरम् । वलिभं वलयोऽस्मिन् सन्तीति । 'तुन्दिवालिवटेर्भः । ५ । २ । १३९ ।' दधाना धारयन्ती । कर्णजाहविलोचना । कर्णजाहं कर्णमूलसमीपमित्यर्थः 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ । ५ । २ । २४ ।' इति जाहच् । कर्णजाहयोर्विश्रान्ते विलोचने यस्या इति सप्तम्युपमानेत्यादिना उपपदलोपी बहुव्रीहिः । वाक्त्वचने वाक् च त्वक् चेति प्राण्यङ्गत्वादेकवद्भावः । ' द्वन्द्वाच्चुदषहान्तात् समाहारे । ५।४।१०६ ।' इति टच् । अतिसर्वेण अतिक्रान्तेन सर्वम् । अत्यादय इति समासः । 'एकविभक्ति चापूर्वनिपाते । १ । २ । ४४ । ' इति सर्वशब्दस्योपसर्जनत्वेऽपि पूर्वनिपातो न भवति अपूर्वनिपात इति प्रतिषेधात् । वाक्त्वचेन वाङ्मयेन माधुर्येण मार्दवेन चासाधारणेनोपलक्षितेनेत्यर्थः । इत्थम्भूते तृतीया । चन्द्रलेखेव पक्षतौ तनुत्वात् । पक्षोऽत्रार्धमासः तस्य मूले प्रतिपदि । 'पक्षात्तिः । ५ । २ । २५ ।'॥

सुपाद्द्विरदनासोरूर्मृदुपाणितलाऽङ्गुलिः ।
प्रथिमानं दधानेन जघनेन घनेन सा ॥ १७ ॥

सुपादित्यादि—शोभनौ पादौ यस्याः असौ सुपात् । ' सङ्ख्यासुपूर्वस्य । ५ ४ । १४० ।' इति पादान्तलोपः ' पादोऽन्यतरस्याम ।४। १ । ८ ।' इति यदा ङीप् नास्ति तदेत्थं रूपम् । द्विरदनासोर्द्विरदनासे इव करिपोतकराविव ऊरू यस्याः उपमानपूर्वो बहुव्रीहिः । 'ऊरूत्तरपदादौपम्ये । ४ । १ । ६९ ।' इति ऊङ् । रद्यते अनेनेति रदः दन्तः । 'पुंसि संज्ञायां घः– ३।३।११८।'इति घः करणे। द्वौ रदौ यस्येति द्विरदः। मृदुपाणितलाङ्गुलिः।तलं च अङ्गुलिश्चेति द्वन्द्वः । तत्र घ्यन्तात्अल्पाच्तरयोः अल्पाच्तरस्य पूर्वनिपातः । पाण्योस्तलाङ्गुलि पाणितलाङ्गुलि । मृदु पाणितलाङ्गुलि यस्य । इति योज्यम् । प्रथिमानं पृथुतां दधानेन धारयता । घनेन उपचितेन जघनेनोपलक्षिता सा राक्षसी ॥

उन्नसं दधती वक्त्रं शुद्धदल्लोलकुण्डलम् ।
कुर्वाणा पश्यतः शंयून् स्रग्विणी सुहसाऽऽनना ॥ १८ ॥

उन्नसमित्यादि—उच्यते अनेनेति वक्त्रम् । सर्वधातुभ्य औणादिकः ष्ट्रन् । तत्र वक्त्रशब्दो मुखैकदेशे वर्तमानोऽपि कविभिः समुदाये प्रयुज्यते । वक्त्रं मुखमुन्नसं दधती । 'नाभ्यस्ताच्छतुः । ७ । १ । ७८ ।' इति नुम न भवति ।

१ सा राक्षसी, तं सौमित्रिमित्यर्थः । २ ' प्रकृत्यादिभ्य उपसङ्ख्यानम्' इत्यनेन 'जटाभिस्तापसः' इतिवत्तृतीयेति भावः ।

उन्नता नासिका यस्मिन्निति । 'अञ्नासिकायाः संज्ञायां नसं च' इत्यधिकृत्य 'उपसर्गाच्च । ५ । ४ । ११९ ।' इत्यच् । नासिका च नसादेशमापद्यते । शुद्धदत् शुद्धाः शुक्ला दन्ता यस्मिंस्तच्छुद्धदत् 'अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च । ५ । ४ । १४५ ।' इति ददादेशः । लोले चञ्चले कुण्डले यस्मिन् तत् लोलकुण्डलम् । पश्यतो जनान् शंयून् विद्यमानसुखान् कुर्वाणा शं सुखं तदस्यास्तीति । 'कंशंभ्यां बभयुस्तितुतयसः । ५ । २ । १३८ ।' इति युस् । सित्वात्पदसंज्ञा । अनुस्वारः । अपश्यतो वा शंयून् कुर्वाणा पश्यतां तु पीडाकरी । स्रग्विणी मालावती । 'अस्मायामेधास्रजो विनिः । ५ । २ । १२१ ।' इति विनिः । सुहसानना हसनं हसः । 'स्वनहसोर्वा ।३।३ । ६२ ।' इत्यप् । शोभनहसनमाननं यस्याः सा ॥

प्राप्य चञ्चूर्यमाणासौ पतीयन्ती रघूत्तमम् ।
अनुका प्रार्थयाञ्चक्रे प्रियाकर्तुं प्रियंवदा ॥ १९ ॥

प्राप्येत्यादि—प्राप्य ढौकित्वा । चञ्चूर्यमाणा गर्हितमाचरन्ती । प्राणिनो हन्तव्या इति । चरेः 'लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ।३ । १ । २४ ।' इति भावगर्हायां यङ् । 'चरफलोश्च । ७ । ४ । ८७ ।' इत्यभ्यासस्य नुक् । 'उत्परस्यातः । ७ । ४ । ८८ ।' इत्युत्वम् । 'हलि च ।८।२।७७।' इति दीर्घत्वम् । पतीयन्ती आत्मनः पतिमिच्छन्ती । 'सुप आत्मनः क्यच् । ३ । १ । ८ ।' अनुका अभिलाषुका । 'अनुकाभिकाभीकः कमिता । ५ । २ । ७४ ।' इति निपातितः । रघूत्तमं लक्ष्मणं प्रार्थयाञ्चक्रे प्रार्थितवती । प्रियाकर्तुमनुलोमयितुम् । पतिर्मे स्या इति । 'सुखप्रियादानुलोम्ये ।५।४।६३।' इति डाच् । प्रियंवदा प्रियवादिनी । 'प्रियवशे वदः खच् ।३।२।३८।'॥१६–१९॥

तां प्रार्थनामाह— ।

सौमित्रे ! मामुपायंस्थाः कम्राभिच्छुर्वशंवदाम् ।
त्वद्भोगीनां सहचरीमशङ्कः पुरुषाऽयुषम् ॥ २० ॥

सौमित्रे इत्यादि—हे सौमित्रे इच्छुरेषणशीलः । 'बिन्दुरिच्छुः । ३ । २ । १६९ ।' इत्यादिना निपातितः । अशङ्कः निर्विकल्पः सन् । किं मां वञ्चयिष्यतीति । मामुपायंस्थाः परिणय । 'आशंसायां भूतवच्च । ३ । ३ । १३२ ।' इति लुङ् । 'उपाद्यमः स्वकरणे । १ । ३ । ५६ ।' इति तङ् । 'विभाषोपयमने । १ । २ । १६ ।' इत्यकित्त्वपक्षे रूपम् । कम्राम् । 'नमिकम्पिस्म्यजसकमहिंसदीपो रः ।३।२।१६७।' इति रः । वशंवदाम् अहं ते वश्येति वदन्तीम् । त्वद्भोगीनाम्

त्वच्छरीराय हिताम् । अवैधव्यादिलक्षणयोगात् । 'आत्मन्विश्वजनभोगोत्तरपदात् खः । ५ । १ । ९ ।' इति खः । सहचरीं सहगामिनीम् 'भिक्षासेनादायेषु च ३।२।१७।' इति चकारस्यानुक्तसमुच्चयार्थत्वात् टप्रत्ययः।कियन्तं कालम् पुरुषायुषं पुरुषस्यायुर्यावत् ।'अचतुरविचतुर०—५।४।७७।' इत्यादौ निपातितः। 'कालाध्वनोरत्यन्तसंयोगे ।२।१।२९।' इति द्वितीया । चरणक्रियायाः कृत्स्नसंयोगात् । यथा मासमुषित इति ॥ २० ॥

तामुवाच स गौष्ठीने वने स्त्रीपुंसभीषणे ॥
अमूर्यपश्यरूपा त्वं किमभीरुररार्यसे ॥ २१ ॥

तामित्यादि—तां राक्षसीं स लक्ष्मण उवाच उक्तवान् । किमित्याह—गौष्ठीने वने गोष्ठं भूतपूर्वं यस्मिन्वने । इदानीं नामापि न ज्ञायते । 'गोष्ठात् खञ् भूतपूर्वे । ५ । २ । १७ ।' इति खञ् । स्त्रीपुंसभीषणे । स्त्री च पुमांश्चेति स्त्रीपुंसौ ।'अचतुरविचतुरसुचतुर०—५।४ । ७७ ।' इत्यादौ निपातितः । तयोर्भीषण इति षष्ठीसमासः । ञिभेतेर्णिचि हेतुभये पुक् । तदन्तात् 'कृत्यल्युटो बहुलम् । ३ । ३ । ११३ ।' इति कर्तरि ल्युट् । तस्मिन्नभीरुः निर्भया सती किमित्यरार्यसे अत्यर्थमटसि । अर्तेः 'सूचिसूत्रिमूत्र्यटयर्त्यशूर्णोतिभ्यो यङ् वाच्यः' इति यङ् । 'यङि च ।७।४।३०।' इति गुणः । 'न न्द्राः संयोगादयः' । ६ । १ । ३ ।' इति प्रतिषेधस्य प्रतिषेधो यकारपरस्य न द्वित्वनिषेध इति रेफो द्विरुच्यते । भयशीला भीरुः । 'भियः क्रुक्लुकनौ । ३ । २ । १७४ ।' क्रियाशब्दत्वात् 'ऊङुतः । ४ । १ । ६६ ।' इति ऊङ् न भवति । अमनुष्यत्वाच्च । तथाहि लक्ष्मणेनामानुषीयमिति ज्ञाता । तथाच भङ्ग्या दर्शयन्नाह—असूर्यम्पश्यरूपा । अतिगोपनीयतया सूर्यमप्यनिषिद्धदर्शनं न पश्यतीति । 'असूर्यललाटयोर्दृशितपोः ।३ ।२। ३६ ।'इति खश् । 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्छधौशीयसीदाः ।७।३।७८।' इति पश्यादेशः । असूर्यम्पश्यं रूपं यस्या इति समासः । सा न पश्यतीति रूपमपि न पश्यतीत्युक्तम् ॥ २१ ॥

मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्मिणी॥
त्वमप्सरायमाणेह स्वतन्त्रा कथमश्रसि ॥ २२ ॥

मानुषानित्यादि—मनोरपत्यानि मानुषाः । 'मनोर्जातावञ्यतौ षुक् च । ४ । १ । १६१ ।' तानभिलष्यन्ती कामयन्ती रन्तुमिच्छन्ती । 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ।३।१।७०।' इति श्यन् । रोचिष्णुः रोचनस्वभावा । 'अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर

इष्णुच् । ३ । २ । १३६ ।' इति इष्णुच् । अत एव दिव्यधर्मिणी । दिवि भवा दिव्याः देवा राक्षसा अपि देवयोनित्वात् । तेषां धर्मः स्वभावः सोऽस्या अस्तीति । 'धर्मशीलवर्णान्ताच्च । ५ । २। १३२ ।' इति इनिः । अप्सरायमाणा अप्सरा इवाचरन्ती । राक्षसभावं गोप्तुमिति भावः । 'उपमानादाचारे' इत्यधिकारे 'कर्तुःक्यङ् सलोपश्च । ३।१।११।' 'ओजसोऽप्सरसो नित्यम्' इति वचनात् । इह वने स्वतन्त्रा कथमश्वसि भ्रमसि । स्व आत्मा तन्त्रः प्रधानं यस्याः । अपराधीनत्वात् । अनयोक्त्या राक्षसीत्वं दर्शयति ॥ २२ ॥

उग्रम्पश्याऽऽकुलेऽरण्ये शालीनत्वं विवर्जिता ।
कामुकप्रार्थनापट्वी पतिवत्नी कथं नवा ॥ २३ ॥

उग्रमित्यादि—उग्रम्पश्यन्तीत्युग्रम्पश्याः । पापाशयत्वात् । शबरादयः । 'उग्रम्पश्येरम्मदपाणिन्धमाश्च । ३ । २ । ३७ ।' इति खश् निपात्यते । तैराकुले व्याप्ते अरण्ये । पतिवत्नी जीवत्पतिः कथं केन प्रकारेण न वा नैवं भवसीत्यर्थः । 'अन्तर्वत्पतिवतोर्नुक् । ४ । १ । ३२ ।' इत्यत्र पतिर्विद्यते अस्या इति मतुप् सिद्धः । जीवत्पत्यां मतुपो वत्वं निपात्यते । नुक् सूत्रेणैव विधीयते । ङीप्प्रत्ययस्तूगित्त्वादेव सिद्धः । शालीनत्वविवर्जिता । अधृष्टतया वर्जिता । शालाप्रवेशमर्हतीति 'शालीनकौपीने अधृष्टाकार्ययोः । ५ । २ । २० ।' इति खञ् निपात्यते । अधृष्टेऽभिधेये प्रवेशशब्दस्य लोपः । तस्य भावः शालीनत्वम् । कामुकः कामशीलः । 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् । ३ । २ । १५४ ।' इत्युकञ् । तस्य प्रार्थनायां पट्वी चतुरा । 'वोतो गुणवचनात् । ४ । १ । ४४ ।' इति ङीष् ॥ २३ ॥

राघवं पर्णशालायामिच्छाऽनुरहसं पतिम् ।
यः स्वामी मम कान्तावानौपकर्णिकलोचनः ॥ २४ ॥

राघवमित्यादि—रामं पर्णशालायामवस्थितं पतिमिच्छ । अनुरहसं विवेकप्राप्तमनुगतो रह इति विगृह्य 'अन्ववतप्ताद्रहसः ।५।४।८१।' इत्यच् । यो राघवो ममापि स्वामी प्रभुः । 'स्वामिन्नैश्वर्ये ।५।२।१२६।' इति निपातितम् कान्तावान् सभार्यः । प्रवृत्तसम्भोगोऽसौ नाहमिति दर्शयति । तमेव रूपशौर्याभ्यां वर्णयन्नाह—औपकर्णिकलोचनः । कर्णयोः समीपमुपकर्णम् । समीपार्थे अव्ययीभावः । तत्र प्रायभव इति । 'उपजानूपकर्णोपनीवेष्ठक् ।४।३।४०।' शेषमपि शब्दद्वयं प्रयोक्ष्यते । औपकर्णिके लोचने यस्य कर्णान्तायतलोचन इत्यर्थः ॥ २४ ॥

वपुश्चान्दनिकं यस्य कार्णवेष्टकिकं मुखम् ।
सङ्ग्रामे सर्वकर्मीणौ पाणी यस्यौपजानुकौ ॥ २५ ॥

वपुरित्यादि—यस्य राघवस्य वपुः शरीरं चान्दनिकं चन्दनेन सम्पद्यते प्राप्तशोभं भवति । मुखं च कार्णवेष्टकिकम् । कर्णवेष्टकाभ्यां कर्णालङ्काराभ्यां कार्णवेष्टकिकम् । तत्रोभयत्र 'सम्पादिनि ।५।१।९९।' इति ठक् । पाणी हस्तौ संग्रामे युद्धे सर्वकर्मीणौ धनुःखड्गादिव्यापारकर्माणि व्याप्नुतः । 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ।५।२।७।' इति खः । औपजानुकौ आजानुकौ । आजानुलम्बावित्यर्थः । अत्र ठक् । 'इसुसुक्तान्तात्कः ।७।३।५१।' २५ ॥

बद्धो दुर्बलरक्षार्थमसिर्येनौपनीविकः ।
यश्चापमाश्मनप्रख्यं सेषु धत्तेऽन्यदुर्वहम् ॥ २६ ॥

बद्ध इत्यादि—येन असिः खड्गः औपनीविकः । नीविसमीपे प्रायेण भवतीति । स हि नीवीं प्राप्य वर्तमानः पार्श्वयोश्चोर्ध्वं निबद्धः । किमर्थं—दुर्बलरक्षार्थं दुर्बलरक्षायै इदमित्यस्मिन्नर्थे 'चतुर्थी तदर्थार्थ०—२।१।३६।' इत्यादिना सः । तत्रार्थेन नित्यः समासः सर्वलिङ्गता च । यश्चापं धनुर्धत्ते धारयति । आश्मनप्रख्यम् । अश्मनो विकार इत्यण् । 'अन् ।६।४।१६७।' इति प्रकृतिभावे प्राप्ते 'अश्मनो विकारे०--' इति टिलोपः पाक्षिकः । विभाषजोरित्यतो मण्डूकप्लुत्या विभाषाग्रहणानुवृत्तेर्विकारे वाच्ये । अन्यत्राश्मन एव भवति । आश्मनेन प्रख्या सादृश्यमस्य तदाश्मनप्रख्यमुपलघटितमिव । सेषु सशरम् । अन्यदुर्वहं दुःखेनोह्यत इति खल् । रामादन्येन दुर्वहमित्यर्थः ॥ २६ ॥

जेता यज्ञद्रुहां संख्ये धर्मसन्तानसूर्वने ॥
प्राप्य दारगवानां यं मुनीनामभयं सदा ॥ २७ ॥

जेतेत्यादि—यज्ञाय द्रुह्यन्तीति यज्ञद्रुहो राक्षसाः । 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ।३।२।६१।' इति क्विप् । तेषां सङ्ग्रामे जेता । तृजन्तोऽयम् । ततश्च कृत्प्रयोगे कर्मणि षष्ठी । धर्मसन्तानसूः पूर्ववत् क्विप् । धर्मरत इत्यर्थः । वने वर्तमानानां मुनीनां वानप्रस्थादीनामित्यर्थः । तेषां भार्याग्निपरिग्रहात् यानि दारगवानि । दाराश्च गावश्चेति दारगवानि 'अचतुरविचतुर-५।४।७७।' इत्यादिना निपातितानि । दारयन्तीति दाराः । 'दारजारौ कर्तरि णिलुक् च' इति घञ् । तेषां च येनाभयं सदा दत्तमिति योऽयम् । येषामेव प्राप्तिक्रिया तेषामेवाभयमिति समानकर्तृकत्वम् ॥ २७ ॥

**ततो वावृत्यमानाऽसौ रामशालां न्यविक्षत ॥**
**मामुपायंस्त रामेति वदन्ता साऽऽदरं वचः ॥ २८ ॥**

तत इत्यादि---ततो लक्ष्मणवचनानन्तरमसौ राक्षसी वावृत्यमाना रामं वृण्वाना । 'वृतु वरणे' । इति दैवादिकः आत्मनेपदी । रामशालां रामस्य शाला पर्णकुटीरं ताम् न्यविक्षत प्रविष्टा । विशेः 'शल इगुपधादनिटः क्सः । ३ । १ । ४५ ।' 'नेर्विशः । १ । ३ । १७ ।' इति तङ् । मामुपायंस्त रामेति राम अहं प्रार्थये भवान् मामुपायंस्त परिणयत्विति वाक्यभेदेन योज्यम् । 'आशंसायां भूतवच्च ।३।३।१३२।' इति लुङ् । 'उपाद्यमः स्वकरणे ।१।३।५६।' इति तङ् । 'विभाषोपयमने ।१।२।१६।' । इत्यकित्त्वपक्षे रूपम् । इत्येवं वचः सादरं वदन्ती ॥ २८ ॥

**अस्त्रीकोऽसावहं स्त्रीमान् स पुष्यातितरां तव ॥**
**पतिरित्यब्रवीद् रामस्तमेव व्रज मा मुचः ॥ २९ ॥**

अस्त्रीत्यादि---असौ लक्ष्मणोऽस्त्रीकः । न विद्यते अस्य स्त्रीति । 'नद्यृतश्च ।५।४।१५३।' इति कप् । 'न कपि ।७।४।१४।' इति ह्रस्वप्रतिषेधः । अहं पुनः स्त्रीमान् सभार्यः । प्रशंसायां मतुप् । स एव लक्ष्मणः । पुष्यतितराम् अतीव पुष्यति लक्ष्मणस्तव पतिः । 'तिङश्च ।५।३।५६।' इति तरप् । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ।५।४।११।' इत्याम् । तस्मात्तमेव लक्ष्मणं व्रज गच्छ । मा मुचः मा त्याक्षीः मुचेर्लुङ् । लृदित्त्वादङ् । इति एकमब्रवीद्रामः उक्तवान् । आदादिकस्य ब्रुञो लङि 'ब्रुव ईट् ।७।३।९३।' इति ईटि रूपम् ॥ २९ ॥

**लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवाऽगमत् ।**
**मन्मथाऽऽयुधसम्पातव्यथ्यमानमतिः पुनः ॥ ३० ॥**

लक्ष्मणमित्यादि---लक्ष्मणं पुनर्भूयोऽगमत् । लक्ष्मणं प्रति गता । यथा गौर्वृषस्यन्ती मैथुनेच्छावती महोक्षं महावृषम् । वृषस्यन्तीत्युपमानविशेषणमेतत् । तेन वृषं लब्धुमिच्छतीति क्यच् । 'अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि । ७ । १ । ५१ ।' इति असुक् । तद्धयश्ववृषयोर्मैथुनेच्छायामिति । तद्वदागमत् । महोक्षमिति 'अचतुरविचतुरसुचतुर-।५।४।७७।' इत्यादिसूत्रेण निपातितम् । मन्मथस्यायुधानि शराः । आयुध्यन्ते एभिरित्यायुधानि । घञर्थे कविधानमिति कः । तेषां सम्पातः । संश्लेषः । तस्मात् व्यथ्यमाना पीड्यमाना मतिर्मनो यस्याः ॥ ३० ॥

तस्याः सासद्यमानाया लोलूयावान् रघूत्तमः ।
असिं कौक्षेयमुद्यम्य चकाराऽपनसं मुखम् ॥ ३१ ॥

तस्या इत्यादि--सासद्यमानायाः समीपे गर्हितं सीदन्त्याः प्रविशन्त्याः । 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् । ३ । १ । २४ ।' इति यङ् । रघूत्तमो लक्ष्मणः । मुखमपनसमपगतनासिकं चकार । 'उपसर्गाच्च ।५।४। ११९।' इत्यच् । नासिका च नसादेशमापद्यते । तत्र संज्ञायामिति नानुवर्तते । किं कृत्वा कौक्षेयमसिमुद्यम्य उत्क्षिप्य । कुक्षौ भव इति 'दृतिकुक्षिकलशिबस्त्यस्त्यहेर्ढञ् ।४।३।५६।' इति ढञ् । कौक्षेयः । लोलूयावान् अत्यर्थं लवनक्रियायुक्तः । लुनातीति लोलूया । यङन्ताद् 'अप्रत्ययात् ।३।३।१०२।' इत्यकारः । सा विद्यते यस्येति मतुप् ॥ ३१ ॥

अहं शूर्पणखा नाम्ना नूनं नाऽज्ञायिषि त्वया ।
दण्डोऽयं क्षेत्रियो येन मय्यपातीति साऽब्रवीत् ॥ ३२ ॥

अहमित्यादि--सा राक्षसीत्यब्रवीत् । अहं शूर्पणखेति नाम्ना नूनमवश्यं त्वया नाज्ञायिषि न ज्ञातास्मि । ज्ञा इत्यस्मात्कर्मणि लुङ् ।'स्यसि-६।४।६२। इत्यादिना अजन्तत्वात् चिण्वदिट् ।'आतो युक् चिण्कृतोः।७।३।३३।'इति युक् ।'स्वाङ्गाच्चोपसर्जनात्-४।१।५५।' इति ङीषि प्राप्ते 'नखमुखात् संज्ञायाम् ।४।१।५८।' इति प्रतिषेधः । 'पूर्वपदात्संज्ञायामगः ।८।४।३।' इति णत्वम् । अज्ञाने कारणमाह-येनायं दण्डो नासाच्छेदनलक्षणो मय्यपाति पातितः। पातेः कर्मणि लुङ् । चिणादेशः 'अत उपधायाः ।७ । २ । ११६ ।' इति वृद्धिः ।'चिणो लुक् ।६।४। १०४।' क्षेत्रियः परक्षेत्रे चिकित्स्यः परक्षेत्रे जन्मान्तरशरीरे यदि शक्यश्चिकित्सितुं तदा नासिकायाः सम्भवात् । 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः । ५ । २। ९२।' इति निपातनम् ॥ ३२ ॥

पर्यशाप्सीद्दिविष्ठाऽसौ संदर्श्य भयदं वपुः ।
आपिस्फवच्च बन्धूनां निनङ्क्षुर्विक्रमं मुहुः ॥ ३३ ॥

पर्यशाप्सीदित्यादि--असौ राक्षसी पर्यशाप्सीत् आक्रुष्टवती । शपेरनिटः सिचि हलन्तलक्षणा वृद्धिः। शप उपालम्भन इति तङ् न भवति उपालम्भनं हि वाचा शरीरस्पर्शनम् । दिविष्ठा नभसि वर्तमाना । 'तत्पुरुषे कृति बहुलम् ६ । ३ । १४ ।' इति सप्तम्या अलुक् । 'अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ।८।३।९७।'इति षत्वम् । भयदं रौद्रं

---

१ भयं ददातीति तादृशम् । 'आतोऽनुपसर्गे कः ।३।२।१०१।' इति कः ।

वपुः शरीरं संदर्श्य दर्शयित्वा बन्धूनां विक्रमं शौर्यं मुहुः पुनः पुनः । अपिस्फवत् स्फीतीचकार । 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ।७।३।३६।' इति णावित्यनुवृत्तौ 'स्फायो वः । ७ । ३ । ४१ ।' इति वकारः । स्फायतेश्चङि णिलोपः । ह्रस्वद्विर्वचनादि । अभ्यासस्य खयः शेषः । चर्त्वमित्वं च सन्वद्भावे । निनङ्क्षुः नष्टुमिच्छुरित्यर्थः । नशेः सनि 'मस्जिनशोर्झलि । ७ । १।६०।' इति नुम् ॥ ३३ ॥

खरदूषणयोर्भ्रात्रोः पर्यदेविष्ट सा पुरः ।
विजिग्राहयिषू रामं दण्डकाऽरण्यवासिनोः ॥ ३४ ॥

खरेत्यादि—खरदूषणयोर्भ्रात्रोर्दण्डकारण्यवासिनोः पुरः अग्रतः पर्यदेविष्ट परिदेवनं कृतवतीति । 'देवृ देवने ।' इत्यस्यादात्मनेपादिनः सेटो लुङि रूपम् । परिदेवने कारणमाह—विजिग्राहयिषुः रामं विग्राहयितुं योधयितुमिच्छुः । ग्रहेर्ण्यन्तस्य सन्नन्तस्य रूपम् । 'रोरि ।८।३।१४।' इति रेफलोपः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः ।६।३।१११।' इति दीर्घत्वम् ॥ ३४ ॥

किं पर्यदेविष्ट इत्याह—

कृते सौभागिनेयस्य भरतस्य विवासितौ ।
पित्रा दौर्भागिनेयौ यौ पश्यतं चेष्टितं तयोः ॥ ३५ ॥

कृतेइत्यादि—भरतस्य कृते कार्यनिमित्तं राज्ये अभिषेक्तव्यमिति । सुभगा केकयी तस्या अपत्यं सौभागिनेयः।'स्त्रीभ्यो ढक्।४।१।१२०।''कल्याण्यादीनामिनङ् ।४।१।१२६'तत्र सुभगा दुर्भगा चेति पठ्यते।'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च७।३।१९।'इत्युभयपदवृद्धिः । पित्रा यौ विवासितौ निष्कासितौ दौर्भागिनेयौ कौसल्या सुमित्रा च दुर्भगे तयोरपत्ये रामलक्ष्मणौ तयोश्चेष्टितं नासाच्छेदनं पश्यतम् । विधौ प्रार्थनायां वा लोट् । थसस्तम् ॥ ५ ॥

मम रावणनाथाया भगिन्या युवयोः पुनः ।
अयं तापसकाद् ध्वंसः क्षमध्वं यदि वः क्षमम् ॥ ३६ ॥

ममेत्यादि—रावणो नाथः प्रभुर्यस्याः मम विशेषणम् । युवयोर्भगिन्या अयं तापसकात् कुतापसात् । कुत्सायां कन् । ध्वंसो नासिकाविनाशः यदि वः युष्माकं गुरूणां क्षमं युक्तम् क्षन्तुमित्यर्थात् । युष्मदि गुरावेकेषामिति बहुवचनं तयोर्ज्येष्ठत्वात् । तर्हि क्षमध्वम् उपेक्षध्वम् । रावण एव ज्ञास्यतीति भावः ॥ ३६ ॥

पुनरप्येजयितुमाह—

असंस्कृत्रिमसंव्यानावनुप्त्रिमफलाशिनौ ।
अभृत्रिमपरीवारौ पर्यभूतां तथापि माम् ॥ ३७ ॥

असमित्यादि—संस्कारेण वापन भरणेन च निर्वृत्तं संस्कृत्रिमम् । उप्त्रिमं भृत्रिमं च । 'ड्वितः क्त्रिः।३।३।८८।' 'क्त्रेर्मम् नित्यम् ४।२।२०।' 'संपर्युपेभ्यः ६। १ । १३७ ।' इति सुट् । सम्पूर्वस्य क्वचिद्भूषणेऽपीष्यते । संस्कृत्रिमं न विद्यते येषामिति नञ्समासः । असंस्कृत्रिमाणि संव्यानानि परिधानानि उत्तरीयाणि ययोः । वल्कलवाससावित्यर्थः । अनुप्त्रिमाणि फलानि अशनमाहारो ययोः तौ वन्यफलाहारौ न तु शालिभोजनौ । परिव्रियतेऽनेनेति घञ् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम् ।६।३।१२२।' इति दीर्घः । मृगाणाममनुष्यत्वात् । अभृत्रिमः परीवारोऽनुजीविलोको ययोस्तौ मृगपरीवारौ । तथाऽपि मां पर्यभूतां परिभूतवन्तौ । लुङि रूपम् ॥ ३७ ॥

श्वःश्रेयसमवाप्तासि भ्रातृभ्यां प्रत्यभाणि सा ।
प्राणिवस्तव मानार्थं व्रजाऽऽश्वसिहि मा रुदः ॥ ३८ ॥

श्वःश्रेयसमित्यादि—श्वःशब्दः प्रशंसामाह । शोभनं श्रेय इति वाक्ये 'श्वसो वसीयः श्रेयसः ।५।४।८०।' इत्यच् । मयूरव्यंसकादित्वात् समासः । श्वःश्रेयसं कल्याणमवाप्तासि प्राप्स्यसि । भविष्यदनद्यतने लुट् । मारयावस्तावित्युक्तं भवति । ताभ्यां भ्रातृभ्यां प्रत्यभाणि प्रतिभणिता सा । कर्मणि लुङ् । प्राणिवस्तव मानार्थम् । तव मानखण्डनं मा भूदिति जीवावः । 'श्वस प्राणने, अन च' । 'रुदादिभ्यः सार्वधातुके ।७।२।७६।' इति इट् ।' अनितेः ।८।४।१९।' इति णत्वम् । तस्माद् व्रज । यथास्थानं गच्छ । आश्वसिहि । उद्वेगं त्यज । विधौ प्रार्थनायां वा लोट् । मा रुदः । 'माङि लुङ् ।३।३।१७५।' 'इरितो वा ।३।१।५७।' इत्यङ् । यदा नास्ति तदा मा रोदीरिति ॥ ३८ ॥

जक्षिमोऽनपराधेऽपि नरान् नक्तंदिवं वयम् ।
कुतस्त्यं भीरु ! यत्तेभ्यो द्रुह्यद्भ्योऽपि क्षमामहे ॥ ३९ ॥

जक्षिम इत्यादि—वयम् अनपराधेऽपि । नक्तं च दिवा च नक्तन्दिवम् । 'अचतुरविचतुरसुचतुर–।५।४।७७।' इत्यादौ निपातितम् । नरान् जक्षिमो भक्षयामः । 'जक्ष भक्षहसनयोः ।' इति भक्षार्थस्य । 'रुदादिभ्यः सार्वधातुके ।७।२।७६।' इतीट् । 'अस्मदो द्वयोश्च ।१।२।५९।' इति द्वित्वे वयमिति बहुवचनम् । यत एवं हे भीरु ! संबुद्धौ गुणो न भवति 'संज्ञापूर्वको विधर-

नित्यः' इति । कुतस्त्यम् कुत एतदागतम् । 'अव्ययात् त्यप् ।४।२।१०४।' 'अमेहक्वतसित्रेभ्य एव' इति त्यप् । तेभ्यो नरेभ्यो द्रुह्यद्भ्योऽपि द्रोहं कुर्वाणेभ्योऽपि क्षमामहे । नैवेत्यर्थः । 'क्रुधद्रुहेर्ष्याऽसूयाऽर्थानां यं प्रति कोपः ।१।४।३७।' इति सम्प्रदानत्वम् । क्षमेर्गम्यमानो नञर्थस्तस्यासूयार्थत्वात् 'क्षमध्वं यदि वः क्षमम्' इत्यस्य प्रतिवचनम् ॥ ३९ ॥

तौ चतुर्दशसाहस्रबलौ निर्ययतुस्ततः ।
पारश्वधिकधानुष्कशाक्तीकप्रासिकाऽन्वितौ ॥ ४० ॥

तावित्यादि—ततो निगदनादुत्तरकालं निर्ययतुर्निर्गतवन्तौ । चतुर्दशसहस्राणि परिमाणं यस्य बलस्य । तदस्य परिमाणमित्यस्मिन्विषये 'शतमानविंशतिकसहस्रवसनादण् ।५।१।२७।' प्राग्वतेः 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च ।७।३।१५।' इत्युत्तरपदवृद्धिः । चतुर्दशसाहस्रं बलं ययोः तौ । तथा 'पारश्वधिकधानुष्कशाक्तीकप्रासिकान्वितौ । परश्वधः प्रहरणमेषाम्' इति 'परश्वधात् ठञ्च ।४।४।५८।' तथा धनुः प्रहरणमेषां शक्तिः प्रहरणमेषामिति 'शक्तियष्ट्योरीकक् ।४।४।५९।' प्रासः कुन्तः प्रहरणमित्यौत्सर्गिकष्ठक् । तत्र धनुषष्ठक् । 'इसुसुक्तान्तात्कः ।७।३।५१।' ततः सेनाङ्गत्वात्कृतैकवद्भावः । तेनान्विताबनुगतौ ॥ ४० ॥

अथ सम्पततो भीमान् विशिखै रामलक्ष्मणौ ।
बहुमूर्ध्नो द्विमूर्ध्नश्च त्रिमूर्ध्नश्चाऽहतां मृधे ॥ ४१ ॥

अथेत्यादि—अथ एतस्मिन् प्रस्तावे रामलक्ष्मणौ मृधे संग्रामे विशिखैः शरैरहतां हतवन्तौ । हन्तिः परस्मैपदी तस्माल्लङि तसस्ताम् । तस्य ङित्त्वे 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ।६।४।३७।' इति अनुनासिकलोपः । कान् राक्षसान् । विशेषणोपादानात् विशेष्यप्रतिपत्तिः । प्रकृतत्वाद्वा । सम्पततोऽभिपततः । बहुमूर्ध्नो बहुशिरसः । तथा द्विमूर्धास्त्रिमूर्धाश्च । 'द्वित्रिभ्यां ष मूर्ध्नः ।५।४।११५।' इति समासान्तः षः । अत एव भीमान् भयानकान् । त्रिमूर्धाश्चेत्यत्र 'नश्छव्यप्रशान् ।८।३।७।' इति रुः । पूर्वस्य त्वनुनासिकः । 'विसर्जनीयस्य सः ।८।३।३४।' इति सत्वम् ॥४१॥

तैर्वृक्णरुग्णसम्भुग्नक्षुण्णभिन्नाविपन्नकैः ।
निमग्नोद्विग्नसंह्रीणैः पप्रे दीनैश्च मेदिनी ॥ ४२ ॥

तैरित्यादि—तैः राक्षसैर्मेदिनी पप्रे पूरिता । 'प्रा पूरणे ।' इत्यस्मात्कर्मणि लिट । वृक्णैः छिन्नैः । रुग्णैः भग्नहस्तपादैः । सम्भुग्नैः वक्रीकृतदेहैः ।

क्षुण्णैः सम्पिष्टशरीरैः । भिन्नैः विदारितैः । विपन्नकैः नष्टैः । 'अनुकम्पायां कन् ।५।३।७६।' निमग्नैः परिभूतैः । उद्विग्नैर्भीतैः । संह्रीणैर्लज्जितैः । वयमपीदृशीं दशां प्राप्ता इति । दीनैः 'हा मातः हा भ्रातः' इत्येवं भाषमाणैः । तत्र वृश्चिरुजिभुजिमास्जिविजभ्यो: निष्ठायाम् 'ओदितश्च । ८ । २।४५।' इति नत्वम् । 'चोः कुः ।८।२।३०।' इति कुः । क्षुदिभिदिपदिभ्यो निष्ठायां 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।८।२।४२।' इति दस्य च नः । संह्रीण इति 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ।८।२।५६।' इति नः । 'दीङ् क्षये ।' इत्यस्य 'स्वादय ओदितः' इति 'ओदितश्च । ८ । २ । ४५ ।' इति नत्वम् ॥ ४२ ॥

केचिद् वेपथुमासेदुरन्ये दवथुमुत्तमम् ।
सरक्तं वमथुं केचिद् भ्राजथुं न च केचन ॥ ४३ ॥

केचिदित्यादि—तेषां मध्ये केचित् वेपथुं कम्पम् । 'टुवेपृ कम्पने' आसेदुः प्राप्ताः । अन्ये दवथुमुपतापम् उत्तमं महान्तम् । 'टुदु उपतापे ।' केचिद्वमथुं छर्दनं सरक्तं सशोणितम् । टुवम् उद्गिरणे । भ्राजथुं शोभां नैव केचन न केचिदपि आसेदुरिति पूर्वेणान्वयः ।' टुभ्राजृ दीप्तौ ।' सर्वत्र 'ट्वितोऽथुच् । ३ । ३ । ८९ ।' इत्यथुच् ४३ ॥

मृगयुमिव मृगोऽथ दक्षिणेर्मा दिशमिव दाहवतीं मरावुदन्यन् ।
रघुतनयमुपाययौ त्रिमूर्धा विषभृदिवोग्रमुखं पतत्रिराजम् ॥ ४४ ॥

मृगयुमित्यादि—अथैतस्मिन् राक्षसविध्वंसनप्रस्तावे त्रिमूर्धः त्रिशिरा नाम राक्षसः रघुतनयमुपाययौ उपागतः । मृगयुमिव लुब्धकमिव । मृगान् यातीति मृगयुः 'मृगय्वादयश्च' इत्यौणादिककुप्रत्ययान्तः । दक्षिणेर्मा दक्षिणे ईर्मं व्रणं यस्येति । 'दक्षिणेर्मा लुब्धयोगे । ५ । ४ । १२६।' इत्यनिच् । यथा मृगो लुब्धकव्रणितदक्षिणाङ्गः तमेव मरणायोपयाति । दिशमिव दाहवतीं यथा दिशं दावाग्नियुतां मरौ निर्जले देशे मृग उदन्यन् उदकपानाभिलाष उपयाति । उदकमिच्छति । 'सुप आत्मनः क्यच् । ३ । १ । ८ ।' इति क्यच् । उदकस्योदन्भावः । 'अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु । ७ । ४ । ३४ ।' इति निपातितः । तदन्ताल्लट् शतृप्रत्ययः । विषभृदिव यथा विषधरः सर्प उग्रमुखं भीषणमुखं पतत्रिराजं गरुडमुपयाति तद्वत्तमिति । 'राजाऽहःसखिभ्यष्टच् । ५ । ४ । ९१ ।' ॥ ४४ ॥

---

१ अत्र 'पुष्पिताग्रा' छन्दः । 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति तल्लक्षणात् ।

शितविशिखनिकृत्तकृत्स्नवक्त्रः
क्षितिभृदिव क्षितिकम्पकीर्णशृङ्गः ।
भयमुपनिदधे स राक्षसाना-
मखिलकुलक्षयपूर्वलिङ्गतुल्यः ॥ ४५ ॥

शितेत्यादि—त्रिमूर्धो राक्षसानां भयमुपनिदधे उपनिहितवान् । कीदृशः शितविशिखैस्तीक्ष्णविशिखैः निकृत्तानि छिन्नानि कृत्स्नानि सर्वाणि वक्त्राणि मुखानि यस्य सः । क्षितिभृदिव भूधर इव । कीदृशः क्षितिकम्पकीर्णशृङ्गः क्षितेर्भूमेः कम्पेन कीर्णानि क्षिप्तानि शृङ्गाणि यस्य क्षितिभृतः । अखिलस्य सर्वस्य कुलस्य क्षये विनाशे यत् पूर्वलिङ्गं तेन तुल्यः असावप्यखिलराक्षसक्षयस्य पूर्वलिङ्गतुल्यः ॥ ४५ ॥

इति श्रीजयमङ्गलसूरिविरचितया जयमङ्गलाऽऽख्यया व्याख्यया समलंकृते श्रीभट्टिकाव्ये प्रथमे प्रकीर्णकाण्डे लक्षणरूपे चतुर्थः परिच्छेदः । तथा लक्ष्यरूपे कथानके श्रीरामप्रवासो नाम चतुर्थः सर्गश्च ।

## पञ्चमः सर्गः ।

निराकरिष्णू वर्तिष्णू वर्धिष्णू परितो रणम् ।
उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥ १ ॥

निरेत्यादि—खरदूषणौ रणं परितः समन्तात् । 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इति द्वितीया । चेरतुः भ्रान्तौ । निराकरिष्णू शत्रुनिराकरणशीलौ । वर्तिष्णू अभिमुखं वर्तनशीलौ, न तु पलायनशीलौ । वर्धिष्णू मायया महाप्राणोद्भावनशीलौ । उत्पतिष्णू नभ उत्पतनशीलौ । सहिष्णू शस्त्रप्रहारसहनशीलौ । सर्वत्र 'अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् । ३ । २ । १३६ ।' इति इष्णुच् ॥ १ ॥

तौ खड्गमुसलप्रासचक्रबाणगदाकरौ ।
अकार्ष्टामायुधच्छायं रजःसन्तमसे रणे ॥ २ ॥

तावित्यादि—रणे रणभूमौ रजःसन्तमसे । सङ्गतं तमः सन्तमसम् । 'अवसमन्धेभ्यस्तमसः । ५ । ४ । ७९ ।' इत्यच् । रजसा सन्तमसम् अस्मिन् इति रजःसन्तमसं तस्मिन् रजसा कृतान्धकारे तौ खरदूषणौ आयुधच्छायमायुधबा-

१ अत्रापि तदेव छन्दः । उपमाऽलङ्कारः ।

ङ्कुल्यमकार्ष्टाम् कृतवन्तौ । आयुधानां छायेति 'छाया बाहुल्ये । २ । ४ । २२ ।' इति नपुंसकत्वे ह्रस्वत्वम् । खङ्गादीनां बाणान्तानां द्वन्द्वैकवद्भावं कृत्वा पश्चात्तेन सहिता गदेति शाकपार्थिवादित्वात् समासः । अन्यथा 'समुदायस्य जातिरप्राणिनाम् । २ । ४ । ६ ।' इत्येकवद्भावेन नपुंसकलिङ्गता स्यात् बाणगदमिति । खङ्गमुसलप्रासचक्रबाणगदाः करे येषामिति समासे 'प्रहरणार्थेभ्य' इत्यादिना करशब्दस्य परनिपातः ॥ २ ॥

**अथ तीक्ष्णाऽऽयसैर्बाणैरधिमर्म रघूत्तमौ ।**
**व्याधं व्याधममूढौ तौ यमसाच्चक्रतुर्द्विषौ ॥ ३ ॥**

अथेत्यादि—अथैतस्मिन् सङ्ग्रामे रघूत्तमौ रामलक्ष्मणौ कर्तृभूतौ । कर्मभूतौ द्विषाविति । 'सत्सूद्विषद्रुहयुजविदभिदच्छिदजिनीराजामनुपसर्गेऽपि क्विप् । ३ । २ । ६१ ।' इति क्विप् । यमसाच्चक्रतुः यमाधीनौ कृतवन्तौ । 'तदधीनवचने । ५ । ४ । ५४ ।'इति सातिः । तीक्ष्णायसैर्बाणैः । तीक्ष्णमायसं फलं येषामिति । व्याधं व्याधं विद्ध्वा विद्ध्वा ।'आभीक्ष्ण्ये णमुल् च । ३ । ४ । २२।' तत्र 'समानकर्तृकयोः पूर्वकाले ।३।४।२१।' इति अनुवर्तते । 'आभीक्ष्ण्ये द्वे भवतः' इति द्विर्वचनम् । अधिमर्मेति विभक्त्यर्थेऽव्ययीभावः । अमूढौ सावधानौ रामलक्ष्मणौ ॥ ३ ॥

मर्मवेधमेवाह—

**हतबन्धुर्जगामाऽसौ ततः शूर्पणखा वनात् ।**
**पारेसमुद्रं लङ्कायां वसन्तं रावणं पतिम् ॥ ४ ॥**

हतेत्यादि—असौ शूर्पणखा हतबन्धुः व्यापादितभ्रातृद्वया ततो वनाद्दण्डकारण्यात् रावणं पतिं प्रभुं शरणं जगाम गतवती । पारेसमुद्रम् । समुद्रस्य पार इति 'पारे मध्ये षष्ठ्या वा ।२।१।१८।' इत्यव्ययीभावः । तत्सन्नियोगेन पूर्वपदस्यैकारान्तत्वम् । पश्चात्सप्तमी ।'नाव्ययीभावात् २।४।८३।' इत्यम्भावः। समुद्रस्य पारे स्थितायां लङ्कायां वसन्तं रावणमिति ॥ ४ ॥

**सम्प्राप्य राक्षससभं चक्रन्द क्रोधविह्वला ॥**
**नामग्राहमरोदीत्सा भ्रातरौ रावणाऽन्तिके ॥ ५ ॥**

सम्प्राप्येत्यादि—सा शूर्पणखा राक्षससभं संप्राप्य ढौकित्वा । राक्षसानां सभेति 'सभा राजामनुष्यपूर्वा ।२।४।२३।' इति नपुंसकता । चक्रन्द क्रन्दनं कृतवती । क्रोधविह्वला क्रोधावेवशा । भ्रातरौ खरदूषणावरोदीत् रुदितवती । नामग्राहं नाम गृहीत्वा । भ्रातरौ खरदूषणाविति । 'नाम्न्यादिशिग्रहोः ।३।४।

५८।' इति णमुल् । अत्र नामग्रहणविशिष्टाया रोदनाक्रियाया व्याप्तुमिष्टत्वाद्रुदिः सकर्मकः । रावणान्तिके रावणसमीपे । सप्तम्यधिकरणे च।२।३।३६।' इति चकाराद्दूरान्तिकार्थेभ्य इति सप्तमी ॥

तयोः किं जातमिति रावणेन पृष्टाह–

दण्डकानध्यवात्तां यौ वीर ! रक्षःप्रकाण्डकौ
नृभ्यां सङ्ख्येऽकृपातां तौ सभृत्यौ भूमिवर्धनौ ॥ ६ ॥

दण्डकानित्यादि—हे वीर दण्डकान् दण्डकारण्यसन्निवेशान् अध्यवात्ताम् अध्युषितवन्तौ । 'वस निवासे ।' इत्यस्माल्लुङ् । हलन्तलक्षणा वृद्धिः । 'सः स्यार्धधातुके।७।४।४९।' इति धातुसकारस्य तत्वम्।'झलो झलि।८।२।२६।' इति सिचो लोपः।रक्षःप्रकाण्डकौ प्रशस्तौ राक्षसौ । 'प्रशंसावचनैश्च।२।१।६६' इति समासः । ततः स्वार्थे कन् 'स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति नपुंसको न भवति । अन्यथा रूढिशब्दाः प्रशंसावचना आविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादानादेव समानाधिकरणाः स्युः ।यथा गोप्रकाण्डमिति । तौ नृभ्यां मनुष्याभ्यां सङ्ख्ये युद्धे भूमिवर्धनावकृपाताम् कृतौ । कर्मणि लुङ् । अचिण्वद्भावे रूपम् । वर्धेते इति वर्धनौ । 'कृत्यल्युटो बहुलम् ।३।३।११३।' इति कर्तरि ल्युट् । भूमेर्वर्धनाविति स० । भस्मीकृतशरीरस्य भूमौ लीयमानत्वात् । सभृत्यौ नैकाकिनौ ॥ ५ ॥

विग्रहस्तव शक्रेण बृहस्पतिपुरोधसा ।
सार्धं कुमारसेनान्या शून्यश्चाऽसीति को नयः ॥ ७ ॥

विग्रह इत्यादि—बृहस्पतिः पुरोधा मन्त्री यस्य शक्रस्य तेन।कार्येषु पुरो धीयत इति पुरोधाः । पुरःपूर्वाद्धाञः सर्वधातुभ्य असुन् । तथा कुमारः कार्तिकेयः सेनानीर्यस्य । सेनां नयतीति 'सत्सूद्विषद्रुहयुजविदभिदच्छिदजिनीराजामनुपसर्गेऽपि ।३।२ ।६१।' इति क्विप् । तेन शक्रेण सार्धं सह तव विग्रह आसीत् । इदानीं कार्यनिपुणाभावात् शून्यश्चासि । 'तासस्त्योर्लोपः ।७।४।५०।' इति सकारलोपः । तस्मात्को नयः । नय एव न भवतीत्यर्थः ॥ १ ॥

तदेव दर्शयन्त्याह—

यद्यहं नाथ ! नाऽयास्यं विनासा हतबान्धवा ।
नाऽज्ञास्यस्त्वमिदं सर्वं प्रमाद्यंश्चारदुर्बलः ॥ ८ ॥

यदीत्यादि–विनासा विगता नासा यस्याः। नासैव नासिकेति'केऽणः ।७।४ ।१३।' इति ह्रस्वत्वे रूपं,तस्या नसादेशस्य विधीयमानत्वादत्र सम्भव एव नास्ति।

विनसेति पाठान्तरम् । तत्र विगता चासौ नासिका च विनासिका तत इत्थम्भूतलक्षणायां तृतीयायां 'पद्दन्नोमासहृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु । ६ । १ । ६३ ।' इति नसादेशः । विगतया नासिकयोपलक्षितेत्यर्थः । विगता नासिका अस्या इति बहुव्रीहिणा व्याख्याने 'अञ्नासिका-' इत्यादिना अच् नसादेशश्च प्राप्नुतः। तस्य संज्ञाविषयत्वात् 'उपसर्गाच्च-' उत्यसंज्ञायां विधीयमानो न भवति 'वेर्ग्रो वक्तव्यः' इति ग्रादेशो बाधकः। हे नाथ यद्यहं विनासा हतबान्धवा नायास्यं न याताऽभविष्यम्, तदा तदिदं सर्वं भ्रात्रोर्वधं नासाच्छेदं च नाज्ञास्यः न ज्ञातोऽभविष्यः । क्रियातिपत्तौ लृङ् । अज्ञाने कारणमाह—प्रमाद्यन् विषयेषु प्रमादं गच्छन् । चारदुर्बलः चारहीनः। चारा हि चक्षू राज्ञां कार्याकार्यज्ञानाय लोके । चरतीति चरः पचाद्यच् । चर एव चारः 'प्रज्ञादिभ्यश्च ।५।४।३८।' इत्यण् ॥ ८ ॥

करिष्यमाणं विज्ञेयं कार्यं किं नु कृतं परैः ।
अपकारे कृतेऽप्यज्ञो विजिगीषुर्न वा भवान् ॥ ९ ॥

करिष्यमाणमित्यादि—परैः शत्रुभिरपचयाचिकीर्षया करिष्यमाणं कार्यं विज्ञेयम् । किं नु कृतमेव यत्तदवश्यमेव विज्ञेयमित्यर्थः । त्वं पुनः परैरपकृतोऽपि अज्ञोऽविदितस्वरूपः । अतो विजिगीषुर्न वा भवान् । अतो न राज्यं संभावयतीत्यर्थः ॥ ९ ॥

वृतस्त्वं पात्रेसमितैः खट्वाऽऽरूढः प्रमादवान् ।
पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः ॥ १० ॥

वृत इत्यादि—अत्यन्तं गामिनीति 'अवारपारात्यन्तानुकामंगामी । ५ । २ । ११ ।' इति खः । तस्य भावोऽत्यन्तीनत्वम् । नैवात्यन्तीनामत्यन्तगामिनीं श्रियं नेता न प्रापणशीलः । 'तृन् ।३।२।१३५।'इति ताच्छीलिकस्तृन् । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ।२।३।६९।' इति षष्ठीप्रतिषेधः । यद्यपि महोदयं राज्यं प्राप्तवानासि तथापि न चिरकालमित्यर्थः।यतस्त्वमुन्मनाः भ्रान्तचित्तः।यतः पानशौण्डः पाने प्रसक्तः । 'सप्तमी शौण्डैः ।२।१।४०' इति स० । अत एव प्रमादवान् ।अतोऽपि खट्वारूढः उत्पथप्रस्थितः । 'खट्वा क्षेपे ।२।१।२६ ।' इति द्वितीया स० । तत एव पात्रेसमितैः भोजन एव सन्निहितैः अनुजीविभिर्वृतः । 'पात्रेसमितादयश्च ।२।१।४८।' इति क्षेपे स० ॥ १० ॥

अध्वरेष्वग्निचित्वत्सु सोमसुत्वत आश्रमान् ।
अत्तुं महेन्द्रियं भागमेति दुश्च्यवनोऽधुना ॥ ११ ॥

अध्वरेष्वित्यादि—त्वय्येवम्भूतेऽधुना दुश्च्यवन इन्द्रः आश्रमानैति आगच्छति । आङ्पूर्वस्येणः 'एत्येधत्यूठ्सु ।६।१।८९।' इति वृद्धिः । सोमसुत्वतः सोमं सुनोतीति 'सोमे सुञः ।४।२।९०।' इति क्विप् । सोमसुतः सन्ति येष्वाश्रमेष्विति मतुप् । 'तसौ मत्वर्थे ।१।४।१९।' इति भत्वे तकारस्य जश्त्वं न भवति । 'झयः ।८।२।१०।' इति मतोर्वत्वम् । किमर्थमैतीत्याह—अत्तुं भक्षयितुं महेन्द्रियं भागम् । महेन्द्रो देवता अस्येति । 'महेन्द्राद्घाणौ च ।४।२।२९।' इति घः । क अध्वरेषु यज्ञेषु । अग्निचित्वत्सु । अग्निं चितवन्तोऽग्निचितः आहिताग्नयः । 'अग्नौ चेः ।३।२।९१।' इति क्विप् । ते सन्ति येष्विति पूर्ववन्मतुप् ॥ ११ ॥

आमिक्षीयं दधिक्षीरं पुरोडाश्यं तथौषधम् ।
हविर्हैयङ्गवीनं च नाऽप्युपघ्नन्ति राक्षसाः ॥ १२ ॥

आमीत्यादि—दध्ना सहितं शृतं पय आमिक्षा । तस्मै हितमामिक्षीयम् । 'विभाषा हविरपूपादिभ्यः ।५।१।४।' इति छयतौ । दधि च क्षीरं चेति । 'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ।२।४।१२।' इति व्यञ्जनत्वादेकवद्भावः । पुरोडाशाय हितमौषधं नीवारतण्डुलादि पुरोडाश्यम् । अपूपादित्वाद्यत् । ओषधिरेवौषधम् । 'ओषधेरजातौ ।५।४।३७।' इत्यण् । तण्डुलानामजातित्वात् । 'स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति नपुंसकलिङ्गता । हविः हूयत इति हविः । 'अर्चिशुचिहुसृपिछादिछर्दिभ्यः' इत्यौणादिक इस् । हैयङ्गवीनं घृतम् । ह्योगोदोहस्य विकार इत्यर्थे 'हैयङ्गवीनं संज्ञायाम् ।५।२।२३।' इति निपातनात् खञ्, हियङ्ग्वादेशश्च । तानि नाप्युपघ्नन्ति राक्षसाः त्वय्युदासीने सति ॥ १२ ॥

इदानीं कार्यप्रदर्शनेन प्रोत्साहयितुमाह—

युवजानिर्धनुष्पाणिर्भूमिष्ठः खविचारिणः ।
रामो यज्ञद्रुहो हन्ति कालकल्पाशिलीमुखः ॥ १३ ॥

युवेत्यादि—युवतिः यौवनवती जाया यस्य युवजानिः । 'जायाया निङ् ।६।१।७६।' वलि लोपः । 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ।६।३।३४।' इति पुंवद्भावात् स्त्रीप्रत्ययो निवर्तते । धनुष्पाणिः पाणौ धनुर्यस्य । प्रहरणेत्यादिना परनिपातः । भूमिष्ठः भूमौ तिष्ठतीति भूमिष्ठः । नाकाशचरः । 'सुपि स्थः ।३।२।४।' इति कः । 'अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्कङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः ।

स्थः ।८।३।९७।' इति षत्वम् । कालकल्पशिलीमुखः मृत्युतुल्यशरः । रामो यज्ञद्रुहो राक्षसान् हन्ति । खविचारिणः आकाशचरणशीलान् । 'सुप्यजातौ णिनिस्ताच्छील्ये ।३।२।७८।' इति णिनिः ॥ १३ ॥

**मांसान्योष्ठाऽवलोप्यानि साधनीयानि देवताः ।**
**अश्नन्ति रामाद् रक्षांसि बिभ्यत्यश्नुवते दिशः ॥ १४ ॥**

**मांसेत्यादि**--ओष्ठावलोप्यानि ओष्ठाभ्यां छेदार्हाणि शक्यानि वा । अर्हार्थे शक्यार्थे वा कृत्यः । 'कृत्यैरधिकार्थवचने ।२।१।३२।' इति समासः । साधनीयानि यज्ञस्य साधनाय हितानि । 'तस्मै हितम् ।५।१।५।' इति छः सावनीयानीति पाठान्तरम् । तत्र सवनं स्नानं तद्योगात्स्नातकोऽपि तथोच्यते तत्र भवः सावनो यज्ञः । 'तस्मै हितम् ।५।१।५।' इति छः । तानि मांसानि देवता अश्नन्ति भुञ्जते न राक्षसा रक्षांसि किन्तु रामाद्बिभ्यति । 'वा नपुंसकस्य ।७।१।७९।' इति शतुर्नुमभावपक्षे रूपम् । दिशोऽश्नुवते व्याप्नुवन्ति ॥ १४ ॥

**कुरु बुद्धिं कुशाऽग्रीयामनुकामीनतां त्यज ।**
**लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नय ॥ १५ ॥**

**कुर्वित्यादि**—कुशाग्रीयां कुशाग्रमिव सूक्ष्माम । 'कुशाग्राच्छः । ५।३।१०५।' इति इवार्थे छः । स्थूलबुद्धिर्मा भूरित्यर्थः । अनुकामीनतां त्यज यथेच्छगामितां त्यज । 'अवारपारात्यन्तानुकामं गामी । ५ । २ । ११ ।' इति खः । परम्परीणां परांश्च परतरांश्च अनुभवतीत्यर्थे परशब्दात् 'परोवरपरम्परपुत्रपौत्रमनुभवति ।५।२।१०।' इति खः परंपरादेशश्च । तां लक्ष्मीं क्रमायातां त्वं पुत्रपौत्रीणतां नय पुत्रांश्च पौत्रांश्चानुभवतीति खः । तस्य भावः । पुत्रपौत्रानुगामिनीं कुर्वित्यर्थः ॥ १५ ॥

**सहायवन्त उद्युक्ता बहवो निपुणाश्च याम् ।**
**श्रियमाशासते लोलां तां हस्तेकृत्य मा श्वसीः ॥ १६ ॥**

**सहेत्यादि**—यां च श्रियं त्वदीयां शौर्योपात्तां सहायवन्तः ससहाया उद्युक्ता उत्साहवन्तो निपुणाः कुशला आशासते इच्छन्ति । 'आङः शासु इच्छायाम्' इत्यादादिकस्यात्मनेपदिनो रूपम् । 'आत्मनेपदेष्वनतः ।७।१।५।' इत्यदादेशः । तां हस्तेकृत्य स्वीकृत्य । मा श्वसीः आश्वासं मा कार्षीः । चञ्चलत्वात् । यदाह लोलामिति । 'ह्यन्तक्षणश्वसजागृणिश्व्येदिताम् ।७।२।५।' इति वृद्धिप्रतिषेधः । 'इट ईटि । ८ । २ । २८ ।' इति सिचो लोपः । 'नित्यं हस्तेपाणावुपयमने । १ । ४ । ७७ ।' इति गतिसंज्ञायां समासे ल्यबादेशः ॥ १६ ॥

तां लोलतां दर्शयन्नाह—

**लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात् ।**
**अन्तिकेऽपि स्थिता पत्युश्छलेनाऽन्यं निरीक्षते ॥ १७ ॥**

लक्ष्मीरित्यादि—त्वयैवं न मन्तव्यम् अन्यैः प्रार्थ्यमानापि न मां परित्यजतीति । यतः छलेन व्याजेन अन्यं निरीक्षते । किमर्थ—पुंयोगमाशंसुः । अभिलषन्ती । 'सनाशंसभिक्ष उः । ३ । २ । १६८ ।' कुतूहलात् कोऽस्य विशेष इति । स्नेहादन्तिके अदूरेऽपि स्थिता पत्युः । 'दूराऽन्तिकाऽर्थैः षष्ठ्यन्यतरस्याम् । २ । ३ । ३४ ।' इति षष्ठी । कुलटेव बन्धकीव । शकन्ध्वादिषु दर्शनात्पररूपम् ॥ १७ ॥

युवजानिरित्युक्तं तद्योषित्प्रलोभनायाह—

**योषिद्वृन्दारिका तस्य दयिता हंसगामिनी ।**
**दूर्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥ १८ ॥**

योषिदित्यादि—योषिच्चासौ वृन्दारिका चेति 'वृन्दारकनागकुञ्जरैः पूज्यमानम् । २ । १ । ६२ ।' इति समासः । रूपेण प्रियेत्याह—दयिता प्रिया । प्रशस्तत्वे कारणमाह-हंस इव गन्तुं शीलं यस्याः । 'कर्तर्युपमाने । ३।२।७९ ।' इति णिनिः । दूर्वाकाण्डमिव श्यामा दूर्वास्तम्बं तदिव श्यामा । न्यग्रोधपरिमण्डला । 'उपमानानि सामान्यवचनैः।२।१।५५।' इति समासः ॥ १८ ॥

**नाऽऽस्यं पश्यति यस्तस्या निंस्ते दन्तच्छदं न वा ।**
**संशृणोति न चोक्तानि मिथ्यासौ विहितेन्द्रियः ॥ १९ ॥**

नास्यऽऽमित्यादि—तस्या आस्यं मुखं यो न पश्यति । दन्तच्छदं ओष्ठम् । छाद्यते अनेनेति घः । 'छादेर्घेऽद्व्युपसर्गस्य ।६।४।९६।' इति ह्रस्वः । दन्तानां छदं न वा निंस्ते न चुम्बति । 'णिसि चुम्बने ।' इत्यादादिक आत्मनेपदी । 'इदितो नुम् धातोः । ७ । १ । ५८ ।' उक्तानि उदितानि न संशृणोति । 'समो गम्यृच्छिभ्याम् । १ । ३ । २९ ।' इति तङ् न भवति । अकर्मकादित्यधिकारात् । मिथ्यासौ विहितेन्द्रियः । वृथैव तस्य वेधसा विहितानि इन्द्रियाणि चक्षुरादीनि ॥ १९ ॥

---

१ अत्रोपमा, दुष्टा च, द्वयोर्लिङ्गभेदात् । न्यग्रोधपरिमण्डला नाम 'स्तनौ तु कठिनौ यस्या नितम्बे च विशालता । मध्ये तु सुकृशा या सा न्यग्रोधपरिमण्डला ॥' इत्युक्ता नायिका ।

सारोऽसाविन्द्रियाऽर्थानां यस्याऽसौ तस्य नन्दथुः ।
तल्पे कान्ताऽन्तरैः सार्धं मन्येऽहं धिङ् निमज्जथुम् ॥ २० ॥

सार इत्यादि—इन्द्रियार्थानां मध्ये सारोऽसौ दयिता इन्द्रियार्थः । रूपाद्यतिशययोगात् । यस्यासौ संपद्यते तस्य नन्दथुः आनन्दश्चेतसः । तल्पे शयनीये यस्य कान्तान्तरैरन्यस्त्रीभिः सार्धं निमज्जथुं शयनम् । सर्वत्र 'टितोऽथुच् । ३ । ३ । ८९ ।' तस्य धिक् कुत्सितमहं मन्ये । 'उभसर्वतसोः--' इत्यादिना धिग्योगे द्वितीया । तया सार्धं शोभनमित्यर्थादुक्तं भवति ॥ २० ॥

न तं पश्यामि यस्याऽसौ भवेन्नोद्वेजया मतेः ।
त्रैलोक्येनाऽपि विन्दस्त्वं तां क्रीत्वा सुकृती भव ॥ २१ ॥

न तमित्यादि—सर्वथा न तं पश्यामि जानामि जगति यस्य सम्बन्धिन्या मतेश्चेतसः उद्वेजया उत्कम्पिकासौ न भवेत् । चित्तक्षोभजनिकेत्यर्थः । उद्वेजयतीति 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । ३ । १।१३८।' इति कर्तरि शः । कृद्योगे कर्मणि षष्ठी । तस्मात् त्रैलोक्येनापि । त्रयश्च ते लोकाश्च त्रिलोकाः । त एव त्रैलोक्यम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । 'स्वार्थिका अतिवर्तन्ते' इति नपुंसकत्वम् । तेनापि तां क्रीत्वा लब्ध्वा विन्दस्त्वं सुकृती भव पण्डितो भव । आढ्यो वा भव । पाण्डित्यमस्य त्रैलोक्यमात्रेणापि स्त्रीरत्नं क्रीत्वा लब्धमिति । विन्दतीति तेनैव सूत्रेण शः ॥ २१ ॥

अन्या अपि स्त्रियः सन्तीति चेदाह—

नैवेन्द्राणी न रुद्राणी न मानवी न रोहिणी ।
वरुणानी न नाऽग्नायी तस्याः सीमन्तिनी समा ॥ २२ ॥

नैवेत्यादि—तस्यास्तु सीतायाः । 'तुल्यार्थैरतुलोपमाभ्याम् ।२।३।७२।' इति षष्ठी । न काचित् सीमान्तिनी स्त्री समा तुल्या । 'सीमन्तः केशवेशे' इति पररूपत्वम् । अन्यत्र सीमन्तः स विद्यते यस्या इति, इनिः । इन्द्राणी इन्द्रभार्या । न सम्यक् किं पुनरन्या । तथा रुद्राणी रुद्रभार्या । वरुणानी वरुणभार्या । 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ।४।१।४९।' इत्यानुक् । मानवी मनुभार्या । 'मनोरौ वा ।४।१।३८।' इत्यौकारः । अग्नायी अग्निभार्या । 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः । ४ । १ । ३७ ।' इति ऐरिति सर्वत्र 'पुंयोगादाख्यायाम् । ४ । १ । ४८ ।' इति ङीप् । रोहिणी चन्द्रभार्या । रोहितशब्दात् 'वर्णादनुदात्तात्तोपधात्तो नः । ४ । १ । ३९ ।' इति ङीप् नकारश्च । वरुणानी न नाग्नायीत्यत्र प्रतिषेधः एकः पूर्वेण योज्यः द्वितीयः परेणेति । चाग्नायीति पाठान्तरम् ॥ २२ ॥

प्रत्यूचे राक्षसेन्द्रस्तामाश्वसिहि बिभेषि किम् ।
त्यज नक्तञ्चरि ! क्षोभं वाचाटे ! रावणो ह्यहम् ॥ २३ ॥

प्रत्यूच इत्यादि—राक्षसेन्द्रो रावणः । राक्षसीं प्रत्यूचे । प्रतिवचनमुक्तवान् । आश्वसिहि खेदं त्यज । ' रुदादिभ्यः सार्वधातुके । ७ । २ । ७६ ।' इतीट् । बिभेषि किमर्थं तापसकात् । हे नक्तञ्चरि मद्विषये क्षोभं रोषं त्यज । वाचाटे बहुभाषिणि । 'आलजाटचौ बहुभाषिणि । ५ । २ । १२५ ।' यस्माद्रावणोऽहम् । अनेनात्मोत्कर्षमावेदयति ॥ २३ ॥

तमेव स्फुटयन्नाह—

मामुपास्त दिदृक्षावान् याष्टीकव्याहतो हरिः ।
आज्ञालाभोन्मुखो दूरात् काऽक्षेणाऽनादरेक्षितः ॥ २४ ॥

मामित्यादि—मामुपास्त सेवितवान् । हरिरिन्द्रः । दिदृक्षावान् द्रष्टुमिच्छावान् । आत्मदर्शनेच्छावानित्यर्थः । दूरादेव याष्टीकैः वेत्रग्राहिभिर्व्याहतोऽपसारितः । ' कर्तृकरणे कृता बहुलम् । २ । १ । ३२ ।' इति स० । याष्टिः प्रहरणमेषामिति ' शक्तियष्ट्योरीकक् । ४ । ४ । ५९ ।' आज्ञालाभे किमाभिधास्यतीत्युत्सुक उन्मुखः तत्परः । सप्तमीति योगविभागात् स० । अनादरेक्षितः अवज्ञाविलोकितः । काक्षेण कुदृष्ट्या । ' का पथ्यक्षयोः । ६ । ३ । १०४ ।' इति कुशब्दस्य कादेशः । यदि तत्पुरुष इत्यनुवर्तते तदा कुत्सितमक्षमिति विग्रहः । अक्षशब्दस्येन्द्रियसामान्याभिप्रायित्वेऽपि ईक्षितशब्दोपपदत्वाच्चक्षुषि वर्तते । अथ तत्पुरुष इति नानुवर्तते सामान्येनादेशस्तदा कुत्सितमक्षि यस्येति । ' बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् । ५ । ४ । ११३ ।' इति षच् । काक्षेण मयेत्यर्थः ॥ २४ ॥

विरुग्णोदग्रधाराऽग्रः कुलिशो मम वक्षसि ।
अभिन्नं शतधाऽऽत्मानं मन्यते बलिनं बली ॥ २५ ॥

विरुग्णेत्यादि—विरुग्णानि अवसन्नानि कुण्ठितानि उदग्राणि महान्ति धाराग्राणि यस्य स कुलिशो वज्रः मम वक्षसि पतितः सन् बली । आत्मानमभिन्नं शतधा शतप्रकारम् । ' सङ्ख्याया विधार्थे धा । ५ । ३ । ४२ ।' बलिनं मन्यते । अहो बलवानहं न येन शतधा भग्न इति । तस्य देवतारूपत्वात् बलमस्त्येव । आत्मानं बलिनं मन्यत इवेत्युत्प्रेक्षा ॥ २५ ॥

कृत्वा लङ्काद्रुमाऽऽलानमहमैरावतं गजम् ।
बन्धनेऽनुपयोगित्वान्नतं तृणवदत्यजम् ॥ २६ ॥

कृत्वेत्यादि—एष्वालीयत इत्यालानम् । अधिकरणे ल्युट् । 'विभाषा लीयतेः । ६ । १ । ५१ ।' इत्यात्वम् । लङ्काद्रुमा आलानानि यस्यैरावता-ख्यस्य गजस्य तं कृत्वा । नतं नम्रमुखम् । तृणमिव मत्वा । सोऽहमत्यजं त्यक्तवान् । बन्धनेऽनुपयोगित्वात् प्रयोजनाभावात् ॥ २६ ॥

आहोपुरुषिकां पश्य मम सद्रत्नकान्तिभिः ।
ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥ २७ ॥

आहो इत्यादि—अहोपुरुषस्य भावः । मनोज्ञादित्वाद्वुञ् । आहोपुरुषिका कार्यसिद्धावपि तत्साधने वृत्तिः । तां मम शूर्पणखे पश्य । सद्रत्नकान्तिभिः ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः पूर्णचन्द्रस्य सन्निधिः सदा सन्निधानम्, न पुनस्तेन कृत्यं रत्नप्रभाभिरेव तत्कृत्यस्य कृतत्वात् ॥ २७ ॥

हृतरत्नश्च्युतोद्योगो रक्षोभ्यः करदो दिवि ।
पूतक्रतायीमभ्येति सत्रपः किं न गोत्रभित् ॥ २८ ॥

हृतेत्यादि—हृतोच्चैः श्रवआदिरत्नो गोत्रभिदिन्द्रः । अत एव च्युतोद्योगः । दिवि वर्तमानोऽपि रक्षोभ्यः करदः । राजग्राह्यं वित्तं प्रयच्छन् । पूतक्रतायीं शचीं ' पूतक्रतोरै च । ४ । १ । ३६ ।' इति ङीप् । पुंयोगादाख्यायामिति । सत्रपः सव्रीडः । किं नाभ्येति न ढौकते ॥ २८ ॥

अतुल्यमहसा सार्धं रामेण मम विग्रहः ।
त्रपाकरस्तथाप्येष यतिष्ये तद्विनिग्रहे ॥ २९ ॥

अतुल्येत्यादि—तदेवंविधस्य मम अतुल्यमहसा अतुल्यतेजसा रामेण सह विग्रहस्त्रपाकरः । 'कृञो हेतुताच्छील्यानुलोम्येषु । ३ । २ । २० ।' इति टः। तथापि त्वत्प्रार्थनया । एष च यतिष्ये तद्विनिग्रहे विविधनिग्रहविषये तस्य यतिष्ये यत्नं करिष्यामि । ' वर्तमानसामीप्ये वर्तमानवद्वा । ३ । ३ । १३१ । इति विकल्पेन लटो विधानात् लृडुदाहृतः ॥ २९ ॥

उत्पत्य खं दशग्रीवो मनोयायी शिताऽस्त्रभृत् ।
समुद्रसविधाऽऽवासं मारीचं प्रति चक्रमे ॥ ३० ॥

उत्पत्येत्यादि—उक्त्वैवं खमाकाशमुत्पत्य मारीचं प्रति चक्रमे । यत्र मारा-चो राक्षसस्तत्र गत इत्यर्थः । 'अनुपसर्गाद्वा ।१।३।४३।' इति क्रमेस्तङ् । मनोवदाशु यातुं शीलमस्येति । ' कर्तर्युपमाने ।३।२।७९।' इति णिनिः । शितास्त्रभृत् गृहीततीक्ष्णचन्द्रहासः । समुद्रस्य सविधे समीपे आवासो यस्य मारीचस्य । सह विधेन सविधमिति व्युत्पत्तिमात्रं शब्दस्तत्समीपवाची ॥३०॥

**सम्पत्य तत्सनीडेऽसौ तं वृत्तान्तमशिश्रवत् ।**
**त्रस्नुनाऽथ श्रुतार्थेन तेनाऽगादि दशाऽऽननः ॥ ३१ ॥**

सम्पत्येत्यादि—असौ दशग्रीवः तत्सनीडे मारीचस्य समीपे । अत्रापि सह नीडेनेति व्युत्पत्तिमात्रम् । सम्पत्य यात्वा । तं वृत्तान्तम् शूर्पनखाकथितमशिश्रवत् श्रावितवान् । शृणोतेर्ण्यन्तस्य लुङि रूपम् । अथ तेन मारीचेन श्रुतार्थेन त्रस्नुना त्रसनशीलेन दशाननः अगादि उक्तः । कर्मणि लुङ् ॥३१॥

**अन्तर्धत्स्व रघुव्याघ्रात्तस्मात्त्वं राक्षसेश्वर ? ।**
**यो रणे दुरुपस्थानो हस्तरोधं दधद्धनुः ॥ ३२ ॥**

अन्तरित्यादि—हे राक्षसेश्वर त्वं तस्माद्रघुव्याघ्रादन्तर्धत्स्व अन्तर्हितो भव व्यवहितो भवेति यावत् । दधातेर्लोटि 'श्नाभ्यस्तयोरातः ।६ । ४ । ११२।' इत्याकारलोपः । अभ्यासस्य 'दधस्तथोश्च ।८।२।३८।' इति भष्भावः । 'अन्तर्धौ येनादर्शनमिच्छति ।१।४।२८।' इत्यपदानसंज्ञा । यस्मात् स रामः रणे दुरुपस्थानः दुःखेन उपस्थीयते उपगम्यत इति ।'आतो युच् ।३।३।१२८।'यतो हस्तरोधं दधद्धनुः हस्तेन रुद्ध्वा सदैव यो धनुर्धत्ते स कथं दुरुपस्थानो न भवति । हस्तशब्दे तृतीयान्त उपपदे 'सप्तम्यां चोपपीडरुधकर्षः ।३।४।४९।' इति णमुल् । चकारेण तृतीयायाः समुच्चितत्वात् । 'तृतीयाप्रभृतीन्यन्यतरस्याम् ।२।२।२१।' इति समासः ॥ ३२ ॥

तदेव दुरुपस्थानत्वं स्फुटयन्नाह—

**भवन्तं कार्तवीर्यो यो हीनसन्धिमचीकरत् ।**
**जिगाय तस्य हन्तारं स रामः सार्वलौकिकम् ॥ ३३ ॥**

भवन्तमित्यादि—यःकार्तवीर्यःकृतवीर्यस्यापत्यं सहस्रबाहुःभवन्तं हीनसन्धिमचीकरत् । हीनेन दुर्बलेन यः सन्धिः तं भवन्तं कारितवान् । तेन हीनत्वम् । बलान्निर्जित्य कारित इति दुरुपस्थानत्वमुक्तम् । 'हृक्रोरन्यतरस्याम् । १ । ४ । ५३।' इति द्विकर्मकता । तस्य कार्तवीर्यस्य यो हन्ता परशुरामः । कृत्प्रयोगे कर्मणि षष्ठी । तेन हि तस्याग्निहोत्रधेनुमपहृत्य गच्छतः परशुना बाहुसहस्रं छिन्नम् । तस्य हन्तारं स रामो जिगाय जितवान् । जयतेर्लिटि धातुजकारस्य 'सँल्लिटोर्जेः । ७ । ३ । ५७ ।' इति कुत्वम् । सार्वलौकिकं सर्वलोके विदितम् । 'लोकसर्वलोकाभ्यां ठञ् । ५ । १ । ४४ ।' 'अनुशतिकादीनां च ।७।३।२०।' इत्युभयपदवृद्धिः। सार्वलौकिक इति पाठान्तरम्। अत्र राम इति योज्यम् ॥३३॥

**यमाऽऽस्यदृश्वरी तस्य ताडका वेत्ति विक्रमम् ।**
**शूरम्मन्यो रणान्नाऽहं निरस्तः सिंहनर्दिना ॥ ३४ ॥**

यमेत्यादि—तस्य रामस्य विक्रमं ताडका वेत्ति ज्ञातवती । 'वर्तमानसामीप्ये वर्त्तमानवद्वा ।३।३।१३१।' इति भूते लट् । कीदृशी यमास्यदृश्वरी । तच्छरताडिता यममुखं दृष्टवती मृतेत्यर्थः । 'दृशेः क्वनिप् ।३।२।९४।' 'वनो र च ।४।१।७।' इति ङीब्रेफौ । अहमपि शूरम्मन्यः शूरमात्मानं मन्यमानः 'आत्ममाने खश्च ।३।२।८३।' सिंहनर्दिना रामेण सिंह इव नर्दतीति 'कर्तर्युपमाने ।३।२।७९।' इति णिनिः । रणान्निरस्तः बहिष्कृत इत्यर्थः ॥ ३४ ॥

**न त्वं तेनाऽन्वभाविष्ठा नाऽन्वभावि त्वयाऽप्यसौ ।**
**अनुभूतो मया चाऽसौ तेन चाऽन्वभाविष्यहम् ॥ ३५ ॥**

न त्वमित्यादि—तेन रामेण त्वं नान्वभाविष्ठाः । त्वमनेन नानुभूतः । कर्मणि लुङ् । थासि 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ।६।४।६२।' इति चिण्वदिट् गुणत्वम् । नान्वभावि त्वयाऽप्यसौ नानुभूतः । येनैवमुच्यते । अत्र 'चिण्भावकर्मणोः । ३ । १ । ६६ ।' इति चिण् । अनुभूतो मया चासौ । चशब्दः पुनरित्यर्थे । मया पुनरसावनुभूतः न शक्यो जेतुमिति । तेन रामेण चान्वभविष्यहमनुभूतोऽहम् । तेन सह योद्धुमक्षम इति । अत्र चिण्वद्भावो न कृतः किन्तु लुङि उत्तमपुरुषैकवचने वलादिलक्षण इट् । तेन वृद्ध्यभावात् गुण एवेति ॥ ३५ ॥

**अध्यङ् शस्त्रभृतां रामो न्यञ्चस्तं प्राप्य मद्विधाः ।**
**स कन्याशुल्कमभनङ् मिथिलायां मखे धनुः ॥ ३६ ॥**

अध्यङ्ङित्यादि—शस्त्रभृतां मध्ये रामोऽध्यङ् अधिकः । अध्यञ्चत्याधिक्ये न वर्तत इति 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ।३।२।५९।' इति क्विन् तस्मिन् लुप्ते अनुनासिकलोपे 'उगिदचां सर्वनामस्थाने धातोः । ७ । १ । ७०।' इति नुम् । तस्यानुस्वारपरसवर्णत्वे कृते च हल्ङ्यादिसंयोगान्तलोपौ । नकारस्य 'क्विन्प्रत्ययस्य कुः । ८ । २ । ६२ ।' इति कुत्वेन ङकारः । तं तादृशं प्राप्य मद्विधा न्यञ्चो हीनाः । निशब्दोऽत्राधोभावे वर्तते । न्यञ्च इति पूर्ववत् । क्विन् । अनुनासिकलोपः । नुम् । अल्लोपो नास्ति अहल्त्वात् कुत्वं च नास्ति अपदसंज्ञत्वात् । यो मिथिलायां महद्धनुरभनक् भग्नवान् सोऽस्मादपि कारणात् शस्त्रभृतामध्यङ् । भञ्जेर्लङि 'श्नान्नलोपः ।६।४।२३।' हल्ङ्यादिलोपः । कुत्वं च । कन्याशुल्कं कन्यामूल्यम् । तद्धि यो रौद्रं धनुरारोपितगुणं करोति अस्मै कन्या दीयत इति मूल्यीकृत्य स्थापितम् ॥ ३६ ॥

**संवित्तः सहयुध्वानौ तच्छक्तिं खरदूषणौ ।**
**यज्वानश्च ससुत्वानो यानगोपीन्मखेषु सः ॥ ३७ ॥**

संवित्त इत्यादि—नाहमेव रामशक्तिमवैमि अपि तु खरदूषणावपि संवित्तः ज्ञातवन्तौ । 'वर्तमानसामीप्ये वर्तमानवद्वा ।३।३।१३१।' इति भूते लट् । सकर्मकत्वात् 'समो गम्यृच्छिभ्याम् ।१।३।२९।' इति तङ् न भवति । तत्राकर्मकादिति वर्तते । सहयुध्वानौ सह तेन युद्धवन्तौ । 'सहे च ।३।२।९६।' इति युधेः क्वनिप् । यज्वानश्चाहिताग्नयः । ससुत्वानः सोमयाजिसहिताः । 'सुयजोर्ङ्वनिप् ।३।२।१०३।' संविदन्तीति वचनविपरिणामेन योज्यम् । यानगोपीन् अरक्षीन् मखेषु स रामः । लुङि रूपम् । तथा मखद्रुहो राक्षसान् घ्नतो रामस्य शक्तिं ज्ञातवन्तः ॥ ३७ ॥

**सुखजातः सुरापीतो नृजग्धो माल्यधारयः ।**
**अधिलङ्कं स्त्रियो दीव्य माऽऽरब्धा बालिविग्रहम् ॥ ३८ ॥**

सुखेत्यादि—यत एवं दुरुपस्थानः स तस्माद्वालिना रामेण विग्रहं माऽऽरब्धाः मा कार्षीः । रभेराङ्पूर्वात् 'माङि लुङ् ।३।३।१७५।' थास् । 'झलो झलि ।८।२।२६।' इति सिज्लोपः । 'झषस्तथोर्धोऽधः ।८।२।४०।' झलां जश् झशि ।८।४।५३।' । किं कार्यमित्याह—अधिलङ्कं लङ्कायामधि । विभक्त्यर्थेऽव्ययीभावः । स्त्रियो दीव्य क्रीड । लोटि रूपम् । 'दिवः कर्म च ।१।४।४३।' इति कर्मसंज्ञायां 'वाऽम्शसोः ।६।४।८०।' इतीयङ् । कीदृशः सुखजातः । जातं सुखमस्येति बहुव्रीहिः । कृतासवपानत्वात् । यदाह—सुरापीतः पीतमदिरः । नृजग्धः भुक्तमानुषः । निष्ठायामदो जग्धिः । पूर्ववद्वत्वम् । एषु वाहिताग्न्यादिदर्शनात् परनिपातः । माल्यं धारयतीति माल्यधारयः । 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ।३।१।१३८।' इति शः ॥३८॥

**तं भीतंकारमाक्रुश्य रावणः प्रत्यभाषत ।**
**यातयामं विजितवान् स रामो यदि किं ततः ॥ ३९ ॥**

तमित्यादि—तं मारीचं पूर्वोक्तं निराकुर्वन् रावणः प्रत्यभाषत प्रत्युक्तवान् । लङि रूपम् । भीतङ्कारमाक्रुश्य । भीतं कृत्वा भीतोऽसीति । 'कर्मण्याक्रोशे ।३।४।२५।' कृञः खमुञ् । यातयाम गतवयसम् । यदि विजितवान् रामो दाशरथिः । किं ततः किं तापसः शूरः ॥३९॥

अघानि ताडका तेन लज्जाभयविभूषणा ।
स्त्रीजने यदि तच्छ्लाघ्यं धिग् लोकं क्षुद्रमानसम् ॥ ४० ॥

घानीत्यादि—तेन रामेण ताडका अघानि व्यापादिता । हन्तेः कर्मणि-लुङ् । लज्जा च भयं च विभूषणं यस्याः । स्त्रित्वान्न शौर्यम् । एवंविधाया अनेन रामेण यदि गर्ह्यमपि हननं स्त्रीजने श्लाघ्यं श्लाघनीयम् । 'कृत्यानां कर्तरि वा ।२।३।७१।' इति तृतीया । तं धिक् लोकं क्षुद्रमानसं हीनमानसम् ॥ ४० ॥

यद् गर्हेनर्दिनमसौ शरैर्भीरुमभाययत् ।
कुब्रह्मयज्ञके रामो भवन्तं पौरुषं न तत् ॥ ४१ ॥

यद्गेह इत्यादि—असौ रामो यद्भवन्तं भीरुं शरैरभाययत् भायितवान् । पुगात्मनेपदे न भवतः भयहेतोरभावात् । अत्र हि शरेभ्यो भयम्; नतु रामात् । तत् किम् । पौरुषकारः किमसौ । युवादित्वादण् । गेहेनर्दिनं गेह एव नर्दिनम् । 'पात्रेसमितादयश्च ।२।१।४८।' इति समासः कुब्रह्मयज्ञके । कुत्सिता ब्रह्माणः कुब्रह्माः । 'कुगतिप्रादयः ।२।२।१८।' इति समासः । 'कुमहद्भ्यामन्यतरस्याम् ।५।४।१०५।' इति समासान्तष्टच् । तेषां कुत्सितो यज्ञः । तस्मिन् साति कुत्सायां कन् । तेन शूरम्मन्योऽहं रणात्तेन निरस्तः इत्यपुष्कलमुक्तम् ॥४१॥

चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः ।
किं चित्रं यदि रामेण भग्नं क्षत्रियकान्तिके ॥ ४२ ॥

चिरेत्यादि—यदि रामेण क्षत्रियकान्तिके । कुत्सितक्षत्रियसमीपे । भग्नं धनुः किं तच्चित्रमाश्चर्यम् । क्षत्रिया जनकादयः तस्य कुत्सायां कन् । क्षत्रियकस्यान्तिके । दूरान्तिकार्थयोगे षष्ठीसमासं विधाय पश्चात् 'सप्तम्यधिकरणे च ।२।३।३६।' इति चकाराद्दूरान्तिकार्थेभ्यश्चेति सप्तमी । किमिति न चित्रमित्याह—चिरकालमुषितमिति । 'कालाऽध्वनोरत्यन्तसंयोगे ।२।३।५।' इति द्वितीयां विधाय 'अत्यन्तसंयोगे च ।२।१।२९।' इति द्वितीयासमासः । जीर्णं चिरकालोषितत्वात् । 'जॄष् वयोहानौ' । निष्ठा । 'ऋत इद्धातोः ।७।१।१००।' इकः 'हलि च ।८।२।७७।' इति दीर्घः । 'रदाभ्यां निष्ठातोनः पूर्वस्य च दः ।८।२।४२।' इति निष्ठानत्वम् । कीटैर्घुणैर्निष्कुषितं खादितम् । 'निरः कुषः' इत्यनुवर्तमाने 'इण्निष्ठायाम् ।७।२।४७।' इतीट् ॥४२॥

वनतापसके वीरौ विपक्षे गलिताऽऽदरौ ।
किं चित्रं यदि सावज्ञौ मम्रतुः खरदूषणौ ॥ ४३ ॥

वनेत्यादि—वने तापसो वनतापसः । कुत्सायां कन् । तस्मिन् वनतापसके मे सावज्ञत्वाद्गलितादरौ विपक्षे किमयं करिष्यतीत्यश्रद्धयैव योधितवन्तौ खरदूषणौ वीरौ यदि मम्रतुः मृतौ, को दोषः किं चित्रम् । 'म्रियतेर्लुङ्लिङोश्च ।१।३।६१।' इति नियमात् लिट्यात्मनेपदं न भवति ॥ ४३ ॥

त्वं च भीरुः सुदुर्बुद्धे ! नित्यं शरणकाम्यसि ।
गुणांश्चापह्नुषेऽस्माकं स्तौषि शत्रूंश्च नः सदा ॥ ४४ ॥

त्वं चेत्यादि–हे दुर्बुद्धे त्वं पुनः भीरुश्च भवसि । नित्यं शरणकाम्यसि । आत्मनोऽनिशं शरणमिच्छसि । आत्मेच्छायां काम्यच् । अस्माकं च सतो गुणानपह्नुषे अपनयसि । 'ह्नुङ् अपनयने' आदादिकः । ङित्त्वात्तङ् । शत्रूंश्च नोऽस्माकं स्तौषि । स्तौतेः 'उतो वृद्धिर्लुकि हलि ।७।३।८९।' ॥ ४४ ॥

शीर्षच्छेद्यमतोऽहं त्वा करोमि क्षितिवर्धनम् ।
कारयिष्यामि वा कृत्यं विजिघृक्षुर्वनौकसौ ॥ ४५ ॥

शीर्षेत्यादि—यत एवंविधस्त्वं दुष्टः अतोऽहम् । 'त्वामौ द्वितीयाया । ८।१।२३।'इत्याष्टमिकलक्षणेन त्वादेशः ।शीर्षच्छेद्यं शीर्षच्छेदार्हम् ।'शीर्षच्छेदाद्यत् ।५।१।६५।' क्षितिवर्धनं करोमि । शिरश्छित्त्वा व्यापादयामीत्यर्थः। अथवा कृत्यं करणीयम् । 'विभाषा कृवृषोः ।३।१।१२०।' इति क्यप् ।कारयिष्यामि । 'हृक्रोरन्यतरस्याम् ।१।४।५३।' इति द्विकर्मकता । विजिघृक्षुः विग्रहीतुमिच्छुः । 'सनि ग्रहगुहोश्च ।७।२।१२।' इतीट्प्रतिषेधः । 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।१।२।८।'इति सनः कित्त्वे 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ।६।१।१६।' इति संप्रसारणम् । 'हो ढः ।८।२।३१।' । 'एकाचो बशो भष् झषन्तस्य स्ध्वोः।८।२।३७।'।'षढोः कः सि ।८।२।४१।'वनौकसौ रामलक्ष्मणौ । वनमोको गृहं ययोः । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ।२।३।६९।' इति कर्मणिषष्ठ्याः प्रतिषेधः ॥ ४५ ॥

तमुद्यतनिशातासिं प्रत्युवाच जिजीविषुः ।
मारीचोऽनुनयंस्त्रासादभ्यमित्र्यो भवामि ते ॥ ४६ ॥

तमित्यादि—तं रावणं एवमुक्तवन्तम् । निशात इति 'शाच्छोरन्यतरस्याम् ।७।४।४१।' इतीत्वाभावपक्षे रूपम् । उद्यतः उत्थापितः निशातस्तीक्ष्णोऽसिर्येन तं मारीचस्त्रासात् प्रत्युवाच वचनमुक्तवान् । अभ्यमित्र्यो भवामि ते । अमित्रस्याभिमुखमभ्यमित्रमाभिमुख्येऽव्ययीभावः । अभ्यमित्रमलंगामीत्यस्मिन्नर्थे 'अभ्यमित्राच्छ च ।५।२।१७।' इति चकाराद्यत्खौ चेति यत्। त्वदमि

त्राभिमुखं गच्छामीत्यर्थः। अनुनयन् अनुकूलयन्। किमर्थं जिजीविषुः जीवितुमिच्छुः ॥ ४६ ॥

हरामि रामसौमित्री मृगो भूत्वा मृगद्युवौ।
उद्योगमभ्यमित्रीणो यथेष्टं त्वं च संतनु ॥ ४७ ॥

हरेत्यादि–अहं मृगो भूत्वा रामसौमित्री हरामि। देशान्तरं प्रापयामि। आखेटकाभिरतत्वात्। यदाह मृगद्युवौ मृगैर्दीव्यत इति क्विप्। 'च्छ्वोः शूडनुनासिके च।६।४।१९।' इति चकारात् कौ च ऊठ्। यणादेशः। उवङ्। मृगद्युताविति पाठान्तरम्। तत्र 'द्यु अभिगमने' मृगान् द्यौति अभिगच्छतीति क्विप्। त्वं च यथेष्टं यथारुचि। तमुद्योगं संतनु विस्तारं कुर्वित्यर्थः। तनोतेर्लोटि 'उतश्च प्रत्ययादसंयोगपूर्वात्।६।४।१०६।' इति हेर्लुक्। अभ्यमित्रीणः अमित्राभिमुखमलंगामी।'अभ्यमित्राच्छ च।५।२।१७।' इति चकारायत्खौ चेति खः ॥ ४७ ॥

ततश्चित्रीयमाणोऽसौ हेमरत्नमयो मृगः॥
यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन् ॥ ४८ ॥

तत इत्यादि–उक्तानन्तरमसौ मारीचो मायामृगीभूतः सन् हेमरत्नमयः रत्नं च हेम चेति विगृह्य। 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः।४।३।१४३। इति विकारे मयट्। निर्मलत्वात्। सीताया अग्रतो यथामुखीनः प्रतिबिम्बाश्रय इव भूत्वा पुप्लुवे भ्रमति स्म। इवशब्दलोपो द्रष्टव्यः। 'यथामुखसंमुखस्य दर्शनः खः। ५। २। ६।' बहु लोभयन् सुष्ठु स्पृहां जनयन्। यतश्चित्रीयमाणः आश्चर्यं भवन्। हेमरत्नमयत्वात्। 'नमोवरिवश्चित्रङः क्यच्।३।१।१९।' इति क्यच्। 'चित्रङ् आश्चर्ये'। ङकारस्यात्मनेपदार्थत्वात् शानच्। अवयवकृतं लिङ्गं समुदायस्य भवतीति ॥ ४८ ॥

तेनाऽदुद्यूषयद्रामं मृगेण मृगलोचना ॥
मैथिली विपुलोरस्कं प्रावुवूषुर्मृगाऽजिनम् ॥ ४९ ॥

तेनेत्यादि–तेन मृगेण मैथिली सीता राममदुद्यूषयन् क्रीडितुमिच्छन्तं प्रयुक्तवती गृह्यतामयमिति। इबन्तस्य दिवेः 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्। ७। २। ४९।' इति यदा नेट् तदा 'च्छ्वोः शूडनुनासिके च। ६। ४।१९।' द्विर्वचनम्। तस्मात् सन्नन्तण्यन्तात् लङि रूपम्। मृगलोचना मृगस्य लोचने इव लोचने यस्याः। मध्यमपदलोपी समासः। विपुलोरस्कं विस्तीर्णवक्षस्थलम्। 'उरःप्रभृतिभ्यः कप्।५।४।१५१।'। किमर्थमदुद्यूषयन् मृगाजिनं मृगचर्म

प्रावुवूर्षुः प्रावरीतुमिच्छुः । प्राङ्पूर्वस्य 'इट् सनि वा ।७।२।४१।' इत्यानिट्पक्षे 'अज्झनगमां सनि ।६।४।१६।' इति दीर्घः । 'उदोष्ठ्यपूर्वस्य ।७।१।१०२।' इत्युत्वम् । रपरत्वम् । 'वोरुपधाया दीर्घ इकः ।८।२।७६।' द्विर्वचनम् । 'इण्कोः ।८।३।५७।' इति षत्वम् । रेफस्येण्ग्रहणेन ग्रहणाद्दन्त्योष्ठ्योऽपि वकार ओष्ठ्यग्रहणेन गृह्यते ॥ ४९ ॥

**योगक्षेमकरं कृत्वा सीताया लक्ष्मणं ततः ।**
**मृगस्यानुपदी रामो जगाम गजविक्रमः ॥ ५० ॥**

योगेत्यादि—ततो शुश्रूषानन्तरं रामो जगाम । योगक्षेमौ शरीरस्थितिपालने करोतीति 'कृञो हेतुताच्छील्यानुलोम्येषु ।३।२।२०।' इति हेतौ टः । ग्रहणवता तदन्तविधेरभावात् 'क्षेमप्रियमद्रेऽण् च ।३।२।४४।' इत्यण्खचौ न भवतः । सीतायाः स्थितिपालनहेतुभूतं लक्ष्मणं कृत्वा रामः मृगस्यानुपदी अन्वेष्टा 'अनुपद्यन्वेष्टा ।५।२।९०।' इति निपातनात् साधुः । गजविक्रमः । गजगमनमिव गमनं यस्येत्यर्थः ॥ ५० ॥

**स्थायं स्थायं क्वचिद्यान्तं क्रान्त्वा क्रान्त्वा स्थितं क्वचित् ।**
**वीक्षमाणो मृगं रामश्चित्रवृत्तिं विसिष्मिये ॥ ५१ ॥**

स्थायमित्यादि—मृगं चित्रवृत्तिमद्भुतशरीरचेष्टं वीक्षमाणो रामो विसिष्मिये विस्मितः । ष्मिङो ङित्त्वादात्मनेपदम् । षोपदेशत्वाच्चाभ्यासेणः परस्य सस्य षः । चित्रवृत्तितां दर्शयन्नाह—स्थायं स्थायं स्थित्वा स्थित्वा क्वचित् प्रदेशे यान्तम् । क्रान्त्वा क्रान्त्वा क्वचित्प्रदेशे उत्प्लुत्योत्प्लुत्य स्थितम् । आभीक्ष्ण्ये णमुलि क्त्वाणमुलौ द्विर्वचनं च ॥ ५१ ॥

**चिरं क्लिशित्वा मर्माविद् रामो विलुभितप्लवम् ।**
**शब्दायमानमव्यात्सीद् भयदं क्षणदाचरम् ॥ ५२ ॥**

चिरमित्यादि—रामः क्षणदाचरं मारीचमव्यात्सीत् विद्धवान् । व्यधेर्लुङि हलन्तलक्षणा वृद्धिः । मर्माविद्रामः मर्माणि विध्यतीति क्विप् । 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ।६।३।११६।' इति पूर्वपदस्य दीर्घत्वम् । चिरं क्लिशित्वा महान्तं कालमायस्य अत्यन्तसंयोगे द्वितीया । 'क्लिशः क्त्वानिष्ठयोः ।७।२।५०।' इति विकल्पेनेट् । तत्र 'रलो व्युपधाद्धलादेः संश्च ।१।२।२६।' इति कित्त्वविकल्पे 'मृडमृदगुधकुषक्लिशवदवशः ।१।२।७।' इति कित्त्वम् । विलुभितप्लवं व्याकुलितगमनम् । 'लुभो विमोहने ।७।२।५४।' इतीट् । विमोहनं व्याकुलीकरणम् । शब्दायमानं शब्दं कुर्वाणम् । 'शब्दवैर-

कलहाभ्रकण्वमेघेभ्यः करणे ।३।१।१७।' इति क्यङ् । भयदं निशाचरम् । शब्दविशेषणं वा ॥ ५२ ॥

**श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी ।**
**मत्वा कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत् ॥ ५३ ॥**

श्रुत्वेत्यादि—विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यम् । 'टुओस्फूर्जा वज्रनिर्घोषे' । 'ट्वितोऽथुच् ।३।३।८९।' निनादं शब्दम् । 'नौ गदनदपठस्वनः ।३।३।६४।' इति विकल्पनात् पक्षे घञ् । श्रुत्वा मैथिली कष्टश्रितं कृच्छ्रप्राप्तं रामम् । 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ।२।१।२४।' इति समासः।मत्वा बुद्ध्वा। कृच्छ्रप्राप्तेन रामेण मृतमिति परिदेविनी परिदेवनशीला शङ्कमाना । 'संपृचानुरुधा-।३।२।१४२।' इत्यादिना घिनुण् । सौमित्रिं गन्तुमैजिहत् । ईहां कारितवती । ईहेर्ण्यन्तात् लुङि द्विर्वचनेऽचीति स्थानिवद्भावादजादेर्द्वितीयस्येति हिशब्दस्य द्विर्वचनम् । अभ्यासकार्यं च॥५३॥

**एष प्रावृषिजाऽम्भोदनादी भ्राता विरौति ते ।**
**ज्ञातेयं कुरु सौमित्रे ! भयात् त्रायस्व राघवम् ॥ ५४ ॥**

एष इत्यादि—एष ते भ्राता रौति । 'उतो वृद्धिर्लुकि हलि।७।३।८९।' इत्यौकारः।प्रावृषि जातः प्रावृषिजः। सप्तम्यां जनेर्डः।३।२।९७।'प्रावृट्शरत्कालदिवां जे ।६।३।१५।' इति सप्तम्या अलुक् । स चाम्भोदश्चेति 'विशेषणं विशेष्येण बहुलम् २।१।५७' इति समासः । तद्वन्नदतीति ' कर्तर्युपमाने । ३ । २ ।७९।' इति णिनिः । तस्मात् सौमित्रे ज्ञातेयं ज्ञातिभावं तत्कर्म वा कुरु । 'कपिज्ञात्योर्ढक् ।५।१।१२७।' तेन भयात्त्रायस्व राघवम् ॥ ५४ ॥

**रामसंघुषितं नैतन्मृगस्येव विवञ्चिषोः ।**
**रामस्वनितसङ्काशः स्वान, इत्यवदत् स ताम् ॥ ५५ ॥**

रामेत्यादि—रामसंघुषितं रामशब्दितमेतन्न भवति । 'घुषिरविशब्दार्थः।' तस्य निष्ठायां 'रुष्यमत्वरसंघुषास्वनाम् ।७।२।२८।' इति विकल्पेनेट् । मृगस्य विवञ्चिषोः छलयितुमिच्छोः । 'वञ्चु गतौ ।' भौवादिकः । तस्यानेकार्थत्वात् । प्रलम्भन इति चौरादिकस्याण्यन्तस्य वा प्रयोगः । येषामनित्यण्यन्ताश्चुरादय इति दर्शनं तेषां मतेनात्रापि सिध्यति । एष स्वानो ध्वानः 'स्वनहसोर्वा ।३।३।६२।' इति पक्षे घञ् । कीदृशः रामस्वनितसङ्काशः । रामशब्दानुकारीति । तां सीताम् एवमवदत् उक्तवान् । स लक्ष्मणः ॥ ५५ ॥

**आप्यानस्कन्धकण्ठांसं रुषितं सहितुं रणे ।**
**प्रोर्णुवन्तं दिशो बाणैः काकुत्स्थं भीरु कः क्षमः ॥ ५६ ॥**

आप्येत्यादि—'प्यैङ् वृद्धौ।' अस्मादाङ्पूर्वात्'संयोगादेरातो धातोर्यण्वतः।८।२।४३।' इति निष्ठातो नः। 'ओप्यायी वृद्धौ'इत्यस्य वा रूपम्। 'ओदितश्च ८।२।४५।' इति निष्ठानत्वम्। पीभावस्तु आङ्पूर्वस्य:त्वन्धूधसोरिति वचनात् इह न भवति आप्यानस्कन्ध इति। आप्यानं स्थूलं स्कन्धकण्ठांसं यस्य काकुत्स्थस्य। बाहुशिखरमंसः। तस्य पश्चिमो भागः स्कन्धः। तं रुषितं क्रुद्धम्। रण संग्रामे सहितुं हे भीरु कातरे कः क्षमः शक्तः। अपि तु न कोऽपीत्यर्थः। क्षमेः शक्नोत्यर्थत्वात् तदुपपदे'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ।३।४।६५।' इति तुमुन्। 'तीषसहलुभरुषरिषः ।७।२।४८।' इति वेट्। ककुत्स्थस्यापत्यं काकुत्स्थः। 'शिवादिभ्योऽण् ।४।१।११२।' कस्मान्न क्षम इत्याह—प्रोर्णुवन्तं दिशो बाणैः। यतः सर्वाः दिशः बाणैः छादयन्तम्। ऊर्णोतेः शतरि उवङ्। क्षमत इति क्षमः। पचाद्यच् ॥ ५६ ॥

**देहं बिभ्रक्षुरस्त्राग्नौ मृगः प्राणैर्दिदेविषन् ।**
**ज्याघुष्टकठिनाऽङ्गुष्ठं राममायान्मुमूर्षया ॥ ५७ ॥**

देहमित्यादि—एष मृगो राममायान आगतवान। यातेर्लङि रूपम्। किमर्थं देहं शरीरम् अस्त्राग्नौ अस्त्रे अग्नाविव। बिभ्रक्षुः भ्रष्टुमिच्छुः। भ्रस्जेः 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्।७।२।४९।'इत्यत्रेडभावपक्षे 'स्कोः संयोगाद्योरन्ते च।८।२।२९।' इत्यनेन सलोपे षत्वकुत्वयोश्च रूपम्। प्राणैर्दिदेविषन् क्रीडितुमिच्छन्। 'दिवः कर्म च ।१।४।४३।' इति चकारात् करणसंज्ञा। 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् । ७ ।२ । ४९ ।' इतीट्पक्षे रूपम्। ज्यया गुणेन घुष्टौ निघृष्टौ अत एव कठिनौ अङ्गुष्ठौ सव्यापसव्यकर्षणाग्रस्य। घुषिरविशब्दने ।७।२।२३।' इति निष्ठायामनिट्। मुमूर्षया मर्तुमिच्छया। मृङः लानि 'उदोष्ठ्यपूर्वस्य । ७ । १ । १०२ ।' इत्युत्वम्। 'अ प्रत्ययात् ।३।३।१०२' ॥ ५७ ॥

**शत्रून् भीषयमाणं तं रामं विस्मापयेत कः ।**
**मा स्म भैषीस्त्वयाऽद्यैव कृताऽर्थो द्रक्ष्यते पतिः ॥ ५८ ॥**

शत्रूनित्यादि—तं रामं शत्रून् भीषयमाणं भीतान् कुर्वाणम्।' भियो हेतुभये षुक् ।७।३।४०।' । 'भीस्म्योर्हेतुभये । १।३।६८।' इति तङ्। विस्मापयेत कः क्षुभितचित्तं कुर्यात्। नैवेत्यर्थः। 'नित्यं स्मयतेः ।६।१।५७।' इति णावात्वम्। 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ७।३।३६।' इति पुक्। निमन्त्रणे

नियोगे वा लिङ् । पूर्ववदात्मनेपदम् । तस्मान्मा स्म भैषीः मा भूर्भीता।'स्मोत्तरे लङ् च।३।३।१७६।' इति चकारात् लुङ् । सिचि वृद्धिः । त्वया अद्यैव कृतार्थः पूर्णमनोरथः पतिर्द्रक्ष्यते। दृशेः कर्मणि लृट् ॥ ५८ ॥

**यायास्त्वमिति कामो मे गन्तुमुत्सहसे न च, ।**
**इच्छुः कामयितुं त्वं मामित्यसौ जगदे तया ॥ ५९ ॥**

**याया** इत्यादि—तदन्वेषणाय यायास्त्वमिति कामोऽभिलाषः । 'कामप्रवेदनेऽकच्चिति ।३।३।१५३।' इत्यकच्चित्युपपदे लिङ् । न च गन्तुमुत्सहसे । 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ।३।४।६५।' इति तुमुन् । तस्मान्नूनं मां कामयितुमिच्छुः एषणशीलः 'समानकर्तृकेषु तुमुन् ।३।३।१५८।' 'विन्दुरिच्छुः ।३।२।१६९।' इति निपातनात्साधुः । इत्येवमसौ लक्ष्मणो जगदे गदितस्तया सीतया ॥ ५९ ॥

**मृषोद्यं प्रवदन्तीं तां सत्यवद्यो रघूत्तमः ।**
**निरगात् शत्रुहस्तं त्वं यास्यसीति शपन्वशी ॥ ६० ॥**

**मृषोद्यमित्यादि**—मां कामयितुमिच्छुरित्येतन्मृषोद्यम् मृषावादम् । 'राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।३।१।११४।' इत्यनेन भावे क्यप् । यजादित्वात् सम्प्रसारणम् । प्रवदन्तीं तां सीताम् । रघूत्तमो लक्ष्मणः शपन् शत्रुहस्तं त्वं यास्यसीति शापं प्रयच्छन् भौवादिकोऽत्र शपिर्न दैवादिकः । निरगात् निर्गतः । तस्मादुटजादित्यर्थात् । कथं मृषोद्यमित्याह—वशी वशनं वशः इन्द्रियसंयमनम् । 'वशिरण्योरुपसंख्यानम्' इत्यप् । स यस्य स वशी जितेन्द्रियः । अत एव सत्यवद्यः ।अवितथवादी । शत्रुहस्तं यास्यसीति सत्यं वदतीति 'कृत्यल्युटो बहुलम् ।३।३।११३।' इति कर्तरि यत् । 'वदः सुपि क्यप् च ।३।१।१०६।' इति चकाराद्यत् । भावे वा यतं विधायार्श आदित्वात् ॥ ६० ॥

अथ चतुर्भिः कलापकम् ।

**गते तस्मिञ्जलशुचिः शुद्धदन् रावणः शिखी ।**
**जञ्जपूकोऽक्षमालावान् धारयो मृद्गलाबुनः ॥ ६१ ॥**

**गत** इत्यादि—तस्मिन् लक्ष्मणे गते सति रावणः सीतामूच इति वक्ष्यमाणेन सम्बन्धः।कीदृशः जलशुचिः स्नात इत्यर्थः । शुद्धदन् निर्मलदशनः शुद्धा दन्ता यस्य 'अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ।५।४।१४५।' इत्यनेन दन्तस्य

दादेशः । शिखा अस्यास्तीति शिखी परिव्राजकः । व्रीह्यादित्वादिनिः । जञ्जपूकः पापाशयत्वात् गर्हितं जपतीति । 'लुपसदचरजपजभदहदशगृभ्यो. भावगर्हायाम् ।३।१।२४ ।' इति यङ् । 'जपजभ—।७।४।८६।' इत्यभ्यासस्य नुक् । 'यजजपदशां यङः । ३ । २ । १६६ ।' इत्यूकः । अक्षमालावान् अक्षसूत्रयुक्तः । संसर्गे मतुप् । धारयतीति धारयः । 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । ३ । १ । १३८ ।' इति शः । कस्य मृदलाबुनः । 'नञि लम्बेर्नलोपश्च' इत्यौणादिक ऊकारे प्रत्यये अलाबूः । तस्य विकारः फलमिति 'ओरञ् । ४ । ३ । १३९ ।' । तस्य फले लुक्, नपुंसकह्रस्वत्वम् । मृत्पूर्णमलाबु इति मध्यमपदलोपी समासः । कृत्प्रयोगे कर्मणि षष्ठी । 'इकोऽचि विभक्तौ । ७ । १ । ७३ ।' इति नुम् ॥ ६१ ॥

**कमण्डलुकपालेन शिरसा च मृजावता ।**
**संवरुय लाक्षिके वस्त्रे मात्राः सम्भाण्डय दण्डवान् ॥ ६२ ॥**

कमेत्यादि—कमण्डलुना कपालेन च 'जातिरप्राणिनाम् । २ । ४ ६ ।' इति द्वन्द्वैकवद्भावः । मृजावता निर्मलेन शिरसा च उपलक्षित इत्थम्भूते तृतीया। संवरुय परिधाय । 'वस्त्रात्समाच्छादने' इति 'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् । ३ । १ । २१ ।' इति णिच् । लाक्षिके वस्त्रे । लाक्षया रक्ते । 'लाक्षा रोचनात्—।४।२।२।' इति ठक् । मात्राः कमण्डल्वादिकं सम्भाण्डय समाचित्य राशीकृत्येत्यर्थः । 'भाण्डात् समाचयने' इति 'पुच्छभाण्डचीवराण्णिङ् ।३।१।२०।' इति णिङ् । दण्डवान् गृहीतदण्डः । संसर्गे मतुप् ॥ ६२ ॥

**अधीयन्नात्मविद् विद्यां धारयन् मस्करिव्रतम् ।**
**वदन् बह्वङ्गुलिस्फोटं भ्रूक्षेपं च विलोकयन् ॥ ६३ ॥**

अधीत्यादि—मा कुरुत कर्माणि शान्तिर्वः श्रेयसीत्येवं घोषयन्ति ये ते मस्करिणः परिव्राजकाः । तेषां व्रतमकृच्छ्रमसौ धारयन् । 'मस्करमस्करिणौ—।६।१।१५४।' इत्यादिना परिव्राजके सुट् । आत्मविदां योगिनाम् । विद्यामुपनिषदमधीयन् जपन् 'इङ् धार्योः शत्रकृच्छ्रिणि ।३।२।१३०।' इतीङो धारेश्च अकृच्छ्रवति कर्तरि शतृप्रत्ययः । अन्तरा बहु प्रभूतं वदन् । अंगुलिस्फोटं पुनः पुनः स्फोटिकान्दत्वा भ्रूक्षेपं च विलोकयन् भ्रुवावुत्क्षिप्योत्क्षिप्य विलोकयन् । उभयत्रापि 'स्वाङ्गेऽध्रुवे ।३।४।५४।' इति णमुल् ॥ ६३ ॥

संदिदर्शयिषुः साम निजुह्नूषुः क्षपाटताम् ।
चङ्क्रमावान् समागत्य सीतामूचे 'सुखाभव' ॥ ६४ ॥

संदीत्यदि—इहा भयं मा भूदिति साम सान्त्वं संदिदर्शयिषुः संदर्शयितुमिच्छुः । वदन् बह्वङ्गुलिस्फोटमिति योज्यम् । दृशेर्ण्यन्तसन्नन्तत्वे रूपम् । क्षपाटतां राक्षसत्वं निजुह्नूषुर्निह्नोतुमिच्छुः । धारयन्मस्करिव्रतमिति योज्यम् । ह्नोतेः 'अज्झनगमां सनि ।६।४।१६।' इति दीर्घः । कुटिलं क्रमणं चङ्क्रमा । क्रमेः 'नित्यं कौटिल्ये गतौ ।३।१।२३।' इति यङ् । 'नुगतोऽनुनासिकान्तस्य ।७।४।८५।' इत्यभ्यासस्य नुक् । 'अ प्रत्ययात् ।३।३।१०२।' इत्यकारः । 'अतो लोपः ।६।४।४८।' । 'यस्य हलः ।६।४।४९।' टाप् । सा यस्यास्ति स चंक्रमावान् । कुटिलगतिमानित्यर्थः । समागत्य ढौकित्वा । सीतामूचे । किमित्याह–सुखाभवेति अनुकूला भवेत्यर्थः । यदहं प्रार्थये तत्र प्रतिकूला न भवेति भावः । 'सुखप्रियादानुलोम्ये ।५।४।६३।' इति कृभ्वस्तियोगे डाच् ॥ ६४ ॥

अथ द्वाभ्यां युग्मम्—

सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीम् ।
कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता ॥ ६५ ॥

सायमित्यादि—का त्वमिति वक्ष्यमाणेन सम्बन्धः । सायं दिनावसानं तत्र भवां कान्तिम् । यदा षोऽन्तकर्मणीत्येतस्मात् घञ्प्रत्ययान्तः तदा 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ।४।३।२३।' इति मकारान्तत्वं च निपात्यते । यदा सायंशब्दो मकारान्तः तदाप्यव्ययत्वादेव प्रत्ययागमौ स्याताम् । कस्येत्यपेक्षायां तिथिप्रण्यः चन्द्रमसः पञ्चदश कलाः तासां वृद्धिह्रासाभ्यां पञ्चदश तिथीः प्रणयति प्रवर्तयति । 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ।३।२।६१।' इति क्विप् । 'उपसर्गादसमासेऽपि णोपदेशस्य ।८।४।१४।' इति णत्वम् । 'एरनेकाचः ।६।४।८२।' इत्यादिना यणादेशः । पङ्कजानां च कान्तिं कीदृशीं दिवातनीं दिवाभवाम् । कान्त्या त्वदीयया सदातन्या सदाभवया ह्रेपयन्ती लज्जयन्ती । दिवातन्याः सायन्तन्याश्च सदाभवत्वात् । जिह्रेतेः 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ–।७।३।३६।' इति णौ पुक् । शुचिस्मिता शुभ्रहासा ॥ ६५ ॥

का त्वमेकाकिनी भीरु ! निरन्वयजने वने ।
क्षुध्यन्तोऽप्यघसन् व्यालास्त्वामपालां कथं न वा ॥ ६६ ॥

कात्वमित्यादि—का त्वं देवी मानुषी राक्षसी वेति । एकाकिनी असहाया । 'एकादाकिनिच्चासहाये ।५।३।५२।' इति आकिनिच् । भीरु इत्यामन्त्रणं भयप्रकृतित्वात् स्त्रीणाम् । निरन्वया निरनुगमा जना यस्मिन्वने यत्र न कथंचिन्मनुष्याणां सम्भवः । क्षुध्यन्तोऽपि बुभुक्षमाणा अपि । दिवादित्वात् श्यन् । व्याला हिंस्रा व्याघ्रादयः कथं वा त्वां नाघसन् न भक्षितवन्तः । अदेः 'लुङ्सनोर्घस्लृ ।२।४।३७।' लृदित्वात् च्लेरङ् । क्षुध्यन्तो नाघसन्निति पाठान्तरम् । तत्र कथं न वा अपरिचितानेवाघसन् इति योज्यम् । अपालां सतीं अविद्यमानः पालो यस्या इति । 'पाल रक्षणे' इति चौरादिकः । पालयतीति पालः । पचाद्यच् । यदा प्रयोजकविवक्षा तदा 'पातेर्णौ लुग् वक्तव्यः' इति लुक् । ततः पचाद्यच् ॥ ६६ ॥

हृदयंगममूर्तिस्त्वं सुभगम्भावुकं वनम् ।
कुर्वाणा भीममप्येतद् वदाऽभ्यैः केन हेतुना ॥ ६७ ॥

हृदयमित्यादि—केन हेतुना इदं वनमभ्यैः अभिगतासि वद कथय । अभिपूर्वादिणो लङ् । मध्यमपुरुषैकवचनम् । 'आडजादीनाम् ।६।४।७२।' आटश्च ।६।१।९०।' इति वृद्धिः । हृदयं गच्छति या मूर्तिः शरीरमत्यन्तसौन्दर्यात् । 'गमश्च ।३।२।४७।' इति खच् । सा एवंविधा मूर्तिर्यस्याः सा त्वं भीममप्येतद्वनं सुभगम्भावुकं सर्वस्यैवाप्रियं प्रियं कुर्वाणा । असुभगं भूत्वा सुभगं भवतीति 'कर्तरि भुवः खिष्णुच्खुकञौ ।३।२।५७।' इति खुकञ् ॥६७॥

सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे ।
पुण्यकृच्चाटुकारस्ते किङ्करः सुरतेषु कः ॥ ६८ ॥

सुकृतमित्यादि—सुकृतं पुण्यकारिणं शोभनं कृतवानिति 'सुकर्मपापमन्त्रपुण्येषु कृञः।३।२।८९।' इति क्विप् । कं रहसि विजने त्वमुपतिष्ठसे उपश्लिष्यासि । संगतकरणे तङ् । प्रियकारी अनुकूलवर्तिनी सती । प्रियमनुकूलं करोतीति 'क्षेमप्रियमद्रेऽण् च ।३।२।४४।'इति अण् ।'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ।४।१।१५।' इति ङीप् । पुण्यकृत् कृतपुण्यः । तस्य पूर्ववत् क्विप् । चाटुकारः प्रियवाक्यकरः । 'न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ।३।२।२३।' इति टे प्रतिषिद्धेऽणेव भवति । ईदृशस्ते किङ्करः दासः । 'दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबालिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ।३।२।२१।' इति टः। 'किंयत्तद्बहुषु कृञोऽज्विधानम्' इति तत्स्त्रीविषये द्रष्टव्यम् । सुरतेषु शोभनरतेषु ।

'नपुसंके भावे क्तः ।३।३।११४।' । 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ।६।४।३७।' इत्यनुनासिकलोपः । अनेनोभयरुचिराख्याता ॥ ६८ ॥

परिपर्युदधे रूपमाद्युलोकाच्च दुर्लभम् ।
भावत्कं दृष्टवत्स्वेतदस्मास्वधि सुजीवितम् ॥ ६९ ॥

परीत्यादि—एतद्रूपं भावत्कं भवत्या इदमिति 'भवतष्ठक्छसौ ।४।२।११४।' इति ठक्छसौ । 'ठक्छसोश्चोपसंख्यानम्' इति पुंवद्भावः ।'इसुसुक्तान्तात्कः ।७।३।५१।' दुर्लभं परिपर्युदधेः 'अपपरी वर्जने ।१।४।८८।' इति कर्मप्रवचनीयसंज्ञायां द्वितीयायां प्राप्तायां 'पञ्चम्यपाङ्परिभिः ।२।३।१०' इति पञ्चमी । 'अपपरिबहिरञ्चवः पञ्चम्या ।२।१।१२।' इति विभाषासमासश्च । असमासपक्षे 'परेर्वर्जने ।८।१।५।' इति द्विर्वचनम् । उदधिं वर्जयित्वा चतुरुदधिमेखलायां भुवि दुर्लभमाद्युलोकाच्च स्वर्गलोकान्तं च यावत् दुर्लभमत्रापि पूर्ववत्पञ्चमी । तादृशं दृष्टवत्स्वस्मासु अधिसुजीवितमस्मद्विषये आधिक्येन सुजीवितम् । अहो वा सुजीवितमिति अहोशब्दार्थे अधिशब्दो वर्तते ॥ ६९ ॥

आपीतमधुका भृङ्गैः सुदिवेवाऽरविन्दिनी ।
सत्परिमललक्ष्मीका नाऽपुंस्काऽसीति मे मतिः ॥ ७० ॥

आपीतेत्यादि—परि सर्वतो मार्जनमिति परिमलः । कलत्रपश्चेत्यधिकृत्य 'मृजेष्टिलोपश्च' इति कलप्रत्यय औणादिकः।इह सुरतोपभोगविमर्दः परिमलोऽभिप्रेतः । तस्य लक्ष्मीः । तत्कृतत्वात् । सती विद्यमाना परिमलशोभा यस्याः 'उरःप्रभृतिभ्यः कप् ।५।४।१५१।' सा त्वमपुंस्का अविद्यमानभर्तृका नासीति मे मतिः । पूर्ववत्कप् । किमिव सुदिवेवारविन्दिनी पद्मिनी । शोभनं दिवा नीहाराद्यभावाद्दिवा दिवसं यस्याः । 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ।५।४।१२०।' इत्यच् । आपीतमधुका भृङ्गैः आपीतं मधु यस्याः । 'शेषाद्विभाषा ।५।४।१५४।' इति कप् । यथेयं सत्परिमललक्ष्मीका तथा त्वमपीति ॥७०॥

मिथ्यैव श्रीः श्रियम्मन्या श्रीमन्मन्यो मृषा हरिः ।
साक्षात्कृत्याऽभिमन्येऽहं त्वां हरन्तीं श्रियं श्रियः ॥ ७१ ॥

मिथ्यैवेत्यादि—श्रियः श्रियं रूपसम्पदं हरन्तीमभिभवन्तीं त्वां साक्षात्कृत्य प्रत्यक्षीकृत्य । विभाषा कृञीत्यनुवर्तमाने 'साक्षात्प्रभृतीनि च ।१।

४।७४।' इति गतिमासः । गतिसमासे ल्यबादेशः । अहमभिमन्ये किं मिथ्या श्रीः श्रियंमन्या अहमेव श्रीर्नान्येति मन्यमाना श्रीर्मिथ्या नैव श्रीः किन्तु त्वमेवेति । 'आत्ममाने खश् ।३।२।८३।' । 'दिवादिभ्यः श्यन् ।३।१।६९। 'इच एकाचोऽम्प्रत्ययवच्च ।६।३।६८।' इत्यम्भावः । तस्यामः प्रत्ययत्वान्मलोपाभावः । 'न विभक्तौ तुस्माः ।१।३।४।' इति वचनात् । अचीतीयङादेशः । क्विबन्ता धातुत्वं न जहतीति क्विब्वचीत्यादिना श्रयतेरौणादिकः क्विप् । हरिश्चात्मानं श्रीमन्तं मन्यमानो मृषा न श्रीमानित्यहमभिमन्ये ॥७१॥

नोदकण्ठिष्यताऽत्यर्थं त्वामैक्षिष्यत चेत् स्मरः ।
खेलायन्ननिशं नापि सजूःकृत्य रतिं वसेत् ॥ ७२ ॥

नोदेत्यादि—स्मरभार्या रतिः सापि रूपेण निकृष्टेति दर्शयति । चेत् यदि स्मरः त्वामैक्षिष्यत दृष्टवानभविष्यत् तदा अत्यर्थं नोदकण्ठिष्यत रतिं प्रति भृशमुत्कण्ठितो नाभविष्यत् । 'ईक्ष दर्शने' इति, 'कठि शोके' इति भौवादिकात् क्रियातिपत्तौ लृङ् । नापि रतिं स्वभार्यां सजूःकृत्य सहायीकृत्य वसेत्, अपि तु परित्यजेत् । अत्र क्रियातिपत्तिर्न विवक्षिता किन्तु हेतुहेतुमद्भावः । नापि रतिं सजूःकृत्य वसेत् यदि त्वामीक्षेतेति हेतुपदमभ्यूह्य हेतुमद्भावदर्शनात् । ऊर्यादिषु 'सजूः सहार्थः' इति वचनात् गतिसंज्ञा । खेलायन् अनिशं क्रीडन् सर्वदा । खेलाशब्दात् कण्ड्वादित्वात् यक् ॥७२॥

वल्गूयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का ।
कान्तिं नाऽभिमनायेत को वा स्थाणुसमोऽपि ते ॥ ७३ ॥

वल्गित्यादि—त्वां वल्गूयन्तीं शोभमानां विलोक्य न मन्तूयति स्त्रीह का । इह जगति का स्त्री न मन्तूयेत् कुप्येत् । सर्वदा कुप्यत्येव ईर्ष्यायुक्तत्वात् स्त्रीणाम् । असम्भावने लिङ् । वल्गुमन्तुशब्दाभ्यां कण्ड्वादित्वाद्यक् । को वा को नाम स्थाणुसमोऽपि काष्ठतुल्योऽपि गुणदोषानभिज्ञत्वात्ते तव कान्तिं विलोक्य नाभिमनायेत् पूर्वमदृष्टत्वादनभिमनाः सन् अभिमनाः सचेता न भवेत् । पूर्ववल्लिङ् । अभिमनसो भृशादित्वात्क्यङ् सलोपश्च । महादेवतुल्यो वा आस्तामन्यः सोऽपि तावदभिमनायेत ॥ ७३ ॥

दुःखायते जनः सर्वः स एवैकः सुखायते ।
यस्योत्सुकायमाना त्वं न प्रतीपायसेऽन्तिके ॥ ७४ ॥

दुःखेत्यादि—स एवैको जनः सुखायते सुखं वेदयते । यस्यान्तिके समीपे न त्वं प्रतीपायसे न प्रतिकूलवर्तिनी भवसि । उत्सुकायमाना सती । यस्य

पुनरन्तिके उत्सुकायमाना प्रतीपायसे स सर्वो जनः दुःखायते दुःखं वेदयते। सुखदुःखशब्दाभ्यां 'सुखादिभ्यः कर्तृवेदनायाम् ।३।१।१८।' इति क्यङ् उत्सुकप्रतीपशब्दाभ्यां भृशादित्वात् ॥ ७४ ॥

**कः पण्डितायमानस्त्वामादायाऽऽमिषसन्निभाम् ।**
**त्रस्यन् वैरायमाणेभ्यः शून्यमन्ववसद्वनम् ॥ ७५ ॥**

क इत्यादि—पण्डितायमानः अपण्डितः कथमपि पण्डितो भवन्। भृशादित्वात् क्यङ्। त्वामामिषसन्निभां सर्वजनप्रार्थनीयत्वात्। आदाय गृहीत्वा कः शून्यं वनमन्ववसत्। शून्ये वने अवसदित्यर्थः। 'उपान्वध्याङ्वसः ।१।४।४८।' इति कर्मसंज्ञा। कीदृशः। त्रस्यन् बिभ्यन्। वैरायमाणेभ्यः वैरं कुर्वाणेभ्यः। 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ।३।१।१७।' इति क्यङ्। 'भीत्रार्थानां भयहेतुः ।१।४।२५।' इत्यपादानसंज्ञा ॥ ७५ ॥

**ओजायमाना तस्याऽर्घ्यं प्रणीय जनकाऽऽत्मजा ।**
**उवाच दशमूर्धानं साऽऽदरा गद्गदं वचः ॥ ७६ ॥**

ओजेत्यादि—एवमुक्तवति रावणे जनकसुता दशमूर्धानमुवाच। दश मूर्धानः शिरांसि यस्य तस्यार्घ्यं प्रणीय दत्त्वा अतिथिरयमिति। सम्प्रदानस्य शेषत्वेन विवक्षितत्वात् षष्ठी। 'ओजायमाना ओज इवाचरन्ती 'कर्तुः क्यङ् सलोपश्च । ३ ।१।११।' 'ओजसोऽप्सरसो नित्यम्' इति वचनात्। मां माभिभूदित्यतितेजस्विनी भवन्तीत्यर्थः। किमुवाच वचो वक्ष्यमाणम्। सादरा सती। परिव्राजक इति। गद्गदमनभिव्यक्तमसंस्कृतत्वात् ॥ ७६ ॥

अथ चतुर्भिः कलापकम् ।

**महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्मम ।**
**पितुः प्रियंकरो भर्ता क्षेमकारस्तपस्विनाम् ॥ ७७ ॥**

महेत्यादि—यदुक्तं तेन कं रहस्युपतिष्ठस इति। अस्य प्रतिवचनं मम भर्ता महाकुलीनः महाकुलस्यापत्यमिति। 'महाकुलादञ्खञौ ।४।१।१४१।' इति खञ्। किमादित्यवंशसंभवः। किं सोमवंशसंभवो वा महाकुलस्यापत्यमित्याह। ऐक्ष्वाके वंशे इक्ष्वाकूणामयमैक्ष्वाकः। 'दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ।६।४।१७४।' इति टिलोपनिपातनम्। अन्ये तत्र सन्तीत्याह दाशरथिः दशरथस्यापत्यं यः स मम भर्ता। महाकुलीनः। कीदृशः। पितुः प्रियंकरः अनुकूलकारी। तपस्विनां च क्षेमकारः। 'क्षेमप्रियमद्रेऽण् च ।३।२।४४।' इति चकारात् खच् ॥ ७७ ॥

निहन्ता वैरकाराणां सतां बहुकरः सदा ।
पारश्वधिकरामस्य शक्तेरन्तकरो रणे ॥ ७८ ॥

निहन्तेत्यादि—वैरकाराणां शत्रूणाम् । वैरपूर्वात् कृञः 'न शब्दश्लोक- ।३।२।२३।' इत्यादिना टे प्रतिषिद्धे अणेव भवति।निहन्तेति तृजन्तस्य प्रयोगः। तत्र कर्मणि षष्ठी । सतां धर्मे स्थितानां बहुकरः बहुकार्यं करोतीति । 'दिवा-विभा-।३।२।२१।' इत्यादिना टः । स्त्रीविवक्षायां तु 'किंयत्तद्बहुषु' इत्यादिना करोतेरच् । आङ्परयोः 'खनिशृभ्यां डिच्' इत्यौणादिकः कुः । परशुशब्दः । तत्पर्याय एवाव्युत्पन्नः परश्वधशब्दः । स प्रहरणं यस्य 'परश्वधाट्ठञ्च ।४।४। ५८।' तस्य परशुरामस्य सम्बन्धिन्याः शक्तेः सामर्थ्यस्यान्तकरो विनाशयिता अन्तं करोतीति पूर्ववट्टः । रणे संग्रामे ॥ ७८ ॥

अध्वरेष्विष्टिनां पाता पूर्ती कर्मसु सर्वदा ।
पितुर्नियोगाद्राजत्वं हित्वा योऽभ्यागमद्वनम् ॥ ७९ ॥

अध्वरेष्वित्यादि—इष्टमेभिरिति इष्टिनो यज्वानः । 'इष्टादिभ्यश्च ।५।२। ८८।' इतीनिः । किमिष्टवताम्—अध्वरान् कर्माणि तत्र 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' इति कर्मणि सप्तमी । अध्वरेष्विष्टिनामिति कर्मणि षष्ठी कृद्योगे । पाता रक्षिता । पूर्ती कर्मसु सर्वदा । पृणोतेर्निष्ठायां 'उदोष्ठ्यपूर्वस्य ।७।१।१०२।' इत्युत्वम् । 'न ध्याख्यापृमूर्च्छिमदाम् ।८।२।५७।' इति निष्ठा-नत्वप्रतिषेधः । पूर्तमनेनेति पूर्ववदिनिः । किं पूर्तमिति सर्वदा श्राद्धादिकर्मणि । पूर्ववत्सप्तमी । स राजत्वं राज्यम् । हित्वा त्यक्त्वा । वनमभ्यागमन् । आभि-मुख्येन आगतवान् । लुङ् । 'ऌदितः' इति च्लेरङि रूपम् । पितुर्नियोगात् । नायोग्यत्वात् । स मे भर्तेति योज्यम् ॥ ७९ ॥

पतत्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने ।
यस्य बाणनिकृत्तानि श्रेणीभूतानि शेरते ॥ ८० ॥

पतत्रीत्यादि—यस्य बाणैर्निकृत्तानि छिन्नानि रक्षांसि भयदे भयवर्धके वने दीर्घनिद्रया शेरते[1] स्वपन्ति स मम भर्तेति योज्यम् । शेरत इति 'शीङो रुट् । ७ । १ । ६ ।' । कीदृशानि । अश्रेणयः श्रेणयो भूतानि । 'ऊर्यादि-च्विडाचश्च । १ । ४ । ६१ ।' इति च्व्यन्तानां 'कुगतिप्रादयः । २। २।१८। इति समासः । 'च्वौ च । ७ । ४ । २६ ।' इति दीर्घः । च्व्यर्थानां तु 'श्रेण्या-

---

१ शेरते दीर्घनिद्रालीढाभवन्तीत्यर्थः । म्रियन्ते, न पुनरवशिष्यन्त इत्यभिप्रायः ।

दयः कृतादिभिः । २ । १ । ५९ ।' इत्ययं विषयः । पतत्रिभिः क्रोष्टुभिश्च जुष्टानि परिवृतानि ॥ ८० ॥

दीव्यमानं शितान् बाणानस्यमानं महागदाः ।
निघ्नानं शात्रवान् रामं कथं त्वं नाऽवगच्छसि ॥ ८१ ॥

दीव्येत्यादि—शितांस्तीक्ष्णान् बाणान् । दीव्यमानं क्षेप्तुं शक्तं तच्छीलं वा । अनेकार्थत्वाद्धातूनां दिवेः 'ताच्छील्यवयोवचनशक्तिषु चानश् । ३ । २ । १२९ ।' इति चानश् । 'दिवादिभ्यः श्यन् ।३।१।६९।' इति श्यन् । यद्वा शत्रूणामिमे समूहास्तानिति भावः । 'तस्येदम् ।५ । ३ । १२० ।'इत्यण् । महागदाः अस्यमानं क्षेप्तुं शक्तं तच्छीलं वा । पूर्ववच्चानश् । शात्रवान् शत्रून् । 'प्रज्ञादिभ्यश्च । ५ । ४ । ३८ ।' इत्यण् । निघ्नानं हन्तुं शक्तं तच्छीलं वा । पूर्ववत् प्रत्ययः । हन्तेः 'गमहन- । ६ । ४ । ९८ ।' इत्यादिनोपधालोपः । 'हो हन्तेर्ञ्णिन्नेषु । ७ । ३ । ५४ ।' इति कुत्वम् । एवंविधं रामं कथं नावगच्छसि । तेन कर्मणा सर्वलोकविदितत्वादिति भावः ॥ ८१ ॥

भ्रातरि न्यस्य यातो मां मृगाविन् मृगयामसौ ।
एषितुं प्रेषितो यातो मया तस्याऽनुजो वनम् ॥ ८२ ॥

भ्रातरीत्यादि—यद्येवं कासावित्याह । असौ रामो मां भ्रातरि न्यस्य अर्पयित्वा मृगयामाखेटकं यातः । मृगेः स्वार्थिको णिच् । अदन्तत्वाच्च गुणो न भवति । तदन्तात् 'कृञः श च । ३ । ३ । १०० ।' इत्यधिकृत्य 'परिचर्यापरिसर्यामृगयाटाटयानामुपसंख्यानम्' इति भावे शप्रत्ययः, यक्, अल्लोपाभावश्च । ततः परम् 'अजाद्यतष्टाप् । ४ । १ । ४० । इति टाप् । मृगान्विध्यतीति मृगाविन् । 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ । ६ । ३ ।११६।' इति दीर्घः । क्वासौ भ्रातेति चेदाह । तस्यानुजः कनिष्ठो मया प्रेषितः सन् यातो वनम् । अनु पश्चाज्जायत इति । 'अन्येभ्योऽपि दृश्यते ।३ ।३।१३० ।' इति जनेर्डः । अनौ कर्मण्युक्तमकर्मण्यपि भवति । किमर्थम्प्रेषितुम् । तमेव ज्ञातुम् । 'इष गतौ' इत्यस्य तुमुनि परे इदं रूपम् । ज्ञानार्थत्वात् । प्रेषित इति तस्यैव रूपम् ॥ ८२ ॥

अथाऽऽयस्यन् कषायाऽक्षः स्यन्नस्वेदकणोल्बणः ।
संदर्शिताऽऽन्तराऽऽकूतस्तामवादीद्दशाननः ॥ ८३ ॥

अथेत्यादि—अथैवमुक्तो जानक्या दशाननस्तामवादीत् उक्तवान् । आयस्यन् क्रोधाविष्टत्वात् शरीरं खेदयन् । 'यसु प्रयत्ने' इति दैवादिकः पर-

---

१ शृगालैरित्यर्थः । 'शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ।' इत्यमरः । २ मृगावित्व्याधः । ३ सर्वेषां गत्यर्थानां ज्ञानार्थकताङ्गीकारात् ।

स्मैपदी । क्रोधादेव कषायाक्षः । 'बहुव्रीहौ सक्थ्यक्ष्णोःस्वाङ्गात्षच् । ५ । ४ । ११३ ।' इति षच् । स्यन्नैः सृतैः स्वेदकणैरुल्बणः उद्भटः व्याप्त इत्यर्थः । स्यन्देर्निष्ठायां रूपम् । संदर्शितमान्तरमन्तर्गतमाकूतमभिप्रायो येन स एवंविधः ॥ ८३ ॥

कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितम् ।
को नग्नमुषितप्रख्यं बहु मन्येत राघवम् ॥ ८४ ॥

कृत इत्यादि—कनिष्ठाया अपत्यं ज्येष्ठाया अपत्यमिति 'स्त्रीभ्यो ढक् । ४ । १ । १२० ।' 'कल्याण्यादीनामिनङ् । ४ । १ । १२६ ।' तयोः कल्याण्यादिषु पठितत्वात् । कनिष्ठासुतस्य भरतस्य कृते निमित्ते । ज्येष्ठायाः सुतः निरुपयोगितया विवासितः विसर्जितः । विपूर्वस्य वसतेर्हेतुमण्ण्यन्तस्य निष्ठायां रूपम् । तं नग्नमुषितप्रख्यं यथा कश्चिन्मुषितो नग्नो भवति तद्वद्भूतम् ।'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन । २ ।१। ४९ ।' इति समासः । तयोः पूर्वापरकालत्वात् । 'राजदन्तादिषु परम् । २ । २ । ३१।' इति परनिपातः । ईदृशं राघवं को बहु मन्येत, श्लाघेत नैवेत्यर्थः ॥ ८४ ॥

राक्षसान् वटुयज्ञेषु पिण्डीशूरान् निरस्तवान् ।
यद्यसौ कूपमाण्डूकि ! तवैतावति कः स्मयः ॥ ८५ ॥

राक्षसानित्यादि—अध्वरेष्विष्टिनामित्यस्योत्तरमाह । यद्यसौ राक्षसान् पिण्डीशूरान् पिण्डथामव शूरान् । भोजने एव शूरान् । 'पात्रेसमितादयश्च । २ ।१ । ४८ ।' इति समासः । वटुयज्ञेषु कुब्राह्मणयज्ञेषु । निरस्तवान् तिरस्कृतवान् । 'निष्पूर्वादसुक्षेपणे क्तवतुः । हे कूपमाण्डूकि कूपे माण्डूकीव पूर्ववत् 'पात्रेसमितादयश्च । २ । १ । ४ ।' इत्यनेन समासः । 'ढक् च मण्डूकात् । ४ । १ । ११९ ।' इति चकारादण् । 'तस्यापत्यम् । ४ । १ । ९२ ।' इत्यपत्येऽर्थे वाऽण् । एतावति स्वल्पे वस्तुनि तव कः स्मयः विस्मयः ? अपि तु न त्वया विस्मयः कर्त्तुं युक्त इत्यर्थः ॥ ८५ ॥

मत्पराक्रमे तु त्वया स्मयः कर्त्तुं युक्तः । तत्रापि न मया युक्तम् इति वक्तुमित्याह—

---

१ क्रोधे हि नेत्ररक्तिमा जायते तदतिशये पुनः कषायत्वम् । गाढो रक्तिमा कषाय इति प्रोच्यते । 'निर्यासेऽपि कषायः' इत्यमरः । यद्वाऽत्र कषशब्दः शोणवाचक एव 'कषायो रसभेदेऽपि नियसिऽपि विलेपने । अङ्गरागे च न स्त्री स्यात् सुरभौ लोहिते त्रिषु ।' इति मेदिनी ।

मत्पराक्रमसंक्षिप्तराज्यभोगपरिच्छदः ।
युक्तं ममैव किं वक्तुं दरिद्राति यथा हरिः ॥ ८६ ॥

मत्परेत्यादि—राज्यभोग एव परिच्छदो हस्त्यश्वादिरूपराजार्हमुपकरणम् स मत्पराक्रमेण सङ्क्षिप्तोऽपहृतो यस्य हरेरिन्द्रस्य स यथा दरिद्राति[1] निरर्थको भवति तन्ममैव किं वक्तुं युक्तमात्मगुणत्वादस्य लज्जाकरत्वात् दरिद्रातेरादादिकत्वाच्छपो लुक् ॥ ८६ ॥

निर्लङ्को विमदः स्वामी धनानां हृतपुष्पकः ।
संगच्छ पौंस्नि स्त्रैणं मां युवानं तरुणी शुभे ! ॥
अध्यास्तेऽन्तर्गिरं यस्मात् कस्तन्नावैति कारणम् ॥ ८७ ॥

निर्लङ्क इत्यादि—यस्मात्कारणात् धनानां स्वामी धनदः । अन्तर्गिरमध्यास्ते अध्यासितवान् । गिरेः कैलासस्यान्तर्मध्ये । विभक्त्यर्थे 'अव्ययं विभक्तिसमीप—२ । १ । ६ । इत्यादिनाऽव्ययीभावः । 'गिरेश्च सेनकस्य । ५।४। ११२ ।' इति टच् । 'अधि शीङ्स्थाऽऽसां कर्म्म । १ । ४ । ४६ ।' इति कर्मसंज्ञा । तेन 'तृतीयासप्तम्योर्बहुलम् । २ । ४ । ८४ ।' इत्यम्भावो न भवति । 'नाव्ययीभावादतोऽम् ।२।४।८३।' इत्यमव भवति । तत्कारणं मम पराक्रमं मां वा को नावैति न जानाति । कीदृशः । निर्लङ्कः लङ्काता निष्क्रान्तः । 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः । 'एकविभक्ति चापूर्वनिपाते । १ । २ । ४४ ।' इत्युपसर्जनसंज्ञायां ह्रस्वत्वम् । हृतपुष्पकः हृतम् आच्छिन्नं पुष्पकाख्यं विमानं यस्य । अत एव विमदोऽपेतदर्पः । लङ्का पुष्पकं च धनदस्यासीत् तदाच्छिद्य अनेन गृहीतमिति ॥ ८७ ॥

भिन्ननौक इव ध्यायन् मत्तो बिभ्यद् यमः स्वयम् ।
कृष्णिमानं दधानेन मुखेनाऽऽस्ते निरुद्यतिः ॥ ८८ ॥

भिन्नेत्यादि—स्वयं साक्षान्मत्तो बिभ्यत् त्रसन् यमो वैलक्षण्यात् मुखेन कृष्णिमानं कृष्णवर्णत्वम् ।'वर्णदृढादिभ्यश्च ।५।१।१२३।'इति चकारादिमनिच्। दधानेन धारयता ।'इत्थम्भूतलक्षणे २।३।२१'इति तृतीया । निरुद्यतिः निरुद्यमः आस्ते । उत्पूर्वाद्यमः'स्त्रियां क्तिन् ।३।३।९४।'इति भावे क्तिन् अनुनासिकलोपः ।

---

[1] निर्धनो भवति निर्धनवदकर्मण्यो भवतीति वक्तव्यम् ।

कीदृशः। ध्यायन् चिन्तयन् । 'किं ममापतितं यदहमनेन हृतसर्वस्वः' इति । भिन्ननौक इव विपन्नपोतवणिगिव । 'उरःप्रभृतिभ्यः कप् ।५।४।१५१' इति कप् ॥८८॥

एवं स्वपौरुषं प्रदर्श्य स्वीकर्तुमाह—

समुद्रोपत्यका हैमी पर्वताऽधित्यका पुरी ।
रत्नपारायणं नाम्ना लङ्केति मम मैथिलि ! ॥ ८९ ॥

समुद्रेत्यादि—हे मैथिलि लङ्केति नाम्ना प्रसिद्धा मम पुरी । कीदृशी । समुद्र एवोपत्यका आसन्ना भूमिः यस्याः सा समुद्रोपत्यका समुद्रस्य पर्वतोपत्यकात्वात् समुद्रोपत्यकेति समासे साधुत्वं न भवति । यतः संज्ञाधिकारात् पर्वतस्यासन्ने अधिरूढे उपाधिभ्यां त्यकन्प्रत्ययान्तयोरुपत्यकाशब्दयोः साधुत्वमुक्तम् । 'प्रतिषेधे त्यकन उपसंख्यानम्' इति 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ।७।३।४४।' इतीकारो न भवति । हैमी हेमविकारा । 'प्राणिरजतादिभ्योऽञ् ।४।३।१५४॥' पर्वताधित्यका । त्रिकूटपर्वतस्योपरि स्थिता । रत्नपारायणं यत्र रत्नानां पारमवसानमयन्ते बुध्यन्ते तत्परीक्षकाः । सर्वरत्नस्थानमित्यर्थः ॥ ८९ ॥

दुर्गावस्थित्यानभिभवनीयतां रत्नोपचयात्समृद्धतां कथयन् प्रलोभयति—

आवासे सिक्तसंमृष्टे गन्धैस्त्वं लिप्तवासिता ।
अर्पितोरुसुगन्धिस्रक् तस्यां वस मया सह ॥ ९० ॥

आवास इत्यादि—तस्यां पुर्याम् आवासे गृहे । आवसत्यस्मिन्निति अधिकरणे घञ् । मया सह त्वं वस । प्रार्थनायां लोट् । सिक्तसंमृष्टे पूर्वं सिक्ते पश्चात्संमृष्टे । गन्धैर्लिप्तवासिता सती पूर्वं लिप्ता चन्दनादिभिर्गन्धैः पश्चाद्वासिता धूपिता । संमृष्टादिभिः पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ।२।१।४९।' इति समासः । अर्पिता न्यस्ता उर्वी महती सुगन्धिस्रक् सुरभिमाला यस्यां सा त्वम् ॥ ९० ॥

किमिति त्वया सह वसामीति चेदाह—

१ वणिग् हि प्रायो नावि वस्तूनि निधाय देशान्तरे विक्रेतुं प्रयाति, इति तस्य सर्वस्वभूताया नावो नाशे यादृशी चिन्ता तादृशीं चिन्तामाधिगच्छन्नित्यस्युपमा । २ त्रीणि कूटानि शिखराणि यस्येति त्रिकूटनाम्ना प्रसिद्धः। एतेनास्य दुर्गमत्वमायतत्वमुन्नतत्वं च व्याख्यातम् । 'शृङ्गे परिगह्ने कूटाद्रि' इत्यमरः।३ रत्नानां पारायणं साकल्यमुत्पत्तिस्थानभूमिर्वा इति भावः । रत्नानां पारायणमिति विग्रहः । 'साकल्यासङ्गवचने पारायणपरायणे ।' इत्यमरः । यथोक्तव्याख्याने तु क्लीबत्वं दुःसम्भवम् ।

संगच्छ पौंस्नि ! स्त्रैणं मां युवानं तरुणी शुभे !
राघवः प्रोष्यपापीयान् जहीहि तम किञ्चनम् ॥ ९१ ॥

संगच्छेत्यादि-हे पौंस्नि पुमांसमर्हति ताद्धिता वा । अर्हार्थे हितार्थे वा 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।५।१।८७।' स्त्रीप्रत्यये 'नञ्स्नञी-कक्ख्युंस्तरुणतलुनानामुपसंख्यानम्' इति । मां युवानं तरुणं संगच्छ अङ्गीकुरु । गमेः प्रार्थनायां लोट् । 'इषुगमियमां छः । ७।३।७७।' इति छत्वम् । 'समो गम्यृच्छिभ्याम् ।१।३।२९।' इति तङ् न भवति सकर्मकत्वात् । विशेषतः स्त्रैणं स्त्रियै हितमर्हन्तं वा । पूर्ववत्प्रत्ययः । तरुणी युवती सती शुभे कल्याणि शोभत इति 'इगुपधज्ञाप्रीकिरः कः ३।१।१३५।' इति इगुपधलक्षणः कः । ममापि तादृशो भर्तास्तीति चे' दाह राघवः प्रोष्यपापीयानिति । पापशब्दात् 'विन्मतोर्लुक् ।५।३।६५।' इति ईयसुन् लुक्च मतुपः । प्रोष्यपापीयानिति 'मयूरव्यंसकादयश्च ।२।१।७२।' इति समासः । देशान्तरं यात्वा पापवत्तरः । स्वदेशत्यागादिना दुष्कृतपारिपाकभोक्तृत्वमिति यथोक्तम् । अत एव तमकिञ्चनं दरिद्रम् । न विद्यते किंचन यस्येति । 'सर्वनामाव्ययसंज्ञाया उपसर्जनप्रतिषेधः' इति वचनान्नाव्ययसंज्ञा । तेन न विभक्तिलोपः । जहीहि त्यज । ईत्वस्य 'जहातेश्च ।६।४।११६।' इति वा वचनाद्विकल्पः ॥ ९१ ॥

अश्नीतपिबतीयन्ती प्रसिता स्मरकर्मणि ।
वशेकृत्य दशग्रीवं मोदस्व वरमन्दिरे ॥ ९२ ॥

अश्नीतेत्यादि-अश्नीतपिबतेति 'मयूरव्यंसकादयश्च ।२।१।७२।' इति व्यंसकादित्वात् समासः। तत्र हि 'आख्यातमाख्यातेन क्रियासातत्ये' इति पठ्यते । सततमश्नीत पिबतेत्येवं भृत्यजनानादेष्टुमिच्छतीति 'सुप आत्मनः क्यच् ।३।१।८।' अश्नीतपिबतीयन्ती । प्रसिता स्मरकर्मणि सुरतव्यापारे आधिक्येन प्रवृत्ता कामव्यापारेऽनुरतेत्यर्थः 'प्रसितोत्सुकाभ्यां तृतीया च ।२।३।४४।' इति चकारात् सप्तमी । वशेकृत्यानुवर्तिनं दशग्रीवं कृत्वा ।६। 'साक्षात्प्रभृतीनि च ।१।४।७४।' इति गतिसंज्ञा । मोदस्व हर्षं जनय वरमन्दिरे श्रेष्ठगृहे सुरतोचितसर्वोपकरणसम्पन्ने इत्यर्थः । स्थिता ॥ ९२ ॥

---

१ एतेन पुरुषसम्बन्धमन्तरा तस्या अवस्थानायोग्यत्वं सूचितम् । २ एतेन स्वात्मनः स्त्रीभोगक्षमत्वं सम्भावितम् । ३ इदं परलोकदृष्ट्या रामस्य त्याज्यत्वं सूचयितुम् । ४ इदमैहलोकदृष्ट्या रामस्य त्याज्यत्वं सम्भावयितुम् । ५ अत्र परिकरोऽलङ्कारः स्पष्टः, 'अलङ्कारः परिकरः साभिप्राये विशेषणे' इत्यभियुक्तोक्तेः । ६ हृष्टा भवेत्यर्थ इति भावः, मोदेरकर्मकत्वात् । यद्वाऽन्तर्भावितणिजन्तत्वात्तथावचनम् । ७ अत्रापि परिकरोऽलङ्कारः ।

**मा स्म भूर्ग्राहिणी भीरु गन्तुमुत्साहिनी भव ।**
**उद्भासिनी च भूत्वा मे वक्षःसंमर्दिनी भव ॥ ९३ ॥**

**मा स्मेत्यादि**—हे भीरु मा स्म भूर्ग्राहिणी प्रतिकूला मा भूः । न यास्यामीत्यमुमर्थं गृह्णामीति कृत्वा । 'स्मोत्तरे लङ् च । ३ । ३ । १७६ ।' इति चकारात् लुङ् । गन्तुमुत्साहिनी उद्युक्ता भव । 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् । ३ । ४ । ६५ ।' इति तुमुन् । उत्साहिनीति सहोपपदत्वात् । ततश्चालंकृतशरीरत्वादुद्भासिनी शोभमाना भूत्वा नोऽस्माकं वक्षःसंमर्दिनी स्तनाभ्यामुरःस्थलस्य पीडिका भव । ग्रहोत्साहोद्भाससंमर्दानां ग्रहादिषु पठितत्वात् कर्तरि णिनिः । 'ऋन्नेभ्यो ङीप् ।४।१।५।' ॥ ९३ ॥

**तां प्रातिकूलिकीं मत्वा जिहीर्षुर्भीमविग्रहः ।**
**बाहूपपीडमाश्लिष्य जगाहे द्यां निशाचरः ॥ ९४ ॥**

**तामित्यादि**—यदैवमभिधीयमाना न प्रतिपन्ना तदा तां प्रातिकूलिकीं प्रतिकूलवर्तिनीं मत्वा ज्ञात्वा । 'ओजःसहोम्भसा वर्तते' इत्यधिकृत्य प्रतिकूलं वर्तत इत्यस्मिन्नर्थे 'तत्प्रत्यनुपूर्वमीपलोमकूलम् ।४।४।२८।' इति ठक् । जिहीर्षुः हर्तुमिच्छुः । भीमविग्रहः भीषणशरीरः । दृष्टराक्षसशरीररूपः । सुखेन ह्रियत इति बाहूपपीडमाश्लिष्य बाहुभिरुपपीड्य । 'सप्तम्यां चोपपीडरुधकर्षः ।३।४।४९।' इति चकारात् तृतीयान्त उपपदे णमुल् । जगाहे रथेनोत्पत्य द्यामाकाशं निशाचरो गाहते स्म । दिवशब्दसमानार्थो द्योशब्द औणादिकः । 'गमेर्डोः' इत्यौणादिके 'उणादयो बहुलम् ।३।३।१।' इति बहुलग्रहणाद् द्युतेरपि डोः' इति वचनात् डोः । 'औतोऽम्शसोः ।६।१।९३।' इत्यात्वम् । कालापिनस्तु दिवशब्दादेव व्युत्पादयितुं सूत्रमधीयते वाम्येति । दिवः अमि विकल्पेनाकारादेश इति ॥ ९४ ॥

**त्रस्यन्तीं तां समादाय यातो रात्रिंचराऽऽलयम् ।**
**तूष्णींभूय भयादासांचक्रिरे मृगपक्षिणः ॥ ९५ ॥**

---

१ 'सुन्दरि' इत्यर्थः । 'विशेषास्त्वङ्गना भीरुः कामिनी वामलोचनाः ।' २ अभिधीयमाना । उच्यमानेत्यर्थः । ३ न प्रतिपन्ना नानुकूलतां प्राप्तेत्यर्थः । ४ आकाशमेव पन्थानमकरोदिति भावः ।

त्रस्यन्तीमित्यादि--त्रस्यन्तीं च तां तद्रूपदर्शनात् समादाय गृहीत्वा यातो गच्छतो रावणात् । यातेः शतरि पञ्चम्या रूपम् । किं यातो रात्रिञ्चरालयं लङ्काम् । रात्रौ चरतीति 'चरेष्टः ।३।२।१६।' । 'रात्रेः कृति विभाषा ।६।३।७२।' इति मुम् । तस्माद्रावणाद्यद्भयं ततो भयात् तूष्णीम्भूय । 'तूष्णीमि भुवः ।३।४।६३।' इति 'क्त्वा च ।२।२।२२।' इति समासे ल्यबादेशः । आसांचक्रिरे आसिताः । 'दयायासश्च ।३।१।३७।' इत्याम् । मृगपक्षिणः मृगाश्च पक्षिणश्च । समानजातीयानामिति वचनादेकवद्भावोऽत्र न भवति ॥ ९५ ॥

**उच्चैरारस्यमानां तां कृपणां रामलक्ष्मणौ ।**
**जटायुः प्राप पक्षीन्द्रः परुषं रावणं वदन् ॥ ९६ ॥**

( इति प्रकीर्णकाण्डं प्रथमम् )

उच्चैरित्यादि--तां सीतां जटायुः पक्षीन्द्रः । रावणं परुषं निष्ठुरं वदन् प्राप प्राप्तवान् । कीदृशीम् । उच्चैरारस्यमानाम् । 'हा राम, हा लक्ष्मण' इति शब्दौ (द्वौ) उच्चैर्महता ध्वनिना पुनः पुना रसन्तीमित्यर्थः । रसेः शब्दकर्मकत्वात् धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३।१।२२' इति क्रियासमभिहारे यङ्, ततः शानच् । कृपणां दीनाम् ॥ ९६ ॥

( इति प्रकीर्णकाण्डम् )

## अतः परमधिकारकाण्डम् ।

### तत्र प्रथमं टाधिकारः—

इतः परमधिकारकाण्डमुच्यते । यत्र प्राधान्येनैकैकमधिकृत्य लक्षणं प्रदर्शितं तदधिकारकाण्डम् । शेषलक्षणेषु प्रकीर्णकमेव द्रष्टव्यम् । एवं च कृत्वा अन्तरान्तरा तत्सूचनार्थं प्रकीर्णकश्लोकाभिधानम् । अत्र च काण्डे निर्दिष्टसंज्ञकाश्चत्वारः परिच्छेदाः । तत्र प्रथमे आद्यं टप्रत्ययमधिकृत्योच्यते, सर्गार्थस्य विवक्षितस्यापरिसमाप्तत्वात्, तमेवाभिसन्धायाह—

**द्विषन् वने चराऽग्र्याणां त्वमादाय चरो वने ।**
**अग्रेसरो जघन्यानां मा भूः पूर्वसरो मम ॥ ९७ ॥**

द्विषन्नित्यादि—एवञ्च कृत्वा मिश्रक उच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात् । परुषं वदन् । कीदृशम् । हे द्विषन् मा भूः पूर्वसरो ममेति ।

१ अत्यन्तं विलपन्तीम् । 'रस शब्दे' इत्यस्येदं रूपम् । २ शत्रो इत्यर्थः । 'रिपौ वैरि...' इत्यमरः ।

ममाग्रतो भूत्वा मा गा इत्यर्थः । पूर्वं सरतीति 'पूर्वे कर्तरि । ३ । २ । १९ ।' इति टः । यतस्त्वमग्रेचरो जघन्यानाम् । अग्रेसरतीति 'पुरोऽग्रतोऽग्रेषुसर्त्तेः । ३ । २ । १८ ।' इति टः । जघन्य इति 'शाखादिभ्यो यः ।५।३।१०३।' इतीवार्थे यः । पापीनां प्रथमस्त्वम् । कुतः आदायचरो वने । आदाय चरतीति 'भिक्षासेनादायेषु च ।३।२।१७।' वने चरन्तीति वनेचराः । आधिकरणे चरेष्टः । तेषामग्र्याः प्रधाना ऋषयः । तानादाय चरसि भक्षयसि । कर्मणि षष्ठी ॥ ९७ ॥

यशस्करसमाचारं ख्यातं भुवि दयाकरम् ।
पितुर्वाक्यकरं रामं धिक् त्वां दुन्वन्तमत्रपम् ॥ ९८ ॥

यशस्करेत्यादि—रामं दुन्वन्तमुपतापयन्तमत्रपं निर्लज्जं धिक् त्वाम् । गर्हे । 'टुदु उपतापे' इत्यस्य सौवादिकस्य शतरि 'हुश्नुवोः सार्वधातुके । ६ । ४ । ८७ ।' इति यणादेशे रूपम् । कीदृशं रामम् । यशस्करसमाचारम् । समाचरणं समाचारः चरितं भावे घञ् । यशस्करोतीति यशस्करः । 'कृञो हेतुताच्छील्यानुलोम्येषु ।३।२।२०।' इति टः । 'त्रिसर्जनीयस्य सः ।८।३।३४।' । यशस्करणहेतुभूतः समाचारो यस्य । ख्यातं भुवि प्रसिद्धं दयाकरं करुणाकरणशीलम् । ताच्छील्ये टः । पितुर्वाक्यकरं पितुर्वचनानुष्ठाने अनुकूलम् । आनुलोम्ये टः ॥ ९८ ॥

अहमन्तकरो नूनं ध्वान्तस्येव दिवाकरः ।
तव राक्षस रामस्य नेयः कर्मकरोपमः ॥ ९९ ॥

अहमित्यादि—हे राक्षस, अहं तव नूनमवश्यमन्तकरः विनाशयिता । कीदृशः–रामस्य नेयो वश्यः । 'अचो यत् । ३ । १ ९७ ' कर्मकरोपमः भृतकतुल्यः । ' कर्मणि भृतौ । ३ । २ । २२' इति टः । ध्वान्तस्येव दिवाकरः । यथान्धकारस्यान्तकरो दिवाकरः सूर्यः तथा । अन्तकरदिवाकरौ । 'दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु । ३ । २ । २१ ।' इति टप्रत्ययान्तौ । एवमुक्त्वा खं गगनं पपातेति सम्बन्धः ॥ ९९ ॥

---

१ पामराणामित्यर्थः । 'जघन्योऽन्त्योऽधमेऽपि च ।' इत्यमरः । २ पापानां पापकारिणामित्यर्थः । अत्रार्शआदित्वादच् । ३ ' प्रभाकरदिवाकराः' इत्यमर.

सतामरुष्करं पक्षी वैरकारं नराऽशिनम् ।
हन्तुं कलहकारोऽसौ शब्दकारः पपात खम् ॥ १०० ॥

सतामित्यादि–एवमुक्त्वा असौ जटायुः पक्षी खमाकाशं पपात पतितः । किमर्थं नराशिनं नरान् मनुष्यानश्नाति भक्षयतीत्येवंशीलम्, राक्षसमित्यर्थः । 'सुप्यजातौ णिनिस्ताच्छील्ये । ३ । २ । ७८ ।' इति णिनिः । हन्तुं हनिष्यामीति । कीदृशं राक्षसं सतामरुष्करम् । धर्मे स्थितानां पीडाकरम् । अरुःशब्दः पीडोपलक्षणपरः । 'दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु । ३ । २ । २१ ।' इति टः । वैरकारं वैरकरणशीलम् कलहकारः पक्षी कलहयितुमनुकूलः । अनयोः ' न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु । ३ । २ । २३ ।' इति टे प्रतिषेधेऽणेव भवति । कर्मण्यणः प्राप्तिरस्तीति टाधिकार उदाहृतः । कियत्खं पपात । यावति दूरे शब्दपातस्तावत्खमिति ॥ १०० ॥

॥ टाधिकारः समाप्तः ॥

इतः परं पुनः प्रकीर्णकश्लोकानाह––

धुन्वन् सर्वपथीनं खे वितानं पक्षयोरसौ ।
मांसशोणितसंदर्शं तुण्डघातमयुध्यत ॥ १०१ ॥

धुन्वन्नित्यादि–असौ जटायुः पक्षी अयुध्यत युध्यते स्म । युधेर्देवादिकस्य लङि रूपम् । तुण्डघातमिति क्रियाविशेषणम् । तुण्डेन चञ्च्वा घातो हननं यस्मिन् युद्ध इति । 'करणे हनः । ३ । ४ । ३७ । इति न णमुल्, 'कषादिषु यथाविध्यनुप्रयोगः । ३ । ४ । ४६ ।' इति वचनात् अहिंसार्थत्वात्तदारम्भस्य यथा पादघातं भूमिं हन्तीति । 'हिंसार्थानां च समानकर्मकाणाम् । ३ । ४ । ४८ ।' इत्यनेनापि न भवति समानकर्मकताभावात् । अकर्मकत्वाद्युधेः । तेन भावे घञ् । धुन्वन् कम्पयन् खे आकाशे पक्षयोर्वितानम् । सर्वपथीनं 'सर्वः पन्था इति' 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ।२।१।४९।' इति समासः । 'ऋक्पूरब्धूःपथामानक्षे । ५ । ४ । ७४ ।' इति समासान्तोऽकारः । सर्वपथान् व्याप्नोतीति 'तत्सर्वादेः

---

१ (पीडाकरो व्रणकरोऽरुष्करो मर्म्मघातकः ।) इति गोपालः।२ 'अनन्तं सुरवर्त्म खम्' इत्यमरः । ३ अत्र परिकरः ।

'पध्यङ्क्कर्म यत्रपात्रं व्याप्नोति । ५ । २ । ७ ।' इति खः । मांसशोणितसन्दर्शी कात्स्न्येन मांसं शोणितं च दृष्ट्वा । 'कर्मणि दृशिविदोः साकल्ये । ३ ।४ । २९ ।' इति णमुल् । 'अमैवाव्ययेन । २ । २ । २० ।' इति समासः ॥ १०१ ॥

न बिभाय न जिह्राय न चक्राम न विव्यथे ।
आघ्नानो विध्यमानो वा रणान्निववृते न च ॥ १०२ ॥

नेत्यादि—पक्षी जटायुरिति प्रकृतम् । आघ्नानः आहत इति प्रहरन्नित्यर्थः । 'आङो यमहनः ।१।३।२०।' इति तङ् । अत एव शानच् । न बिभाय न भीतः। तस्मान्न जिह्राय न लज्जितः । सम्यङ् मया न हत इति न चक्राम न क्रान्तः। न विव्यथे । 'व्यथो लिटि । ७ । ४ । ६८ ।' इति सम्प्रसारणम् । जितश्रमत्वात् । विध्यमानो वा । वाशब्दश्चार्थे । परेण हन्यमानश्च न विव्यथे न पीडां भेजे । सत्त्वाधिकत्वात् । रणाच्च न निववृते न निवृत्तः, अभग्नोत्साहत्वात् ॥ १०२ ॥

पिशाचमुखधौरेयं सच्छत्रकवचं रथम् ।
युधि कद्रथवद्भीमं बभञ्ज ध्वजशालिनम् ॥ १०३ ॥

पिशाचेत्यादि—युधि सङ्ग्रामे पक्षी रथं बभञ्ज भग्नवान् । तस्य पुष्पकादन्यत्वात् । तथा हि कद्रथवत् कुत्सितरथमिव ।'रथवदयोश्च । ६ । ३ । १०२ ।' इति कदादेशः । धुरं वहन्ति धौरेया अश्वाः । 'धुरो यड्ढकौ । ४ । ४ । ७७ ।' इति ढक् । पिशाचस्येव मुखं येषां ते धौरेया यत्र रथे तं पिशाचमुखधौरेयम् । सच्छोभनं छत्रं कवचं च यस्मिन् । तं भीमं भयानकं तथा धुर्यत्वात् । ध्वजशालिनं ध्वजवन्तम् । शालिन्शब्दः किन्प्रत्ययान्तस्तद्वन्तमाह । अन्यस्त्वाह । ध्वजेन शालितुं श्लाघयितुं शलिमस्येति णिनिः । अनेकार्थत्वाद्धातूनामिति ॥ एते प्रकीर्णकाः ॥ १०३ ॥

अतः परं आमधिकारः ।

इतः प्रभृत्याममधिकृत्याह—

संत्रासयाञ्चकाराऽरिं सुरान् पिप्राय पश्यतः ।
स त्याजयाञ्चकाराऽथ सीतां विंशतिबाहुना ॥ १०४ ॥

---

१ अत्र स्वभावोक्तिरलङ्कारः । २ अत्र दीपकम् । ३ 'धुर्वहे धुर्यधौरेयधुरीणाः सधुरन्धराः ।' इत्यमरः । ४ अत्र व्यधिकरणो बहुव्रीहिः । ५ भीमं भयङ्करमित्यर्थः । 'घोरं भीमं भयानकम्' इत्यमरः । ६ शालयितुमिति वाच्यम् ।

सन्त्रासयामित्यादि—अथैतस्मिन् युद्धप्रस्तावे स पक्षी सीतां विंशतिबाहुना रावणेन त्याजयांचकार त्याजितवान् । गत्यादिषु त्यजेरसंग्रहात् तृतीयैव भवति । कस्मात्त्याजितवानित्याह । सन्त्रासयाञ्चकारारिं यस्मादरिं शत्रुं रावणं त्रासितवान् । अकर्मकत्वात् त्रासेर्ण्यन्तावस्थायामरेः कर्मत्वम् । आभ्यां हेतुमण्ण्यन्ताभ्याम् 'कास्प्रत्ययादाममन्त्रणे लिटि । ३ । १ । ३५ ।' इत्याम् । आमोऽमित्वमदन्तत्वात् । 'आमः । २ । ४ । ८१ ।' इति लुक् । 'अयामन्ताल्वाय्येत्न्विष्णुषु ६ । ४ । ५५ ।' इत्ययादेशः । आमकारान्तस्य कृत्संज्ञायां प्रातिपदिकत्वे प्रथमैकवचनम् । तस्य 'अव्ययादाप्सुपः । २ । ४ । ८२ ।' इति लुक् । स्वरादिषु 'अम् आम्' इति पठितत्वादव्ययत्वम् । आमन्तस्यानभिव्यक्तपदार्थत्वात् 'कृञ्चानुप्रयुज्यते लिटि ३।१।४०।' इति लिट्परस्य कृञोऽनुप्रयोगः । 'कर्त्रभिप्रायाभावाभावेऽनुप्रयोगे तङ् न भवति । सुरांश्च पश्यतो युद्धं जटायुः पिप्राय प्रीणितवान । शत्रुत्रासनं सीतात्याजनं च देवानां प्रीतेः कारणम् ॥ १०४ ॥

असीतो रावणः कासांचक्रे शस्त्रैर्निराकुलः ।
भूयस्तं वेभिदाञ्चक्रे नखतुण्डाऽऽयुधः खगः ॥ १०५ ॥

असीत इत्यादि—असीतः परित्यक्तसीतो रावणः आकाशस्थः कासाञ्चक्रे कुत्सितमभिहितवान् । एह्येहीति विहगाधिपेति । 'कासृ शब्दकुत्सायाम्' इत्यनुदात्तेत् । 'कास् प्रत्ययादाममन्त्रणे लिटि । ३ । १ । ३५ ।' इत्याम् । शस्त्रैः इत्थम्भूते तृतीया । निराकुलः पूर्वं बाहुभिः सीताप्रग्रहणे व्याकुलत्वात् । भूयः पुनरपि । खगः पक्षी । डप्रकरणे 'अन्येष्वपि दृश्यते । ३ । २ । १०१ ।' इति वचनात् गमेर्डः । तं निशाचरं रावणं राक्षसमित्यर्थः । वेभिदाञ्चक्रे । अत्यर्थं भिन्नवान् । वेभिद्यतेर्यङन्तादाम् । नखतुण्डान्येवायुधानि यस्य ॥ १०५ ॥

हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परम् ।
न वा पलायाञ्चक्रे विर्दयाञ्चक्रे न राक्षसः ॥ १०६ ॥

हन्तुमित्यादि—तौ पक्षिरावणौ जटायू रावणश्चेत्यर्थः । क्रोधवशात् क्रोधाधीनतया उद्रिक्तक्रोधतयेत्यर्थः परस्परमन्योन्यं हन्तुमीहाञ्चक्राते चेष्टां कृतवन्तौ । 'इजादेश्च गुरुमतोऽनृच्छः ।३।१।३६।' इत्याम् । विः पक्षी ।

---

१ 'खगाऽर्कविहगाः खगाः ।' इत्यमरः । २ पतत्रिपत्रिशकुन्तपतत्त्रिरथाऽण्डजाः । नगौकोवाजिविकिरविविष्किरपतत्रयः ॥' इत्यमरः ।

जनिघसिभ्यामित्याधिकृत्य 'वेञो डित्' इत्यौणादिक इक् । न वा नैव । वाशब्द एवार्थे । पलायाञ्चक्रे पलायितः । 'उपसर्गस्यायतौ । ८।२।१९।' इति लत्वम् । राक्षसश्च न दयांचक्रे न दयते स्म । पक्षिणं खल्वहं कथं व्यापादयामीत्यर्थः । किंतु निष्ठुरतयाऽऽहन्तुमुद्यत एवाभूदिति भावः । उभयत्रापि 'दयायासश्च ।३।१।३७।' इत्याम् ॥ १०६ ॥

उपासांचक्रिरे द्रष्टुं देवगन्धर्वकिन्नराः ।
छलेन पक्षौ लोलूयाञ्चक्रे क्रव्यात् पतत्रिणः ॥ १०७ ॥

उपेत्यादि—देवगन्धर्वकिन्नरा द्रष्टुं 'युद्धं द्रक्ष्याम' इति उपासाञ्चक्रिरे उपगताः । पूर्ववदाम् । क्रव्यात् रावणः । क्रव्यं मांसमत्तीति क्रव्यात् । 'अदोऽनन्ने ।३।२।६८।' इति विट् । पतत्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं लूनवान् । यङ्प्रत्ययान्तत्वादाम् । छलेन मायया प्रसह्य जेतुं न शक्यत इति । भल्लेनेति पाठान्तरम् ॥ १०७ ॥

प्रलुठितमवनौ विलोक्य कृत्तं दशवदनः खचरोत्तमं प्रहृष्यन् ।
रथवरमधिरुह्य भीमधुर्यं स्वपुरमगात् परिगृह्य रामकान्ताम् ॥ १०८ ॥

प्रलुठितमित्यादि—खचराः पाक्षिणः । खे चरन्तीति अधिकरणे 'चरेष्टः ।३।२।१६।' तेषामुत्तमं जटायुं कृत्तं छिन्नं लूनपक्षत्वात् । अवनौ भुवि प्रलुठितं विलोक्य प्रहृष्यन् हर्षं प्राप्नुवन् निवृत्तो विघ्नकारीति दशाननो रथवरं स्मरणात् प्राप्तं पुष्पकाख्यमारुह्य भीमधुर्यं रामकान्तां सीतां तथैव परिगृह्य स्वपुरमगात् गतवान् ॥ १०८ ॥

इति श्रीजयमङ्गलसूरिविरचितया जयमङ्गलाऽऽख्यया व्याख्यया समलंकृते श्रीभट्टिकाव्ये द्वितीयेऽधिकारकाण्डे लक्षणरूपे पञ्चमः परिच्छेदः लक्ष्यरूपे कथानके सीताहरणः श्रीरामप्रवासो नाम पञ्चमः सर्गश्च ।

---

१ 'राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः ।' इत्यमरः । २ लुञ् छेदने इत्यतो लिटि 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३।१।२२।' इति भृशार्थे यङ् । ३ तेषूत्तममिति वाच्यम् 'न निर्धारणे २।२।१।' इति निर्धारणार्थायाः षष्ठ्याः समासनिषेधात् । ४ 'कृत्तं दातं दितं छितं वृक्णम्' इत्यमरः ।५ 'क्ष्माऽवनिर्मेदिनी मही' इत्यमरः । ६ लङ्कापुरीमित्यर्थः ।

## षष्ठः सर्गः ।

अत्राधिकारस्यापरिसमाप्तत्वात्तमेवाममधिकृत्याह—

**ओषांचकार कामाग्निर्दशवक्त्रमहर्निशम् ।**
**विदांचकार वैदेही रामादन्यनिरुत्सुकाम् ॥ १ ॥**

ओषांचकारेत्यादि—अथशब्दो वक्ष्यमाणतृतीयश्लोके यः सोऽत्र द्रष्टव्यः । अथ तस्मिन् सीतापरिग्रहे जाते कामाग्निः कामोऽग्निरिव दशवक्त्रं दशाननमोषांचकार ददाह । 'उष दाहे' । 'उषविदजागृभ्योऽन्यतरस्याम्' ।३।१।३८।' इत्याम् । अहर्निशं अहश्च निशा च । 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इत्येकवद्भावात् । 'कालाध्वनोरत्यन्तसंयोगे । २।३।५' इत्यत्यन्तसंयोगे द्वितीया । अह्नो नकारस्य 'रोऽसुपि । ८ । २ । ६९ ।' इति रत्वम् । कस्माद्ददाह इत्याह । रावणो वैदेहीमन्यनिरुत्सुकां रामादन्यस्मिन् सर्वत्र निरभिलाषां विदांचकार अगुणत्वं विदेस्तथेति विदेरकारान्तनिपातनात् गुणाभावः ॥ १ ॥

**प्रजागरांचकारारेरीहास्वनिशमादरात् ।**
**प्रबिभयांचकाराऽसौ काकुत्स्थादभिशङ्कितः ॥ २ ॥**

प्रजागरांचकारेत्यादि—अरे रामस्य ईहासु चेष्टासु । 'गुरोश्च हलः । ३ । ३।१०३।' इत्यकारः । आदरादादरेण प्रजागरांचकार जागरितवान् । शत्रुचिकीर्षितज्ञानपरो बभूवेत्यर्थः । पूर्ववदाम् । अनिशम् अविच्छेदेन । अनिशमिति निशाक्रियाविच्छेदो नास्ति यस्मिन् प्रजागरण इति । निशेति क्रियाविच्छेदोपलक्षणम् । प्रायेण हि निशायां क्रियाणामप्रवर्तनम् । किमिति जागरितवानित्याह । काकुत्स्थादसौ प्रबिभयांचकार प्रभीतवान् । 'भीह्रीभृहुवां श्लुवच्च ।३।१।३९।' इत्याम् । श्लुवत्कार्ये धातोर्गुणायादेशौ । अभिशङ्कितः किमयं करिष्यतीति ॥ २ ॥

**न जिह्रयांचकाराऽथ सीतामभ्यर्थ्य तर्जितः ।**
**नाप्यूर्जां बिभरामास वैदेह्यां प्रसितो भृशम् ॥ ३ ॥**

न जिह्रयांचकारेत्यादि—सीतामभ्यर्थ्य याचित्वा न जिह्रयांचकार न लज्जितः । तर्जितः भर्त्सितोऽपि तयैवेत्यर्थात् । नाप्यूर्जां बलं बिभरामास

---

१ न निशालक्षणया निद्रेतरतो विरामो यत्र कर्म्मणि तद् यथा तथेत्यर्थः ।

धारितवान् । 'कृञ्चानुप्रयुज्यते लिटि ।३।१।४०।' इति प्रत्याहारग्रहणादस्तेरप्यनुप्रयोगः । ह्रीधातोर्गुणायादेशौ । 'डुभृञ् धारणपोषणयोः' उभयत्रापि पूर्ववदाम् श्लुवच्च । कथं न धारितवान् इत्याह । वैदेह्यां प्रसितः[1] प्रसक्तः । भृशमत्यर्थम् ॥ ३ ॥

**विदांकुर्वन्तु रामस्य वृत्तमित्यवदत् स्वकान्।**
**रक्षांसि रक्षितुं सीतामाशिषच्च प्रयत्नवान् ॥ ४ ॥**

विदांकुर्वन्त्वित्यादि—स्वकानात्मीयान् शुकसारणादीन्[2] अवददुक्तवान् । किमित्याह—रामस्य वृत्तमनुष्ठितं किं तस्येहागन्तुमुद्यमोऽस्ति न वेति विदांकुर्वन्तु[3] । 'विदांकुर्वन्त्वित्यन्यतरस्याम् ।३।१।४१।' इति निपातितम् । सीतां रक्षितुं[4] रक्षांसि आशिषदादिष्टवान् । शासः 'सर्तिशास्त्यर्तिभ्यश्च ।३।१।५६।' इत्यङ् । 'शास इदङ्हलोः ।६।४।३४।' इति शासेरुपधाया इत्वं 'शासिवसिघसीनां च ।८।३।६०।' इति षत्वम् । प्रयत्नवान् प्रयत्नपरः । आमधिकारो गतः ॥ ४ ॥

अथ प्रकीर्णश्लोकानाह—

**रामोऽपि हतमारीचो निवर्त्स्यन् खरनादिनः ।**
**क्रोष्टून् समशृणोत् क्रूरान् रसतोऽशुभशंसिनः ॥ ५ ॥**

राम इत्यादि—हतमारीचो रामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् । वलादिलक्षण इटि प्राप्ते 'न वृद्भ्यश्चतुर्भ्यः ।७।२।५९।' इतीण्निषेधः । क्रोष्टून् शृगालान् । रसतः शब्दायमानान् । समशृणोत् संश्रुतवान् । सकर्मकत्वात् 'अर्त्तिश्रुदृशिभ्यश्चेतिवक्तव्यम् ।' इत्यात्मनेपदं न भवति । लङि रूपम् । क्रूरान् भीषणान् । यतः खरनादिनः खरवन्नदन्ति । 'कर्तर्युपमाने ।३।२।७९।' इति णिनिः । अशुभशंसिनः अनिष्टसूचनशीलान् ॥ ५ ॥

**आशङ्कमानो वैदेहीं खादितां निहतां मृताम् ।**
**स शत्रुघ्नस्य सोदर्यं दूरादायान्तमैक्षत ॥ ६ ॥**

आशङ्कमान इत्यादि—तथाविधाशुभश्रवणादाशङ्कमानो वितर्कयन् वैदेहीं किं खादितां निशाचरादिना । ततः निहतां त्यक्तप्राणाम् । अ[illegible] स्वयमेवा-

---

१ 'तत्परे प्रसितासक्तौ' इत्यमरः। २ राक्षसानिति शेषः। ३ विदाङ्कुर्वन्तु जानन्तु गुप्ततया ज्ञात्वा मां बोधयन्तु चेति भावः। ४ कथञ्चिद्रामचारैश्चोरिता न स्यादिति मयि च यथाऽनुरक्ता स्यादिति समाहिततयोद्यम्य चेष्टितुमिति भावः।

युःक्षयान्मृतां वा । स रामः शत्रुघ्नस्य सोदर्यं भ्रातरम् । ' सोदराद्यः ।४।४।१०९।' आयान्तमागच्छन्तमारादैक्षत दृष्टवान् । ईक्षेर्लङि रूपम् ॥ ६ ॥

सीतां सौमित्रिणा त्यक्तां सध्रीचीं त्रस्नुमेकिकाम् ।
विज्ञायाऽमंस्त काकुत्स्थः क्षये क्षेमं सुदुर्लभम् ॥ ७ ॥

सीतामित्यादि—सौमित्रेरेकाकिनो दृष्टत्वान्नियतमनेन त्यक्तेति तां विज्ञाय ज्ञात्वा काकुत्स्थो रामः । क्षये गृहे । क्षीयतेऽस्मिन्निति अधिकरणेऽच् । क्षेमं कल्याणम् । सुदुर्लभं सुदुःखेन लभ्यत इति । 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।३।३।१२६।' इति खल् । अमंस्त ज्ञातवान् । कथं क्षये क्षेमं सुदुर्लभमिति आह-सध्रीचीं सहचारिणीं न क्वचिदेकाकिनीं तिष्ठन्तीम् । सहाञ्चतीति 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३ । २ । ५९ ।' इति क्विन् । 'सहस्य सध्रिः ।६।३।९५।' इत्यञ्चतौ वप्रत्यये सहस्य सध्र्यादेशः । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । 'अचः ।६।४।१३८।' इत्यकारलोपः । 'चौ ।६।३।१३८।' इति दीर्घः । कुतः त्रस्नुं त्रसनशीलाम् । क्रियाशब्दत्वाद्दृङ् न भवति । एकिकामेकाकिनीम् 'असहायामित्यर्थः । लक्ष्मणेनापि त्यक्तत्वात् । 'एकादाकिनिच्चासहाये ।५।३।५२।' इति चकारात्कन् । 'प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः ।७।३।४४।' इतीत्वम् ॥ ७ ॥

( एते प्रकीर्णकाः )

## अतः परं दुहादिः,

इतो द्विकर्माधिकारः—

सोऽपृच्छल्लक्ष्मणं सीतां याचमानः शिवं सुरान् ।
रामं यथास्थितं सर्वं भ्राता ब्रूते स्म विह्वलः ॥ ८ ॥

सोऽपृच्छदित्यादि—'अकथितं च ।१।४।५१।' इत्यत्र दुहियाचीत्यादिश्लोकस्थान् धातून् प्रयुङ्क्ते कविः । तत्र रामोऽपृच्छत् सीतामिति प्रधानं कर्म लक्ष्मणमित्यकथितं कर्म । याचमानः प्रार्थयमानः । शिवं कल्याणम् ।

---

१ लक्ष्मणमित्यर्थः 'समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ।' इत्यमरः । २ "निलयापचयौ क्षयौ ।' इत्यमरः । ३ 'दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् । कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥' इत्युक्तानित्यर्थः । ४ 'श्वः-श्रेयसं शिवं भद्रम्' इत्यमरः ।

अर्थात् सीतायाः शिवं प्रधानं कर्म सुग्न इवान् इत्यकथितं कर्म । भ्राता लक्ष्मणः सर्वं यथावत् स्थितं ब्रूते स्म उक्तवान् । सर्वमिति प्रधानं कर्म रामामित्यकथितम् ॥ ८ ॥

संदृश्य शरणं शून्यं भिक्षमाणो वनं प्रियाम् ।
प्राणान् दुहन्निव ऽऽत्मानं शोकं चित्तमवारुधत् ॥ ९ ॥

संदृश्येत्यादि—रामः शरणं गृहं शून्यं संदृश्य दृष्ट्वा । शोकं चित्तमवारुधत् चित्तं शोकं प्रावेशयत् । अन्तः शोकाकुलोऽभूदित्यर्थः । कीदृशः प्रियां जानकीं वनं भिक्षमाणः 'यदि अश्वत्थ त्वया सीता दृष्टा तर्हि बोधय' यदि गोपिता तर्हि देहि, इत्येवं प्रातवृक्षं याचमान इत्यर्थः । प्राणान् दुहन्निव त्यजन्निव । प्राणानिति प्रधानं कर्म आत्मानमित्यकथितम् । आत्मनः प्राणान् त्यजन्निव ॥ ९ ॥

गता स्यादवचिन्वाना कुसुमान्याश्रमद्रुमान् ।
आ यत्र तापसान् धर्मं सुतीक्ष्णः शास्ति तत्र सा ॥ १० ॥

गतेत्यादि—यत्र यस्मिंस्तपोवने सुतीक्ष्णो नाम ऋषिः धर्मं शास्ति शिक्षयति । धर्ममिति प्रधानं कर्म, तापसानित्यकथितम् । तत्र तपोवने गता स्यात् । सम्भावने लिङ् । 'आ' इति आकारो निपातः स्मरणे । किं कुर्वती कुसुमान्यवचिन्वाना । कुसुमानीति प्रधानं कर्म आश्रमद्रुमानित्यकथितम् । अवचिन्वानेति चिनोतेः कर्त्रभिप्राये तङ् । दुह्यादिदण्डको गतः ॥ १० ॥

इति दुहादिर्द्विकर्मकः ।

प्रकीर्णकानाह—

आः कष्टं बत ही चित्रं हूं मातर्दैवतानि धिक् ।
हा पितः ! क्वाऽसि हे सुभ्रु ! बह्वेवं विललाप सः ॥ ११ ॥

आः कष्टमित्यादि—शोकेनाक्रान्तमना विलपन्नाह—आः पीडायाम् । पितृवियोगपीडितः आः इत्याह । अस्मद्वियोगेन पिता प्राणांस्त्यक्तवानित्यभिप्रायः । कष्टमित्याह । कष्टं कृच्छ्रम् । भर्तृमरणादस्मद्वियोगाच्च मातुः कावस्थेत्यभिप्राये-

---

१ 'शरणं गृहरक्षित्रोः' इत्यमरः । २ जनकनन्दिन्या रहितमिति भावः । ३ लाक्षणिकोऽयमर्थः । ४ अत्र सर्वत्रेवेतिपदमुपेक्षायाम् । ५ सुतीक्ष्णाश्रम इति वक्तव्यम् । ६ 'आस्तु स्यात्कोपपीडयोः' इत्यमरोक्तेः ।

णाह बत इति । बतशब्दः खेदे[1]। सौमित्रिरपि[2] तया सीतया अन्यादृशःसम्भावित इति विस्मितो हीत्याह । हीशब्दो[3] विस्मये । यदि नाम स्त्रिया मूर्खतया तथाभिहितं सौमित्रिणा विदुषा कथं तादृशः शापो दत्त इत्यभिप्रायेणाह चित्रमिति । चित्रमाश्चर्ये । यदेवंविधोऽपि स्खलतीति । सर्वमेव दुर्जातं कैकेयीप्रभवमिति क्रुध्यन् हूं मातरित्याह । हूंशब्दः क्रोधे[4] । अथवा सर्वमेतत् दैवतचेष्टितं न ममानुष्ठितमित्यभिप्रायेणाह धिग्दैवतानीति । धिक् कुत्सायाम् । प्राणांस्त्यक्तवन्तमपि पितरं पुनरहं द्रष्टास्मीत्यभिप्रायेणाह । हा पितः[5] क्व द्रष्टव्योऽसीति । हा शोके । हे सुभ्रु सुभ्रूः( सीते ) क्व गतासीति । भ्रूशब्दात् 'अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्' इत्यूङ् । उवर्णान्तमात्रस्य विधानाद्बहुव्रीहिः । उपसर्जनत्वं च । पुनः स्त्रियामूङ् । 'अन्तादिवच्च ।६।१।८५।' इति पूर्वं प्रत्यन्तवत्त्वात् प्रातिपदिकत्वम् । अतः सम्बुद्धौ ह्रस्वत्वम् । विललाप स एवं कृत्वा बह्वनेकप्रकारं विलापं कृतवान् ॥ ११ ॥

**इहाऽऽसिष्टाऽशयिष्टेह सा सखेलमितोऽगमत् ।**
**अग्लासीत् संस्मरन्नित्थं मैथिल्या भरताऽग्रजः ॥ १२ ॥**

इहत्यादि—इह अस्मिन् प्रदेशे आसिष्ट[6] उपविष्टा । 'इदमो हः ।५।३।११।' । 'इदम इश् ।५।३।३।' इह । अशयिष्ट शयितवती । आसेः शीङश्च लुङ् । सखेलं[7] सलीलम् । इतः प्रदेशादगमत् गतवती । इत्थमेवंप्रकारम् । मैथिल्याः स्मरन् । 'अधीगर्थदयेशां कर्म्मणि ।२।३।५२।' इति कर्मणि षष्ठी । भरताग्रजो रामोऽग्लासीत् ग्लानिं गतः । ग्लायतेर्लुङ् । 'यमरमनमातां सक् च ।७।२।७३।' इति सगिटौ ॥ १२ ॥

**इदं नक्तंतनं दाम पौष्पमेतद्दिवातनम् ।**
**शुचेवोद्बध्य शाखायां प्रग्लायति तयाविना ॥ १३ ॥**

इदमित्यादि—नक्तंतनं निशाभवं इदं दाम पुष्पमाला पुनर्दिवातनं दिवसभवम् । 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ।४।३।२३।' इति ट्युट्युलौ तुट् च । पौष्पं पुष्पाणामिति तस्येदमित्यण् । शुचेव शोकेनेव । 'सम्पदादिभ्यः क्विप्' इति क्विप् । शाखायां वस्त्रादिनोद्बध्य ।

---

१ 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत' इत्यमरः । २ सौमित्रिः लक्ष्मणः । ३ 'अहो ही च विस्मये ।' इत्यमरोक्तेः । ४ हूं हुंनाहरचेटिके' इत्यादिप्रयोगदर्शनात् । ५ 'दशरथेत्यर्थः । ६ 'आस उपवेशने' लुङ् । ७ 'परिहासरूपखेलापूर्वमित्यर्थः । इदंक्रिया विशेषणम् ।

आत्मानमित्यर्थात् । प्रग्लायति प्रकर्षेण ग्लानिं गच्छति । ग्लायतेः शित्यायादेशः । शाखायां प्रलम्बमानं ग्लानिं गच्छन्तं वीक्ष्येदमुत्प्रेक्षितम् । कुतः शोकात्तया विना सीताविच्छेदेन ॥ १३ ॥

ऐक्षिष्महि मुहुः सुप्तां यां मृताऽऽशङ्कया वयम् ।
अकाले दुर्मरमहो यज्जीवामस्तया विना ॥ १४ ॥

ऐक्षिष्महीत्यादि—यां वयमैक्षिष्महि ईक्षितवन्तः । ईक्षेः सेटो लुङ् । मुहुः सुप्तां अविच्छिन्ननिद्रत्वात् । मृताशङ्कयेति अनिष्टशंसित्वात् प्रियजनहृदयस्य । इदानीं तया सीतया विना अहो वयं यज्जीवामस्तदकाले दुर्मरणमिति विललाप । जीवितस्यापूर्णकाले । दुःखेन मरणमिति भावे खल् ॥ १४ ॥

अक्षेमः परिहासोऽयं परीक्षां मा कृथा मम ।
मत्तो मा ऽन्तर्धिथाः सीते! मा रंस्था जीवितेन नः॥ १५ ॥

अक्षम इत्यादि—परिहसनं परिहासः क्रीडा । अयमक्षेमो न कल्याणकरः । मम परीक्षां किं मामपश्यन् दुःखित आस्ते न वेति मा कृथाः मा कार्षीः । अपि तु दर्शयात्मानम् मा निलीयस्व । 'उश्च ।१।२।१२।' इति कित्त्वाद्गुणाभावः । 'ह्रस्वादङ्गात् ।८।२।२७।' इति सिचो लोपः । तस्माद्धेतोः सीते मान्तर्हिथाः । अन्तर्हिता मा भूः । 'अन्तर्धौ येनादर्शनमिच्छति ।१।४।२८।' इत्यपादानसंज्ञायां 'पञ्चम्यास्तसिः' । 'प्रत्ययोत्तरपदयोश्च ।७।२।९८।' इति मदादेशः । लुङि 'स्थाघ्वोरिच्च ।१।२।१७।' इति सिचः कित्त्वमित्त्वं च । 'ह्रस्वादङ्गात् ।८।२।२७।' इति सिचो लोपः । नोऽस्माकं जीवितेन मा रंस्थाः क्रीडां मा कार्षीः । रमेरात्मनेपदित्वात्तङ् ॥ एते प्रकीर्णकाः श्लोकाः ॥ १५ ॥

## अतः परं सिजधिकारः ।

सिचं सापवादमधिकृत्याह—

अहं न्यवधिषं भीमं राक्षसं क्रूरविक्रमम् ।
मा घुक्षः पत्युरात्मानं मा न श्लिक्षः प्रियं प्रिये ॥ १६ ॥

अहमित्यादि—यतोऽहं राक्षसं मारीचं क्रूरविक्रमं भीमं भयानकं न्यवधिषं निहतवानस्मि । हन्तेः, 'लुङि च ।२।४।४३।' इति वधादेशः । अदन्तत्वाद्वृद्ध्यभावः । तस्मान्मा घुक्षः न गोपय पत्युरात्मानम् । 'अन्तर्धौ येनादर्श-

नामिच्छति १ । ४ । २८ । इत्यपादानत्वम् । 'ख्यत्यात्परस्य ।६ । १।१११।' इत्युत्वम् । गुहेः 'शल इगुपधादनिटः क्सः । ३ । १ । ४५ ।' । 'हो ढः । ८ । २ । ३१ ।' भष्भावकत्वषत्वानि । सिपश्च विसर्जनीयः । मा न श्लिक्षः मा न परिरब्धाः अपि तु श्लिष्य प्रियं माम् । हे प्रिये । 'श्लिष आलिङ्गने । ३ । १ । ४६ ।' इति क्सः ॥ १६ ॥

**मा स्म द्राक्षीर्मृषा दोषं भक्तं मां मातिचिक्लिशः ।**
**शैलं न्वशिश्रियद्वामा नदीं नु प्रत्यदुद्रुवत् ॥ १७ ॥**

**मा स्मेत्यादि**—मृषा दोषं व्यलीकं दोषं मा द्राक्षीः । मयीत्यर्थात् 'स्मोत्तरे लङ् च । ३ । ३ । १७६ ।' इति चकाराल्लुङ् । 'शल इगुपधादनिटः क्सः ३ । १ । ४५ ।' इति क्सस्य ' न दृशः । ३ । १ । ४७ ।' इति निषेधः । 'इरितो वा । ३ । १ । ५७ ।' इत्यङ्भावे सिच् । 'सृजिदृशोर्झल्यमकिति । ६ । १ । ५८ ।' इत्यम् । हलन्तलक्षणा वृद्धिः । 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः । ८ । २ । ३६ ।' इति षत्वम् । यतोऽहं भक्तस्ततो मां भक्तं मातिचिक्लिशः नातिक्लेशयः । क्लिशेर्ण्यन्तात् सिपि । 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् । ३ । १ । ४८ ।' इति चङ् । णिलोपह्रस्वद्विर्वचनानि । पुनर्विकल्पयन्नाह । मयि दोषदर्शनाद्वामा मत्प्रतिकूलवर्तिनी सती शैलं नु पर्वतं कमप्यशिश्रियदाश्रिता उत नदीं प्रत्यदुद्रुवत् प्रतिगतेत्यर्थः । नुशब्दो वितर्के । पूर्ववच्चङ् ॥ १७ ॥

**ऐ वाचं देहि धैर्यं नस्तव हेतोरसुस्रुवत् ।**
**त्वं नो मतिमिवाऽधासीर्नष्टा प्राणानिवाऽदधः ॥ १८ ॥**

**ऐ वाचमित्यादि**—ऐशब्दो निपातोऽभिमुखीकरणे वर्तते । वाचं देहि । प्रार्थनायां लोट् । 'घ्वसोरेद्धावभ्यासलोपश्च । ६ । ४ । ११९ ।' इत्येत्वम् । किमिति चेदाह । धैर्यं नोऽस्माकं धरिता तव हेतोरसुस्रुवत् गलितम् । नष्टा अदर्शनं गता सती त्वं नोऽस्माकं मतिं बुद्धिमधासीरिव पीतवतीव । बुद्धेरपगमात् । 'विभाषा धेट्[1] श्व्योः । ३ । १ । ४९ ।' इति यदा न चङ् तदा 'यमरमनमातां सक् च । ७ । २ । ७३ ।' इति सगिटौ । प्राणानदधः पीतवती । कायस्याचेष्टत्वात्[2] । चङि रूपम् । 'आतो लोपः।६।४।६४।' ॥ १८ ॥

---

१ 'धेट्' पाने लुङ् । २ शोकाभिभूतत्वेन जडवत्पातितत्वादिति भावः ।

रुदतोऽशिश्वयच्चक्षुरास्यं ह्रेतोस्तवाश्वयीत् ।
म्रियेऽहं मां निरास्थश्चेन्मा न वोचश्चिकीर्षितम् ॥ १९ ॥

रुदत इत्यादि–तवार्थे त्वां पश्यामीति रुदतो मम चक्षुरशिश्वियत् उच्छूनम् । अस्यं मुखं चाश्वयीत् । 'विभाषा धेट्श्व्योः । ३ । १ । ४९ । 'इति चङ्सिचौ । चङीयङ् । 'ह्ययन्तक्षणश्वसजागृणिश्व्येदिताम् । ७ । २ । ५ ।' इति न वृद्धिः । 'इट ईटि । ८ । २ । २८ ।' इति सिचो लोपः । गुणायादेशौ। मां निरास्थश्चेद्यदि मम दर्शनं निरस्तवती त्वं तदा म्रियेऽहम् । ' म्रियतेर्लुङ्लिङोश्च । १ ।३ । ६१ ।' इति चकाराच्छित्यात्मनेपदम् ' रिङ्शयग्लिङ्क्षु । ७ । ४ । २८ ।' इति रिङ् । अतो यत्त्वया चिकीर्षितं कर्तुमिष्टं तन्मा न वोचः मा न भाषिष्ठाः अपि तु ब्रूहि । 'अस्यतिवक्तिख्यातिभ्योऽङ् । ३ । १ । ५२ ।' इत्यङ् । 'वच उम् । ७ । ४ ।२०' ॥ १९ ॥

लक्ष्मणाऽऽचक्ष्व यद्याख्यत् सा किञ्चित् कोपकारणम् ।
दोषे प्रतिसमाधानमज्ञाते क्रियतां कथम् ॥ २० ॥

लक्ष्मणेत्यादि--हे लक्ष्मण यदि सा किञ्चित्कोपकारणमाख्यदुक्तवती । इदं तेनाप्रियमाचरितम् । पूर्ववदङ् । तदाचक्ष्व कथय । अज्ञाते दोषे अनिर्धारिते प्रतिसमाधानं कथं क्रियताम् । अनुष्ठीयतां नैवेति भावः । कर्मणि लोट् । 'रिङ्शयङ्लिङ्क्षु ।७।४।२८।' इति रिङ् ॥ २० ॥

इह सा व्यलिपद्गन्धैः स्नान्तीहाऽभ्यषिचज्जलैः ।
इहाऽहं द्रष्टुमाह्वत् तां स्मरन्नेवं मुमोह सः ॥ २१ ॥

इहेत्यादि—इह प्रदेशे सा सीता गन्धैर्व्यलिपत् समालिप्तवती । मामात्मानं चेत्यर्थात् । इह स्नान्ती क्रीडापूर्वकमभ्यषिचत् । हस्तयन्त्रमुक्तसलिलेन माभिमुखं सिक्तवतीत्यर्थः । 'प्राक्सिताड्व्यवायेऽपि ।८।३।६३ ।' इति षत्वम् । इह द्रष्टुं तामाह्वम् आहूतवान् ।'लिपि सिचि ह्वश्च । ३ । १ ।५३।' इति च्लेरङ् । एवं स्मरन् मुमोह मोहं गतवान् ॥ २१ ॥

तस्यालिपत शोकाऽग्निः स्वान्तं काष्ठमिव ज्वलन् ।
अलिप्तेवानिलः शीतो वने तं न त्वजिह्लदत् ॥ २२ ॥

---

१ 'वक्त्रास्ये वदने तुण्डे' इत्यमरः । २ मां राममिति भावः । ३ सीतामित्यर्थः ।

तस्येत्यादि—तस्य रामस्य स्वान्तं मनः । 'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ता विस्पष्टस्वरानायासभृशेषु । ७ । २ । १८ ।' इति निपातितम् । शोकाग्निः शोको ऽग्निरिव । अलिपत शोपितवान । परस्मैपदेषु 'लिपि सिचिह्वश्च । ३ । १ । ५३ ।' इति नित्ये प्राप्ते 'आत्मनेपदेष्वन्यतरस्याम् । ३ । १ । ५४ ।' इति विकल्पेनाङ् । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले । १ । ३ । ७२ ।' इति क्रियाफलविवक्षायामात्मनेपदम् । काष्ठमिव स्वान्तं ज्वलन् अभिवर्धमानः । अनिलो वायुः शीतोऽपि सन् वने तं राममलिप्तेव दीपितवानिव । अङभावपक्षे 'झलो झलि । ८ । २ । २६ ।' इति सिचो लोपः । न तु नैवाजिह्लदत् ह्लादितवान् । शोकाग्नेरुद्धृतवान् । ह्लादेर्ण्यन्तान । 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् । ३ । १ । ४८ ।' इति चङ् ॥ २२ ॥

**स्नानभ्यषिचताम्भोऽसौ रुदन्दयितया विना ।**
**तथाभ्यषिक्त वारीणि पितृभ्यः शोकमूर्छितः ॥ २३ ॥**

स्नानित्यादि—असौ रामो दयितया सीतया विना । शोकमूर्छितः शोकेन मोहं नीतः । स्नातुमारब्धः । मूर्छेर्हेतुमण्ण्यन्तस्य रूपम् । 'ष्णा शौचे' शतृप्रत्ययः । रुदन् अश्रु विमुञ्चन् । अम्भः सलिलं अभ्यषिचत क्षिप्तवान । शिरस्यञ्जलिना । तथा स्नातः पितृभ्यो वारीणि अभ्यषिक्त दत्तवान् । सिचेः पूर्ववद्विभाषाऽङ् । सिचिरत्रोत्सर्गे वर्तते । ततश्चार्थान्तरवृत्तित्वाज्जलस्य कर्मत्वम् । अभ्युक्षणे तु करणत्वं यथा जलेन सिञ्चतीति ॥ २३ ॥

**तथार्तोऽपि क्रियां धर्म्यां स काले नामुचत्क्वचित् ।**
**महतां हि क्रिया नित्या छिद्रे नैवावसीदति ॥ २४ ॥**

तथेत्यादि—स रामस्तेन प्रकारेणार्तोऽपि क्वचिदपि धर्म्यां क्रियां काले नामुचत् न त्यक्तवान् । यतो महतां सत्यपि छिद्रे व्यसने नित्या क्रिया नावसीदति नापयाति । आङ्पूर्वादर्तेर्ऋणोतेर्वा निष्ठायाम् ऋति धातौ वृद्धिः । मुचेः लृदनुबन्धत्वादङ् । 'कृत्रः श च । ३ । ३ । १०० ।' रिङियङौ ॥२४॥

**आह्वास्त स मुहुः शूरान् मुहुराह्वत राक्षसान् ।**
**एत सीताद्रुहः संख्ये, प्रत्यथयत राघवम् ॥ २५ ॥**

---

१ 'स्वान्तं हृन्मानसं मनः ।' इत्यमरः । २ शोक एवाग्निरिति वा । ३ सन्ध्योपासनादिरूपामित्यर्थः । ४ अत्रार्थान्तरन्यासः सामान्येन विशेषसमर्थनात्मा ।

आह्वास्तेत्यादि--पुनः पुनरभिभवितुं शूरानाह्वास्त आहूतवान् तथा राक्षसानाह्वत । पूर्ववद्विकल्पः । 'स्पर्धायामाङः । १ । ३ । ३१ ।' इत्यात्मनेपदम् । कथमाहूतवानित्याह हे सीताद्रुहः सीताहिंसकाः शूरा राक्षसा वा एत आगच्छत । आङ्पूर्वादिणो लोट् । संख्ये संग्रामे । राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत । प्रत्यर्थिनशब्दात्तत्करोतीत्यर्थे णिच् । तदन्ताल्लोटः परस्मैपदम् । 'अर्थ याच्ञायाम्' इत्यस्य तु स्वार्थिकण्यन्तस्य सर्वदाऽऽत्मनेपदित्वात् प्रत्यर्थयध्वमिति स्यात् ॥ २५ ॥

स्वपोषमपुषद्युष्मान् या पक्षिमृगशावकाः ।
अद्युतच्चेन्दुना सार्धं तां प्रब्रूत गता यतः ॥ २६ ॥

स्वपोषमित्यादि—हे मृगपक्षिणां शावकाः पोताः या सीता युष्मान् स्वपोषमपुषत् पुष्टवती । 'स्वे पुषः । ३ । ४ । ४० ।' इति णमुल् । 'यथाविध्यनुप्रयोगश्च । ३ । ४ । ४ ।' । 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु । ३ । १ । ५५ ।' इत्यङ् । तां प्रब्रूत कथयत । यतो यत्र आद्यादित्वात्तसिः । गता सत्यद्युतत् द्योतते स्म । पूर्ववदङ् । इन्दुना सार्धम् । चन्द्रमसा तुल्यकान्तित्वात् ॥ २६ ॥

गिरिमन्वसृपद्रामो लिप्सुर्जनकसम्भवाम् ।
तस्मिन्नायोधनं वृत्तं लक्ष्मणायाशिषन्महत् ॥ २७ ॥

गिरिमित्यादि--गिरिमन्वसृपत् लक्ष्यीकृत्य गतः । लृदित्त्वादङ् । किमर्थं लब्धुमिच्छुः 'सनिमीमाघुरभलभशकपतपदामच इस् । ७ । ४ ।५४ इति इस्, 'अत्र लोपोऽभ्यासस्य ७ । ४ । ५८ ।' इत्यभ्यासलोपः । 'खरि च । ८ । ४ । ५५ ।' इति चर्त्वम् । जनकसम्भवाम् । सम्भवत्यस्मादिति सम्भवः । 'ऋदोरप् । ३ । ३ । ५७ ।' । जनकः सम्भवो यस्यास्तस्माद्वा सम् भवो यस्यास्तां सीताम् । तस्मिन् गिरौ आयोधनं युद्धं महदातिशयत्वात् वृत्तं लक्ष्मणायाशिषत्कथितवान् । क्रियायोगे चतुर्थी । 'सर्तिशास्त्यर्तिभ्यश्च । ३ । १ । ५६ ' इत्यङ् । 'शास इदङ्हलोः । ६ । ४ । ३४।' इतीत्वम् । 'शासिवसि । ८ ।३।६० ।'इत्यादिना षत्वम्॥२७॥

कथमकथयदित्याह—

---

१ 'मृधमास्कन्दनं सङ्ख्यम्' इत्यमरः ।

सीतां जिघांसू सौमित्रे ! राक्षसावारतां ध्रुवम् ।
इदं शोणितमभ्यग्रं सप्रहारेऽच्युतत्तयोः ॥ २८ ॥

सीतामित्यादि—इत्येवं लक्ष्मणायाशिषदिति श्लोकचतुष्टयं यावत् सम्बध्यते । हे सौमित्रे सीतां हन्तुमिच्छन्तौ राक्षसावारतामागताविति ध्रुवं निश्चितम् । अर्तेराङ्पूर्वात्पूर्ववदङ् । 'ऋदृशोऽङि गुणः ।७।४।१६।' इति गुणः । कीदृशौ सीतां जिघांसू हन्तुमिच्छू । हन्तेः सनि 'अज्झनगमां सनि ।६।४।१६।' इति दीर्घः । 'अभ्यासाच्च ।७।३।५५।' इति कुत्वम् । तथा हि—तयोः सीताद्वेषानुनयाभ्यां संप्रहारे युद्धे इदं शोणितम् अच्युतत् गलितम् । 'च्युतिर् क्षरणे' । अकर्मकोऽत्र । 'इरितो वा ।३।१।५७।' इत्यङ् । अभ्यग्रं प्रत्यग्रम् ॥ २८ ॥

इदं कवचमच्योतीत् साऽश्वोऽयं चूर्णितो रथः ।
एह्यमुं गिरिमन्वेष्टुमवगाहावहे द्रुतम् ॥ २९ ॥

इदमित्यादि—इदं कवचमच्योतीत् भ्रष्टम् । अङभावे सिजेव भवति । अयं रथः सोऽश्वश्चूर्णित आस्ते । यतश्चैवं तस्मादेहि आगच्छ द्रुतम् । किं पश्चाद्विलम्बसे । अमुं गिरिमवगाहावहे विलोडयावः । अन्वेषावहै इत्यर्थः । किमर्थम् अन्वेष्टुम् । सीतामित्यर्थात् । एतत्सर्वं पर्वतसमीपे कथ्यते ॥ २९ ॥

मन्युर्मन्ये ममाऽस्तम्भीद् विषादोऽस्तभदुद्यतिम् ।
अजारीदिव च प्रज्ञा बलं शोकात् तथाजरत् ॥ ३० ॥

मन्युरित्यादि—मन्युः शोकः । मन्ये सम्भावये मम क्रन्दतो रामस्य उच्छूननेत्रे इति शेषः । अस्तम्भीत् स्तब्धवान् । तथा विषाद उद्यतिम् उद्यममित्यर्थः । अस्तभत् । अत्र पक्षे अनुनासिकलोपः । प्रज्ञा च तत्त्वविवेकिनी बुद्धिः अजारीत् विवेकवैकल्यात् । जीर्णेव । तथाशब्दः समुच्चये । बलं शोकादजरत् जीर्णम्, स्वकार्याकरणात् । 'ऋदृशोऽङि गुणः ।७।४।१६।' इति गुणः। 'जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ।३।१।५८।' इति सिजङौ॥३०॥

गृध्रस्येहाश्वतां पक्षौ कृत्तौ वीक्षस्व लक्ष्मण ।
जिघत्सोर्नूनमापादि ध्वंसोऽयं तां निशाचरात् ॥ ३१ ॥

---

१ यद्यपि रथस्यैव चूर्णितत्वम्, न तु तदीयानाम् अश्वानाम्, अथापि प्राधान्यादिदमुक्तम् । एवं च रथश्चूर्णितोऽश्वा हताश्चेति वक्तव्यम् ।

गृध्रत्येत्यादि—हे लक्ष्मण। इह प्रदेशे गृध्रस्य पक्षौ कृत्तौ छिन्नौ। अश्वतां शूनौ। पूर्ववदाङि 'श्वयेतरः ।७।४।१८।' इति। वीक्षस्व नूनमवश्यं सीतां जिघत्सोरत्तुमिच्छोर्गृध्रस्य। अदेः 'लुङ्सनोर्घस्लृ ।२।४।३७।' निशाचरादयं ध्वंसः पक्षच्छेद आपादि उत्पन्नः। कर्तरि लुङ्। 'चिण् ते पदः ।३।१।६०।' इति च्लेश्चिणादेशः। तशब्दस्य 'चिणो लुक् ।६।४।१०४।' ॥ ३१ ॥

क्रुद्धोऽदीपि रघुव्याघ्रो रक्तनेत्रोऽजनि क्षणात्।
अबोधि दुःस्थं त्रैलोक्यं दीप्तैरापूरि भानुवत् ॥ ३२ ॥

क्रुद्ध इत्यादि—तदेवं रघुव्याघ्रो रामः क्रुद्धोऽदीपि दीप्तवान्। क्षणाच्च रक्तनेत्रोऽजनि जातः। 'जनिवध्योश्च ।७।३।३५।' इति न वृद्धिः। त्रैलोक्यं निहन्मि यस्मिन् हन्यमाने सीताद्रुहोऽपि नश्यन्ति इत्यभिप्रायेण दुःस्थमबोधि बुध्यते स्म। किंवा रामस्य दारा ह्रियन्ते तदान्येषु का कथा, इति दुःस्थं त्रैलोक्यमबोधि। दीप्तैस्तेजोभिर्हेतुभिरापूरि वर्धते स्म। भानुवदादित्यवत्। दीप्तैरिति भावे निष्ठा। सर्वत्र कर्तरि लुङ्। 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।३।१।६१।' इति चिण् ॥ ३२ ॥

अतायस्योत्तमं सत्त्वमप्यायि कृतकृत्यवत्।
उपाचायिष्ट सामर्थ्यं तस्य संरम्भिणो महत् ॥ ३३ ॥

अतायीत्यादि—अस्य रामस्य उत्तमं सत्त्वमभिप्रायः शोकव्यसनयोरविकारित्वात् अतायि सन्ततं नान्तरा विच्छिद्यते स्मेत्यर्थः। अप्यायि बृंहितम्। कृतकृत्यवत् समाप्तक्रियवत्। हस्ततलस्थं शत्रुवधं मन्यमानस्यास्य रामस्येत्यर्थः। उभयत्रापि पूर्ववच्चिण्। तस्य रामस्य संरम्भिणः शत्रुविषये क्षुभितचित्तस्य सामर्थ्यं बलं महदुपाचायिष्ट स्वयमेवोपचीयते स्म। वर्धते स्मेत्यर्थः। चिनोतेः 'अचः कर्मकर्तरि ।३।१।६२।' इति वा चिण्। पक्षे चिण्वादिट् ॥३३॥

अदोहीव विषादोऽस्य समरुद्धेव विक्रमः।
समभावि च कोपेन न्यश्वसीच्चाऽऽयतं मुहुः ॥ ३४ ॥

अदोहीत्यादि—अस्य रामस्य विषादः प्रागुत्पन्नोऽदोहीव स्वयं क्षरित इव। अथवा अदोहीव प्रपूर्यते स्मेव। 'दुहश्च ।३।१।६३।' इति णिच्। विक्रमः पुरुषकारः समरुद्धेव स्वयं संरुध्यते स्म इव। 'कर्मवत् कर्मणा तुल्य-

---

१ रघुश्रेष्ठ इत्यर्थः। 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥' इत्यमरः। २ 'आवेशारोषसंरम्भाः' इति त्रिकाण्डशेषः। ३ 'विक्रमस्त्वतिशक्तिता।' इत्यमरः।

क्रियः ।३।१।८७।' इति कर्मवद्भावेन प्राप्तस्य चिणः 'न रुधः ।३।१।६४।' इति निषेधः । तेन सिजेव भवति । 'झलो झलि ।८।२।२६।' इति सिचो लोपः । 'झषस्तथोर्धोऽधः ।८।२।४०।' । झलां जश् झशि ।८।४।५३।' इति धत्वजश्त्वे । कोपेन च समभावि सम्भूतम् । 'चिण् भावकर्मणोः ।३।१।६६।' इति भावे चिण् । त्रैलोक्यदौःस्थ्यावबोधाज्जातखेदः सन् आयतं दीर्घं न्यश्वसीत् निःश्वसितवान् । 'ह्यन्तक्षणश्वसजागृणिश्व्येदिताम् ।७।२।५।' इति वृद्धिर्न भवति । मुहुरिति सर्वत्र योज्यम् ॥ ३४ ॥ इति सिजधिकारः ॥

अथाऽऽलम्ब्य धनू रामो जगर्ज गजविक्रमः ।
रुणध्मि सवितुर्मार्गं भिनद्मि कुलपर्वतान्[1] ॥ ३५ ॥

इतः प्रभृति श्नम्प्रकरणमधिकृत्याह—

अथेत्यादि—अथानन्तरं गजस्य विक्रम इव विक्रमो यस्य तादृशो रामो धनुरालम्ब्य गृहीत्वा जगर्ज विस्फूर्जितवान् । धनू राम इति 'ढ्रलोपे पूर्वस्य दीर्घोऽणः ।६।३।१११।' इति दीर्घः । 'गर्ज गर्जने' । किं जगर्ज । सवितुः सूर्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि । शरैरित्यर्थात् । 'रुधादिभ्यः श्नम् ।३।१।७८।' तथा भिनद्मि विदारयामि कुलपर्वतान् ॥ ३५ ॥

रिणच्मि जलधेस्तोयं विविनच्मि दिवः सुरान् ।
क्षुणद्मि सर्पान् पाताले छिनद्मि क्षणदाचरान्[2] ॥ ३६ ॥

रिणच्मीत्यादि—जलधेस्तोयं रिणच्मि रिक्तीकरोमि । रिचिर् विरेचने । दिवः स्वर्गात् सुरान् विविनच्मि पृथक्करोमि । विचिर् पृथग्भावे ।' क्षुणद्मि चूर्णयामि सर्पान् पाताले । 'क्षुदिर् पेषणे ।' अट्कुप्वाङ्नुम्व्यवायेऽपि । ८ । ४ । २ ।' इति णत्वम् । छिनद्मि क्षणदाचरान् राक्षसान् द्विधा करोमि । 'छिदिर् द्वैधीकरणे' ॥ ३६ ॥

यमं युनज्मि कालेन समिन्धानोऽस्त्रकौशलम् ।
शुष्कपेषं पिनष्म्युर्वीमखिन्दानः स्वतेजसा ॥ ३७ ॥

यममित्यादि—यममपि कालेन तदधीनेन मृत्युना युनज्मि सम्बध्नामि । अस्त्रकौशलं समिन्धानः संवर्धयन् । ञिइन्धी दीप्तौ ।' आत्मनेपादेनो लटः

---

१ महेन्द्रादीन् पर्वतानित्यर्थः । 'महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥' इत्युक्तेः । २ क्षणदायां रात्रौ चरन्तीति तान् ।

शानच् ।' श्नान्नलोपः । ६ । ४ । २३ ।' 'श्नसोरल्लोपः । ६ । ४ । १११ ।' उर्वीं पृथिवीम् शुष्कां कृत्वा चूर्णयामि । पिष्लृ संचूर्णने ।' शुष्कचूर्णरुक्षेषु पिषः । ३ । ५ । ३५ ।' इति णमुल् । अखिन्दानः स्वतेजसा स्वपराक्रमेण दैन्यमभजन् अपरिश्राम्यन् । 'खिद् दैन्ये ।' पूर्ववल्लोपः ॥ ३७ ॥

भूतिं तृणद्मि यक्षाणां हिनस्मीन्द्रस्य विक्रमम् ।
भनज्मि सर्वमर्यादास्तनच्मि व्योम विस्तृतम् ॥ ३८ ॥

भूतिमित्यादि—यक्षाणां भूतिं सम्पदं तृणद्मि उत्सादयामि । 'उतृदिर् हिंसाऽनादरयोः ।' इन्द्रस्य विक्रमं हिनस्मि अपनयामि । 'हिंसि हिंसायाम् ।' 'इदितो नुम् धातोः । ७ । १ । ५८ ।' तस्य श्नान्नलोपः । सर्वमर्यादाश्च व्यवस्थाः सर्वेषां भनज्मि मर्दयामि । 'भञ्जो आमर्दने ।' 'श्नान्नलोपः । ६ । ४ ।२३।' तनच्मि व्योम विस्तृतं सङ्कोचयामि । 'स्तृञ् आच्छादने' सौवादिकस्य रूपं न 'स्तॄञ् आच्छादने' इति क्रैयादिकस्य । तञ्चू सङ्कोचने ।' 'श्नान्नलोपः । ६ । ४ । २३ ।' ॥ ३८ ॥

कस्मादेवं प्रवृत्तस्त्वमिति चेदाह—

न तृणेह्मीति लोकोऽयं मां विन्ते निष्पराक्रमम् ।
एवं वदन् दाशरथिरपृणग् धनुषा शरम् ॥ ३९ ॥

न तृणेह्मीत्यादि—न तृणेह्मि न मारयामि इति कृत्वा । 'तृह हिंसि हिंसायाम् ।' श्नम् । 'तृणह इम् । ७ । ३ । ९२ ।' अयं लोको मां निष्पराक्रमं निर्वीर्यं विन्ते विचारयति । 'विद विचारणे' इत्यस्मादात्मनेपदिनः श्नम् । अल्लोपः । एवमुक्तेन प्रकारेण वदन् दाशरथिः धनुषा शरम् । अपृणक् पृणक्ति स्म । संयोजयामासेत्यर्थः।'पृची संपर्के ।' लङि श्नम् हल्ङ्यादिलोपः कुत्वम् ॥ इति श्नम् विकरणनिदर्शनम् ॥ ३९ ॥

इतः प्रकीर्णकश्लोकानाह—

न्यवर्तयत् सुमित्राभूस्तं चिकीर्षुं जगत्क्षयम् ।
ऐक्षेतामाश्रमादाराद् गिरिकल्पं पतत्रिणम् ॥ ४० ॥

न्यवर्तयदित्यादि—तं रामं जगत्क्षयं चिकीर्षुं कर्तुमिच्छुम् । सुमित्राभूर्लक्ष्मणो न्यवर्तयत् निवर्तितवान् । ' भ्रातः अलं कोपेन, त्वया सार्धं कः

१ वसुधोर्वी वसुन्धरा ।' इत्यमरः । २ 'तेजः प्रभावे दीप्तौ च बले शुक्रे' इत्यमरः । ३ 'विभूतिर्भूतिरैश्वर्यम्' । इत्यमरः । ४ व्योम आकाशमित्यर्थः । 'व्योम पुष्करमम्बरम् ।' इत्यमरः ।

संग्रामे युद्धं दातु समर्थः ? अपि तु न कोऽपीत्यर्थः यदत्र युक्तं तत्प्रतिविधीयताम्' इति । भवनं भूः । ' सम्पदादिभ्यश्च' इति क्विप् । सुमित्रायां भूयस्य । ऐक्षेतां रामलक्ष्मणौ दृष्टवन्तौ । ' ईश दर्शनाङ्कनयोः' इत्यस्य लङि रूपम् । पक्षिणं गिरिकल्पं महाप्रमाणत्वात् । आश्रमादारात्[1] समीपे । 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् । २ । ३ । ३४ ।' इति पञ्चमी ॥ ४० ॥

तं सीताघातिनं मत्वा हन्तुं रामोऽभ्यधावत ।
मा वधिष्ठा जटायुं मां सीतां रामाऽहमैक्षिषि ॥ ४१ ॥

तमित्यादि--तं सीताघातिनं[2] सीता हताऽनेनेति मत्वा रामो हनिष्यामीत्यभ्यधावत । 'धावु गति-शुद्धयोः ।' इत्यस्माल्लङि स्वरितेत्त्वादात्मनेपदम् । तं हन्तुमुद्यतं रामं जटायुराह मा वधिष्ठा इति । 'हे राम मां जटायुं मां वधिष्ठा मा वधीः ।' 'बध बन्धने' इत्यस्मादनेकार्थत्वादात्मनेपदिनः सेटो लुङि' रूपं, न हन्तेः तस्य परस्मैपदित्वात् । सम्यप्याङि 'आङो यमहनः ।१।३।२८।' इत्यात्मनेपदं न भवति, तत्राकर्मकादित्यनुवृत्तेः । स्वनामपरिकीर्तनं तव पितुरहं सखेति ख्यापनार्थम् । सीतामैक्षिषि दृष्टवानहम् । लुङुत्तमैकवचने रूपम् । अतो मां मा वधिष्ठाः ॥ ४१ ॥

अथ साधेनान्वयः-

उपास्थितैवमुक्ते तं सखायं राघवः पितुः ।
पप्रच्छ जानकीवार्तां संग्रामं च पतत्रिणम् ।
ततो रावणमाख्याय द्विषन्तं पततां वरः ॥ ४२ ॥

उपास्थितेत्यादि—पक्षिणैवमुक्ते सति राघवस्तं व्रणभङ्गाद्यनुष्ठानेन उपास्थित परिचरितवान् । सङ्गतकरणे आत्मनेपदम् । स्थाघ्वोरिच्च । १ । २ । १७ ।' इतीत्वम् । 'ह्रस्वादङ्गात् । ८ । २ । २७ ।' इति सिचो लोपः । पितुः सखायमिति[3] सखिशब्दस्य द्वितीयैकवचने रूपम् । 'सख्युरसम्बुद्धौ । ७ । १ ।९२। इति णित्वाद् वृद्धिरायादेशः । पप्रच्छ पृष्टवान् तं पक्षिणं जटायुम् । किं जानकीवार्तां संग्रामं च । तत उपस्थानानन्तरं रावणं द्विषन्तं शत्रुम् 'द्विषो-

---

१ 'आराद् दूरसमीपयोः' इत्यमरः । २ सीताहन्तारामित्यर्थः । ३ मित्रम् । 'अथ मित्रं सखा सुहृत्' इत्यमरः ।

ऽमित्रे ।३।२।१३१।' इति शतृप्रत्ययः । आख्याय सीता रावणेन हृतेति कथयित्वा । पततां पक्षिणां वरो जटायुर्ममारेति परेणान्वयः ॥ ४२ ॥

**व्रणवेदनया ग्लायन्ममार गिरिकन्दरे ।**
**तस्याऽग्न्यम्बुक्रियां कृत्वा प्रतस्थाते पुनर्वनम् ॥ ४३ ॥**

व्रणेत्यादि —व्रणकृता वेदना पीडा । मध्यमपदलोपी समासः । तथा ग्लायन् ग्लानिं गच्छन् । शतर्यायादेशः । ममार मृतः । क गिरिकन्दरे यं गिरिमन्वसृपत् तस्य निम्नप्रदेशे । कन्दं रातीति कं दारयतीति वा व्युत्पत्तिमात्रम् । तस्य जटायोरग्न्यम्बुक्रियां दाहमुदकदानं च कृत्वा पुनर्भूयो वनमरण्यं प्रतस्थाते प्रस्थितौ । 'समवप्रविभ्यः स्थः ।१।३।२२।' इत्यात्मनेपदम् ॥ ४३ ॥

**सत्त्वानजस्रं घोरेण बलाऽपकर्षमश्नता ।**
**क्षुध्यता जगृहाते तौ रक्षसा दीर्घबाहुना ॥ ४४ ॥**

सत्त्वानित्यादि—तौ रामलक्ष्मणौ रक्षसा राक्षसेन जगृहाते गृहीतौ । कर्माणि लिट् । किंनाम्ना दीर्घबाहुना । अन्वर्था चेयं सञ्ज्ञा । एक एकेन बाहुना द्वितीयो द्वितीयेनेति । क्षुध्यता बुभुक्षमाणेन घोरेण भीमेन । सत्त्वान् प्राणिनः अजस्रं सदा । नञ्पूर्वाज्जसः 'नमिकम्पिस्म्यजसकहिंसदीपो रः ।३।२।१६७।' इति रः । अश्नता भुञ्जानेन । किं कृत्वा बलापकर्षं बल । दाकृष्येव पाकादिकमनपेक्ष्य । 'अपादाने परीप्सायाम् ।३।४।५२।' इति णमुल् ॥ ४४ ॥

**भुजौ चकृततुस्तस्य निस्त्रिंशाभ्यां रघूत्तमौ ।**
**स च्छिन्नबाहुरपतद्विह्वलो ह्वलयन्भुवम् ॥ ४५ ॥**
**( इत्येते प्रकीर्णकाः श्लोकाः ) ।**

भुजावित्यादि—रघूत्तमौ रामलक्ष्मणौ तस्य योजनवाहोः बाहू यथास्थानमागतौ चकृततुः च्छिन्नवन्तौ । 'कृती छेदने' । इत्यस्य रूपम् । काभ्यां निस्त्रिंशाभ्यां खड्गाभ्याम् । निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति वाक्ये 'डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसङ्ख्यानम्' इति त्रिंशच्छब्दाड्डज्विधिः । 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः । टिलोपः । स छिन्नबाहुः कृत्तभुजः सन् अपतत्

---

१ 'पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः ।' इत्यमरः । २ शाकपार्थिवादित्वादिति शेषः । ३ अजस्रं निरन्तरमित्यर्थः । 'अजस्रानारताश्रान्तः' इत्यमरः । ४ 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ।' इत्यमरः ।

पतितः पतेर्लङि रूपम् । विह्वलो व्याकुलः भुवं भूमिं ह्वलयन्[1] । 'ह्वल चलने' । 'घटादित्वे ह्रस्वत्वम् ॥ ४५ ॥ इति प्रकीर्णकाः ॥

इतः परं कृत्याधिकारः—

**प्रष्टव्यं पृच्छतस्तस्य कथनीयमवीविचत् ।**
**आत्मानं वनवासं च जेयं चाऽरिं रघूत्तमः ॥ ४६ ॥**

**प्रष्टव्यमित्यादि**—स योजनबाहुः[2] निहतो रामं पप्रच्छ 'को भवान्' कस्य पुत्रः, कथं तव वनवासः, कस्माच्चोद्विग्नः सन् भ्रमसि' इति । प्रष्टव्यं प्रश्नार्हं पृच्छतस्तस्य । 'तव्यत्तव्यानीयरः ।३।१।९६।' इति तव्यत् । 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ।८।२।३६।' इति षत्वम् । ष्टुत्वं च । रघूत्तमस्तदानीम् । कथनीयं कथनार्हं प्रश्नानुरूपम् । 'तव्यत्तव्यानीयरः ३।१।९६।' इत्यनीयर् । अवीवचद्वक्ति स्म । वच भाषणे ।' चौरादिकः । स्वार्थिको णिच् लुङ् चङ् । णिलोपः ह्रस्वः । द्विर्वचनसन्वद्भावेत्वदीर्घत्वानि । किं तदित्याह–आत्मानम् अहं[3] रामो दाशरथिरिति । वनवासं पितुरादेशात् वनवासः इति । जेयं जेतव्यं चारिं यः कनकमृगच्छलेन सुवर्णकारस्य मृगरूपधारिणो मारीचस्य व्याजेनेत्यर्थः । रावणः सीतामपहृतवानिति ॥ ४६ ॥

**लभ्या कथं नु वैदेही, शक्यो द्रष्टुं कथं रिपुः ।**
**सह्यः कथं वियोगश्च गद्यमेतत्त्वया मम ॥ ४७ ॥**

**लभ्येत्यादि**—कथं केन प्रकारेण उपायेन लभ्या वैदेही प्राप्या लब्धुं शक्येत्यर्थः । 'पोरदुपधात् ।३।१।९८।' इति यत् । रिपुः शत्रुः कथं केन प्रकारेण द्रष्टुं शक्यः 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ।३।४।६५।' इति तुमुन् वियोगश्चायं सीतायाः कथं केन प्रकारेण सह्यः सोढव्यः 'शकिसहोश्च ।३।१।९९। इति यत् । गद्यमेतत् कथनीयमेतत् । 'गदमदचरयमश्चानुपसर्गे ।३।१।१००।' इति यत् । ममेतिविवक्षायां षष्ठी ॥ ४७ ॥

त्वं पुनः कः इति पृष्ट आह–

**अहं राम ! श्रियः पुत्रो मद्यपीत इव भ्रमन् ।**
**पापचर्यो मुनेः शापाज्जात इत्यवदत्स तम् ॥ ४८ ॥**

**अहमित्यादि**—हे राम अहं श्रियः पुत्रः मद्यपीत[4] इव । 'वाहिताग्न्यादिषु ।२।२।३७।' इति निष्ठान्तस्य परनिपातः । कार्याकार्यविवेकाभावात्पाप-

---

१ चालयन्नित्यर्थः । २ योजनायतभुज इति भावः । ३ आत्मानं स्वमित्यर्थः । ४ पीतं मद्यं येनेति तथोक्तः ।

चर्यो राक्षसः मुनेः स्थूलशिरसः शापाज्जात उत्पन्नः । माद्यत्यनेनेति मद्यम् । चरितव्यमिति चर्यमेतौ पूर्ववद्यत्प्रत्ययान्तौ । पापं चर्यं यस्येत्यवदन् स योजनबाहुः तं रामम् । वाक्यार्थोऽत्र कर्म ॥ ४८ ॥

**प्रयातस्तव यम्यत्वं शस्त्रपूतो ब्रवीमि ते ।**
**रावणेन हृता सीता लङ्कां नीता सुरारिणा ॥ ४९ ॥**

प्रयात इत्यादि—इदानीं तव यम्यत्वं वशत्वं प्रयातः । यमेः पूर्ववत् यत् । शस्त्रपूतस्तव शस्त्रेण पावितः सन् ब्रवीमि ते तुभ्यं कथयामि । युष्मदश्चतुर्थ्येकवचनस्य 'तेमयावेकवचनस्य ।८।१।२२।' इति ते आदेशः।'क्रियाऽर्थोपपदस्य च कर्म्मणि स्थानिनः २।३।१४।' क्रियायोगे चतुर्थी । कथनीयमाह—रावणेन सुरारिणा देवशत्रुणा हृता सीता लङ्कां नीता प्रापिता ॥ ४९ ॥ वैदेही प्राप्या कथमिति यमुपायं पृष्टवान् तं कथयन्नाह—

**ऋष्यमूकेऽनवद्योऽस्ति पण्यभ्रातृवधः कपिः ।**
**सुग्रीवो नाम वर्योऽसौ भवता चारुविक्रमः ॥ ५० ॥**

ऋष्यकमूक इत्यादि—ऋष्यमूके पर्वते सुग्रीवो नाम कपिः चारुविक्रमो महापराक्रमोऽस्ति । चारुः शोभनः प्रशंसनीय इत्यर्थः। विक्रमः महत्त्वेन यस्य सः असौ भवता वर्यो वरणीयः प्रार्थनीयः'वर ईप्सायाम्' इति चौरादिकात्स्वार्थिकण्यन्तात् 'अचो यत् ।३।१।९७।'इतियत्। यद्वा 'अवद्यपण्यवर्य्या गर्ह्यपणितव्यानिरोधेषु । ३ । १ । १०१ ।' इत्यत्र वृङो वर्येति स्त्रियामनिरोधे अप्रतिबन्धे निपातितत्वात् । सततप्रवर्तिनी अनिरोध्या वर्या प्रीतिर्यस्येति'अर्शआदिभ्योऽच्।५।२।११७।'इत्यच् स च भवता सह वर्यः प्रीतिमान् समानव्यसनत्वात् यतः पण्यभ्रातृवधः सः पण्यो विक्रेतव्यो भ्रातुर्वालिनो वधो येन ।यदि सीतामन्वेक्ष्यसि तदा वालिनमहं हनिष्यामीति, वालिनं यदि हनिष्यसि तदा सीतान्वेक्ष्यामीति वाचा विहिताभिसन्धिः । यद्येवं तदा कथं मया पापीयान् वर्य इत्यत आह—अनवद्यः अगर्हणीयः । दारापहारित्वेन आततायिनो भ्रातुर्वधेन निर्दोषत्वादिति भावः ॥ ५० ॥

---

१ पापचर्यः पापकारी । २ स्थूलं शिरो यस्येति, तत एव तथा ख्यातस्य । ३ नावद्यं-गर्ह्यं, दोषो वा, यस्य तादृश इतीदमुक्तम् । 'कुपूयकुत्सितावद्यखेटगर्ह्यणकाः समाः ।' इत्यमरः ।

तेन वह्येन हन्तासि त्वमर्यं पुरुषाऽशिनाम् ।
राक्षसं क्रूरकर्माणं शक्राऽरिं दूरवासिनम् ॥ ५१ ॥

तेनेत्यादि—तेन सुग्रीवेण त्वं राक्षसं हन्तासि निहनिष्यसि । वह्येन वह्-त्यभिप्रेतमनेनेति, 'वह्यं करणम् । ३ । १ । १०२ ।' इति यत् । कीदृशमर्यं स्वामिनम् । पुरुषाशिनां राक्षसानाम् । 'अर्यः स्वामिवैश्ययोः । ३ । १ । १०३ ।' इति यन्निपात्यते । क्रूरकर्माणं पापाचारं शक्रारिं रावणम् । यद्येवमहमेव हन्तुं समर्थ इत्यभिप्रायेणाह—दूरवासिनं समुद्रान्तारितवासित्वात् एकाकिना हन्तुं न शक्यत इति भावः ॥ ५१ ॥

यद्यनवद्यस्तदा कथमस्य पण्यो भ्रातृवध इत्याह—

आस्ते स्मरन् स कान्ताया हृताया वालिना कपिः ।
वृषो यथोपसर्याया गोष्ठे गोर्दण्डताडितः ॥ ५२ ॥

आस्ते इत्यादि—वालिना हृतायाः कान्तायाः स्मरन्नास्ते कोऽन्यः सम्भवेत् यस्तं हत्वा त्वया मां योक्ष्यते, 'अधीगर्थदयेशां कर्मणि । २ । ३।५२ ।' इति कर्मणि षष्ठी । कस्येव वृषो यथा उपसर्याया आसन्नगर्भकालायाः गोः स्मरन् गोष्ठे आस्ते । 'उपसर्या काल्या प्रजने । ३ । १ । १०४ ।' इति निपातितम् । दण्डताडितः सन् दण्डस्थानीयोऽत्र वाली ॥ ५२ ॥

तेन सङ्गतमार्येण रामाऽजर्यं कुरु द्रुतम् ।
लङ्कां प्राप्य ततः पापं दशग्रीवं हनिष्यसि ॥ ५३ ॥

तेनेत्यादि—हे राम तेन वानरेण हनुमतेत्यर्थः संगतं सख्यं अजयम् अनपापम् । न जर्यित् इत्यस्मिन् वाक्ये'अजर्यं संगतम् ।३।१।१०५।'इति निपातितम्। आदौ विशेष्यत्वेनोपात्तं संगतं तद्विशेषणमजर्यं कुरु द्रुतं यावत्तस्यानेन युष्मद्विधेन संगतं न भवति ।आर्येण सदाचारेण।पापप्रधानत्वात् 'ऋहलोर्ण्यत ।३।१। १२४।'ततः सङ्गतान् लङ्कां प्राप्य गत्वा पापं पापीयांसं रावणं हनिष्यसि॥५३॥

ननु यावत्कार्यं न सिध्यति तावत्संगतं गच्छति कृतकृत्यस्तु नैवेत्यत आह—

अनृतोद्यं न तत्रास्ति सत्यवद्यं ब्रवीम्यहम् ।
मित्रभूयं गतस्तस्य रिपुहत्यां करिष्यसि ॥ ५४ ॥

---

१ अतएव 'स्यादर्यः स्वामिवैश्ययोः ।' इत्यमरः सङ्गच्छते । २ क्रूरं प्रधानं कर्म यस्य तम्, निर्दयत्वं हि पापमूलमिति तथोक्तम् । ३ रुमानाम्न्या इति शेषः ।

अनृतोद्यमित्यादि—सत्यमुद्यत इति कर्मणि यत् । अहं सत्यं वचो ब्रवीमीत्यर्थः, अनृतोद्यं तत्र सुग्रीवे नास्ति अनृतमसत्यं उद्यं वचनं अनृतोद्यम् । भावे क्यप् । यजादित्वात्संप्रसारणम् । उभयत्रापि 'वदः सुपि क्यप् च । ३।१ १०६।' इति चकाराद्यत् । यस्मादेवं तस्मान्मित्रभूयं मित्रभावं गतः । 'भुवो भावे।३।१।१०७।इति क्यप् । रिपुहत्यां शत्रुवधमित्यर्थः।करिष्यसि, 'हनस्त च ।३।१।१०८।' इति क्यप् तकारश्चान्तादेशः ॥ ५४ ॥

आदृत्यस्तेन वृत्येन स्तुत्यो जुष्येण संगतः ।
इत्यः शिष्येण गरुवद् गृध्यमर्थमवाप्स्यसि ॥ ५५ ॥

आदृत्य इत्यादि—तेन सङ्गतः सन् गृध्यमभिलषणीयमवाप्स्यसि । 'ऋदुपधाच्चाक्लृपि चृतेः ।३।१ । ११० । इति क्यप् । कीदृशः कीदृशेनेत्याह-आदृत्यः आदरणीयः । वृत्येन वरणीयेन । स्तुत्यः स्तवार्हः । जुष्येण सेव्येन जुषीप्रीतिसेवनयोः हनूमत्प्रभृतीनाम् । क इव शिष्येण गुरुरिव यथोपाध्यायः शिष्येण शासनीयेन इत्यः अनुगम्यस्तद्वदिति । एतिस्तुशास्वृदृजुषः क्यप्। ३ । १ । १०९ ।' इति क्यप् । 'ह्रस्वस्य पिति कृति तुक्६।१।७१।' इति ॥ ५५ ॥

नाऽखेयः सागरोऽप्यन्यस्तस्य सद्भृत्यशालिनः ।
मन्युस्तस्य त्वया मार्ग्यो मृज्यः शोकश्च तेन ते ॥ ५६ ॥

नाखेय इत्यादि—तस्य सुग्रीवस्य सद्भृत्यशालिनः हनूमदादिभृत्ययुक्तस्य। 'भृञोऽसंज्ञायाम् । ३ । १ । ११२ ।' इति क्यप् । अन्यो द्वितीयः सागरोऽपि नाखेयो न खननीयः अपि तु खननीय एव[1] । अपिशब्दः सम्भावनायाम्[2]। तस्य कारणं सद्भृत्यशालित्वम् । 'ई च खनः ।३।१।१११।' इति क्यबीकारौ । तस्य मन्युस्त्वया मार्ग्योऽपनेयः । ते तव तेन च शोको मृज्यः 'मृजेर्विभाषा ।३।१।११३।' इति यद्विकल्पे ण्यत् ॥ ५६ ॥

स राजसूययाजीव तेजसा सूर्यसन्निभः ।
अमृषोद्यं वदन् रुच्यो जगाहे द्यां निशाचरः ॥ ५७ ॥

स इत्यादि—स निशाचरो द्यामाकाशं जगाहे गतः राजसूययाजीव । राज्ञा सूयते राजा वा अनेन सूत इति राजसूयः क्रतुः । तेनेष्टवान् स राजसूययाजी । 'करणे यजः ।३।२।८५' इति णिनिः । तद्वदित्यर्थः । रुच्यः

---

१ अत्रोपमा । २ 'शङ्कासम्भावनास्वपि ।' इत्यमरः ।

प्रियो जातो रामस्येत्यर्थात् । 'राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।३।१।११४।' इति क्यबन्ता राजसूयादयः ॥ ५७ ॥

**अकृष्टपच्याः पश्यन्तौ ततो दाशरथी लताः ।**
**रत्नाऽन्नपानकुप्यानामाटतुर्नष्टसंस्मृती ॥ ५८ ॥**

अकृष्टपच्या इत्यादि—ततो निशाचरगमनानन्तरं दाशरथी रामलक्ष्मणावाटतुर्गतवन्तौ । कीदृशौ । नष्टा संस्मृतिः ययोः । केषां संस्मृतिः रत्नान्नपानकुप्यानाम् । रत्नान्नपानानि प्रसिद्धानि । कुप्यं स्वर्णरजताभ्यामन्यत् वस्तु तत् 'स्यात् कोशश्च हिरण्यं च हेमरूपे कृताकृते । ताभ्यां यदन्यत् तत् कुप्यम् ।' इत्यमरः संज्ञायां क्यप् । गुपेरादेः गकारस्य ककारः । कर्माणि षष्ठी लताः पश्यन्तौ । कृष्टे पच्यन्ते इति कृष्टपच्याः । पूर्ववत् क्यप् । पश्चान्नञ्समासः । स्वयमेव पच्यन्ते यास्ता इत्यर्थः ॥ ५८ ॥

**समुत्तरन्तावव्यथ्यौ नदान् भिद्योद्ध्यसन्निभान् ।**
**सिध्यतारामिव ख्यातां शबरीमापतुर्वने ॥ ५९ ॥**

समुत्तरन्तावित्यादि—तौ तस्मिन् वने शबरीमापतुः शबरीनाम्नीमित्यर्थः । प्राप्तवन्तौ । अव्यथ्यौ न व्यथेते इति पूर्ववत् क्यप् । परिश्रमवर्जितावित्यर्थः । नदान् समुत्तरन्तौ । कीदृशान् भिद्योद्ध्यसन्निभान् । भिद्योद्ध्यौ नदविशेषौ । 'भिद्योद्ध्यौ ।३।१।११५।' इति पूर्ववत् निपातितम् । भिनत्ति कलमिति भिद्यः । उज्झत्युदकमिति उद्ध्यः । 'उज्झ उत्सर्गे[1]' । दकारात्परस्य धकारो निपात्यते । तत्सदृशान् नदान् । सिध्यतारामिव ख्याताम् । सिध्यन्त्यस्मिन्निति सिध्यः । 'पुष्यसिध्यौ नक्षत्रे ।३।१।११६।' इति निपातनात् । पुष्याख्यां[2] तारामिव ख्यातां शबरीम् ॥ ५९ ॥

**वसानां वल्कले शुद्धे विपूयैः कृतमेखलाम् ।**
**क्षामामञ्जनपिण्डाऽऽभां दण्डिनीमजिनाऽऽस्तराम् ॥ ६० ॥**

वसानामित्यादि—वसानां परिदधानां वल्कले त्वचौ । विपूयैर्मुञ्जैः कृतमेखलां कृतकटिसूत्राम् । यद्यपि विपूर्वस्य पवतेः । 'विपूयविनीयजित्यामुञ्जकल्कहलिषु ।३।१।११७।' इति मुञ्जे निपातितं, तथापि मुञ्जानामनुपहतत्वं ज्ञापयितुं विपूयैरिति विशेषणं, पवित्रैरित्यर्थः । मुञ्जशब्दस्तदानीं सामान्यमाह । विपूयैरित्युक्ते मुञ्जैरित्युपादानमनर्थकम् । एवं कृत्वा पाठा-

१ उत्सर्गस्त्यागः । २ 'सर्वसिद्धिकरः पुष्यः' इति दैवज्ञोक्तेः

न्तरमुच्यते वसानां वल्कले शुद्धे विपूयैरिति । क्षामां कृशाम् ।' क्षायो मः ।८।२।५३।' इति निष्ठामत्वम् । अञ्जनपिण्डस्येवाभा यस्या अस्तीति तां कृष्णाम् । दण्डिनीं गृहीतदण्डाम् । आस्तीर्यत इति आस्तरः 'ऋदोरप् ।३।३।५७।' अजिनमास्तर उत्तरासङ्गो यस्यास्तामजिनास्तराम् ॥ ६० ॥

**प्रगृह्यपदवत् साध्वीं स्पष्टरूपामविक्रियाम् ।**
**अगृह्यां वीतकामत्वाद्देवगृह्यामनिन्दिताम् ॥ ६१ ॥**

**प्रगृह्येत्यादि**—अविक्रियामजातविकाराम् अत एव स्पष्टरूपाम् । एवं च साध्वीं साधुचरिताम् । किमिव प्रगृह्यपदवत् । यस्य पदस्य प्रगृह्यसंज्ञा तत् पदं प्रगृह्यम । 'प्रत्यपिभ्यां ग्रहेः ।३।१।११८।' इत्यनुवृत्तौ 'पदास्वैरिबाह्यापक्ष्येषु च ।३।१।११९।' इति प्रपूर्वाद् ग्रहेः पदेऽभिधेये क्यप् । यथा तत्पदमविकाररूपत्वात् स्पष्टं साधु च ।'प्लुतप्रगृह्या अचि नित्यम् ।६।१।१२५।' इति प्रकृतिभावेन स्वरसन्ध्यभावादित्यर्थः । कथमजातविविक्रियेति चेदाह—अगृह्यां ग्रहेरस्वैरविषये क्यप् । गृह्या अस्वैरिणी अस्वतन्त्रा न भवतीत्यगृह्या । कस्मात् वीतकामत्वात् । वीतरागा हि स्वतन्त्रा भवन्ति । देवगृह्याममपक्षाम् । पक्षविषये क्यप् एवं चानिन्दितामगर्हिताम् ॥ ६१ ॥

**धर्मकृत्यरतां नित्यमवृष्यफलभोजनाम् ।**
**दृष्ट्वाताममुचद्रामो युग्याऽयात इव श्रमम् ॥ ६२ ॥**

**धर्मकृत्यरतामित्यादि**—धर्म्मकृत्यरतां पवित्रकर्म्मचरण एव परायणाम् । धर्मकृत्ये धर्म्मवर्धके कर्म्मणि रता ताम् । नित्यं निरन्तरामिति भावः । अवृष्यफलभोजनाम् । अवृष्याणीन्द्रियाविकारनिमित्तानि फलानि भोजनं यस्याः । ताम् । तपश्चर्योचितभोजनकारिणोमितिभावः। 'विभाषा कृवृषोः।३।१।२०।' इति क्यप् । दृष्ट्वा तां तथाविधाम् । श्रममभुचत् मुक्तवान् । तद्दर्शनाह्लादितत्वात् । युग्यायात इव वाहनं प्राप्त इव क्यप् ।' युग्यं च पत्रे ।३।१।१२१।' इति निपातितम् ॥ ६२ ॥

---

१ 'अजिनं चर्म्मेत्यर्थः । 'अजिनं चर्म्म कृत्तिः स्त्री' इत्यमरः । २ यथा बहिः तथाऽन्तरात्मन्यपि शुद्धामिति भावः । अन्यथा तु स्वरूपज्ञानासम्भव एव । ३ युग्यं वाहनम् आयातः प्राप्त इति तथोक्त इव । अत एवाह वाहनमित्यादि । 'इवेन समासो विभक्त्यपलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति समासः । ४ 'सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम् ।' इत्यमरः ।

स तामूचेऽथ कच्चित् त्वममावास्यासमन्वये ।
पितॄणां कुरुषे कार्यमपाक्यैः स्वादुभिः फलैः ॥ ६३ ॥

स इत्यादि—अथानन्तरं त्यक्तश्रमः स रामः तां शबरीमूचे उक्तवान् । कच्चित्त्वं किं त्वं पितॄणां कुरुषे कार्यम् । क्यबभावपक्षे 'ऋहलोर्ण्यत् ।३।१।१२४।' कदा अमावास्यासमन्वये अमावास्यायाः सम्प्राप्तौ अमावास्यायामित्यर्थः । 'अमावस्यदन्यतरस्याम् ।३।१।१२२।' इति निपातनम् । तत्र हि अमाशब्दे उपपदे वसेर्धातोरमा सह वसतो यस्मिन्काले सूर्याचन्द्रमसौ इति कालेऽधिकरणे ण्यत् । तस्मिन्नन्यतरस्यां वृद्ध्यभावः । कैः फलैः । स्वादुभिः मिष्टैः । अपचनीयैः अनुपहतत्वात् 'ऋहलोर्ण्यत् ।३।१।१२४।' ॥६३॥

अवश्यपाव्यं पवसे कच्चित् त्वं देवभाग्घविः ।
आसाव्यमध्वरे सोमं द्विजैः कच्चिन्नमस्यसि ॥ ६४ ॥

अवश्यपाव्यमित्यादि—देवभाक् देवान् भजत इति 'भजो ण्विः ।३।२।६२।' तद्धविः कच्चित् किं पवसे पवित्रीकरोषि मन्त्रादिना । 'झयो होऽन्यतरस्याम् ।८।४।६२।' इति हकारस्य पूर्वसवर्णः । 'पूङ् पवने' इति भौवादिकः । कीदृशमवश्यपाव्यमवश्यम्भावेन पावयितव्यमित्यर्थः । 'ओरावश्यके ।३।१।१२५।' इति ण्यत् । 'मयूरव्यंसकादयश्च२।१।७२।' इति समासः । 'लुम्पेदवश्यमः कृत्ये तु काममनसोरपि' इति मकारलोपः । सोममोषधिविशेषम् । आसाव्यमभिषवार्हम् । आङ्पूर्वात्सुनोतेः 'आसुयुवपिरपित्रपिचमश्च ।३।१।१२६।' इति ण्यत् । अध्वरे यज्ञे द्विजैः सह कच्चित्त्वं नमस्यसि नमस्करोषि ॥ ६४ ॥

आचाम्यं सन्ध्ययोः कच्चित् सम्यक् ते न प्रहीयते ।
कच्चिदग्निमिवानाय्यं काले सम्मन्यसेऽतिथिम् ॥ ६५ ॥

आचाम्यमित्यादि—प्रभाते अपराह्णे च सन्ध्ययोर्यदाचाम्यमुपस्पर्शनम् । पूर्ववत् ण्यत् । कच्चित्सम्यक् यथावत्तव तत्र न प्रहीयते न तस्य हानिर्भवति ।

---

१ 'कच्चित्कामप्रवेदने ।' इत्यमरोक्तयऽभिमतार्थप्रश्नार्थकमिदमव्ययम् । २ अत्रामावस्येतिपदं श्राद्धाद्यर्हकालोपलक्षणम् । ३ यथाविधि कच्चिद्धवनमपि कुरुष इति भावः । ४ आवश्यकत्वं तापसाश्रमार्हत्वात् । ५ 'इयं कारिका 'पृषोदरादीनि यथोपदिष्टम् ६ । ३ । १०९ ' इति व्याख्यायां दृश्यते । 'यज्ञःसवोऽध्वरो यागः' इत्यमरः । ६ ब्राह्मणैरित्यर्थः । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । ७ अत्र 'नमोवरिवश्चित्रङः क्यच् ३ । १ । १९' इति क्यच् । ८ 'ओरावश्यके ३ ।१। १२५' इत्यनेनैवेत्यर्थः ।

काले आतिथ्योचिते काले कच्चित् अतिथिं संमन्यसे पूजयसि । अग्निमिवानाय्यम् यथा अग्निम् आनाय्यम्[1] । दक्षिणाग्निं मन्यसे तद्वत् । 'आनाय्यो नित्ये ।३।१।१२७।' इति नयतेराङ्पूर्वस्य ण्यदायादेशौ निपात्येते ॥ ६५ ॥

न प्रणाय्यो जनः कच्चिन् निकाय्यं तेऽधितिष्ठति ।
देवकार्यविघाताय धर्मद्रोही महोदये ! ॥ ६६ ॥

न प्रणाय्य इत्यादि—महानुदयः स्वर्गापवर्गाणां यस्याः सा तथा हे महोदये[2] देवकार्यविघाताय देवकार्यं विहनिष्यामीति । 'भाववचनाच्च ।३।३।११।' इति भविष्यति घञ् । 'तुमर्थाच्च भाववचनात् २।३।१५।' इति चतुर्थी । प्रणाय्योऽसंमतो जनः । 'प्रणाय्योऽसंमतौ ।३।१।१२८।' इति निपातितम् । कच्चित् निकाय्यं[3] गृहं ते तव नाधितिष्ठति नाधिवसति । 'पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ३।१।१२९।' इति निवासे चिनोतेर्निपूर्वात् ण्यदायादेशौ आदेः कुत्वं च । 'अधिशीङ्स्थाऽऽसां कर्म ।१।४।४६।' इति कर्मसंज्ञा । धर्मद्रोही धर्मद्रोहशीलः ॥ ६६ ॥

कुण्डपाय्यवतां कच्चिदग्निचित्यावतां तथा ।
कथाभी रमसे नित्यमुपचाय्यवतां शुभे ! ॥ ६७ ॥

कुण्डपाय्यवतामित्यादि—कुण्डेन[4] पीयते ऽत्र क्रतौ कुण्डपाय्यः क्रतुः । 'क्रतौ कुण्डपाय्यसंचाय्यौ ।३।१।१३०।' इति निपातितम् । कच्चित्कथाभी रमसे । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः ६।३।१११।' इति दीर्घः। तथाग्निचित्यावताम् आहिताग्निकानां कथाभी रमसे । 'चित्याग्निचित्ये च ।३।१।१३२।' इति निपात्यते । अग्निचयनमग्निचित्या । भावे क्यप् तुक् च । तद्वतां तथोपचाय्यवतां उपचीयते इत्युपचाय्यो ऽग्निः । 'अग्नौ परिचाय्योपचाय्यसमूह्याः ।३।१।१३१।' इति निपातितः । उपपूर्वाच्चिनोतेर्ण्यदायादेशौ । तद्वतां कथाभी रमसे शुभे कल्याणि[5] ॥ ६७ ॥

इति कृत्याधिकारः ॥

---

१ 'यो गार्हपत्यदानीय दक्षिणाग्निः प्रणीयते । तस्मिन्नानाय्यः' इत्यमरः । २ आन्महतः समानाधिकरणजातीययोः ६ । ३ । ४६' इत्याकारान्तादेशः । ३ 'गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः ।' इत्यमरः । ४ पिठरेणेत्यर्थः । 'पिठरः स्थाल्युखा कुण्डम्' इत्यमरः । ५ तपस्विनीति भावः ।

अतः परं प्रकीर्णकाः—

**वर्धते ते तपो भीरु ! व्यजेष्ठा विघ्ननायकान् ।**
**अजैषीः कामसम्मोहौ संप्राप्था विनयेन वा ॥ ६८ ॥**

वर्धत इत्यादि—हे भीरु कातरचित्ते[1] तव तपो वर्धते तस्य च ये विघ्नास्तेषां ये नायकाः प्रणेतारस्तान् व्यजेष्ठाः जितवत्यसि । लुङि 'विपराभ्यां जेः ।१।३।१९।' इत्यात्मनेपदम् । कामसंमोहौ[2] कच्चिदजैषीः जितवत्यसि । 'सिचि वृद्धिः परस्मैपदेषु ।७।२।१।' विनयेन वा संप्राप्थाः संप्राप्तासि । कर्मणि लुङ् । 'झलो झलि ।८।२।२६।' इति सिचो लोपः । अत्रानुक्तमपि कच्चिदिति पदमर्थाद्योज्यम् ॥ ६८ ॥

**नायास्यसि तपस्यन्ती गुरून् सम्यगतूतुषः ।**
**यमान्नोद्विजिष्ठास्त्वं निजाय तपसेऽतुषः ॥ ६९ ॥**

नायस्यसीत्यादि—तपस्यन्ती तपश्चरन्ती कच्चिन्नायास्यासि न विश्रमे तपश्चरणशीलीभूतेत्यर्थः[3] । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ।३।१।१५।' इति क्यङ् । 'तपसः परस्मैपदं च ।' इति वार्तिकेनात्मनेपदम् । गुरून् आचार्यादीन् सम्यक् यथावदनुवृत्त्याऽतूतुषः तोषितवत्यसि । तुषेर्ण्यन्तस्य लुङि रूपम् । चङि णिलोपादि । यमान्मृत्योर्नोद्विजिष्ठाः नाभैषीः । पुण्यकृतां न मृत्युभयमित्यर्थः[4] । ओविजेरात्मनेपदम् । लुङि सिच इट् । 'विज इट् ।१।२।२।' इति सिचो ङित्त्वे न गुणः । निजायात्मीयाय तपसे । अतुषः तुष्टवत्यसि । 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु । ३ । १ । ५५ । इत्यङ् ॥ ६९ ॥

**अथार्घ्यं मधुपर्काद्यमुपनीयादरादसौ ।**
**अर्चयित्वा फलैरर्च्यौ सर्वत्रारव्यदनामयम् ॥ ७० ॥**

अथेत्यादि—अथानन्तरमसौ शबरी अर्घ्यमर्घार्थम् । 'पादार्घाभ्यां च ।५।३।२५।' इति यत् । मधुपर्काद्यम् । दधिमधुमिश्रमुदकं मधुपर्कः तदाद्यं आदौ भवमाद्यं तदुपनीयादरात् फलैरर्चयित्वा । अर्च्यौ[5] अर्चनार्हौ[6]

---

१ अत्र कातरचित्तत्वं पापादेवेति बोध्यम् । तथा च पापकर्म्मत उद्विज्य धर्म्मकर्म्मणि निरत इति भावः । २ कामक्रोधादयः इति भावः । ३ उक्तमेवार्थं स्पष्टयितुमेतत्प्रश्नारम्भः । ४ क्रोधं तु मा कार्षीरिति तात्पर्य्यम् । ५ 'गुरुर्गीष्पतिपित्रादौ' इत्यमराद्गुरूनिति शेषः । ६ 'अर्हे कृत्यतृचश्च । २ । ३ । १६९' इति सूत्रेणेति शेषः ।

यत् । रामलक्ष्मणौ सर्वत्रोक्तेषु अनामयं[1] कल्याणं आख्यत्कथितवती । 'अस्यतिवक्तिख्यातिभ्योऽङ् ।३।१।५२।' इत्यङ् ॥ ७० ॥

इति प्रकीर्णकाः ।

**अथ कृदधिकारमाह**—कृत्यानां कृदन्तर्भावेऽपि भावकर्मणोः कृत्या इति विशेषप्रतिपादनार्थः पृथगधिकारः । शेषास्तु कृतः कर्तरि भवन्ति तत्रोपपदं सप्तमीस्थम् ।३।१।९२।' । इत्येतदधिकृतम् । यत्रैतन्नावतिष्ठते तान् कृतो दर्शयन्नाह—

**सख्यस्य तव सुग्रीवः कारकः कपिनन्दनः ।**
**द्रुतं[2] द्रष्टासि मैथिल्याः सैवमुक्त्वा तिरोऽभवत् ॥ ७१ ॥**

**सख्यस्येत्यादि**—सा शबरी तिरोऽभवदन्तर्भूता । एवमुक्त्वा । किं तदित्याह—तव सख्यस्य सखित्वस्य । 'सख्युर्यः । ५।१।१२६।' इति यः । कर्मणि षष्ठी । कारकः सुग्रीवः । 'ण्वुल्तृचौ ।३।१।१३३।' इति ण्वुल् । 'युवोरनाकौ ।७।१।१।' इत्यकादेशः । त्वया सह मैत्रीं करिष्यति । कपिनन्दनः कपीनां नन्दयिता । 'नन्दिग्रहि० ।३।१।१३४।' इत्यादिना ल्युः । अनादेशस्तु 'युवोरनाकौ । ७ । १ । १ ।' इत्यनेनैव । कृद्योगे षष्ठी । ततो द्रुतं द्रष्टासि मैथिल्याः । पूर्ववत्कर्तरि तृच् कर्मणि षष्ठी । असीति वर्तमाने लट् ॥ ७१ ॥

**नन्दनानि मुनीन्द्राणां रमणानि वनौकसाम् ।**
**वनानि भेजतुर्वीरौ ततः पाम्पानि राघवौ ॥ ७२ ॥**

**नन्दनानीत्यादि**—तत उक्तादनन्तरं वीरौ राघवौ रामलक्ष्मणौ वनानि भेजतुः सेवितवन्तौ[3] । एत्वाभ्यासलोपौ 'तृफलभजत्रपश्च । ६।४।१२२।' इति । पाम्पानीनि । पम्पाया अदूरम् । 'अदूरभवश्च । ४ । २।७०।' इत्यण् । मुनीन्द्राणां नन्दनानि प्रमोदकारीणि । वनौकसां वनेचराणाम् । 'उच समवाये ।' अस्मादौणादिकोऽसुम् । पृषोदरादित्वाद्वर्णविपर्ययः । वनमोको[4] येषां तेषां रमणानि रतिजनकानि । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । ३ । १ । ।१३४।' इति ल्युः । कर्मणि षष्ठी ॥ १२१ ॥

---

१ 'अनामयं स्यादारोग्यम्' इत्यमरः । २ शीघ्रमित्यर्थः । 'लघुक्षिप्रमरं द्रुतम् ।' इत्यमरः । ३ अन्यानि वनानि गाहेते स्मेत्यर्थः । ४ ओकः स्थानमित्यर्थः । 'ओकः सद्माश्रयश्चौकाः' इत्यमरः।

भृङ्गालीकोकिलक्रुङ्भिर्वाशनैः पश्य लक्ष्मण ।
रोचनैर्भूषितां पम्पामस्माकं हृदयाविधम् ॥ ७३ ॥

भृङ्गालीत्यादि---हे लक्ष्मण पम्पां पश्य । अस्माकं हृदयाविधम् । चेतःपीडयन्तीम् । हृदयं विध्यतीति क्विप् । 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । ६ । १।१।१६।' इति सम्प्रसारणम् । 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ।६।३।११६।' इति पूर्वपदस्य दीर्घः । भूषितां काभिः भृङ्गालीभिः भ्रमरपङ्क्तिभिः । कोकिलैः क्रुङ्भिः क्रौञ्चैः । वाशनैः कूजद्भिः । रोचनैः शोभनैः । क्रुङ् इति 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ।३।२।५९।' इति किन् । निपातनसामर्थ्यादनुनासिकलोपाभावः । 'संयोगान्तस्य लोपः ।८।२।२३।' । 'किन्प्रत्ययस्य कुः ।८।२।६२।' इति कुत्वम् ॥ १७ ॥

परिभावीणि ताराणां पश्य मन्थीनि चेतसाम् ।
उद्भासीनि जलेजानि दुन्वन्त्यदयितं जनम् ॥ ७४ ॥

परिभावीणीत्यादि--जलेजानि पद्मानि पश्य । 'तत्पुरुषे कृतिबहुलम् । ६ । ३ । १४ ।' इत्यलुक् सप्तम्याः । उद्भासीनि भासमानानि । अत एव ताराणां परिभावीणि तिरस्कर्तॄणि । ततश्चेतसां मन्थीनि पीडाकराणि[1] । अतो जनमदयितं दुन्वन्ति । 'टुदु उपतापे' सौवादिकः । मन्थोद्भासपरिभूभ्यो ग्रहादित्वाण्णिनिः[2] ॥ १४ ॥

सर्वत्र दयिताधीनं सुव्यक्तं रामणीयकम् ॥
येन जातं प्रियापाये कद्वदं हंसकोकिलम् ॥ ७५ ॥

सर्वत्रेत्यादि--हे लक्ष्मण सर्वत्र[3] यत्किञ्चिद्रामणीयकं रमणीयस्य भावः । 'योपधाद् गुरूपोत्तमाद्वुञ् ।५।१।१३२।' इति वुञ् । तत्सर्वं दयिताधीनं[4] दयितायत्तम् । 'अषडक्षाशितङ्ग्वलङ्कर्मालंपुरुषाध्युत्तरपदात्खः । ५ । ४ । ७।' इत्यध्युत्तरपदात्खः । सुव्यक्तं स्पष्टम् । कुतः येन प्रियाया अभावे सति हंसकोकिलं हंसाश्च कोकिलाश्चेति शकुनित्वात् द्वन्द्वैकत्वम् । कद्वदं कुत्सितप्रलपितं वदतीति पचादित्वादच् । कुत्सितं वदतीति

---

१ पीडयन्ति मन्मथोत्तेजकत्वादिति भावः । २ 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ १।१३४' इत्यनेनेति शेषः । ३ गृहे वने चेत्यभिप्रायः । ४ प्रियामात्राधीनमित्यर्थः । प्रियासङ्ग एवैषां रमणीयत्वम्, प्रियासङ्गाभावे तु रमणीयानामपि भीषणत्वमिति वक्तव्यम् ।

'रथवदयोश्च । ६ । ३ । १०२ ।' इति कोः कदादेशः। दयितायां सत्यां मधुरप्रलापमासीदित्यर्थः ॥ ७५ ॥

पक्षिभिर्वितृदैर्यूना शाखिभिः कुसुमोत्किरैः ।
अज्ञो यो यस्य वा नास्ति प्रियः प्रग्लो भवेन्न सः ॥ ७६ ॥

पक्षिभिरित्यादि—'उत्तृदिर् हिंसानादरयोः ।' इत्यस्मात् 'इगुपधज्ञाप्रीकिरः कः ३ । १ । १३५ ।' इतीगुपधलक्षणः कः । यूनां वितृदैः हिंसकैः पक्षिभिः शाखिभिर्वृक्षैश्च ।'व्रीह्यादिभ्यश्च ।५।२।११६ इतीनिः। कुसुमोत्किरैः। उत्किरन्ति उत्क्षिपन्तीत्युत्किराः । पूर्ववत्कः । कुसुमानामुत्किराः । कृद्योगलक्षणां षष्ठीं विधाय समासः । तैर्हेतुभूतैः करणभूतैर्वा । स प्रग्लो न भवेत् । प्रकर्षेण ग्लायते प्रग्लः। 'आतश्चोपसर्गे । ३ । १ । १३६ ।' इति कः । योऽज्ञः गुणदोषानभिज्ञः। जानातीति ज्ञः पूर्ववत्कः। यस्य वा प्रियो जनो नास्ति तस्य प्रयोजनाभावः सर्वत्र विवेकित्वात् । प्रीणातीति प्रियः । पूर्ववत् कः ॥ ७६ ॥

ध्वनीनामुद्धमैरेभिर्मधूनामुद्धयैर्भृशम् ।
आजिघ्रैः पुष्पगन्धानां पतङ्गैर्ग्लपिता वयम् ॥ ७७ ॥

ध्वनीनामित्यादि—पतङ्गैर्भ्रमरैर्ग्लपिताः पीडिताः वयम् । 'ग्लास्नावनुवमां च' इति मित्त्वाद्ध्रस्वः । 'पतेरङ्गच् पक्षिणि' इत्यौणादिकोऽङ्गच् । कीदृशैः ध्वनीनामुद्धमैः ध्वनीन् कुर्वद्भिः । 'पाघ्राध्मास्थाम्नादाणदृश्यर्तिसर्तिसदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः। ७ । ३ । ७८ ।' इति धमादेशः । मधूनामुद्धयैः मधूनि पुनः पुनः पिबद्भिः । 'धेट् पाने' इत्यस्यायादेशः। आजिघ्रैः पुष्पगन्धानां पुष्पगन्धान् जिघ्रद्भिः । पूर्ववज्जिघ्रादेशः । सर्वत्र 'पाघ्राध्माधेट्दृशः शः । ३ । १ । १३७ ।' इति शः । कृद्योगलक्षणा षष्ठी ॥ ७७ ॥

---

१ 'वृक्षो महीरुहः शाखी' इत्यमरः। २ विधायैवेति वाच्यम्, अन्यथा 'कर्मण्यण् ३ । २ । १ ।' इत्यण् प्रसज्येत । ३ अत्र सर्वत्र पूर्ववदिति 'इगुपधज्ञाप्रीकिरः कः ३ । १ । १३५ ।' इति शास्त्रस्मारकम् । ४ पाघ्राध्मास्थाम्ना—७ । ३ । ७८ ' इत्यादिनैवेति भावः । ५ ' कृत्यानां कर्तरि वा २ । ३ ७१' इति सूत्रेणेति भावः ।

धारयैः कुसुमोर्मीणां पारयैर्बाधितुं जनान् ।
शाखिभिर्हा हता भूयो हृदयानामुदेजयैः ॥ ७८ ॥

धारयैरित्यादि---हा कष्टं शाखिभिर्द्रुमर्भूयोऽत्यर्थं वयं हताः । कीदृशैः हृदयानामुदेजयैः चेतसामुत्कम्पकैः । धारयैः कुसुमोर्मीणां कुसुमनिचयान् धारयद्भिः । जनान् मद्विधान् बाधितुं पीडयितुं पारयद्भिः समर्थैः । 'धृञ् धारणे' 'पृ पालनपूरणयोः' 'एज कम्पने च ।' एभ्यो णिजन्तेभ्यः अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । ३ । १ । १३८ ।' इति शः ॥ ७८ ॥

ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम् ।
लिम्पैरिव तनोर्वातैश्चेतयः स्याज्ज्वलो न कः ॥ ७९ ॥

ददरित्यादि---वातैर्दुःखस्य ददैः दुःखं ददद्भिः । केभ्यो मादृग्भ्यः । अस्मादृशेभ्यो विरहिभ्यः । 'त्यदादिषु दृशोऽनालोचने कञ्च । ३ । २ । ६० ।' इति किन् । 'दृग्दृशवतुषु । ६ । ३ । ८९ ।' इत्याकारः । धायैरामोदमुत्तमम् आमोदं प्रियासङ्गमेन हर्षं यावद्विरहिभ्यो दत्तस्य दुःखस्य धायैः पोषकैरित्यर्थः । उत्तममिति क्रियाविशेषणम् । उत्तममामोदं धायैः कुसुमानां परिमलं धारयद्भिरिति व्याख्याने अनित्यत्वात् कृत्प्रयोगे कर्मषष्ठ्यभावः । लिम्पैरिव तनोः शरीरं लिम्पद्भिरिव । वातैर्हेतुभिः । को नाम विरहाग्निना यश्चेतयमानः ज्वलन्नग्निरिव न स्यात् । किन्तु भवेदेवेति भावः । ददैर्धायैरिति 'श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च । ३ । १ । १४१ ।' इत्याकारान्तलक्षणे शे प्राप्ते 'ददातिदधात्योर्विभाषा । ३ । १ । १३९ ।' इति शाणौ भवतः । श आतो लोपः । णे चातो युक् । लिम्पश्चेतय इति 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । ३ । १ । १३८ ।' इति शः, ज्वल इति 'ज्वलितिकसन्तेभ्यो णः । ३ । १ । १४० ।' इति णस्य विकल्पनात्पचाद्यच् ॥ ७९ ॥

अवश्यायकणास्रावाश्चारुमुक्ताफलत्विषः ।
कुर्वन्ति चित्तसंस्रावं चलत्पर्णाग्रसम्भृताः ॥ ८० ॥

अवश्यायेत्यादि---अवश्यायत इत्यवश्यायः तस्य कणा बिन्दवः । आ-

---

१ 'स्फारं भूयश्च भूरि च' इत्यमरः । २ 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ।' इत्यमरः ।

स्रवन्तीत्यास्रावाः क्षरन्तः। 'श्याद्व्यधास्रुसंस्रुवतीणवसावहृलिहाश्लिषश्वसश्च ।३।१।१४१।' इति णः कर्तरि। तयोर्विशेषणसमासे राजदन्तादित्वात्परनिपातः। ते कुर्वन्ति चित्तसंस्रावम्। संस्रवतीति संस्रावः। पूर्ववत् णः। चित्तं संस्रावं चलत्कुर्वन्ति इत्यर्थः। पूर्ववत् समासपरनिपातौ। कीदृशाश्चलन्पर्णाग्रसंभृताः संगलिताः। अत एव चारुमुक्ताफलत्विषः दर्शनीयमुक्ताफलानुकारिणः। सीताहारस्थमुक्ताफलानि स्मारयन्तीत्यर्थः॥ ८०॥

अवसायो भविष्यामि दुःखस्याऽस्य कदाऽन्वहम्।
न जीवस्यावहारो मां करोति सुखिनं यमः॥ ८१॥

अवसाय इत्यादि—कदा नु कस्मिन्ननु काले अहं दुःखस्यानुभूयमानस्य सन्तापस्य अवसायोऽन्तकरो भविष्यामि येन जीवस्यावहारोऽपहर्ता यमो मां सुखिनं न करोति मारयतीत्यर्थः। अवस्यति इति अवसायः। षो ऽन्तकर्मणि। अवहरतीत्यवहारः। 'श्याद्व्यधास्रुसंस्रुवतीणवसावहृलिहश्लिषश्वसश्च ।३।१।१४२।' इति सर्वत्र णः। युक्॥ ८१॥

दह्ये ऽहं मधुनो लेहैर्दावैरुग्रैर्यथा गिरिः।
नायः कोऽत्र स येन स्यां बताऽहं विगतज्वरः॥ ८२॥

दह्य इत्यादि—मधुनो लेहैर्भृङ्गैः अहं दह्ये। 'श्याद्व्यधास्रुसंस्रुवतीणवसावहृलिहश्लिषश्वसश्च ३।१।१४१।' इति णः। दावैर्वनाग्निभिरुग्रैः प्रचण्डैर्यथा गिरिर्दह्यते तद्वत्। अत्र को नायः नयतीति नायः उपायः ईप्सितप्रापकः। उभयत्र 'दुन्योरनुपसर्गे ।३।१।१४२।' इति णः। येन नायेन विगतज्वरः विगतपीडः स्यामिति। आशंसायां लिङ्। बत खेदे॥ ८२॥

समाविष्टं ग्रहेणेव ग्राहेणेवाऽऽत्तमर्णवे।
दृष्ट्वा गृहान् स्मरस्येव वनान्तान् मम मानसम्॥ ८३॥

समाविष्टमित्यादि—वनान्तान् वनपर्यन्तान्। स्मरस्य कामस्य गृहमिव। उन्मादकत्वात्। 'गेहे कः। ३।१।१४४।' इति ग्रहेः कः। अर्धर्चादिपाठात् पुँल्लिङ्गता। दृष्ट्वा मम स्थितस्येत्यर्थात् योज्यम्। अन्यथा कथं समानकर्तृकत्वम्। मानसं चेतः ग्रहेणाङ्गारकादिना। समाविष्टमिव निगृहीतमिव। 'विभाषा ग्रहः ।३।१।१४३।' इति णप्रत्ययः। अचोऽपवादः। तत्र व्यवस्थितविभाषाविज्ञानात् जलचरे ग्राहः ज्योतिषि ग्रह इति जलचरे वाच्येऽचोपवादो

---

१ चारूणि सुन्दराणि यानि मुक्ताफलानि तेषां त्विडिव त्विट् येषां ते।

णप्रत्ययः, ज्योतिषि वाच्येऽच् प्रत्ययः । ग्राहेणेवात्तमर्णवे । अर्णः पानीयं यत्रास्तीति । 'केशाद्वोऽन्यतरस्याम् । ५।२।१०९।' इत्यत्र 'अर्णसो लोपश्च' इति भूम्नि[1] नित्ययोगेऽतिशायने वा वः सलोपश्च । अर्णवे समुद्रे वर्तमानेन ग्राहेन नक्रादिना आत्तं गृहीतम् । आङ्पूर्वस्य दाञः 'अच उपसर्गात्तः । ७।४।४७।' इति तादेशः ॥ ८३ ॥

वाताऽऽहतिचलच्छाखा नर्तका इव शाखिनः ।
दुःसहा ह्री[2] परिक्षिप्ताः क्वणद्भिरलि[3]गाथकैः ॥ ८४ ॥

वातेत्यादि—ह्री कष्टम् एते शाखिनः नर्तका इव । 'शिल्पिनि ष्वुन् ।३।१।१४५।' दुःसहा दुःखेन सह्यन्त इति 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।३।३।१२६।' इति खल् । नर्तकैः साधर्म्यमाह । वाताहतिचलच्छाखा वाताहतिभिः चलन्त्यः शाखा बाहुलता इव येषां ते । अलयो भ्रमराः क्वणन्तः गाथका गायना इव । 'गस्थकन् ।३।१।१४६।' इति कन् । तैश्च परिक्षिप्ता परिवेष्टिता इति ॥ ८४ ॥

एकहायन[4]सारङ्ग[5]गती रघुकुलोत्तमा ।
लवकौ शत्रुशक्तीनामृष्यमूकमगच्छताम् ॥ ८५ ॥

एकहायनेत्यादि—रघुकुलोत्तमौ रामलक्ष्मणौ । ऋष्यमूकमगच्छतां गतवन्तौ । लङि रूपम् । हायनः संवत्सरः स एको यस्य सारङ्गस्य मृगस्य तस्यैव गतिर्ययोः शीघ्रगामित्वात् । 'हश्च व्रीहिकालयोः ।३।१।१४८।' इति हाधातोर्ण्युट् । आतो युक् । तौ शत्रुशक्तीनां लवकौ अपनेतारौ । 'प्रुसृल्वः समभिहारे वुन् ।३।१।१४९।' इति वुन् । तत्र समभिहारग्रहणं साधुकारित्वोपलक्षणार्थम् ॥ ८५ ॥

तौ वालिप्रणिधी मत्वा सुग्रीवोऽचिन्तयत्कपिः ।
बन्धुना विगृहीतोऽहं भयासं जीवकः कथम् ॥ ८६ ॥

---

१ 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।' इति मत्वर्थीयः २ 'ह्री विस्मये प्रमोदे च' इति त्रिकाण्डशेषव्याख्यायां चकारेण खेदे च इत्युक्तत्वात्, 'ह्री कान्तारगमनम्' इत्युदाहृतत्वाच्च । ३ 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ।' इत्यमरः । ४ 'हायनोऽस्त्री शरत् समाः' इत्यमरः । ५ 'चातके हरिणे पुंसि सारङ्गः शबले त्रिषु ।' इत्यमरः ।

तावित्यादि—तौ रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा सुग्रीवः कपिरचिन्तयत् चिन्तितवान् । प्रणिधीयते नियुज्यते कार्येषु प्रणिधिः । 'उपसर्गे घोः किः ।३।३।९२।' इति किः । बन्धुना भ्रात्रा विगृहीतो विरोधितः सन् कथं जीवको भूयासमिति । आशंसायां लिङ् । जीवेः 'आशिषि च ।३।१।१५०।' इति वुन् ॥ ८६ ॥

इति निरुपपदकृदधिकारः ।

इतः प्रभृति 'तत्रोपपदं सप्तमीस्थम् ।३।१।९२।' इति अस्योपस्थापनेन कृतो दर्शयन्नाह—

**स शत्रुलावौ मन्वानो राघवौ मलयं गिरिम् ।**
**जगाम सपरीवारो व्योममायामिवोत्थितम् ॥ ८७ ॥**

स इत्यादि—स सुग्रीवः सपरीवारः सपरिकरः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम् ।६।३।१२२।' इति दीर्घः । कपीनाममनुष्यत्वात् । मलयं गिरिं जगाम । राघवौ शत्रुलावौ शत्रून् लुनीत इति 'कर्मण्यण् ।३।२।१।' शत्रूणामुन्मूलकाविति मन्वानोऽवगच्छन् । 'मनु अवबोधने' इत्यस्मादात्मनेपदिनः 'तनादिकृञ्भ्य उः ।३।१।७९।' व्योममायमिवोत्थितं व्योम आकाशं मिमीत इति 'ह्वावामश्च ।३।२।२।' इत्यण् । नभः परिच्छेत्तुमिवोत्थितं कियत्प्रमाणमस्येति ॥ ८७ ॥

**शर्मदं मारुतिं दूतं विषमस्थः कपिद्विपम् ।**
**शोकाऽपनुदमव्यग्र प्रायुङ्क्त कपिकुञ्जरः ॥ ८८ ॥**

शर्मदमित्यादि—कपिकुञ्जरः सुग्रीवः हनूमन्तं दूतं प्रायुङ्क्त प्रस्थापितवान् । 'वृन्दारकनागकुञ्जरैः पूज्यमानम् ।२।१।६२।' इति कर्मधारयः समासः । वृत्तान्तं ज्ञातुमित्यर्थात् । प्रायुङ्क्त इति 'प्रोपाभ्यां युजेरयज्ञपात्रेषु ।१।३।६४।' इत्यात्मनेपदम् । 'रुधादिभ्यः श्नम् ।३।१।७८।' कपिकुञ्जरः । किम्भूतः विषमे दुर्गमपर्वते तिष्ठतीति विषमस्थः । 'सुपि स्थः ।३।२।४।' इति कः । मारुतिं मारुतनन्दनं हनुमन्तमित्यर्थः । कीदृशं शर्म कल्याणं ददातीति शर्मदः ।'आतोऽनुपसर्गे कः।३।२।३।'इति कः। श्रेष्ठत्वमाह कपिद्विपं कपिश्रेष्ठम् । द्वाभ्यांपिबतीति द्विपः कपिरयं द्विप इव । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ।' २।१।५६।

---

१ 'यथाऽर्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः । चारश्च गूढपुरुषः' इत्यमरः ।
२ 'शर्मशातसुखानि च,इत्यमरः । ३ द्विपो हस्ती । 'द्विरदोऽनेकपो द्विपः।' इत्यमरः ।

इति कर्मधारयः। पुनः कीदृशं शोकापनुदं शोकमपनुदति। 'तुन्दशोकयोः परिमृजापनुदोः। ३। २। ५।' इति कः। अव्यग्रं सुचित्तमित्यर्थः॥ ८८॥

**विश्वासप्रदवेषोऽसौ पथिप्रज्ञः समाहितः।**
**चित्तसंख्यो जिगीषूणामुत्पपात नभस्तलम्॥ ८९॥**

विश्वासेत्यादि—असौ मारुतिर्नभस्तलमुत्पपात। विश्वासं प्रददातीति विश्वासप्रदः। 'प्रे दाज्ञः। ३। २। ६।' इति कः। विश्वासप्रदो वेषो यस्य भिक्षुवेष इत्यर्थः। वेष्यते आत्माऽनेनेति, 'अकर्तरि च कारके संज्ञायाम्।३।३।१९।' इति घञ्। 'विष्लृ व्याप्तौ' इत्यस्य रूपम्। पन्थानं प्रजानातीति पथिप्रज्ञः। समाहितः अभ्रान्तचित्तः 'इदमादिष्टम्, इदं च मया तत्र वक्तव्यम्' इति। जिगीषूणां जेतुमिच्छताम्। चित्तसंख्यः चित्तं संख्याति परिच्छिनत्तीति, 'समि ख्यः। ३। २। ७।' इति कः॥ ८९॥

**सुरापैरिव घूर्णद्भिः शाखिभिः पवनाऽऽहतैः।**
**ऋष्यमूकमगाद् भृङ्गैः प्रगीतं सामगैरिव॥ ९०॥**

सुरापैरित्यादि--मारुतिर्ऋष्यमूकमगात्। शाखिभिरुपलक्षितम्। घूर्णद्भिः कम्पमानैः पवनाहतत्वात्। अत एव सुरापैरिव मत्तैरिव। 'गापोष्टक्।३।२।८।' इत्यत्र 'पिबतेः सुराशीध्वोरिति वाच्यम्' इति टक्। प्रगीतं प्रगीयतेऽत्रेति अधिकरणे क्तः। कैरिव भृङ्गैः सामगैरिव सामवेदपाठकैरिव। साम गायन्तीति 'गापोष्टक्। ३। २। ८।' इति टक्॥ ९०॥

**तं मनोहरमागत्य गिरिं वर्महरौ कपिः।**
**वीरौ सुखाऽऽहरोऽवोचद्भिक्षुर्भिक्षार्हविग्रहः॥ ९१॥**

तमित्यादि—तमृष्यमूकं गिरिमागत्य कपिर्वीरौ रामलक्ष्मणौ अवोचत् उक्तवान्। कीदृशं मनोहरं रम्यत्वात्। मनो हरतीति, हरतेरनुद्यमनेऽच्। ३। २। ९।' इत्यच्। वर्महरौ कवचं हर्तुं क्षमौ। संभाव्यमानवयसावित्यर्थः। वयसि च। ३। २। १०। इत्यच्। सुखाहरः सुखाहरणशीलः, 'आङि ताच्छील्ये। ३।२।११।' इत्यच्। भिक्षुः परिव्राड्वेषः न कपिरूपः यतो विश्वासप्रदवेष इत्युक्तम्। भिक्षार्हविग्रहः भिक्षायोग्यशरीरः कृशत्वादित्यर्थः। भिक्षामर्हतीति, 'अर्हः। ३। २। १२।' इत्यच्॥ ९१॥

---

१ 'तनुत्रं वर्म्म दंशनम्' इत्यमरः। २ अत्र पचादित्वादच्।

**बलिनावमुमद्रीन्द्रं युवां स्तम्बेरमाविव ।**
**आचक्षाथामिथः कस्माच्छङ्करेणापि दुर्गमम् ॥ ९२ ॥**

बलिनावित्यादि—युवाम् अमुम् अद्रीन्द्रम् । कस्मात् कारणादिथः प्राप्तौ । 'इण् गतौ' इत्यस्मात् 'वर्तमानसामीप्ये वर्तमानवद्वा । ३ । ३ । १३१ ।' इति थासि रूपम् । भूते लट् थस् । एतदाचक्षाथां कथयतम् । लोटि रूपम् । बलिनौ बलवन्तौ । यतः शङ्करेणापि महादेवेनापि दुर्गमम् दुःखेन गम्यते । काविव स्तम्बेरमाविव यथा मत्तद्विपौ प्राप्नुतस्तद्वत् । 'स्तम्बकर्णयो रमिजपोः । ३ । २ । १३ ।' इत्यच् कर्तरि हस्तिन्यभिधेये 'हस्तिसूचकयोः' इति वचनात् । शंकर इति 'शमि धातोः संज्ञायाम् । ३ । २ । १४ ।' इत्यच् ॥ ९२ ॥

दुर्गमत्वदर्शनायाह—

**व्याप्तं गुहाशयैः क्रूरैः क्रव्याद्भिः सनिशाचरैः ।**
**तुङ्गशैलतरुच्छन्नं मानुषाणामगोचरम् ॥ ९३ ॥**

व्याप्तमित्यादि—कीदृशमद्रीन्द्रं क्रव्यमपक्वमांसं भक्षयद्भिः । क्रव्योपपदाददेः 'क्रव्ये च । ३ । २ । ६९ ।' इति विट् । क्रूरैः हिंसकैः सिंहादिभिः सनिशाचरैः राक्षससहितैर्व्याप्तम् । गुहाशयैः गुहायां शेरते इति शीङः 'अधिकरणे शेतेः । ३ । २ । १५ ।' इत्यच् । तुङ्गाः उच्चाः शैलाः शिलायां भवा ये तरवस्तैश्छन्नं व्याप्तम् । अत एव मानुषाणामगोचरम् अगम्यम् । 'गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च । ३ । ३ । ११९ ।' इति निपातितः ॥ ९३ ॥

इति प्रागुक्तष्टाधिकारः । इत ऊर्ध्वं खशादिप्रत्ययानाह—

**सत्त्वमेजयसिंहाढ्यान् स्तनंधयसमत्विषौ ।**
**कथं नाडिन्धमान्मार्गानागतौ विषमोपलान् ॥ ९४ ॥**

सत्त्वमित्यादि—युवामिमान मार्गान् कथमागतौ । सत्त्वमेजयसिंहाढ्यान् सत्त्वमेजयन्ति ये सिंहाः, 'एजेः खश् । ३ । २ । २८ ।' 'अरुर्द्विषदजन्तस्य मुम् । ६ । ३ । ६७ ।' इति मुम् । तैराढ्यान् व्याप्तान् । सिंहग्रहणं तद्वद्धिंस्रोपलक्षणार्थम् । हिनस्तीति सिंहः । पृषोदरादित्वाद्वर्णविपर्ययः । नाडिन्धमानिति । उच्चनीचाधिरोहणात् मुहुर्मुहुर्निःश्वासैर्नाडिं धमन्तीति 'नाडीमुष्ट्योश्च ।

---

१ 'इभः स्तम्बेरमः पद्मी' इत्यमरः । २ 'पिशितं तरसं मांसं पललं क्रव्यमस्त्रियाम् ।' इत्यमरः ।

३।२।३ ।' इति खश् । 'खित्यनव्ययस्य । ६ । ६६ ।' इति ह्रस्वः । विषमोपलान् उन्नतपाषाणयुक्तान् । स्तनन्धयसमत्विषौ[1] बालवत्सुकुमारौ। सामर्थ्यं पुनर्युवयोरचिन्त्यम् । स्तनं धयतः पिबतः । 'नासिकास्तनयोर्ध्माधेटोः ।३।२।२९। इति खश् । 'अरुर्द्विषदजन्तस्य मुम् । ६ । ३ । ६७ ।' इति मुम् ॥ ९४ ॥

उत्तीर्णौ वा कथं भीमाः सरितः कूलमुद्वहाः ।
आसादितौ कथं ब्रूतं न गजैः कूलमुद्रुजैः ॥ ९५ ॥

उत्तीर्णावित्यादि—कथं वा केनोपायेन युवां सरितो नदीरुत्तीर्णौ । भीमास्त्रासकरीः । यतः कूलमुद्वहाः कूलमापूर्य वहन्त्यः । 'उदि कूले रुजिवहोः ।३।२। ३१ ।' इति खश् । गजैः कूलमुद्रुजैः कूलं भिन्दद्भिः कथं नामादितौ न व्यापादितौ इति ब्रूतं कथयतम् ॥ ९५ ॥

रामोऽवोचद्धनूमन्तमावामभ्रंलिहं गिरिम् ।
ऐव विद्वन् पितुः कामात्पान्तावल्पंपचान्मुनीन् ॥ ९६ ॥

राम इत्यादि—हनुर्वेदनैकदेशः स निन्दितोऽस्यास्तीति निन्दायां मतुप् । 'अन्येषामपि दृश्यते ।६।३।१३७' इति दीर्घः । 'हनूमान् हनुमानपि' इति विश्वदर्शनात् । तस्य किल जातमात्रस्य आदित्यरथं[2] गृह्णतो हनुद्वयं भग्नमिति श्रूयते । तं रामोऽवोचत् उक्तवान् । तत् किमित्याह—हे विद्वन् यदमुं गिरिमावामैव आगतौ तत् पितुः कामादभिप्रायात्[3] । आङ्पूर्वादिणो लाङि रूपम् । अभ्रंलिहमुच्चैस्तरम् । अभ्रं लेढीति, 'वहाभ्रे लिहः ।३।२।३२।' इति खश् । किं कुर्वाणौ पान्तौ रक्षन्तौ । मुनीन् अल्पम्पचान् अल्पसन्तुष्टान् । अल्पं पचन्तीति 'मितनखे च ।३।२।३४।' इति मितेत्यर्थग्रहणात् खश् । चकारस्यानुक्तसमुच्चयार्थत्वाद्वा ॥ ८६ ॥

कः पुनः पिता यदादेशादागतावित्यत आह—

अमितंपचमीशानं सर्वभोगिणमुत्तमम् ।
आवयोः पितरं विद्धि ख्यातं दशरथं भुवि ॥ ९७ ॥

अमितम्पचमित्यादि—आवयोः पितरं दशरथनामानं भुवि ख्यातं विद्धि जानीहि । 'हुझल्भ्यो हेर्धिः ।६।४।१०१।' अमितम्पचं महासत्रिणं पूर्ववत्

---

१ स्तनन्धयाभ्यां बालाभ्यां समा त्विट् ययोस्तौ । २ आदित्यस्य सूर्यस्य रथमित्यर्थः । 'सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः ।' इत्यमरः । ३ 'इच्छामनोभवौ कामौ' इत्यमरः ।

खश् मुम् च। ततो नञ्समासः।ईशानमीशनशीलं स्वामिनमित्यर्थः। 'ताच्छील्यवयोवचनशक्तिषु चानश् ।३।२।१२९।' इति चानश्। सर्वभोगीणं सर्वसत्त्वभोगाय हितम् ।'आत्मन्विश्वजनभोगोत्तरपदात्खः ।५।१।९।' इति खः। भोगशब्दोऽत्र शरीरवाची । 'अट्कुप्वाङ्नुम्व्यवायेऽपि । ८ । ४ । २' इति णत्वम् ॥ ९७ ॥

यदि पितुरादेशादागतौ किमत्रामनेनान्वेषयथ इत्याह—

छलेन दयिताऽरण्याद्रक्षसाऽरुन्तुदेन नः ।
असूर्यपश्यया मूर्त्या हृता तां मृगयावहे ॥ ९८ ॥

छलेनेत्यादि—नोऽस्माकं दयिता अरण्याद्रक्षसा हृता । कीदृशेन अरुन्तुदेन मर्मस्पृशा । 'विध्वरुषोस्तुदः ।३।२।३५।' इति खश् । ततो मुम्। असूर्यम्पश्यया आदित्यगोप्यया मूर्त्या शरीरेणोपलक्षिता । 'असूर्यललाटयोर्दृशितपोः ।३।२।३६।' इति खश् । तां हृतां मृगयावहे गवेषयावः। 'मृग अन्वेषणे' स्वार्थिकण्यन्तः। युवयोः पौरुषान्वितत्वात् कथं हृतेत्याह—छलेन छद्मना ॥ ९८ ॥

त्वं पुनः कस्य वेत्यत आह—

प्रत्यूचे मारुती राममस्ति वालीति वानरः ।
शमयेदपि संग्रामे यो ललाटंतपं रविम् ॥ ९९ ॥

प्रत्यूच इत्यादि—रामं मारुतिः प्रत्यूचे प्रत्युक्तवान्। अस्ति वालीति नाम्ना कपीश्वरः यः संग्रामे युद्धे ललाटन्तपं सर्वेषामुपरि वर्तमानं रविं पूर्ववत् 'असूर्यललाटयोर्दृशितपोः ।३।२।३६। इति खश् । शमयेत् पराजयेदिति सम्भावने लिङ्। वालिशब्दो नान्तः,इदन्तश्च। तथा च'वाली वालिश्च कथ्यते' इति शब्दभेदः ॥ ९९ ॥

उग्रम्पश्येन सुग्रीवस्तेन भ्राता निराकृतः ।
तस्य मित्रीयतो दूतः सम्प्राप्तोऽस्मि वशंवदः ॥१०० ॥

उग्रम्पश्येनेत्यादि—तेन भ्राता उग्रम्पश्येन पापं विजानता । 'उग्रम्पश्येरम्मदपाणिन्धमाश्च ।३।२।३७'इति निपातितम्। यश्च सुग्रीवो निराकृतोऽभिभूतस्तस्य हि दूतः प्राप्तोऽस्मि । वशंवदः । वशमनुकूलं वदतीति वशंवदः। 'प्रियवशे वदः खच् ।३।२।३८।' कीदृशस्य मित्रीयता मित्रमिच्छतः। 'सुप आत्मनः क्यच् ।३।१।८।' इति क्यच् ॥ १०१ ॥

किं तेन सख्येति चेदाह—

प्रियंवदोऽपि नैवाऽहं ब्रुवे मिथ्या परन्तप ।
सख्या तेन दशग्रीवं निहन्तासि द्विषन्तपम् ॥ १०१ ॥

प्रियवद इत्यादि—प्रियंवदतया[1] लोको मिथ्या वदति अहं प्रियंवदोऽपि नैव मिथ्या ब्रुवे वदामि । पूर्ववत् खच् । परन्तप शत्रूणामुपतापयितः । 'द्विषत्परयोस्तपेः ।३।२।३९।' इति खच् । तेन सुग्रीवेण सख्या मित्रेण दशग्रीवं निहन्तासि हनिष्यासि । हन्तेर्लुटि रूपम् । कीदृशं द्विषन्तपम् शत्रूणामुपतापयितारम् । पूर्ववत् खच् ॥ १०१ ॥

वाचंयमोऽहमनृते सत्यमेतद्ब्रवीमि ते ।
एहि सर्वसहं मित्रं सुग्रीवं कुरु वानरम् ॥ १०२ ॥

वाचयम इत्यादि—वाचंयमः[2] मुनिरित्यर्थः। 'वाचंयमपुरन्दरौ च।६।३।६९।' इति मुमागमो निपात्यते । तस्मात् सत्यमेतत् पूर्वोक्तम् । ब्रवीमि ते तुभ्यम् । तादर्थ्ये चतुर्थी ।यत एवं तस्मादेहि आगच्छ। सुग्रीवं वानरं मित्रं कुरु। कीदृशं सर्वसहं[3] सर्वं सहत इति 'पूःसर्वयोर्दारिसहोः ।३।२।४१।' इति खच् ॥१०२॥

सर्वङ्कषयशःशाखं रामकल्पतरुं कपिः ।
आदायाऽभ्रङ्कषं प्रायान्मलयं फलशालिनम् ॥ १०३ ॥

सर्वङ्कषेत्यादि—रामः कल्पतरुरिव यस्तमादाय गृहीत्वा कपिः प्रायात् गतः । कीदृशं रामम् सर्वङ्कषयशःशाखं सर्वं कषन्ति व्याप्नुवन्ति यानि यशांसि । 'सर्वकूलाभ्रकरीषेषु कषः ।३।२।४२।' इति खच् । तान्येव शाखा यस्य । फलशालिनमभिमतफलसम्पादनात् । अभ्रङ्कषमुच्चैस्तरं मलयम् । पूर्ववत् खच् ॥ १०३ ॥

मेघङ्करमिवायान्तमृतुं रामं क्षमान्वितः ।
दृष्ट्वा मेने न सुग्रीवो वालिभानुं भयंकरम् ॥ १०४ ॥

मेघङ्करमित्यादि—राममायान्तं दृष्ट्वा । सुग्रीवो वालिनं भानुमिव[4] भयंकरं भीतिजनकं न मेने न बुद्धवान । मेघर्तिभयेषु कृञः ३।२।४३। इति खच्

१ मधुरभाषणकर्तृतयेत्यर्थः ।'सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥' इति मनुवचनंस्मरतेदमुक्तम् । २ 'तपस्वी तापस· पारिकाङ्क्षी वाचंयमो मुनिः ।' इत्यमरः । ३ सर्वंसहम् अतिधीरमित्यर्थः अविचलस्वभावमिति भावः । ४ लाक्षणिकोयमर्थः ।

क्लमान्वितो ग्लानो वालिभानुना पीडितत्वात् । कीदृशं रामं मेघङ्करमृतुमिव प्रावृट्कालमिव । 'मेघर्तिभयेषु कृञः ।३।२।४३।' इति खच् ॥ १०४ ॥

**उपाग्न्यकुरुतां सख्यमन्योन्यस्य प्रियङ्करौ ।**
**क्षेमङ्कराणि कार्याणि पर्यालोचयतां ततः ॥ १०५ ॥**

उपाग्नीत्यादि—उपाग्नि अग्निसमीपे 'अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथाऽनुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २।१।६।' इति समासः ।( रामसुग्रीवौ ) सख्यमकुरुताम् । 'इतः प्रभृत्यावयोः सख्यम्' इति । अन्योन्यस्य प्रियङ्करौ । 'क्षेमप्रियमद्रेऽण् च ।३।२।४४।' इति चकारात् खच् । ततः सख्यकरणानन्तरं क्षेमङ्कराणि हितजनकानि । यथास्वं कार्याणि प्रत्यालोचयतां निरूपितवन्ताविन्त्यर्थः। पटपुटेत्यत्र चुरादिकाण्डे धातौ 'लोचृ' पठ्यते तस्य लङि रूपम्॥१०५॥

**आशितम्भवमुत्कुष्टं वल्गितं शयितं स्थितम् ।**
**बह्वमन्यत काकुत्स्थः कपीनां स्वेच्छया कृतम् ॥ १०६ ॥**

आशितम्भवमित्यादि—आशितम्भवमशनम् । 'आशिते भुवः करणभावयोः ।३।२।४५।' इति खच् । उत्कुष्टं किलकिलायितम् । वल्गितं धावनम् । तथा शयितं स्थितं च । कपीनां स्वेच्छया कृतम् एतत्काकुत्स्थो बह्वमन्यत श्लाघितवान् । पुण्यभाज इमे यदेषां स्वेच्छाविहारिणां चेष्टितम् । अस्माकं तु शोकसन्तप्तानां न किंचिदस्तीति । सर्वत्र 'नपुंसके भावे क्तः ।३।३।११४।' इति सूत्रेण भावे निष्ठा ॥ १०६ ॥

**ततो बलिंदमप्रख्यं कपिविश्वम्भराऽधिपम् ।**
**सुग्रीवः प्राब्रवीद्रामं वालिनो युधि विक्रमम् ॥ १०७ ॥**

तत इत्यादि—ततः कार्यालोचनानन्तरं सुग्रीवः प्राब्रवीत् । लङि 'ब्रुव ईट् ।७।३।९३।' इतीट् किमुक्तवान्—वालिनो युधि विक्रमं शौर्यमिति प्रधानं कर्म राममित्यकथितम् ।कीदृशं रामम् बलिन्दमप्रख्यं विष्णुतुल्यम् । बलिं दमयतीति 'संज्ञायां भृतॄवृजिधारिसहितपिदमः ।३।२।४६।' इति खच् । अमन्तस्य मित्वह्रस्वत्वे । तथा विश्वं बिभर्तीति विश्वम्भरा तस्या अधिपम् अधिपातीत्यधिपस्तम् 'आतश्चोपसर्गे कः ।३।१।१३६।' इति कः ॥ १०७ ॥

---

१ वसुन्धराऽधिपं राजानामित्यर्थः ।

**वसुन्धरायां कृत्स्नायां नाऽस्ति वालिसमो बली ।**
**हृदयङ्गममेतत्त्वां ब्रवीमि न पराभवम् ॥ १०८ ॥**

वसुन्धरायामित्यादि—वसुन्धरायां पूर्ववत् खच् । वालिना समोऽन्यो बली बलयुक्तो नास्तीति हृदयङ्गमं मम । स्वानुभवं हि वस्तु हृदयङ्गममित्युच्यते । तेन संज्ञायामित्यधिकृत्य 'गमश्च ।३।२।४७।' इति खच् । न पुनस्त्वां पराभवमभिभवं ब्रवीमि ॥ १०८ ॥

इति खजधिकारः ।

एवंपराक्रमोऽसौ तत्र किं त्वं करिष्यसीत्याह—

**दूरगैरन्तगैर्बाणैर्भवानत्यन्तगः श्रियः ।**
**अपि संक्रन्दनस्य स्यात् क्रुद्धः किमुत वालिनः ॥ १०९ ॥**

दूरगैरित्यादि—यतो भवान् क्रुद्धः सन् सङ्क्रन्दनस्यापि[1] शक्रस्यापि । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३।१।१३४।'इति ल्युः । बाणैः करणभूतैः । दूरगैः दूरं गच्छन्तीति । अन्तगैः कार्यसमापकैः[2] । 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ।३।२।४८।' इति डः । श्रियो लक्ष्म्याः अत्यन्तगः विनाशयिता स्यात् । अत्यन्तं पर्यवसानं गच्छतीति । किं पुनर्वालिनो राजलक्ष्म्या अत्यन्तगो भवान्विनाशयितेति ॥ १०९ ॥

**वरेण तु मुनेर्वाली संजातो दस्युहा रणे ।**
**अवार्यप्रसरः प्रातरुद्यन्निव तमोऽपहः ॥ ११० ॥**

वरेणेत्यादि—मुनेस्तु वरेण दस्युहः दस्यून्[3] शत्रून् वध्यादिति । 'आशिषि हनः ।३।२।४९।' डः । अतो रणे अवार्यप्रसरोऽनभिभवनीयगतिः सञ्जातः । क इव तमोऽपह इव । तमोऽपहः आदित्यः[4] । तमोऽपहन्तीति । 'अपे क्लेशतमसोः ।३।२।५१।' इति डः । प्रातः प्रभाते उद्यन् उद्गच्छन् । उत्पूर्वादिणः शतरि 'इणो यण्' । अवार्यप्रसरस्तद्वदसावपि । 'सर्वं वाक्यं सावधारणं भवति' इति न्यायेन प्रातरप्युद्यन्नवार्यप्रसर एवेति भावः । तेन सर्वकाले अस्यावार्यप्रसरत्वं सिद्धं, न तु प्रातरेवोद्यन्नवार्यप्रसर इति बोध्यम् ॥ ११० ॥

---

१ 'सङ्क्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ।' इत्यमरः । २ कार्यसाधकैरिति भावः । ३ 'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ।' इत्यमरः । ४ सूर्य इति यावत् । ५ न वार्यः वारयितुं ( निवारयितुं ) शक्यः प्रसरः प्रभावाधिकारो यस्य स इति ।

अतिप्रियत्वान्नहि मे कातरं प्रतिपद्यते ।
चेतो वालिवधं राम ! क्लेशापहमुपस्थितम् ॥ १११ ॥

अतीत्यादि—हे राम ! मदीयं चेतो वालिवधं कर्मीभूतमुपस्थितं प्राप्तं नहि प्रतिपद्यते नैव प्रत्येति निश्चिनोति इत्यर्थः । यस्मात् कातरं व्याकुलम्, वालिनोऽतिबलयुक्तत्वात् । कीदृशं वधं क्लेशापहं दुःखस्योन्मूलकम् । पूर्ववड्डः । अतिप्रियत्वाद्वालिवधस्य । यस्य हि यत्प्रियं तत्सिद्धमपि असौ न प्रत्येति ॥ १११ ॥

इति डाधिकारः ।

उपस्थितोऽस्य वध इति कथं ज्ञायत इत्याह—

शीर्षघातिनमायातमरीणां त्वां विलोकयन् ।
पतिघ्नीलक्षणोपेतां मन्येऽहं वालिनः श्रियम् ॥ ११२ ॥

शीर्षेत्यादि—अरीणां शत्रूणां शीर्षघातिनं मस्तकच्छेत्तारमित्यर्थः । 'कुमारशीर्षयोर्णिनिः । ३ । २ । ५१ ।' इति निपातनात् शिरसः शीर्षभावः । आयातं विलोकयन् वालिनः श्रियं पतिघ्नीलक्षणोपेतामहं मन्ये । पतिं हन्ति यल्लक्षणं तेनोपेतामिवेतीवार्थोऽत्र द्रष्टव्यः । 'अमनुष्यकर्तृके च ।३।२।५३।' इति टक् । 'गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८।' इत्युपधालोपः । 'हो हन्तेर्ञ्णिन्नेषु ।७।३।५४।' इति कुत्वम् ॥ ११२ ॥

शत्रुघ्नान्युधि हस्तिघ्नो गिरीन्क्षिप्यन्नकृत्रिमान् ।
शिल्पिभिः पाणिघैः क्रुद्धस्त्वया जय्योऽभ्युपायवान् ॥ ११३ ॥

शत्रुघ्नानित्यादि—किञ्च युधि संग्रामे वाली त्वया जय्यः जेतुं शक्यो यदि युष्मदस्त्राणां शक्तिर्दृष्टा तां च द्रष्टुमिच्छामीति वक्ष्यमाणाभिप्रायः । 'क्षय्यजय्यौ शक्यार्थे । ६ । १ ।८१।' इत्ययादेशनिपातनम् । कीदृशः अभ्युपायवान् युद्धोपाययुक्तः। किं कुर्वन् क्रुद्धः क्षिप्यन् गिरीन् ।'दिवादिभ्यः श्यन् । ३।१।६९।' इति श्यन् । अकृत्रिमान् देवनिर्मितान् । शत्रुघ्नान् शत्रून् हन्तीति

१ 'चित्तं तु चेतो हृदयम्' इत्यमरः । २ आह्लादकमिति भावः । ३ 'अपे क्लेशतमसोः । ३ । २ । ५०' इति शास्त्रेणेति शेषः । ४ 'संयत्समित्याजिसमिद्युधः' इत्यमरः । ५ पर्वतानित्यर्थः । 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ।' इत्यमरः ।

'अमनुष्यकर्तृके च ।३।२।५३।' इति टक् । हस्तिघ्न इव हस्तिघ्नः हन्तुं शक्तः। 'शक्तौ हस्तिकपाटयोः ।३।२।५४।' इति सूत्रस्य मनुष्यकर्तृकार्थारम्भकत्वात् । वाली चामनुष्यः । शिल्पिभिर्युद्धकुशलैः वानरैः सह क्षिप्यन् । सहार्थस्य गम्यमानत्वात् सहयोगे तृतीया । पाणिघैः पाणिवादकैः। ते हि हस्तियुद्धेऽन्यस्य वाद्यस्यासंभवात् हस्तिमुखमेव वादयित्वा गिरीन् प्रहरणान् क्षिप्यन्ति । 'पाणिघताडघौ शिल्पिनि । ३ । २ ।५५ ।' इति कर्तरि निपातनम् ॥ ११३ ॥

आढ्यङ्करणविक्रान्तो माहिषस्य सुरद्विषः ।
प्रियङ्करणमिन्द्रस्य दुष्करं कृतवान्वधम् ॥ ११४ ॥

आढ्यमित्यादि—अनाढ्यमाढ्यं करोत्यनेनेति । 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् । ३ । २ । ५६ ।' इति करणे ख्युन् । आढ्यङ्करणं विक्रान्तं यस्य वालिनः । अनाढ्यः सन् विक्रान्तेनाढ्यो भूत इत्यर्थः । महिषस्य सुरद्विषो दुन्दुभेर्वधं मरणं यः कृतवान् दुष्करं कृच्छ्रसाध्यं प्रियंकरणमिन्द्रस्य तुष्टिकरम् । अप्रियं प्रियं करोत्यनेनेति पूर्ववत् ख्युन् ॥ ११४ ॥

प्रियम्भावुकतां यातस्तं क्षिपन्योजनम्मृतम् ।
स्वर्गे प्रियम्भविष्णुश्च कृत्स्नं शक्रोऽप्यबाधयन् ॥ ११५ ॥

प्रियमित्यादि—तमेवं सुरद्विषं मृतं पादाङ्गुष्ठेन योजनमध्वानं क्षिपन् प्रेरयन् । क्षिपेस्तौदादिकस्योभयपदिनो रूपम् । प्रियम्भावुकतां यातस्तथा स्वर्गे प्रियम्भविष्णुश्चासीत् । 'कर्तरि भुवः खिष्णुच्खुकञौ । ३ । २ ।५७।' इत्यनेनाढ्यादिषूपपदेषु खिष्णुच्खुकञौ । शक्तोऽपि समर्थोऽपि कृत्स्नं लोकमित्यर्थात् । अबाधयन् अपीडयन् । 'बध संयमे' इति चौरादिकः तस्य शतरि रूपम् । स ईदृशस्त्वया शक्यो जेतुं यदि त्वदस्त्राणां सामर्थ्यं दृष्टमित्यभिप्रायेणाब्रवीत् सुग्रीवः ॥ ११५ ॥

रामोऽपि तदभिप्रायं विदन् यत् कृतवान् तदाह—

जिज्ञासोः शक्तिमस्त्राणां रामो न्यूनधियः कपेः ।
अभिनत्प्रतिपत्त्यर्थं सप्त व्योमस्पृशस्तरून् ॥ ११६ ॥

---

१ हस्तिनं गजमपि हन्तुं क्षमः सिंह इवेति वक्तव्यम् । २ हस्तताल शब्दकारिभिरिति भावः । ३ महिषाकारस्येत्यर्थः ।

जिज्ञासोरित्यादि—अस्त्राणां शस्त्राणां शराणामिति यावत् । 'आयुधं तु प्रहरणं शस्त्रमस्त्रम्' इत्यमरः । शक्तिं जिज्ञासोः ज्ञातुमिच्छोः कपेः सुग्रीवस्य न्यूनधियः स्वल्पबुद्धेः। यतः प्रमाणान्तरेणापरिज्ञानात् प्रत्यक्षेण ज्ञातुमिच्छतीति प्रतिपत्त्यर्थं सम्प्रत्ययार्थं[१] रामः सप्त तरून् तालान्[२] पङ्क्त्या[३] स्थितान् एकेन शरेणाभिनत् । व्योमस्पृशः[४] । 'स्पृशोऽनुदके क्विन् । ३।२।५८।' ॥ ११६ ॥

**ततो वालिपशौ वध्ये रामर्त्विग्जितसाध्वसः ।**

**अभ्यभून्निलयं भ्रातुः सुग्रीवो निनदन्दधृक् ॥ ११७ ॥**

तत इत्यादि—ततस्तरुभेदनादनन्तरं सुग्रीवो भ्रातुर्निलयं किष्किन्धां पुरीमभ्यभूत् अभिभूतवान् । कीदृशः दधृक् धृष्टः । 'ऋत्विग् दधृक्स्रग्दिग्-उष्णिगञ्चुयुजिक्रुञ्चां च । ३ । २ । ५९ ।' इति निपातितम् । धृषेः क्विन् । द्विर्वचनम् । 'क्विन्प्रत्ययस्य कुः । ८ । २ । ६२ । ' इति कुत्वं खकारः चर्त्वं ककारः । यस्माद्वालिनि पशाविव[५] वध्ये वधार्हे । रामेण ऋत्विजा याजकेन जितसाध्वसः अपनीतसाध्वसः । तस्माद्दधृक् । ऋतौ यजति ऋतुं वा यजति ऋतुप्रयुक्तो वा यजतीति ऋतुपूर्वाद्यजः क्विन् । यजादित्वात् सम्प्रसारणम् ! इदमृत्विक्शब्दनिर्वचनम् । रूढितस्तु याजयितृषु ब्राह्मणेषु क्विन्प्रत्ययस्य कुः । निनदन् किलकिलाशब्दं कुर्वन् ॥ ११७ ॥

**गुहाया निरगाद्वाली सिंहो मृगमिव द्युवन् ।**

**भ्रातरं युङ् भियः सङ्ख्ये घोषेणाऽऽपूरयन्दिशः ॥ ११८ ॥**

गुहाया इत्यादि—तस्य शब्दमाकर्ण्य गुहाया निरगाद्वाली निर्गतः । 'इणो गा लुङि ।२।४।४५।'।'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । २।४।७७।' इति सिचो लुक् । भ्रातरं द्युवन् आभिगच्छन् । 'द्यु अभिगमने' अस्यादादिकस्य वर्तमानसामीप्ये लटः शतरि उवङादेशे रूपम् । सङ्ख्ये[६] युद्धे । भियो युङ् भीतेर्योक्ता । कर्मणि षष्ठी । भीतिं युञ्जन्नित्यर्थः । युजेः पूर्ववत् क्विन् । 'युजेरसमासे ।७।१ ।७१।' इति नुम् । संयोगान्तलोपः । 'क्विन्प्रत्ययस्य कुः । ८।२।६२।' इति ङकारः । कः कमिव । सिंहो मृगमिव द्युवन् । घोषेण दिशः आपूरयन् । दिशन्ति इति दिशः। पूर्ववत् क्विन् ॥ ११८॥

---

१ अत्र ' न लोकाव्ययनिष्ठाखलर्थतृनाम् २ । ३ । ६९' इति षष्ठीनिषेधात् कर्म्मविवक्षया द्वितीया । २ तालवृक्षान् । ३ एकपङ्क्तिरूपेण स्थितानित्यर्थः । ४ अत्युच्चानित्यभिप्रायः । ५ अत्रोपमारूपकयोः सन्देहसङ्करः । ६ 'मृधमास्कन्दनं संख्यं समीकं साम्परायिकम् ।' इत्यमरः ।

व्यायच्छमानयोर्मूढो भेदे सदृशयोस्तयोः ।
बाणमुद्यतमायंसीदिक्ष्वाकु कुलनन्दनः ॥ ११९ ॥

व्यायच्छेत्यादि—तयोर्वालिसुग्रीवयोर्व्यायच्छमानयोः कलहायमानयोः सदृशयोः समानयोः भेदे पृथक्त्वे मूढो भ्रान्तः सन् इक्ष्वाकुकुलनन्दनो रामो बाणमुद्यतं सज्जीकृतमायंसीत् उपसंहृतवान् । 'समुदाङ्भ्यो यमो ग्रन्थे ।१।३।७५।' इति तङ् न भवति । अकर्त्रभिप्रायत्वात् । तत्र 'कर्त्रभिप्राये' इति वर्तते । 'आङो यमहनः ।१३।२८।' इत्यनेनापि न स्यात् सकर्मकत्वात् । तत्र 'अकर्मकात्' इति वर्तते । समानपूर्वस्य दृशेः 'समानान्ययोश्च' इत्युपसंख्यानात् 'त्यदादिषु दृशोऽनालोचने कञ्च । ३ । २ । ६०।' इति कञ् । 'दृग्दृशवतुपु । ६।३।८९ ।' इति समानस्य सभावः ॥ ११९ ॥

ऋष्यमूकमगात्क्लान्तः कपिर्मृगसदृग् द्रुतम् ।
किष्किन्धाऽद्रिसदाऽत्यर्थं निष्पिष्टः कोष्णमुच्छ्वसन् ॥ १२० ॥

ऋष्यमूकमित्यादि—कपिः सुग्रीवः किष्किन्धाद्रिसदा किष्किन्धाद्रिनिवासिना वालिना किं किं दधातीति किष्किन्धाऽद्रिविशेषस्य गुहा । 'आतोऽनुपसर्गे कः ।३।२।३।' इति कः । 'पारस्करप्रभृतीनि च सञ्ज्ञायाम् ६।१।१५७' इति पूर्वस्य सुडागमो मलोपः षत्वं च निपात्यते । तदुपलक्षितोऽद्रिः किष्किन्धाद्रिः । तत्र सीदतीति 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ।३।२।६१।' इति क्विप् । तेनात्यर्थं निष्पिष्टः पीडितः । निष्पिष्टत्वात् क्लान्तः सन् ऋष्यमूकं मृगसदृक् द्रुतमगात् । समानोपपदात् दृशेः पूर्ववत् किन् । कोष्णमीषदुष्णमुच्छ्वसन् । 'कवं चोष्णे ।६।३।१०७' इति चकारात् कोः कादेशः ॥ १२० ॥

कृत्वा वालिद्रुहं रामो मालया सविशेषणम् ।
अङ्गदस्वं पुनर्हन्तुं कपिनाऽऽह्वाययद्रणे ॥ १२१ ॥

कृत्वेत्यादि—वालिद्रुहं सुग्रीवम् । वालिने द्रुह्यतीति 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ।३।२।६१।' इति क्विप् । मालया सविशेषणं सचिह्नं कृत्वा भेदपरिज्ञानार्थं रामः अङ्गदस्वं वालिनम् । अङ्गदं सूत इति पूर्ववत् किन् 'ओः सुपि ।।६।४।८३।' इति

१ तदाख्यं पर्वतम् । २ मृगसदृक् मृगवदिति भावः ।

यणादेशः । तं रणे हन्तुं कपिना सुग्रीवेणाह्वाययत् अभिभवं कारितवान् । ह्वयतेर्हेतुमण्णिचि 'शाच्छासाह्वाव्यावेपां युक् ।७।३।३७।' इति युक् ॥ १२१ ॥

**तयोर्वानरसेनान्योः सम्प्रहारे तनुच्छिदम् ।**
**वालिनो दूरभाग्रामो बाणं प्राणा दमत्यजत् ॥ १२२ ॥**

तयोरित्यादि—वानरसेनान्योः वानरस्वामिनोः वालिसुग्रीवयोरित्यर्थः । 'एरनेकाचोऽसंयोगपूर्वस्य ।६।४।८२।' इति यण् । संप्रहारे युद्धे प्रवृत्ते रामो बाणमत्यजत् । वालिनस्तनुच्छिदं तनुं शरीरं छिनत्तीति पूर्ववत् क्विप् । 'छे च । ६ । १ । ७३ ।' इति तुक् । प्राणादं प्राणापहारिणम् । प्राणानत्तीति प्राणादम् । 'अदोऽनन्ने ।३।२।६८।' इति विट् । दूरभाक् दूरमवस्थितो रामो दूरं भजत इति 'भजो ण्विः ।३।२।६२' इति ण्विः ॥१२२ ॥

**वालिनं पतितं दृष्ट्वा वानरा रिपुघातिनम् ।**
**बान्धवाऽऽक्रोशिनो भेजुरनाथाः ककुभो दश ॥ १२३ ॥**

वालिनमित्यादि—रिपुघातिनं रिपून् हन्तुं शीलमस्येति 'सुप्यजातौ णिनिस्ताच्छील्ये । ३ । २ । ७८ ।' । तं वालिनं पतितं दृष्ट्वा वानरा दश ककुभो दश दिशो भेजुः । अनाथाः सन्तः स्वामिनो हतत्वात् । बान्धवाक्रोशिनो बान्धवा इव आक्रोशन्तीति 'कर्तर्युपमाने ।३।२।७९।' इति णिनिः ॥ १२३ ॥

**धिग्दाशरथिमित्यूचुर्मुनयो वनवर्तिनः ।**
**उपेयुर्मधुपायिन्यः क्रोशन्त्यस्तं कपिस्त्रियः ॥ १२४ ॥**

धिगित्यादि—येषां सत्यन्यस्थाने वृत्तौ च वन एव वर्तितुं शास्त्रतो नियमः ते वनवर्तिनो वानप्रस्थाश्रमधर्म्मपालनपरा मुनयः । 'व्रते ।३।२।८०।' इति णिनिः । धिगिमं दाशरथिमित्यूचुः उक्तवन्तः । दशरथस्यापत्यं पुमानिति तादृशं राममित्यर्थः । 'अत इञ् ४।१।९५' इति इञ् । येनानपराधेऽपि वालिनीदृशं कृतमिति । कपिस्त्रियश्च वालिनमुपेयुः । मधुपायिन्यः आभीक्ष्ण्येन मधु पिबन्त्यः । 'बहुलमाभीक्ष्ण्ये ।३।२।८१।' इति णिनिः । क्रोशन्त्यः 'हा नाथ !' इति रुदन्त्यः ॥ १२४ ॥

---

१ वानराणां सेनापत्योरित्यर्थः । 'सेनानीर्वाहिनीपतिः ।' इत्यमरः । लक्षणया पुनर्वानराधीशयोरित्यभिप्रायः । २ युद्धभूमावित्यर्थः । 'सम्प्रहाराभिसम्पातकलिसंस्फोटसंयुगाः ।' इत्यमरः ।

रामसुच्चैरुपालब्ध शूरमानी कपिप्रभुः ।
व्रणवेदनया ग्लायन्साधुंमन्यमसाधुवत् ॥ १२५ ॥

राममित्यादि-कपिप्रभुर्वाली राममुच्चैर्महता शब्देनोपालब्ध उपालब्धवान् । लभिरात्मनेपद्यनिट् । तस्य लुङि 'झलो झलि ।८।२।२६।' इति सिचो लोपः । 'झषस्तथोर्धोऽधः । ८ । २ । ४० ।' । झलां जश् झशि ८।४।५३।' शूरमानी शूरमात्मानं मन्यमानः 'आत्ममाने खश्च । ३ । २ । ८३ ।' इति चकाराण्णिनिः । व्रणवेदनया ग्लायन् । ग्लानिमुपगच्छन् । साधुम्मन्यं साधुमात्मानं मन्यमानं रामम् । तेनैव खश् । तस्मिन् सार्वधातुके परतो दिवादित्वात् श्यन् । पूर्वपदस्य मुम् । असाधुवदसाधुमिव । असाधुना तुल्यं वर्तते इति वतिः ॥ १२५ ॥

मृषाऽसि त्वं हविर्याजी राघव ! च्छद्मतापसः ।
अन्यव्यासक्तघातित्वाद्ब्रह्मघ्नां पापसम्मितः ॥ १२६ ॥

मृषेत्यादि---हे राघव त्वं छद्मना तापसः । सः त्वं मृषैव मिथ्यैव हविर्याजी हविषा करणेनेष्टवानसि न परलोकप्राप्त्यै इत्यभिप्रायः । 'करणे यजः । ३ । २ । ८५ ।' इति भूते णिनिः । अस्मात्सूत्रादारभ्य 'भूते' इत्यधिकारात् । यतो ब्रह्मघ्नां पापसंमितः ब्रह्म हन्तवन्त इति । 'ब्रह्मभ्रूणवृत्रेषु क्विप् । २ । ३ ।८७ ।' इति क्विप् । तेषां पापेन तुल्यः । कुतः अन्यव्यासक्तघातित्वात् अन्यस्मिन् सुग्रीवे व्यासक्तं मां हतवान् ।'कर्मणि हनः । ३ । २ । ८६ ।' इति णिनिः । तत्र 'कुत्सितग्रहणं कर्तव्यम् ' इत्युक्तम् । यदि सुग्रीवेण मम विरोधः किं तवायातमिति कुत्सितहननम् ॥ १२६ ॥

तदेव दर्शयन्नाह—

पापकृत्सुकृतां मध्ये राज्ञः पुण्यकृतः सुतः ।
मामपापं दुराचार ! किं निहत्याऽभिधास्यसि ॥ १२७ ॥

पापकृदित्यादि—हे दुराचार ! मामपापं निहत्य पापकृत् कृतकिल्बिषः राज्ञो दशरथस्य पुण्यकृतः सुतः सुकृतां मध्ये किमभिधास्यसि वक्ष्यसि । किं क्षेपे । न किंचिदभिधातव्यमस्तीति भावः । सर्वत्र 'सुकर्मपापमन्त्रपुण्येषु कृञः । ३ । २ । ८९ ।' इति क्विप् ॥ १२७ ॥

अग्निचित्सोमसुद्राजा रथचक्रचिदाऽऽदिषु ।
अनलेष्विष्टवान्कस्मान्न त्वयाऽपेक्षितः पिता ॥ १२८ ॥

अग्निचिदित्यादि—कस्मात्त्वया पिता नापेक्षितः नानुवृत्तः। येनैवं कृतवानसीति। कीदृशः अग्निचित् आहिताग्निः। अग्निं चितवानिति 'अग्नौ चेः। ३। २। ९१।' इति क्विप्। सोमसुत् सोमं सुतवान् सोमयाजी 'सोमे सुञः। ३। २। ९०।' इति क्विप्। अनलेषु अग्निषु इष्टवान्। रथचक्रचिदादिषु रथचक्रवच्चीयत इति 'कर्मण्यग्न्याख्यायाम्। ३। २। ९२।' इति क्विप्। आदिशब्दाच्छ्येनचिदादिग्रहणम्। अन्यथा हि तदाकार इष्टकाचय इत्युच्यते तद्वारेणाग्निरपि॥ १२८॥

**मांसविक्रयिणः कर्म व्याधस्यापि विगर्हितम्।**
**मां घ्नता भवताऽकारि निःशङ्कं पापदृश्वना॥ १२९॥**

मांसेत्यादि—मांसविक्रयिणः कुत्सितकर्मकारिणो व्याधस्यापि विगर्हितं निन्दितम्। 'कर्मणीनिर्विक्रियः। ३। २। ९३।' इति इनिः। तत्र 'कुत्सितग्रहणं कर्तव्यम्' इत्युक्तम्। निकृष्टकर्मकरणेनेति यद्भवता पापदृश्वना पापं दृष्टवता। 'दृशेः क्वनिप्। ३। २। ९४।' 'न संयोगाद्वमन्तात्। ६। ४ १३७।' इति अल्लोपप्रतिषेधः। कर्म अकारि कृतम्। कर्मणि लुङ्। निःशङ्कं शङ्कां त्यक्त्वा। किं कुर्वता मां घ्नता मारयता। हन्तेः शतरि 'गमहनजनखनघसां लोपः क्ङित्यनङि। ६। ४। ९८।' इत्युपधालोपः। 'हो हन्तेर्ञ्णिन्नेषु। ७। ३। ५४।' इति कुत्वम्॥ १२९॥

**बुद्धिपूर्वं ध्रुवन्न त्वा राजकृत्वा पिता खलम्।**
**सहयुध्वानमन्येन योऽहिनो मामनागसम्॥ १३०॥**

बुद्धिपूर्वमित्यादि—त्वत्पिता त्वां खलम् असाधुचरितं ध्रुवन् गच्छन् 'ध्रु गतिस्थैर्ययोः' इति तुदादौ पठ्यते। तस्य गतौ ज्ञानार्थे वर्तमानस्य शतरि रूपम्। यन्न राजकृत्वा। 'राजनि युधि कृञः। ३। २। ९५।' इति क्वनिप्। तत्तस्य बुद्धिपूर्वम्। ध्रुवमवश्यं तस्येति व्याख्याने कृत्प्रयोगे कर्मणि षष्ठ्या भवितव्यम्। यस्त्वं मां वालिनं वानरमनागसमपापमन्येन सहयुध्वानम् अन्येन सुग्रीवेण सह योद्धुं प्रवृत्तम्। 'सहे च। ३।२।९६।' इति क्वनिप्। अहिनः हिंसितवान्। हिंसेर्लङि मध्यमपुरुषैकवचने श्नमि श्नान्नलोपे हल्ङ्यादिलोपे रुत्वे च रूपम्॥ १३०॥

मांसार्थं हत इति चेदाह—

१ नागोऽपराधो यस्येति तम्। 'आगोऽपराधो मन्तुश्च' इत्यमरः।

पञ्च पञ्चनखा भक्ष्या ये प्रोक्ताः कृतजैर्द्विजैः ।
कौशल्याज ! शशाऽऽदीनां तेषां नैकोऽप्यहं कपिः ॥ १३१ ॥

पञ्च पञ्चेत्यादि—हे कौशल्याज कौशल्याजात, । कौशल्यायां जायत इति तत्सम्बुद्धौ 'सप्तम्यां जनेर्डः ।३।२।९७।' इति डः।ये पञ्च पञ्चनखाः। 'शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः' इति । कृतजैः कृतयुगजातैः । पूर्ववत् डः । द्विजैर्द्विजातैः । 'अन्येष्वपि दृश्यते । ३ ।२ । १०१ ।' इति डः । सप्तम्यामित्युपलक्षणम् । असप्तम्यामपि डो दृश्यते इत्यर्थः । भक्ष्याः भक्षणीयाः प्रोक्ताः । तेषाम्पञ्चनखानां भक्ष्याणाम्मध्य इत्यर्थः । अहमेकोऽपि न भविता । अहं कपिः । तत्किमिति हतोऽहं त्वयेति भावः ॥ १३१ ॥

कथं दुष्ठुः स्वयं धर्मे प्रजास्त्वं पालयिष्यसि ।
आत्माऽनुजस्य जिह्रेषि सौमित्रेस्त्वं कथं न वा ॥ १३२ ॥

कथमित्यादि—स्वयमात्मना[1] धर्मे दुष्ठुः दुःस्थः सन् । 'अपदुःसुषु स्थः' इत्यौणादिकः कुप्रत्ययः । कथं प्रजाः पालयिष्यसि नैव पालयितुं क्षमोभविष्यसीत्यर्थः । प्रजापालनं हि धर्मवर्तिनैव कर्त्तुं शक्यं नतु त्वादृशेति भावः[2]। 'उपसर्गे च संज्ञायाम् । ३।२।९९।' इति जनेर्डः । कथं वा सौमित्रेर्भ्रातुरात्मानुजस्य स्वकनीयसो भ्रातुर्लक्ष्मणस्येत्यर्थः । आत्मानमनुजात इति'अनौ कर्मणि । ३।२।१००।' इति डः । न जिह्रेषि न लज्जसे ॥ १३२ ॥

मन्ये किंजमहं घ्नन्तं त्वामक्षत्रियजे रणे ।
लक्ष्मणाऽधिज ! दुर्वृत्त ! प्रयुक्तमनुजेन नः ॥ १३३ ॥

मन्य इत्यादि—त्वामहं किंजं कुतोऽपि जातं न राजजातं मन्ये । 'पञ्चम्यामजातौ ।३।२।९८।' इति डः । घ्नन्तं मारयन्तम् । अक्षत्रियजे रणे क्षत्रियादजाते । हे लक्ष्मणाधिज लक्ष्मणाग्रज दुर्वृत्त[3] नोऽस्माकमनुजेन भ्रात्रा प्रयुक्तं प्रेरितम् । तत्र 'पञ्चम्यामजातौ' इत्युक्तं जातावपि दृश्यते । अक्षत्रियज इति । 'उपसर्गे च संज्ञायाम्' । ३।२।९९।' इत्युक्तम् असंज्ञायामपि दृश्यते ।लक्ष्मणाधिज इति । 'अनौ कर्मणि ।३।२।१००।'इत्युक्तम्। अकर्मण्यपि दृश्यते ।अनुज इति। सर्वत्र 'अन्येष्वपि दृश्यते।३।२।१०१।' इति डः॥१३३॥

इत्युपपदाधिकारः ।

---

१ 'स्वयमात्मना' इत्यमरोऽपि । २ 'ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि । सर्वस्यास्य यथान्यायं कर्त्तव्यं परिरक्षणम् ॥' इति मनुस्मृतिः । ३ दुष्टं वृत्तं चरितं यस्य तत्सम्बुद्धौ तथोक्त ।

प्रत्यूचे वालिनं रामो नाऽकृतं कृतवानहम् ।
यज्वभिः सुत्वभिः पूर्वैर्जरद्भिश्च कपीश्वर ! ॥ १३४ ॥

प्रत्यूच इत्यादि—रामोऽपि वालिनं प्रत्यूचे प्रत्युक्तवान् । किमित्याह । हे कपीश्वर ! पूर्वैर्जरद्भिर्वृद्धैः । 'जीर्यतेरतृन् । ३।२।१०४।' यज्वभिः याज्ञिकैः सुत्वभिः सोमयाजिभिः सोमयज्ञं कृत्वा देवांस्तर्पितवद्भिरिति भावः। 'सुयजोर्ङ्वनिप् ।३।२।१०३।' । नाकृतं कृतवानहम् अपि तु कृतमेव कृतवानहम् । 'निष्ठा ।२।२।३६।' इति भूते क्तक्तवतू ॥ १३४ ॥

ते हि जालैर्गले पाशैस्तिरश्चामुपसेदुषाम् ।
ऊषुषां परदारैश्च सार्धं निधनमैषिषुः ॥ १३५ ॥

त इत्यादि—यस्मात्ते पूर्ववृद्धाः जालैर्गले पाशैश्च तिरश्चां मृगपक्षिसरीसृपाणां तिरोऽश्वतीति 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च । ३।२।५९।' इति क्विन् । आमि 'अचः । ६।४।१३८।' इत्यल्लोपः । तेषां निधनं विनाशमैषिषुः इष्टवन्तः । इषेर्लुङि रूपम् । कीदृशाम् उपसेदुषां समीपमुपगतवतां तेषां समीपवर्तिनामुपद्रवकारित्वात् । 'भाषायां सदवसश्रुवः । ३।२।१०८।' इति क्वसुः । परदारैश्च सार्धमूषुषाम् उषितवताम् । पूर्ववत्क्वसुः । वसेर्यजादित्वात्संप्रसारणम् ॥ १३५ ॥

अहं तु शुश्रुवान्भ्रात्रा स्त्रियं भुक्तां कनीयसा ।
उपेयिवाननूचानैर्निन्दितस्त्वं लतामृग ! ॥ १३६ ॥

अहमित्यादि—हे लतामृग हे शाखामृग ! वालिन् इत्यर्थः । अहं पुनः शुश्रुवान् श्रुतवान् । 'भाषायां सदवसश्रुवः ।३।२।१०८।' इति क्वसुः । यदुत[३] भ्रात्रा कनीयसा[४] भुक्तां स्त्रियं त्वमुपेयिवान् सन् अनूचानैर्वेदविद्भिर्निन्दित-

---

१ 'यज्वा तु विधिनेष्टवान्' इत्यमरः । २ 'यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः । शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः ॥' इति मन्वाद्युक्त्या परदारादिदूषकस्य त्वादृशस्य हनन एव मादृशां सुकृतित्वं स्यात्, न त्वन्यथेत्यभिप्रायेणेदं वचनम् । पुरस्ताच्चायम्भावः स्फुटो भाव्येव । ३ यदुतेति यत्पुनरित्यर्थः । ४ कनीयसेति कनिष्ठेन भ्रात्रा सुग्रीवेणेत्यर्थः । 'कनीयांस्तु युवाऽल्पयोः ।' इत्यमरः ।

स्ततो मे मम राज्ञो रामचन्द्रस्येत्यर्थः। नैव दोषः।'उपेयिवाननाश्वाननूचानश्च ।३।२।१०९।' इति उपेयिवाननूचानशब्दौ निपातितौ ॥ १३६ ॥

**अन्वनैषीत्ततो वाली त्रपावानिव राघवम्।**
**न्यक्षिपच्चाऽङ्गदं यत्नात्काकुत्स्थे तनयं प्रियम् ॥ १३७ ॥**

अन्वित्यादि—ततो रामवचनादनन्तरं वाली राघवमन्वनैषीन् अनुनीतवान्। 'देव क्षम्यतां यदजानता मयोक्तम्' इति। नयतेः 'लुङ् ।३।२।११०।' इत्यनेन भूतसामान्ये लुङ्। त्रपावानिव यथा लज्जावान् कश्चिदनुनयति तद्वत्। अङ्गदं च प्रियं तनयं काकुत्स्थे रामे न्यक्षिपन् न्यस्तवान। यत्नादादरात्। क्षिपेरनद्यतने लङ् ॥ १३७ ॥

**म्रियमाणः स सुग्रीवं प्रोचे सद्भावमागतः।**
**सम्भविष्याव एकस्यामभिजानासि मातरि ॥ १३८ ॥**

म्रियमाण इत्यादि—स वाली म्रियमाणः सन् सद्भावं शोभनभावमागतः सन् सुग्रीवं प्रोचे। किमित्याह। अभिजानासि स्मरसि। एकस्यां मातरि सम्भविष्यावः। समभवाव इत्यस्मिन्नर्थे 'अभिज्ञावचने लृट् ।३।२।११२।' इत्यनद्यतने लृट्। अभिजानासीत्यभिज्ञावचनस्योपपदत्वात् ॥ १३८ ॥

**अवसाव नगेन्द्रेषु यत्पास्यावो मधूनि च।**
**अभिजानीहि तत्सर्वं बन्धूनां समयो ह्ययम् ॥ १३९ ॥**

अवसावेत्यादि—अभिजानीहि स्मर। यन्नगेन्द्रेषु अवसाव उषितवन्तौ। अत्राभिज्ञावचनस्य यच्छब्दसहितत्वात् 'न यदि ।३।२।११३।' इत्यनेन लृटि प्रतिषिद्धे लङेव भवति। अत्र वासमात्रं स्मर्यते। मधूनि च यत्पास्यावः तत्र पीतवन्तौ। तत्सर्वमभिजानीहि। अत्र 'विभाषा साकाङ्क्षे ।३।२।११४।' इति पक्षे लृट्। साकाङ्क्षता च [illegible]योर्लक्ष्यलक्षणयोः सम्बन्धे। तत्र वासो लक्षणं पानं च लक्ष्यमिति। कस्माद्बन्धूनामयमेष समयः कालः ॥ १३९ ॥

**दैवं न विदधे नूनं युगपत्सुखमावयोः।**
**शश्वद्बभूव तद्दुःखं यतो न इतिहाऽकरोत् ॥ १४० ॥**

---

१ देवेति राजन्नित्यर्थः।

दैवमित्यादि—नूनमवश्यं दैवमावयोः सुखं युगपदेककालं न विदधे नहि विहितवत् । 'डुधाञ् धारणपोषणयोः' परोक्षे लिट् । ञित्वात्तङ् । आतो लोपः । यतो यस्मात्तत् दैवं शश्वत् नित्यं दुःस्थमननुकूलं नोऽस्माकं बभूव तस्मादिति ह एवमकरोत् इत्येवं कृतवान् । यद्युगपदावयोः सुखाविधानं तद्दुःस्थं शश्वद्बभूव । हाकरोदिति भूतानद्यतनपरोक्षे लिटि प्राप्ते 'हशश्वतोर्लङ् च ३ ।२।११६।' इति लङ् । चकारात् लिट् । तत्र शश्वच्छब्दे उपपदे लिडेवोदाहृतः न लङ् । हशब्दे लङेव न लिडपीति बोध्यम् ॥ १४० ॥

**ददौ स दयितां भ्रात्रे मालां चाऽग्र्यां हिरण्मयीम् ।**
**राज्यं संदिश्य भोगांश्च ममार व्रणपीडितः ॥ १४१ ॥**

ददावित्यादि—स वाली दयितां ताराख्यां भ्रात्रे सुग्रीवाय ददौ, मालां चाग्र्यां श्रेष्ठां हिरण्मयीं सुवर्णघटितां ददौ । राज्यं सामात्यादिद्रव्यप्रकृतिम् । संदिश्य दत्त्वा । भोगांश्च राज्याङ्गानि संदिश्य । ममार प्राणांस्त्यक्तवान् । व्रणपीडितः । अत्रापि परोक्षे लिट् ॥ १४१ ॥

**तस्य निर्वर्त्य कर्तव्यं सुग्रीवो राघवाऽऽज्ञया ।**
**किष्किन्धाऽद्रिगुहां गन्तुं मनः प्रणिदधे द्रुतम् ॥ १४२ ॥**

तस्येत्यादि—तस्य मृतस्य कर्तव्यं पिण्डोदकादिकरणीयं कृत्वा सुग्रीवो राघवाज्ञया[2] 'गच्छ वर्षासमयमतीत्य शरद्यागमिष्यसि' इति आज्ञया किष्किन्धाद्रिगुहां गन्तुं मनः प्रणिदधे कृतवान् । अत्रापि परोक्षे लिट् ॥ १४२ ॥

**नामग्राहं कपिभिरशनैः स्तूयमानः समन्ता-**
**दन्वग्भावं रघुवृषभयोर्वानरेन्द्रो विराजन् ।**
**अभ्यर्णेऽम्भःपतनसमये पर्णलीभूतसानुं**
**किष्किन्धाद्रिं न्यविशत मधुक्षीबगुञ्जद्द्विरेफम् ॥ १४३ ॥**

नामेत्यादि—वानरेन्द्रः सुग्रीवः किष्किन्धाद्रिं न्यविशत निविष्टवान् । 'नेर्विशः । १ । ३ । १७ ।' इति तङ् । अशनैः सुष्ठु कपिभिः स्तूयमानः । वर्तमाने लट् । तस्य कर्मणि विहितत्वात् 'लक्षणहेत्वोः क्रियायाः । ३ । । २ । १२६ ।' इति शानच् । नामग्राहं नाम गृहीत्वा । 'नाम्न्यादिशिग्रहोः

१ शश्वन्निरन्तरमित्यर्थः । 'अभीक्ष्णं शश्वदनारते ।' इत्यमरः । २ रामचन्द्रस्याज्ञया । यद्यप्यसौ वानरः, तथाऽपि तस्य देवांशत्वाद् देवप्रभावत्वाच्च राजान्तरवदन्तिमः संस्कारः साम्प्रतमेवाज्ञप्तं रामेण । अन्यथाऽनुजपत्नीगमनदोषाभिधानमप्यपार्थमेवाभविष्यदिति तत्त्वम् ।

। ३ । ४ । ५८ ।' इति णमुल् । समन्तात्सर्वतः विराजन् शोभमानः । अत्र परस्मैपदसंज्ञकः शतृप्रत्ययः । किं कृत्वा रघुवृषभयो रामलक्ष्मणयोरित्यर्थः। रघुषु रघुवंश्येषु वृषभौ श्रेष्ठौ तयोः । अन्वग्भावं अनुकूलो भूत्वा । अन्वक्पूर्वाद्भवतेः 'अन्वच्यानुलोम्ये । ३ । ४ । ६४ ।' इति णमुल् । तदनुकूलवर्तित्वाद्विराजन् । कदा न्यविशत । अभ्यर्णे निकटे । अम्भःपतनसमये प्रावृषीत्यर्थः । पर्णलीभूतसानुं पर्णानि सन्ति येषामिति 'सिध्मादिभ्यश्च । ५ । २ । । ९७ ।' इति लच् । तदन्तादभूततद्भावे च्विः । पर्णलीभूताः सानव एकदेशा यस्याद्रेः । मधुक्षीबा मधुमत्ता गुञ्जन्तो द्विरेफा यत्र । क्षीब इति 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः । ८ । २ । ५५ ।' इति निपातितः । 'क्षीबृ मदे ।' इत्यस्मात् क्तप्रत्ययस्य लोप इडभावश्च निपात्यते । गुञ्जेर्लट् । क्वचिन् प्रथमासमानाधिकरणेऽपि शतृप्रत्ययः ॥ १४३ ॥

इति सोपपदकृतः ।

इति श्रीजयमङ्गलसूरिविरचितया जयमङ्गलाख्यया व्याख्यया समलंकृते श्रीभाट्टिप्रणीते रामचरितकाव्ये द्वितीयेऽधिकारकाण्डे लक्षणरूपे प्रथमः परिच्छेदः, लक्ष्यरूपे कथानके सुग्रीवाऽभिषेको नाम षष्ठः सर्गश्च ।

---

## सप्तमः सर्गः ।

इतस्ताच्छीलिकं कृतमधिकृत्योच्यते । ताच्छीलिकमित्युपलक्षणम् । तद्धर्मतत्साधुकारिष्वपि द्रष्टव्यम् । यतः 'आक्वेस्तच्छील-तद्धर्म-तत्साधुकारिषु ३ । २ । १३४।' इति तत्राधिक्रियते—

**ततः कर्ता वनाऽऽकम्पं ववौ वर्षाप्रभञ्जनः ।**
**नभःपूरयितारश्च समुन्नेमुः पयोधराः ॥ १ ॥**

**तत इत्यादि**—ततः प्रवेशानन्तरं वर्षाप्रभञ्जनः प्रावृड्वातो ववौ वाति स्म । 'वा गतिगन्धनयोः' इति । कर्ता वनाकम्पं साधु कुर्वन् । 'तृन् ।३।२।१३५।' इति तृन् । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ।२।३।६९।' इति षष्ठीप्रतिषेधः । पयोधरा मेघाश्च समुन्नेमुः समुन्नताः । कीदृशा नभःपूरयितारः । तृन् ॥ १ ॥

---

१ अत्र मन्दाक्रान्ता छन्दः, 'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत्' इति तल्लक्षणात् ।

तर्पणं प्रजनिष्णूनां सस्यानाममलं पयः ।
रोचिष्णवः सविस्फूर्जा मुमुचुर्भिन्नवद्धनाः ॥ २ ॥

तर्पणमित्यादि—घनाः अमलं पयो मुमुचुः । भिन्नवत् भिन्ना इव । कीदृशं पयः । तर्पणं सस्यानां तर्पणं तर्पयतीति 'कृत्यल्युटो बहुलम् ।३।२।११३।' इति कर्तरि ल्युट् । प्रजनिष्णूनां साधु प्रादुर्भवताम् । रोचिष्णवः साधु दीप्यमानाः । सविस्फूर्जाः सवज्रनिस्वनाः । 'अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् । ३ । २ । १३६ । इतीष्णुच् ॥ २ ॥

निराकरिष्णवो भानुं दिवं वर्तिष्णवोऽभितः ।
अलंकरिष्णवो भान्तस्तडित्वन्तश्चरिष्णवः ॥ ३ ॥

निरेत्यादि—भानुं निराकरिष्णवो निराकरणशीला घनाः पयो मुमुचुरिति योज्यम् । दिवमभितो वर्तिष्णव आकाशमभितो वर्तनस्वभावाः । पूर्वपश्चिमयोर्वर्तनहेतुत्वात् । पर्यभिभ्यां सर्वोभयार्थे तसिः । 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' । इति द्वितीया । तडित्वन्तः सविद्युतः । अत एव भान्तो दीप्यमानाः । एवं च कृत्वा अलंकरिष्णवोऽलंकरणशीला इव । दिशश्चरिष्णवः इतस्ततो गमनशीलाः । पूर्ववदिष्णुच् ॥ ३ ॥

तान्विलोक्याऽसहिष्णुः सन् विललापोन्मदिष्णुवत् ।
वसन्माल्यवति ग्लास्नू रामो जिष्णुरधृष्णुवत् ॥ ४ ॥

तानित्यादि—तान् घनान्विलोक्य असहिष्णुरसहनशीलो रामः माल्यवति एतदाख्ये पर्वते वसन्विललाप । उन्मदिष्णुवत् उन्मदनशीलः उन्मत्तस्तद्वत् । पूर्ववदिष्णुच् । ग्लास्नुः ग्लानशीलः । जिष्णुर्जयशीलः । अधृष्णुवदप्रगल्भ इव । शोकाभिभूतत्वात् । 'ग्लाजिस्थश्च ग्स्नुः ।३।२।१३९।' धृष्णुरिति 'त्रसिगृधिधृषिक्षिपेः क्नुः ३।२।१४०।' इति क्नुः ॥ ४ ॥

---

१ घना मेघाः । 'घनजीमूतमुदिरजलमुग्धूमयोनयः ।' इत्यमरः । २ फलोन्मुखानां धान्यादीनामित्यर्थः । यद्वा—फलानामित्येवार्थः । 'वृक्षादीनां फलं सस्यम्' इत्यमरोक्तेः । ३ 'विभ्राड्भ्राजिष्णुरोचिष्णू' इत्यमरः । ४ 'निराकरिष्णुः क्षिप्नुः स्यात्' इत्यमरः । ५ दिवं स्वर्गमित्यर्थः । ६ 'वर्तिष्णुर्वर्तनः समौ ।' इत्यमरः । ७ मेघा इति शेषः । 'तडित्वान् वारिदोऽम्बुभृत्' इत्यमरः । ८ 'चरिष्णु जङ्गमचरम्' इत्यमरः । ९ मेघदर्शनादेर्मदनोद्वेगवर्धकत्वादाह । १० समयक्षपणाक्षम इत्यर्थः। 'सहिष्णुः सहनः क्षन्ता' इत्यमरः। ११ 'हा प्रिये जनकनन्दिनि' इत्यादि परिदेवितवान् । १२ 'सोन्मादस्तून्मदिष्णुः स्यात्' इत्यमरः । १३ 'जेता जिष्णुश्च जित्वरः ।' इत्यमरः । १४ 'धृष्णुर्धृष्णुग्दधृग्धृष्टः' इति त्रिकाण्डशेषः ।

किं तद्विलपनमित्याह—

भ्रमी कदम्बसम्पन्नः पवनः शमिनामपि ।
क्लमित्वं कुरुतेऽत्यर्थं मेघशीकरशीतलः ॥ ५ ॥

भ्रमीत्यादि—भ्रमी भ्रमणशीलः । कदम्बसंभिन्नः कदम्बगन्धसंश्लिष्टः। शमिनामपि शमनशीलानामपि क्लमित्वं कुरुते अत्यर्थं ग्लानिं कुरुते। 'शमित्यष्टाभ्यो घिनुण् ।३।२।१४१।' । 'नोदात्तोपदेशस्य मान्तस्यानाचमः ।७।३।३४।' इत्युपधावृद्धिप्रतिषेधः। मेघानां शीकरो जलकणास्तैः शीतलः शीतलत्वं कुर्वाणः । ॥ ५ ॥

संज्वारिणेव मनसा ध्वान्तमायासिना मया ।
द्रोहि खद्योतसम्पर्कि नयनामोषि दुःसहम् ॥ ६ ॥

संज्वारिणेत्यादि—मयैतत् ध्वान्तं तमो दुःसहं दुःखेन सह्यत इति । 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।३।३।१२६' इति खल् । मनसा करणभूतेन कीदृशेन । संज्वारिणेव रोगशीलेनेव । आयासिना आयासशीलेन मयेति। द्रोहि अपकारशीलम् । ध्वान्तं खद्योतसम्पर्कि ज्योतिरिङ्गणसंसर्गशीलम्। नयनामोषि चक्षुर्मोषणशीलम्। 'संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभयातिचरापचरामुषाभ्याहनश्च।३।२।१४२।'इति सर्वे घिनुणन्ताः ।६।

कुर्वन्ति परिसारिण्यो विद्युतः परिदेविनम् ।
अभ्याघातिभिरामिश्राश्चातकैः परिराटिभिः॥ ७ ॥

कुर्वन्तीत्यादि—एता विद्युतः परिदेविनं परिदेवनशीलं कुर्वन्ति । मामित्यर्थात् । कीदृश्यः। परिसारिण्यः परिसरणशीलाः । चातकैः पक्षिविशेषैः परिराटिभिः परिरटनशीलैः । एवं चाभ्याघातिभिः अभिहननशीलैः । दुःखोत्पादनात् । आमिश्रा युक्ता विद्युतः । पूर्ववद्घिनुण् ॥ ७ ॥

संसर्गी परिदाहीव शीतोऽप्याभाति शीकरः ।
सोढुमाक्रीडिनोऽशक्याः शिखिनः परिवादिनः ॥ ८ ॥

---

१ क्लमोऽस्यास्तीति तस्य भावस्तत्त्वम् तत्। 'क्लमथः क्लमे' इत्यमरः। २ 'शीकरोऽम्बुकणाः स्मृताः ।' इत्यमरः । ३ 'खद्योतो ज्योतिरिङ्गणः ।' इत्यमरः । ४ विलापकारिणमित्यर्थः । 'विलापः परिदेवनम् ।' इत्यमरः ।

संसर्गीत्यादि---संसर्गी संसर्जनशीलः । शीतोऽपि शीकरो बिन्दुः । परिदाहीव परिदहनशील इवाभाति । शिखिनश्च मयूराः सोढुमशक्या । आक्रीडिनो नर्तनशीलाः । परिवादिनः परिवदनशीला इव । इवशब्दश्चात्रार्थो द्रष्टव्यः । पूर्ववत् 'संपृचा-।३।२।१४२।' इत्यादिना घिनुण् ॥ ८ ॥

**एता दैवानुरोधिन्यो द्वेषिण्य इव रागिणम् ।**
**पीडयन्ति जनं धाराः पतन्त्योऽनपकारिणम् ॥ ९ ॥**

एता इत्यादि---एता धाराः पतन्त्यो द्वेषिण्य इव द्वेषणशीला इव जनं रागिणं रागशीलम् । अनपकारिणमनपराधशीलं पीडयन्ति । दैवानुरोधिन्यः दैवमनुरुन्धन्ति इति तेभ्यः, भाग्यानुरोधात् प्रवर्तनशीलेभ्यः । पूर्ववत् घिनुण् । घिनुणि च 'रञ्जेरुपसंख्यानम्' इत्यनुनासिकलोपः । कृताननुनासिकनिर्देशाद्वा लोपनिपातनम् ॥ ९ ॥

**कुर्याद्योगिनमप्येष स्फूर्जावान्परिमोहिनम् ।**
**त्यागिनं सुखदुःखस्य परिक्षेप्यम्भसामृतुः ॥ १० ॥**

कुर्यादित्यादि---एष ऋतुरम्भसां जलानां परिक्षेपी परित्यजनशीलः । कर्मणि सम्बन्धसामान्यविवक्षया षष्ठी । योगिनमपि योगशीलमपि । सुखदुःखस्य त्यागिनं त्यागशीलम् । कर्मणि षष्ठी । परिमोहिनं परिमोहनशीलम् । कुर्यात् । कीदृशः स्फूर्जावान् वज्रनिर्घोषयुक्तः । पूर्ववद् घिनुण् ॥ १० ॥

**विकत्थी याचते प्रत्तमविश्रम्भी मुहुर्जलम् ।**
**पर्जन्यं चातकः पक्षी निकृन्तन्निव मानसम् ॥ ११ ॥**

विकत्थीत्यादि--चातको मानसं निकृन्तन्निव खण्डयन्निव । प्रत्तं प्रदत्तम् । 'अच उपसर्गात्तः ।७।४।४७।' जलं याचत इति प्रधानं कर्म । पर्जन्यमित्यकथितम् । विकत्थी विकत्थनशील इव पर्जन्योऽपि मह्यं जलं ददाति । इवशब्दो गम्यो-( लुप्तो )ऽत्र द्रष्टव्यः । अविश्रम्भी अविश्वासशीलः । मानसखण्डनात् । 'वौ कषलसकत्थस्रम्भः ।३।२।१४३।' इति घिनुण् ॥ ११ ॥

---

१अत्रोत्प्रेक्षा, न तूपमा । २ 'शिखावलः शिखी केकी' इत्यमरः । ३ अर्थः प्रकरणानुसन्धानबलादर्थावगम्यः । ४ 'अम्भोऽर्णस्तोयपानीय-' इत्यमरः । ५ इदं तु 'अवदत्तं विदत्तं च प्रदत्तं चादिकर्म्मणि । सुदत्तमनुदत्तं च निदत्तमिति कथ्यते ॥' इत्युक्तदिशाऽऽदिकर्म्मणि विहितक्तप्रत्ययान्तत्व एव साधु स्यादिति वितीर्णमिति पर्यायान्तरं वाच्यम् । ६ विकत्थनं बहुगर्जनम् ।

प्रलापिनो भविष्यन्ति कदा न्वेतेऽपलाषिणः ।
प्रमाथिनो वियुक्तानां हिंसकाः पापदर्दुराः ॥ १२ ॥

प्रलापिन इत्यादि—एते पापदर्दुराः पापाश्च ते दर्दुराश्चेत्याक्रोशाभिधानम् । दर्दुरा मण्डूकाः कदा नु अपलाषिणो भविष्यन्ति । अपलषणशीलाः व्यपगतकामा इत्यर्थः । 'लष कान्तौ ।' 'अपे च लषः ।३।२।१४४।' इति घिनुण् । प्रलापिनः प्रलपनशीलाः। प्रमाथिनः प्रमथनशीलाः। चेतसामित्यर्थात् ।'प्रे लपसृद्रुमथवदवसः ३ । २ । १४५ ।' इति घिनुण् । अत एव वियुक्तानां मादृशां हिंसकाः हिंसनशीलाः । इत्येवं विललाप । 'निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् । ३ । २ ।१४६ ।' इति वुञ् ॥ १२ ॥

निन्दको रजनिम्मन्यं दिवसं क्लेशको निशाम् ।
प्रावृष्यनैषीत्काकुत्स्थः कथंचित्परिदेवकः ॥ १३ ॥

निन्दक इत्यादि—काकुत्स्थो दिवसं रजनिम्मन्यं रजनीमात्मानं मन्यमानं घनान्धकारित्वात् । 'आत्ममाने खश्च । ३ । २ । ८३ ।' 'खित्यनव्ययस्य । ६ । ३ । ३६ ।' इति ह्रस्वत्वम् । निशां प्रावृषि कथमप्यनैषीत् नीतवान् । निन्दकः निन्दनशीलः। नक्तंदिनस्येत्यर्थात् । क्लेशकः क्लेशनशीलः । परिदेवकः परिदेवनशीलः । आत्मन इत्यर्थात् ॥ १३ ॥

अथोपशरदेऽपश्यत्क्रौञ्चानां चेष्टनैः कुलैः ।
उत्कण्ठावर्धनैः शुभ्रं रवणैरम्बरं ततम् ॥ १४ ॥

अथेत्यादि—अथानन्तरमुपशरदे शरत्समीपे इति 'अव्ययीभावे शरत्प्रभृतिभ्यः ।५। ४ । १०७ ।' 'इति समासान्तष्टच् ।' तृतीयासप्तम्योर्बहुलम् । २ । ४ । ८४ ।' इत्यमभावः । क्रौञ्चानां कुलैस्ततं व्याप्तमम्बरं शुभ्रं शुक्लमपश्यत् दृष्टवान् । चेष्टनैः व्यापारशीलैः । रवणैः शब्दनशीलैः । अनयोश्चलनशब्दार्थत्वात् 'चलनशब्दार्थादकर्म्मकाद्युच् । ३ । २ । १४८ ।' इति युच् । उत्कण्ठावर्धनैः उत्कण्ठावर्धनशीलैः उत्कण्ठा वर्धयन्तीति तैः, मदनोद्दीपकतया जनकनन्दिन्याः स्मारकैरित्यर्थः । 'अनुदात्तेतश्च हलादेः ।३।२।१४९ ।' इति युच् । क्रौञ्च इति क्विनप्रत्ययान्तत्वात् प्रज्ञादित्वादण् ॥ १४ ॥

विलोक्य द्योतनं चन्द्रं लक्ष्मणं शोचनोऽवदत् ।
पश्य दन्द्रमणान्हंसानरविन्दसमुत्सुकान् ॥ १५ ॥

---

१ 'रवणः शब्दनः' इत्यमरः ।

विलोक्येत्यादि—चन्द्रं विलोक्य द्योतनं साधु द्योतमानम् । 'अनुदात्तेतश्च हलादेः ।३।२ । १४९ ।' इति युच् शोचनः शोचनशीलः ।'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ।३।२। १५० ।' इति युच् । रामो लक्ष्मणमवदन् । पश्य हंसान् दन्द्रमणान् शनैर्द्रमणशीलान् । द्रमेर्नित्यं कौटिल्य एव भवति नतु क्रियासमभिहार इत्युक्तम् । तदन्ताद्युच् । 'अतो लोपः । ६ । ४ । ४८ ।' इत्यतो लोपः ।'यस्य हलः ।६।४।४९।' इति यस्य लोपः । अरविन्दसमुत्सुकान् 'प्रसितोत्सुकाभ्यां तृतीया च ।२।३।४४।' इति सप्तमीं विधाय 'सप्तमी शौण्डैः २।१।४०।' इत्यत्र 'सप्तमी' इति योगविभागात् समासः ॥ १५ ॥

**कपिश्चङ्क्रमणोऽद्यापि नासौ भवति गर्धनः ।**
**कुर्वन्ति कोपनं तारा मण्डना गगनस्य माम् ॥ १६ ॥**

कपिरित्यादि—नासौ कपिः सुग्रीवोऽद्यापि चङ्क्रमणः शनैर्गमनशीलो न भवति । यतो गर्धनोऽभिलाषशीलः स्त्रीष्वित्यर्थात् । पूर्ववद्युच् । ताराश्च मां कोपनं कोपनशीलं तद्विषय एव कुर्वन्ति । कीदृश्यः गगनस्य मण्डना भूषणाः । 'क्रुधमण्डार्थेभ्यश्च ।३।२।१५१।' इति युच् ॥ १६ ॥

**नावैत्याप्यायितारं किं कमलानि रविं कपिः ।**
**दीपितारं दिनारम्भे निरस्तध्वान्तसञ्चयम् ॥ १७ ॥**

नावैतीत्यादि—किमसौ कपिः रविं नावैति नावगच्छति । कमलान्याप्यायितारं साधु वर्धयन्तम् । 'अनुदात्तेतश्च हलादेः । ३ । २ । १२९।' इति प्राप्ते । नयः। ३।२।१५२।' इति प्रतिषिद्धे तृन्नेव भवति । ततश्च 'न लोकाव्ययनिष्ठाखलर्थतृनाम् । २।३।६९।' इति षष्ठीप्रतिषेधः । दिनारम्भे प्रातः काल इत्यर्थः । दीपितारं साधु दीप्यमानम् । पूर्ववद्युचि प्राप्ते सूददीपदीक्षश्च ।३।२।१५३।' इति प्रतिषेधः । निरस्तध्वान्तसंचयम् अपनीतान्धकारसंहतिकं किमसौ शरत्समयं नावैतीत्यर्थः ॥ १७ ॥

**अतीते वर्षुके काले प्रमत्तः स्थायुको गृहे ।**
**गामुको ध्रुवमध्वानं सुग्रीवो वालिना गतम् ॥ १८ ॥**

अतीत इत्यादि—वर्षुके वर्षणशीले काले अतीतेऽपि गृहे स्थायुकः स्थितिशीलः शरदि नागतत्वात् प्रमत्तः सन् सुग्रीवो वालिना गतम् अध्वानं प्राप्त-

---

१ 'गृध्नुस्तु गर्धनः। लुब्धोऽभिलाषुकस्तृष्णक्' इत्यमरः। २ इदं क्रियाविशेषणम् ।

मार्गं ध्रुवमवश्यं गामुकः साधु गन्ता । 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् । ३ । २ । १५४ ।' इत्युकञ् । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् । २ । ३ । ६९ ।' इति षष्ठीप्रतिषेधः ॥ १८ ॥

**जल्पाकीभिः सहासीनः स्त्रीभिः प्रजविना त्वया ।**
**गत्वा लक्ष्मण वक्तव्यो जयिना निष्ठुरं वचः ॥ १९ ॥**

जल्पाकीभिरित्यादि—हे लक्ष्मण ! त्वया प्रजविना प्रकृष्टगमनशीलेन । 'प्रजोरिनिः।३।२।१५६।' इतीनिः। जयिना अभिभवनशीलेन। 'जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च । ३ । २ । १५७ ।' इतीनिः । सुग्रीवो निष्ठुरं वचो वक्तव्योऽभिधातव्यः । जल्पाकीभिः जल्पनशीलाभिः स्त्रीभिः सहासीनः । 'जल्पभिक्षकुट्टलुण्ठवृङः षाकन् । ३ । २ । १५५ ।' इति षाकन । षित्वात् ङीष् । तन्मध्ये हि परुषमभिधीयमानः परिभवं मन्यत इति भावः ॥ १९ ॥

**शैले विश्रयिणं क्षिप्रमनादरिणमभ्यमी ।**
**न्याय्यं परिभवी ब्रूहि पापमव्यथिनं कपिम् ॥ २० ॥**

शैल इत्यादि—कपिं क्षिप्रं गत्वा ब्रूहि इत्यकथितं कर्म । न्याय्यं वच इति प्रधानं कर्म । अस्य चातिस्पष्टार्थत्वादिदं तदिति संदिष्टम् । अनादरिणमनादरशीलं कपिं कालातिक्रमणात् । आङ्पूर्वो दृङ् । अत एव पापं दुराचारम् । अव्यथिनं निर्भयशीलम् । नञ्पूर्वो व्यथिः । शैले विश्रयिणं तत्र स्थितिशीलम् । विपूर्वः श्रयतिः । त्वं चाभ्यमी अभिमुखगमनशीलः । अभिपूर्वोऽम गत्यादिषु । परिभवी साधु परिभवं जनयन् । परिपूर्वो भवतिः । अत्र सर्वत्र 'जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च । ३ । २ । १५७ ।इतीनिः ॥ २० ॥

**स्पृहयालुं कपिं स्त्रीभ्यो निद्रालुमदयालुवत् ।**
**श्रद्धालुं भ्रामरं धारुं सद्रुमद्रौ वद द्रुतम् ॥ २१ ॥**

स्पृहयालुमित्यादि—स्त्रीभ्यः स्पृहयालुं कपिं साधु स्पृहयन्तम् । स्पृहिः स्वार्थिकण्यन्तोऽदन्तश्च । 'अयामन्ताल्वाय्येत्न्विष्णुषु ।६।४।५५।' इत्ययादेशः । 'स्पृहेरीप्सितः । १ । ४ । ३६ ।' इति सम्प्रदानसंज्ञा । द्रुतं वद ब्रूहि । अदयालुवत् अदयनशील इव । निद्रालुं निद्राशीलम् अस्मत्कार्येष्व-

---

१ यथा मम शराहतो वाली परलोकं प्राप्तस्तथैवायमपि प्रैष्यतीति वक्तव्यम् । २ 'स्याजल्पाकस्तु वाचालः, इत्यमरः । ३ आसीन उपविष्टः । ४ 'स्पृही कामी साभिलाषः स्पृहयालुश्च सस्पृहः ।' इति गोपालः । ५ 'स्वप्नक् शयालुर्निद्रालुः 'इत्यमरः ।

नवधानत्वात् शयनीय एव सर्वदा स्थितत्वात् स्त्रीभिः सह श्रद्धालुं साध्वभिलषन्तम् । किम् । भ्रामरं भ्रमरैः कृतम् । 'क्षुद्राभ्रमरवटरपादपादञ् । ४ । ३ । ११९ ।' इत्यञ् । मध्वित्यर्थात् । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् । २ । ३ । ६९ ।' इति षष्ठीप्रतिषेधः । 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् । ३ । २ । १५८ ।' इत्यालुच् । श्रद्धालुत्वादेव धारुं साधु पिबन्तं भ्रामरमेव । सद्रुं साधु सीदन्तम्[२] क अद्रौ । 'दाधेट्सिशदसदो रुः । ३ । २ । १५९ ।' इति रुः ॥ २१ ॥

सृमरो भङ्गुरप्रज्ञो गृहीत्वा भासुरं धनुः ।
विदुरो जित्वरः प्राप लक्ष्मणो गत्वरान्कपीन् ॥ २२ ॥

सृमर इत्यादि—लक्ष्मणः कपीन् प्राप । कीदृशः—सृमरः साधु गन्ता । 'सृघस्यदः क्मरच् । ३ । २ । १६० ।' भङ्गुरा ये स्वयमेव भज्यन्ते । 'भञ्जभासमिदो घुरच् । ३ । २ । १६१ ।' इति घुरच् । तान् प्रजानातीति भङ्गुरप्रज्ञः 'प्रे दाज्ञः । ३ । २ । ६ ।' इति कः । विदुरः[३] साधुवेदी । 'विदिभिदिच्छिदेः कुरच् । ३ । २ । १६२ ।' जित्वरः[४] साधु जयशीलः । 'इण्नश्जिसर्तिभ्यः क्वरप् । ३ । २ । १६३ ।' इति क्वरप् । गृहीत्वा धनुर्भासुरं भासनशीलम् । गत्वरान् गमनशीलान् कपीन् अस्थिरप्रकृतीनित्यर्थः । 'गत्वरश्च' ३।२।१६४।' इति निपातितम् । गमेः क्वरप्यनुनासिकलोपः ॥ २२ ॥

तं जागरूकः कार्येषु दन्दशूकरिपुं कपिः ।
अकम्प्रं मारुतिर्दीप्रं नम्रः प्रावेशयद्गुहाम् ॥ २३ ॥

तमित्यादि—तं लक्ष्मणं कपिर्मारुतिः गुहां प्रावेशयत् । विशेर्हेतुमण्ण्यन्तात् लङि रूपम् । कार्येषु कृत्येषु जागरूकः[५] सावधानः । 'जागरूकः । ३ । २ । १६५ ।' इति जागर्तेरूकः । दन्दशूकरिपुं[६] हिंस्रारिम् । 'यजजपदशां यङः ।३।२।१६६।' इति दंशेर्यङन्तादूकः । 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् । ३ । १ । २४ ।' इति यङ् । दीप्रं साधु दीप्यमानम् ।

---

१ 'श्रद्धालुः श्रद्धया युक्ते' इत्यमरः । २ भासराज्यादित्वात्, निहतशत्रुत्वाच्च निर्भयं निरुद्वेगं च विराजमानमिति भावः । ३ 'ज्ञाता तु विदुरो विन्दुः' इत्यमरः । ४ 'जेता जिष्णुश्च जित्वरः' इत्यमरः। ५ 'जागरूको जागरिता' इत्यमरः । ६ 'दन्दशूको बिलेशयः ।' इत्यमरोक्त्या दन्दशूकाः सर्पाः, लक्षणया तद्वत्परप्राणानां भयावहा अत एव हिंस्रास्तेषां रिपुमित्यभिप्रायः ।

अकम्प्रम् अकम्पनशीलम् अभीरुमित्यर्थः। नम्रः साधु प्रह्वीभूतः। सर्वत्र 'नमिकम्पिस्म्यजसकमहिंसदीपो रः।३।२।१६७।' इति रः॥ २३॥

**कम्राभिरावृतः स्त्रीभिराशंसुः क्षेममात्मनः।**
**इच्छुः प्रसादं प्रणमन्सुग्रीवः प्रावदन्नृपम्॥ २४॥**

कम्राभिरित्यादि—सुग्रीवः प्रावदत् नृपं लक्ष्मणम्। स्त्रीभिरावृतः परिवृतः सन् प्रणमन्। ताभिः सहेत्यर्थः। कम्राभिः कमनशीलाभिः। पूर्ववद्रः। आत्मनः क्षेमं कल्याणमाशंसुः प्रार्थयमानः। 'सनाशंसभिक्ष उः।३।२।१६८।' इत्युः। 'न लोकाव्ययनिष्ठाखलर्थतृनाम्।२।३।६९।' इति षष्ठीप्रतिषेधः। इच्छुः। प्रसादं प्रसादयिषणशीलः। 'अपि मे स्वामी प्रसन्नः स्यात्' इति। 'बिन्दुरिच्छुः।३।२।१६९।' इति निपातनम्॥ २४॥

**अहं स्वप्नक्प्रसादेन तव वन्दारुभिः सह।**
**अभीरुरवसं स्त्रीभिर्भासुराभिरिहेश्वरः॥ २५॥**

अहमित्यादि—अहं तव प्रसादेन इह गुहायां स्वप्नक् निद्रालुः शयितवानस्मीत्यर्थः। चिन्ताभावात्। 'स्वपितृषोर्नजिङ्।३।२।१७२।' इति नजिङ्। वन्दारुभिर्वन्दनशीलाभिः सह। 'शॄवन्द्योरारुः।३।२।१७३।' इत्यारुः। अभीरुः अभयशीलः। 'भियः क्रुक्लुकनौ।३।२।१७४।' इति क्रुः। भासुराभिः भासनशीलाभिः। ईश्वरः ईशनशीलः। 'स्थेशभासपिसकसो वरच् ३।२।१७५।' इति वरच्॥ २५॥

**विद्युन्नाशं रवेर्भासं विभ्राजं शशलाञ्छनम्।**
**रामप्रत्तेषु भोगेषु नाहमज्ञासिषं रतः॥ २६॥**

विद्युदित्यादि—रामप्रत्तेषु रामेण दत्तेषु भोगेषु रतः सक्तः। नाहमज्ञासिषं नाहं ज्ञातवानस्मि। लुङि 'यमरमनमातां सक् च।७।२।७३।' इति सगिटौ। विद्युन्नाशं द्योतनशीला विद्युतः तासां नाशम्। रवेर्भाः भासनशीला दीप्तिः। ताम्। विभ्राजं साधु दीप्यमानं शशलाञ्छनं चन्द्रम्। प्रावृडतिक्रान्ता शरदायातेति नाज्ञासिषमित्यर्थः। सर्वत्र 'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।३।२।१७७।' इति क्विप्॥ २६॥

---

१ 'कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः।' इत्यमरः। २ 'आशंसुराशंसितरि।' इत्यमरः। ३ प्रसन्नतयेत्यर्थः। 'प्रसादस्तु प्रसन्नता।' इत्यमरः। ४ 'वन्दारुरभिवादके।' इत्यमरः। ५ भीरोर्विरुद्धोऽभीरुः। 'अधीरे कातरस्त्रस्ते भीरुभीरुकभीलुकाः।' इत्यमरः। ६ उज्ज्वलाभिरित्यर्थः। ७ रामप्रणत्तलब्धेष्वित्यर्थः।

**एष शोकच्छिदो वीरान्प्रभो सम्प्रति वानरान् ।**
**धराशैलसमुद्राणामन्तगान् प्रहिणोम्यहम् ॥ २७ ॥**

**एष** इत्यादि—हे प्रभो ! एषोऽहं सम्प्रति वानरान् प्रहिणोमि प्रस्थापयामि । कीदृशान् शोकच्छिदः शोकापनोदनशीलान् । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । वीरान् शूरान् । धराशैलसमुद्राणाम् अन्तं गच्छन्ति ये तानन्तगान् । 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ।३।२।४८।' इति डः । धरा पृथ्वी । 'धरासमुद्रशैलाग्राम्' इति पाठान्तरम् । अत्र 'बहुष्वानियमः' इति पूर्वनिपातः । यथा वीणाशङ्खदुन्दुभयः ॥ २७ ॥ इति ताच्छीलिककृतः ॥

इतो विशेषाधिकाराभावात् निर्विशेषकृतो दर्शयन्नाह—

**राघवस्य ततः कार्यं कारुर्वानरपुङ्गवः ।**
**सर्ववानरसेनानामाश्वागमनमादिशत् ॥ २८ ॥**

राघवस्येत्यादि—ततोऽभिधानानन्तरं वानरपुङ्गवः[1] सुग्रीवः सर्ववानरसेनानामाशु शीघ्रमागमनमादिशत् आदिष्टवान्[2] । पुमांश्चासौ गौश्चेति । 'गोरतद्धितलुकि ।५।४।९२।' इति समासान्तष्टच् । व्युत्पत्तिमात्रमेतत् । पुङ्गवशब्दस्तु प्रधानमाचष्टे । कारुः करोतीति 'उणादयो बहुलम् ।३।३।१।' इत्यौणादिकः । 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' इत्युण् । एवमाशु । कस्य कर्तेत्याह—राघवस्य कार्यम् ॥ २८ ॥

**वयमद्यैव गच्छामो रामं द्रष्टुं त्वराऽन्विताः ।**
**कारका मित्रकार्याणि सीतालाभाय सोऽब्रवीत् ॥ २९ ॥**

वयमित्यादि—आगमनमादिश्य सुग्रीवोऽब्रवीत् उक्तवान् । वयमद्यैव गच्छाम इति । रामं द्रष्टुं रामं द्रक्ष्याम इति । त्वरान्विताः त्वरिता इत्यर्थः । कीदृशा वयम् । सीतालाभाय सीतां प्राप्स्याम इति । कारकाः कर्त्तारः मित्रकार्याणि रावणवधादेः कार्यस्य[3] । भविष्याम इति शेषः । गच्छाम इति क्रिया । तस्यां क्रियायां क्रियार्थायामुपपदे तुमुन्ण्वुलौ भविष्यति काले स्याताम् । मित्रकार्याणीति । 'अकेनोर्भविष्यदाधमर्ण्ययोः ।२।३।७०।' इति षष्ठीप्रतिषेधे द्वितीयैव स्यात् । सीतालाभायेति 'भाववचनाच्च ।३।३।११।' इति क्रियायां क्रियार्थायामुपपदे भविष्यति घञ् । 'तुमर्थाच्च भाववचनात् २।३।१५।' इति चतुर्थी ॥ २९ ॥

---

१ वानरेषु पुङ्गवः श्रेष्ठ इत्यर्थः । २ आज्ञापितवानिति भावः । ३ रामस्य सीताहर्तृस्थानान्वेषणरूपम् ।

**ततः कपीनां सङ्घाता हर्षाद्राघवभूतये ।**
**पूरयन्तः समाजग्मुर्भयदाया दिशो दश ॥ ३० ॥**

**तत इत्यादि**—तत आदेशादनन्तरं कपीनां संघाताः[1] समाजग्मुः । हर्षात् हर्षेण । आदेशदानमेव हर्षहेतुः। राघवभूतये रामचन्द्रस्य कार्यसम्पत्त्यर्थमित्यर्थः। कापि नाम राघवस्य संपत्स्यादिति समाजग्मुरित्यस्यां क्रियायां क्रियार्थायामुपपदे 'भाववचनाच्च । ३ । ३ । ११ ।' इति भविष्यति क्तिन् । चतुर्थी च पूर्ववत् । पूरयन्तो व्याप्नुवन्तः । दश दिशः । भयदायाः भयं दास्याम इत्यस्यां क्रियायामुपपदे 'अण् कर्मणि च । ३ । ३ । १२ ।' इत्यण् । 'आतो युक् चिण्कृतोः । ७ । ३ । ३३ ।' इति युक् ॥ ३० ॥

**सुग्रीवाऽन्तिकमासेदुः सादयिष्याम इत्यरिम् ।**
**करिष्यन्त इवाकस्माद्भुवन निर्दशाननम् ॥ ३१ ॥**

**सुग्रीवेत्यादि**—अरिं शत्रुं सादयिष्यामो व्यापादयिष्याम इति सुग्रीवान्तिकमासेदुः आगताः । 'लृट् शेषे च । ३ । ३ । १३ ।' इति चकारात् क्रियार्थायामुपपदे भविष्यति लृट्। आसेदुरिति क्रिया क्रियार्था। अकस्मादतर्कितं भुवनं भुवनत्रयं[2] निर्दशाननं रावणरहितं करिष्यन्त इव तथाविधमहासंरम्भदर्शनादुत्प्रेक्ष्यते 'लृट् शेषे च । ३ । ३ । १३ ।' इति लृट् । अत्र क्रियायाः क्रियार्थाया अन्यः शुद्धो भविष्यत्कालः शेषः ॥ ३१ ॥

**कर्ताऽस्मि कार्यमायातैरेभिरित्यवगम्य सः ।**
**काकुत्स्थपादपच्छायां शीतस्पर्शामुपागमत् ॥ ३२ ॥**

**कर्तास्मीत्यादि**—एभिरायातैर्वानरैः[3] कार्यं सीतान्वेषणादि कर्तास्मि करिष्यामीति अवगम्य। अनद्यतने भविष्यति लुट् । सुग्रीवः काकुत्स्थपादपच्छायामुपागमत् । पद्यन्त इति पादाः । 'पदरुजविशस्पृशो घञ् । ३ । ३ । १६ ।' इति कर्तरि घञ् । तत्र भविष्यतीति निवृत्तम् । पादैः पिबतीति पादपो[4] वृक्षः । 'आतोऽनुपसर्गे कः । ३ । २ । ३ ।' काकुत्स्थः[5] पादप इव समाश्रयणीयत्वात् । तस्य छायां शीतस्पर्शाम् अनुद्वेजनकरीम् । स्पृश्यत इति स्पर्शस्तन्मात्र उच्यते । 'अकर्त्तरि च कारके सञ्ज्ञायाम् । ३ । ३ । १९ ।'

---

१ 'स्तोमौघनिकरव्रातवारसङ्घातसञ्चयाः ।' इत्यमरः । २ जात्यभिप्रायेणैकवचनमिति सम्भाव्योक्तम्भुवनत्रयमिति । ३ आयातैः प्राप्तैरित्यर्थः । ४ 'विटपः पादपस्तरुः' इत्यमरः । ५ ककुत्स्थस्य वंशभवत्वाद्राम इत्यर्थः

इति घञ् न तु 'पदरुजविषस्पृशो घञ् । ३ । ३ । १६ ।' इति । तत्र हि 'स्पृश उपताप इति वक्तव्यम्' इत्युक्तं स्पृशतीति स्पर्श उपतापेः ॥ ३२ ॥

कार्यं सारनिभं दृष्ट्वा वानराणां समागमम् ।
अवैन्नाशं दशाऽऽस्यस्य निर्वृत्तमिव राघवः ॥ ३३ ॥

इति निरधिकारकृत् ।

कार्यमित्यादि—राघवो वानराणां समागमं दृष्ट्वा कार्यं सारनिभं स्थिरतुल्यम् । सरति कालान्तरे तिष्ठतीति कर्तरि कारके 'सृ । स्थिरे । ३ । ३ १७ ।' इति घञ् । दशास्यस्य रावणस्य नाशं विनाशं निर्वृत्तमिव निष्पन्नमिव अवैत् ज्ञातवान्। अवपूर्वादिणो लङि रूपम् ॥ ३३ ॥

इति निरधिकाराः कृतः ॥

अतः परं भावेऽकर्तरि च कारक इत्यधिकृत्य कृदुच्यते—

ततः कपिसमाहारमेकनिश्रायमागतम् ।
उपाध्याय इवाऽऽयामं सुग्रीवोऽध्यापिपद्दिशाम् ॥ ३४ ॥

तत इत्यादि—ततः कपिसमागमनानन्तरं सुग्रीवः कपिसमाहारं कपिसमूहं दिशामायाममध्यापिपत् बोधितवान्।अमुका अमुका दिक् ईदृशीति।'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणमणि कर्त्ता स णौ ।१।४।५२।'इति समाहारस्य कर्मसंज्ञा । आयामपरिज्ञानं चास्य वालिभया दूरपरिभ्रमणात् । एकनिश्रायमागतम् एकराशितां प्राप्तम् आयाममित्यर्थः । निश्रायमिति 'परिमाणाख्यायां सर्वेभ्यः ।३।३।२०।' इति घञ् । पश्चादेकशब्देन 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ।२।१।४९।' इति समासः । क इव । उपाध्याय इवेति । उपेत्याधीयते अस्मादिति 'इङश्च ।३।३।२१।' इति घञ् ॥ ३४ ॥

सजलाऽम्भोदसंरावं हनुमन्तं सहाऽङ्गदम् ।
जाम्बवं नीलसहितं चारुसन्द्रावमब्रवीत् ॥ ३५ ॥

सजलेत्यादि–सुग्रीवो हनुमन्तमब्रवीत् । सजलाम्भोदसंरावं सजलमेघस्येव संरावो यस्य हनुमतः । 'उपसर्गे रुवः ।३।३।२२।' इति घञ् । सहाङ्गदं

---

१ 'उपाध्यायोऽध्यापकः' इत्यमरः। २ अम्भोदो मेघः। संरावः शब्दः।'आरवारावसंरावविरावा ।' इत्यमरः। सजलमेघशब्दो हि धीरो महांश्च भवति । ३ अत्र 'सहस्य सः सञ्ज्ञायाम् ६।३।७८' इत्यतो न सहस्य सादेशः, सञ्ज्ञायामेव तत्प्रवृत्तेः ।

अङ्गदसहितम् । तथा जाम्बवम् ऋक्षाधिपतिं नीलसहितमब्रवीत्।जाम्बवशब्दो ऽकारान्तो द्रष्टव्यः चारुसन्द्रावं चारुगतिम् 'समि युद्रुदुवः । ३ । ३ । २३ ।' इति घञ् ॥ ३५ ॥

अथ पञ्चभिः कुलकम् ।

याता यूयं यमश्रायं दिशं नायेन दाक्षिणाम् ।
विक्षावैस्तोयविश्रावं तर्जयन्तो महोदधेः ॥ ३६ ॥

यातेत्यादि—यूयं यात गच्छत । यमश्रायं यमस्थानम् । श्रयत्येनमिति 'श्रिणीभुवोऽनुपसर्गे । ३ । ३ । २४ ।' इति घञ् कर्मणि । काम् दक्षिणां दिशम् । सामान्याभिधानाद्विशेषाभिधानम् । नायेन नीत्या सामादिना । नीयतेऽनेनेति पूर्ववत्करणे घञ् । महोदधेस्तोयविश्रावं तोयध्वनिं तर्जयन्तो न्यक्कुर्वाणाः । कैः विक्षावैः स्वैः शब्दैः । उभयत्रापि 'वौ क्षुश्रुवः ।३।३।२५।' इति कर्मणि घञ् ॥ ३६ ॥

उन्नायानधिगच्छन्तः प्रद्रावैर्वसुधाभृताम् ।
वनाऽभिलावान्कुर्वन्तः स्वेच्छया चारुविक्रमाः ॥ ३७ ॥

उन्नायानित्यादि—वसुधाभृतां पर्वतानाम् । वसुधां बिभ्रति-धारयन्तीति तेषाम् । उन्नायानुच्चयानुच्चत्वान्यधिगच्छन्तः जानन्तः । 'अवोदोर्नियः ।३।३।२६।' इति भावे घञ् । कैः प्रद्रावैः प्रकृष्टगतिभिः । 'प्रे द्रुस्तुस्रुवः । ३। ३।२७।' इति घञ् । वनाभिलावान् वनविध्वंसान् । निरभ्योः पूल्वोः । ३।३। २८।' इति भावे घञ् । स्वेच्छया कुर्वन्तः । चारुविक्रमाः असाधारणपराक्रमाः । यात यूयमिति संबन्धः ॥ ३७ ॥

सदोद्गारसुगन्धीनां फलानामलमाशिताः ।
उत्कारेषु च धान्यानामनभीष्टपरिग्रहाः ॥ ३८ ॥

सदेत्यादि—सदा सर्वदा उद्गारे भक्षणानन्तरं श्वसनपूर्वके शब्दोच्चारणे यानि सुगन्धीनि तेषामलं पर्याप्तमाशिताः । 'गॄ शब्दे' इत्यस्मादुत्पूर्वात् 'उन्न्योर्ग्रः । ३ ।३ । २९।' इति घञ् । आङ्पूर्वादश्नातेः 'आदिकर्मणि क्तः

१ जाम्बव इति जाम्बवत एव सञ्ज्ञान्तरम् । २ सुन्दरगमनकारिणमित्यर्थः । 'सुन्दरं रुचिरं चारु' इति 'प्रद्रावोद्रावसन्द्रावसन्दावा विद्रवो द्रवः ।' इति चामरः । ३ 'आयः श्रयणे'इत्यमरः । ४ 'निकारोद्गारविक्षावोद्ग्राहास्तु गरणादिषु ।' इत्यमरः । ५ 'उन्नाय उन्नये' इत्यमरः । ६ 'प्रद्रावोद्रावसन्द्रावसन्दावाः' इत्यमरः । ७ 'लवोऽभिलावा लवने' इत्यमरः ।

कर्तरि च । ३ । ४ । ७१ ।' इति कर्तरि क्तः । कृत्प्रयोगे कर्मणि षष्ठी 'न लोकाव्ययनिष्ठाखलर्थतृनाम् । २ । ३ । ६९ ।' इति निषिद्धाऽतः शेषे षष्ठी । उत्कारेषु च राशिषु धान्यानाम् । 'कॄ विक्षेपे' इत्यस्मादुत्पूर्वात् 'कॄ धान्ये । ३ । ३ । ३० ।' इति कर्मणि घञ् । अनभीष्टपरिग्रहाः अनभिलाषुका इत्यर्थः ॥ ३८ ॥

संस्तावमिव शृण्वन्तश्छन्दोगानां महाध्वरे ।
शिञ्जितं मधुलेहानां पुष्पप्रस्तारशायिनाम् ॥ ३९ ॥

संस्तावमित्यादि—मधुलेहानां भ्रमराणां पुष्पप्रस्तारशायिनाम् । 'प्रेस्त्रो ऽयज्ञे । ३ । ३ । ३२ ।' इति घञ् । शिञ्जितं शृण्वन्तः यूयं यात । छन्दोगानां महाध्वरे संस्तावमिव सम्भूय स्तवनमिव पाठध्वनिविशेषमिव वा 'यज्ञे समि स्तुवः । ३ । ३ । ३१ ।' इति घञ् ॥ ३९ ॥

आलोचयन्तो विस्तारमम्भसां दक्षिणोदधेः ।
स्वादयन्तः फलरसं मुष्टिसंग्राहपीडितम् ॥ ४० ॥

आलोचयन्त इत्यादि—दक्षिणोदधेर्दक्षिणदिगुपलक्षकस्य समुद्रस्येत्यर्थः । अम्भसां विस्तारं विस्तीर्णताम् । विपूर्वात् स्तृणातेः 'प्रथने वावशब्दे । ३ । ३ । ३३ ।' इति घञ् । आलोचयन्तो निरूपयन्तः । इयानस्य विस्तार इति । फलरसमास्वादयन्तः । मुष्टिसंग्राहपीडितम् । मुष्टेः संग्राहेण हस्तेन पीडितम् । ग्रहेः 'समि मुष्टौ । ३ । ३ । ३६ ।' इति घञ् । भावे मुष्टिविषये व्युत्पादितत्वात् । मुष्टिग्रहणमभिव्यक्त्यर्थं ज्ञातव्यम् ॥ ४० ॥

न्याय्यं यदत्र तत्कार्यं पर्यायेणाऽविरोधिभिः ।
निशोपशायः कर्त्तव्यः फलोच्चायश्च संहतैः ॥ ४१ ॥

न्याय्यमित्यादि—यदत्र न्यायादनपेतं तत्कार्यमविरोधिभिर्युष्माभिः । 'परिन्योर्नीणोर्द्यूताभ्रेषयोः । ३ । ३ । ३७ ।' इति घञ् । पदार्थानामनपचारेणेत्यर्थः । 'व्युपयोः शेतेः पर्याये । ३ । ३ । ३९ ।' इति घञ् । अपर्यायेण परिपाट्या । 'परावनुपात्यय इणः । ३ । ३।३८ ।' इति भावे घञ् । अनुपात्ययः पर्यायः । निशोपशायः कर्तव्यः । युष्माभिर्निशाया-

---

१ 'उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ' इत्यमरः २ यद्यपि 'भूषणानां तु शिञ्जितम् ।' इत्यमराद्युक्त्या भूषणानामेव शब्दस्य वाचकः शिञ्जितशब्दः । तथाऽपि भ्रमराणां तदुपमत्वं सम्भाव्य समर्थनीयम् ।

मुपशायैः पर्यायशयनं कर्तव्यम् । 'व्युपयोः शेतेः पर्याये । ३ । ३ । ३९ ।' इति घञ् । फलोच्चायश्च संहतैः युष्माभिः कर्तव्यः 'हस्तादाने चेरस्तेये । ३ । ३ । ४० ।' इति घञ् । हस्तादानं चादेयस्य प्रत्यासत्तिः ॥ ४१ ॥

सीतारक्षोनिकायेषु स्तोककायैश्छलेन च ।
मृग्या शत्रुनिकायानां व्यावहासीमनाश्रितैः ॥ ४२ ॥

सीतेत्यादि—छलेन युष्माभिः सीता मृग्या । रक्षोनिकायेषु राक्षसप्रायेषु निवासेषु इत्यर्थः । विवसन्त्यस्मिन्निति अधिकरणे 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः । ३ । ३ । ४१ ।' इति घञ्, आदेश्च ककारः । स्तोककायैर्युष्माभिः । चिन्वन्त्यस्माच्छुभमिति कायः । शरीरे घञ् । शत्रुनिकायानां अरिसमूहानाम् । निचीयत इति निकायः । 'संघे चानौत्तराधर्ये । ३ । ३ । ४२ ।' इति कर्मणि घञ्, आदेश्च ककारः । तेषां संबन्धिनीं व्यावहासीं परस्परहसनम् । अनाश्रितैः । व्यवपूर्वाद्धसः कर्मव्यतिहारे 'णचः स्त्रियामञ् । ५ । ४ । १४ ।' इति स्त्रीलिङ्गे भावे णचं विधाय णचः स्त्रियामञ् । 'न कर्मव्यतिहारे । ७ । ३ ।२६ ।' इति वृद्धिप्रतिषेधः ॥ ४२ ॥

सांराविणं न कर्त्तव्यं यावन्नाऽऽयाति दर्शनम् ।
संदृष्टायां तु वैदेह्यां निग्राहो वोऽर्थवानरेः ॥ ४३ ॥

सांराविणमित्यादि---सांराविणमभिव्याप्त्या भाषणं न कर्तव्यं युष्माभिः यवान्नायाति दर्शनं सीतेत्यर्थात् संपूर्वाद्रौतेः 'अभिविधौ भाव इनुण् । ३ । ३।४४ ।' तदन्तात् 'अणिनुणः।५।४।१५।' इत्यण् । तस्मिन् 'इनण्यनपत्ये ।६।४। १६४ ।' इति प्रकृतिभावः । यस्मात्संदृष्टायां चैतस्यां वैदेह्यां अरेर्निग्राहः आक्रोशोऽभिभवलक्षणः वो युष्माकमर्थवान् । 'आक्रोशेऽवन्योर्ग्रहः । ३ । ३ । ४५ ।' इति भावे घञ् ॥ ४३ ॥

प्रग्राहैरिव पात्राणामन्वेष्या मैथिली कृतैः ।
ज्ञातव्या चेङ्गितैर्धर्म्यैर्ध्यायन्ती राघवाऽऽगमम् ॥ ४४ ॥

---

१'उपशायो विशायश्च पर्यायशयनार्थकौ ।'इत्यमरः।'२रक्षसां निकायाःसमूहाःतेषु 'अथ सधर्मिणाम् । स्यान्निकायः'इत्यमरः । ३ अदीर्घशरीरैरिति भावः। स्तोका अल्पा क्षुद्रा इति यावत् कायाः शरीराणि येषां तैः'स्तोकाल्पक्षुल्लकाः सूक्ष्मम्'इत्यमरः।

प्रग्राहैरित्यादि—पात्राणां भिक्षाभाजनानां प्रग्राहैरिव न तु समृद्धैरिवेत्यभिप्रायः। कृतैरन्वेष्या मैथिली। भिक्षुकवेषैरिव युष्माभिरित्यर्थः । ग्रहेः 'ग्रे लिप्सायाम् ।३।३।४६।' इति भावे घञ् । कर्मणि षष्ठी । इङ्गितैर्धर्म्यैः धर्मादनपेतैः । चेष्टितैः कुलाङ्गनोचितैः धर्मादनपेतानीति धर्म्याणि तैः । 'धर्मपथ्यर्थन्यायादनपेते ।४।४।९२।' इति यत् । ज्ञातव्या सा ध्यायन्ती रामागमम् । कुलाङ्गना हि प्रोषितभर्तृका सर्वदा भर्तुरागमनं ध्यायति ॥ ४४ ॥

वेदिवत्सपरिग्राहा यज्ञियैः संस्कृता द्विजैः ।
दृश्या मासमतादह्नः प्रागनिन्दितवेशभृत् ॥ ४५ ॥

वेदिवदित्यादि—वेदिवाद्भिः सपरिग्राहाः यथा यज्ञियैर्यज्ञकर्मार्हैर्द्विजैः ब्राह्मणैः । वेदि[1] यज्ञस्थली । सपरिग्राहा[2] परिगृहीता संस्कृता तथा साऽपि अतिपवित्रत्वात् । ग्रहेः 'परौ यज्ञे ।३।३।४७।' इति यज्ञविषये घञ् । मासतमादह्नः प्राग्दृश्या दर्शनार्हाः । मासस्य पूरणं यदहः । 'नित्यं शतादिमासार्धमाससंवत्सराच्च ५ । २ ।५७।' इति तमडागमः । अस्मादेव निपातनात् मासस्यासंख्यावाचित्वे डट् । मासतमेऽह्नीति हेतुं दर्शयन्नाह । तस्याः पूतत्वात्तद्वदनिन्दितवेशभृत् मैथिली मङ्गलमात्राभरणा दर्शनार्हा । तां द्रष्टुं भवतां न चिरकालो भवतीति मासावधिना प्रेषिताः ॥ ४५ ॥

नीवारफलमूलाशानृषीनप्यतिशेरते ।
यस्या गुणा निरुद्रावास्तां द्रुतं यात पश्यत ॥ ४६ ॥

नीवारेत्यादि—यस्या गुणा ब्रह्मचर्यादयः ऋषीनप्यतिशेरते न्यक्कुर्वते तां द्रुतं यात पश्यत । तत्र नीवारः अकृष्टपच्यधान्यम्[3] । 'नौ वृ धान्ये ।३।३।४८।' इति घञ् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम् ।६।३।१२२।' इति दीर्घत्वम् । फलं मोचादि । मूलं शालूकादि । एतान्यश्नन्ति ये ऋषयः । कीदृशा गुणाः । निरुद्रावाः स्थिराः । 'उदि श्रयतियौतिद्रुवः । ३ ।३। ४९।' इति घञ् ॥ ४६ ॥

---

१ 'वेदिः परिष्कृता भूमिः समे स्थण्डिलचत्वरे ।' इत्यमरः । २ समानः परिग्राहः परिग्रहो येषां ते सपरिग्राहाः। परिग्राहो वेषादिः। ३ 'तृणधान्यानि नीवाराः' इत्यमरः। अत्र बहुवचनमविवक्षितम् 'अमरा निर्जरा देवाः' इत्यादिवत् ।

उच्छ्रायवान्घनाऽऽरावो वानरं जलदाऽऽरवम् ।
दूराऽऽप्लावं हनूमन्तं रामः प्रोचे गजाऽऽप्लवः ॥ ४७ ॥

उच्छ्रायवानित्यादि–रामो हनूमन्तं प्रोचे । कीदृशः । उच्छ्रायवा-नुन्नतियुक्तः । पूर्ववद् घञ् । घनस्येवारावो यस्य । 'विभाषाऽऽङि रुप्लु-वोः ।३।३।५०।' इति भावे घञ् । गजाप्लवः गजगमनः । पक्षे पूर्ववदप् । कीदृ-शम् । दूराप्लावं दूरमाप्लाव उद्गमनं यस्य । पूर्ववत् घञ् ॥ ४७ ॥

अवग्राहे यथावृष्टिं प्रार्थयन्ते कृषीवलाः ।
प्रार्थयध्वं तथा सीतां यात सुग्रीवशासनात् ॥ ४८ ॥

अवग्राह इत्यादि–अवग्राहो वर्षप्रतिबन्धः । 'अवे ग्रहो वर्षप्रतिबन्धे ।३।३।५१।' इति पक्षे अप् । यथा अवग्राहे कृषीवला वृष्टिं प्रार्थयन्ते तथा सीतां यूयं प्रार्थयध्वम् । तस्या दुर्लभत्वादत्यन्तादरणीयत्वाच्च । यात सुग्रीवशासनात् ॥४८ ॥

वणिक्प्रग्राहवान्यद्वत्काले चरति सिद्धये ।
देशापेक्षास्तथा यूयं याताऽऽदायाङ्गुलीयकम् ॥ ४९ ॥

वणिगित्यादि–तुला प्रगृह्यते येन सूत्रेण स प्रग्राहः । 'प्रे वणिजाम् । ३ । ।३।५२।' इति करणे घञ् । स तुलासंबन्धी विद्यते यस्य वणिजः । संसर्गे मतुप् । यथा तुलाप्रग्राहवान् तदुपलक्षितो वणिक् काले उचिते क्रयसिद्धये चरति तथा यूयं अङ्गुलीयकं तुलासूत्रस्थानीयं चिह्नमादाय देशापेक्षाः तत्तद्देशस्थितास्तत्र हि चिह्नेन रामदूता इति लक्ष्यन्ते ॥ ४९ ॥

अभिज्ञानं गृहीत्वा ते समुत्पेतुर्नभस्तलम् ।
वाजिनः स्यन्दने भानोर्विमुक्तप्रग्रहा इव ॥ ५० ॥

अभिज्ञानमित्यादि–ते वानरा नभस्तलमुत्पेतुः । वाजिन इव विमुक्त-प्रग्रहाः । विमुक्तः प्रग्रहो नियमरज्जुर्येषामिति । 'रश्मौ च । ३।३।५३।' इति विभाषाग्रहणमनुवर्तते । घञभावपक्षे 'ग्रहवृदृनिश्चिगमश्च । ३ ।३।५८।' इत्यप् । स्यन्दने रथे भानोरादित्यस्य । किं कृत्वा । अभिज्ञानं गृहीत्वा चिह्नमङ्गुलीयकमादाय ॥ ५० ॥

---

१ 'नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ।' इत्यमरः । २ 'तद्विघातेऽवग्राहा-वग्रहौ समौ' इत्यमरः । ३ 'तुला सूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च ।' इत्यमरः ।

उदक्छतवलिं कोट्या सुषेणं पश्चिमां तथा ।
दिशं प्रास्थापयद्राजा वानराणां कृतत्वरः ॥ ५१ ॥

उदगित्यादि–वानराणां राजा सुग्रीवः शतवलिं नाम वानरं वानराणां कोटया सह उदगुदीचीं दिशं प्रास्थापयत् । तिष्ठतेर्ण्यन्तस्य लाङि रूपम् । उदीचीशब्दात् प्रथमान्ताद्दिशि वर्तमानादस्तातिः । तस्याञ्चतेर्लुक् । 'लुक् तद्धितलुकि ।१।२।४९।' इति स्त्रीप्रत्ययस्य लुक् । तस्मिन्निवृत्ते भसंज्ञाभावादीत्वमपि निवर्तते । तसिलादिस्तद्धित एधाच्पर्यन्त इत्यव्ययत्वे द्वितीयालुक् । तथैव सुषेणं वानरं पश्चिमां दिशं प्रास्थापयत् । कृतत्वरः[1] त्वरितः ॥ ५१ ॥

प्राचीं तावद्भिरव्यग्रः कपिभिर्विनतो ययौ ।
अप्रग्राहैरिवाऽऽदित्यो वाजिभिर्दूरपातिभिः ॥ ५२ ॥

प्राचीमित्यादि—कपिभिस्तावद्भिरित्येककोटिसंघातैः सह विनतः प्रणतः सुग्रीव इत्यर्थात् । अव्यग्रः अनाकुलः । प्राचीं पूर्वां दिशं ययौ । यथ आदित्यो वाजिभिरप्रग्राहैः मुक्तबन्धनैः करणभूतैः । 'रश्मौ च ।३।३।५३।' इति घञ् दूरयायिभिः ॥ ५२ ॥

ययुर्विन्ध्यं शरन्मेघैः प्रावारैः प्रवरैरिव ।
प्रच्छन्नं मारुतिप्रष्ठाः सीतां द्रष्टुं प्लवङ्गमाः ॥ ५३ ॥

ययुरित्यादि—मारुतिप्रष्ठाः हनूमदग्रेसराः सीतां द्रष्टुं विन्ध्यपर्वतं ययुः । शरन्मेघैः प्रावारैरिव प्रच्छन्नम् 'वृणोतेराच्छादने । ३ । ३ । ५४ ।' इति घञ् । प्रवरैः श्रेष्ठैः । अनाच्छादने ग्रहेत्यादिना अप् ॥ ५३ ॥

परिभावं मृगेन्द्राणां कुर्वन्तो नगमूर्धसु ।
विन्ध्ये तिग्मांशुमार्गस्य चेरुः परिभवोपमे ॥ ५४ ॥

परीत्यादि–मृगेन्द्राणां सिंहानां परिभावमभिभवं[3] कुर्वन्तः । विन्ध्ये[4] चेरुः भ्रान्ताः । 'परौ भुवोऽवज्ञाने ।३।३ । ५५ ।' इति घञ् । कीदृशे तिग्मांशुमार्गस्य परिभवोपमे । आदित्यमार्गस्य परिभवनम् । अत्युच्चत्वात् । घञभावपक्षे अप् ॥ ५४ ॥

---

१ कृतात्वरो येन सः । २ अत्रोपमा । ३ 'परीभावम्' इति पाठान्तरम् । ४ विन्ध्ये एतदाख्ये पर्वते ।

भ्रेमुः शिलोच्चयांस्तुङ्गानुत्तेरुरतरान्नदान् ।
आशंसवो लवं शत्रोः सीतायाश्च विनिश्चयम् ॥ ५५ ॥

भ्रेमुरित्यादि--उत्पूर्वाच्चिनोतेः 'एरच् । ३ । ३ । ५६ ।' इत्यच् । शिलाभिरुच्चयो येषां तान् शिलोच्चयान्[१] । भ्रेमुः भ्रमणक्रियाया व्याप्यत्वात् सकर्मकता । नदान् अतरान् तरितुमशक्यान्[२] उत्तेरुः उत्तीर्णवन्तः । शत्रोर्लवमुच्छेदनम् । सीतायाश्च विनिश्चयं विनिर्णयम्।आशंसवः आशंसनशीलाः । 'सनाशंसभिक्ष उः ।३।२।१६८।' इत्युः । तरलवौ 'ऋदोरप् ।३।३।५७।' इति अप्प्रत्ययान्तौ । विनिश्चयमिति ग्रहेत्यप् ॥ ५५ ॥

आदरेण गमं चक्रुर्विषमेष्वप्यसङ्घसाः ।
व्याप्नुवन्तो दिशोऽन्यादान्कुर्वन्तः सव्यधान्हरीन् ॥ ५६ ॥

आदरेणेत्यादि--विषमेष्वपि प्रदेशेषु गमं गमनं चक्रुः । आदरेणानवज्ञया गमम् 'ग्रहवृदृनिश्चिगमश्च ।३।३।५८।' इत्यप् । असंघसाः त्यक्ताहाराः । 'उपसर्गेऽदः ।३।३।५९।' इत्यपि 'घञपोश्च ।२।४।३८।' इति अदेर्घस्लादेशः । हरीन् सिंहान् । सव्यधान् सप्रहारान् । 'व्यधजपोरनुपसर्गे । ३ । ३ । ६१ ।' इत्यप् । सप्रहारत्वादन्यादान् परित्यक्ताहारान् कुर्वन्तः ।'नौ ण च ।३।३।६०।' इति निपूर्वाददोऽण् प्रत्ययः । तस्मिन्नदेर्न घस्लादेशः । चकारादपि तत्र निघसः । दिशो व्याप्नुवन्तः सर्वव्यापिनः ॥ ५६ ॥

सञ्चेरुः सहसाः केचिदस्वनाः केचिदाटिषुः ।
संयामवन्तो यतिवन्निगदानपरेऽमुचन् ॥ ५७ ॥

सञ्चेरुरित्यादि--सहसाः सहासाः । अस्वनास्तूष्णीकाः । 'स्वनहसोर्वा ।३।३।६२।' इत्यप् । यतिवत् संयामवन्तः नियमवन्तः 'यमः समुपनिविषु च ।३।३।६३।' इति वञ् । आटिषुः अटितवन्तः । अटेर्लुङि रूपम् । अपरे निगदान् कलकलरवानमुचन् ।'नौ गद नदपठस्वनः । ३।३ । ६४।' इति विकल्पेनापो विधानात् वञ् ॥ ५७ ॥

अथ क्रमादनिःक्वाणा नराः क्षीणपणा इव ।
अमदाः सेदुरेकस्मिन्नितम्बे निखिला गिरेः ॥ ५८ ॥

---

१ पर्वतानिति यावत् ।२ अपीति शेषः ।३ इदं स्वेषां ग्रहग्रस्तत्वं द्योतयितुम् । ४ इदम्मूकत्वं द्योतयितुम् । ५ 'यमः सन्यामसंयमौ' इत्यमरः ।६ इदं विद्वत्त्वं सम्भावयितुम् । 'निगादो निगदे' इत्यमरः ।

अथेत्यादि—अथ परिभ्रमणादनन्तरं क्रमेन परिश्रमेण अमदाः गतप्रमादाः 'मदोऽनुपसर्गे ।३।३।६७।' इत्यप् । निःक्वाणाः निश्शब्दाः मूकीभूता इति भावः । 'क्वणो वीणायां च ।३।३।६५।' इत्यपो विकल्पेन घञ् । वीणादिविषयमेतत् । क्वणेर्निपूर्वादनुपसर्गाद्वीणादिविषयाच्च विकल्पेनाप्प्रत्यय इत्युक्तम् । एकस्मिन् गिरेर्नितम्बे सेदुः निषण्णाः । निखिलाः समस्ता वानराः । क्षीणपणा इव अर्थरहिता नरा इव । पण्यन्त इति पणाः । व्यवहाराय कृते पणे व्यवस्थाप्यन्ते । 'नित्यं पणः परिमाणे ।३।३।६६।' इत्यप् ॥ ५८ ॥

**ततः ससम्मदास्तत्र निरैक्षन्त पतत्रिणः ।**
**गुहाद्वारेण निर्यातः समजेन पशूनिव ॥ ५९ ॥**

तत इत्यादि—ततो विश्रामानन्तरं ते तत्र तस्मिन् पर्वते पतत्रिणः पक्षिणो निरैक्षन्त ईक्षितवन्तः । ईक्षेर्लङि रूपम् । कीदृशान् गुहाद्वारेण निर्यातः निर्गच्छतः। निष्पूर्वाद्यातेः शत्रन्तस्य शसि रूपम् । ससम्मदाः सहर्षाः। 'प्रमदसंमदौ हर्षे । ३ । ३ । ६८ ।' इति निपातितम् । समजेन वृन्देन पशूनिव निर्यातः । 'समुदोरजः पशुषु । ३ । ३ । ६९ ।' इत्यप् ॥ ५९ ॥

**वीनामुपसरं दृष्ट्वा तेऽन्योन्योपह्वा गुहाम् ।**
**प्राविशन्नाहवप्रज्ञा आहावमुपलिप्सवः ॥ ६० ॥**

वीनामित्यादि—वीनां पक्षिणामुपसरं नैरन्तर्येण निर्गमनं दृष्ट्वा । उपसर इव उपसरः नैरन्तर्यमात्रेणोपलक्षितत्वात् । उपसरो हि स्त्रीगवीषु पुङ्गवानामभिगमनमुच्यते । स च नैरन्तर्येण भवति । 'प्रजने सर्तेः । ३ । ३ । ७१ ।' इत्यप् । ते वानरा अन्योन्योपह्वाः परस्परमाह्वानं येषाम् आगच्छतागच्छत प्रविशाम इति । 'ह्वः सम्प्रसारणम् । ६ । १ । ३२ ।' इत्यप् संप्रसारणं च । गुहां प्राविशन् प्रविष्टवन्तः । आहवप्रज्ञाः युद्धप्रज्ञाः । आहूयते युद्धाय स्पर्धतेऽत्र । 'आङि युद्धे । ३ । ३ । ७३ ।' इत्यप् संप्रसारणं च । आहावमुपलिप्सवः उदकाधारमुपलब्धुमिच्छवः । 'निपानमाहावः । ३ । ३ । ७४ ।' इति घञि सम्प्रसारणं निपात्यते । वृद्धिरस्त्येव । अप्प्रत्यये त्ववृद्धिः ॥ ६० ॥

---

१ गतहर्षा इति पाठान्तरं तु न प्रकृते युक्तम् । २ 'निक्वणो निक्वाणः क्वाणः' इत्यमरः। ३ अत्र जात्यभिप्रायेणैकवचनं, तेन नितम्बेष्वित्यर्थः। 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । ४ 'पशूनां समजोऽन्येषां समाजः' इत्यमरः। ५ 'प्रजनः स्यादुपसरः।' इत्यमरः। ६ सङ्ग्रामाभिलाषिणः । 'अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः ।' इत्यमरः। ७ जलपानस्थलम् । 'आहावस्तु निपानं स्यादुपकूपजलाशये।' इत्यमरः ।

कुर्वन्तो ह्वमाप्तानां पिपासावधकाङ्क्षिणः ।
द्वारं तमोघनप्रख्यं गुहायाः प्राविशन्द्रुतम् ॥ ६१ ॥

कुर्वन्त इत्यादि—गुहां प्रविश्य तस्याः द्वारमपरं प्राविशन् । आप्तानां स्निग्धानां ह्वमाह्वानं कुर्वन्तः । 'भावेऽनुपसर्गस्य । ३ । ३ । ७५ ।' इत्यप् संप्रसारणं च । पिपासा पातुमिच्छा तस्या वधोऽपनयनम् । 'हनश्च वधः । ३ । ३ । ७६ ।' इत्यप् वधादेशश्च । तं काङ्क्षितुं शीलं येषामिति । 'काक्षि माक्षि काङ्क्षायाम्' इत्यस्मात् 'सुप्यजातौ णिनिस्ताच्छील्ये । ३ । २ । ७८ ।' 'इदितो नुम् धातोः । ७ । १ । ५८ ।' साधुकारिणि वा । कीदृशं द्वारं तमोघनप्रख्यं तमसो घनः मूर्तिः काठिन्यं तेन सदृशम् । 'मूर्तौ घनः ३।३।७७।' इति हन्तेरप्प्रत्ययो घनादेशश्च निपात्यते । मूर्तिमत्तम इव द्वारमित्यर्थः ॥ ६१ ॥

तस्मिन्नन्तर्घणेऽपश्यन्प्रघाणे सौधसद्मनः ।
लौहोद्घनघनस्कन्धा ललिताऽपघनां स्त्रियम् ॥ ६२ ॥

तस्मिन्नित्यादि—द्वारमतिक्रम्य यः सावकाशप्रदेशः सोऽन्तर्घण इत्युच्यते । तथाह्यन्तर्हन्यते क्रोडीभवत्यस्मिन्निति अनुगतार्थत्वम् । 'अन्तर्घनो देशे । ३ । ३ । ७८ ।' इत्यन्तःपूर्वाद्धन्तेरप् घनादेशः । घणादेशो वा ये णकारं पठन्ति । यत्तु संज्ञीभूतो वाहीकेषु देशविशेष इत्युक्तं तत् संज्ञाशब्दमाश्रित्य । तस्मिन्नन्तरे यत् सौधसद्म धवलगृहं तस्य प्रघाणे एकदेशे । 'प्रघणः प्रघाणश्च । ३।३। ७९ ।' इति निपातितम् । स्त्रियं ललितापघनां[2] ललिताङ्गीमपश्यन् । 'अपघनोऽङ्गम् । ३ । ३ । ८१ ।' इति निपातनम् । लौहोद्घनघनस्कन्धाः । लौहो लोहमयो य उद्घनः यस्मिन् स्थापयित्वा काष्ठादीनि संक्रियन्ते तद्वद् घनः स्कन्धो येषामिति । 'उद्घनोऽत्याधानम् ।३।३।८०।' इति निपातनम् ॥ ६२ ॥

सा स्तम्बघ्नपदन्यासान्विघनेन्दुसमद्युतिः ।
परिघोरुभुजानाह हसन्ती स्वागतं कपीन् ॥ ६३ ॥

---

१ 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ।' इत्यमरः । २ ललिताः सुन्दरा अपघना अङ्गानि यस्यास्ताम् । 'अङ्गं प्रतीकोऽवयवोऽपघनः ।' इत्यमरः । ३ 'निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः ।' इत्यमरः । लौहेतिविशेषाभिधानेन तस्य काष्ठप्रस्तुतत्वं निरस्तम् ।

सेत्यादि—सा स्त्री हसन्ती कपीन् स्वागतं वच आह । कीदृशी विघनेन्दुसमद्युतिः। विहन्यते अभिभूयते अन्या द्युतिर्येन स विघनः 'करणेऽयोविद्रुषु । ३ । ३ । ८२ ।' इत्यप् घनादेशश्च । स चेन्दुश्चेति सः । तत्समा द्युतिर्यस्याः । स्तम्बो हन्यते येन पादन्यासेन स स्तम्बघ्नः । तृणकाष्ठादिः । 'स्तम्बे क च । ३ । ३ । ८३ ।' इति करणे कः । 'गमहनजनखनघसां लोपः क्ङित्यनङि । ६ । ४ । ९८ ।' इत्युपधालोपः । तादृशः पादन्यासो येषां कपीनामिति । परिहन्यते येन । 'परौ घः । ३ । ३ । ८४ ।' इत्यप् घादेशश्च । परिघोऽर्गलः तदनुकारिणो विपुला बाहवो येषामिति ॥ ६३ ॥

पिप्रायाद्रिगुहोपघ्नानुद्घान्सङ्घसमागतान् ।
फलैर्नानारसैश्चित्रैः स्वादुशीतैश्च वारिभिः ॥ ६४ ॥

पिप्रायेत्यादि—तान्विविधैः फलैर्वारिभिश्च पिप्राय तर्पितवती । अद्रिगुहोपघ्नान् । अद्रिगुहैव उपघ्न आश्रयो येषां कपीनाम् । 'उपघ्न आश्रये ।३।३।८५। इत्यप् उपधालोपश्च निपात्यते । संघसमागतान्समूहेनागतान् । उद्घान् प्रशस्तान् । 'संघोद्घौ गणप्रशंसयोः ।३।३।८६।' इति समुदोरुपपदयोः हन्तेरपि टिलोपश्च निपात्यते ॥ ६४ ॥

निघानिघतरुच्छन्ने तस्मिंस्ते लब्धिमैः फलैः ।
तृप्तास्तां भ्राजथुमतीं पप्रच्छुः कस्य पूरियम् ॥ ६५ ॥

निघेत्यादि—तस्मिन्प्रघणे निघानिघैर्निमितानिमितैस्तरुभिश्छन्ने । 'निघो निमितम् ।३।३।८७।' इति निपूर्वाद्धन्तेरपि टिलोपे निपात्यते । समारोह-परिणाहाभ्यां निमितमित्युच्यते । ते कपयः । लब्धिमैर्लाभनिर्वृत्तैः । 'ड्वितः क्त्रिः । ३ । ३ । ८८ ।' इति क्त्रिः । 'क्त्रेर्मम्नित्यम् । ४ । ४ २० ।' इति मप् । फलैस्तृप्ताः सन्तस्तां स्त्रियं भ्राजथुमतीं शोभावतीम् । पप्रच्छुः पृष्टवन्तः कस्येयं पूरिति । 'ट्वितोऽथुच् ।३।३।८९।' तदन्तान्मतुप् ॥ ६५ ॥

रक्षणं करोषि कस्मात् त्वं यत्नेनाऽऽरुयागतां शुभे ।
स्वप्ने निधिवदाभाति तव संदर्शनं हि नः ॥ ६६ ॥

---

१ 'स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन विहन्यते ।' इत्यमरः । २ 'स्यादुपघ्नोऽन्तिकाश्रये ।' इत्यमरः । ३ 'मतल्लिकामचर्चिकाप्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः ।

रक्षणमित्यादि—हे शुभे ! कल्याणि कस्माद्वा रक्ष्णं रक्षां करोषि । एतद्यत्नेनादरेण नोऽस्माकमाख्यायताम् । उभयत्रापि 'यजयाचयतविच्छप्रच्छरक्षो नङ् ।३।३।९०।' इति नङ् । यस्मात्स्वप्ने निधिवत् निधिरिव तव संदर्शनमाभाति । नोऽस्माकमतिदुर्लभत्वात् । स्वप्न इति 'स्वपो नन् ३।३।९१।' निधिरिति 'उपसर्गे घोः किः ।३।३।९२।' इति किः ॥ ६६ ॥

ततो जलधिगम्भीरान् वानरान् प्रत्युवाच सा ।
इयं दानवराजस्य पूः सृष्टिर्विश्वकर्मणः ॥ ६७ ॥

तत इत्यादि—ततस्तस्मादनन्तरं सा प्रत्युवाच । जलं धीयते अस्मिन्निति 'कर्मण्यधिकरणेच ।३।३।९३।' इत्यधिकरणेऽर्थे किः जलधिः समुद्रः । तद्वद्गम्भीरानक्षोभ्यत्वात् । इयं पूः दानवराजस्य विश्वकर्मणः सृष्टिः । सृज्यत इति सृष्टिः । कर्मणि 'स्त्रियां क्तिन् ।३।३।९४'।' इति क्तिन् ॥ ६७ ॥

इतः परं स्त्रीलिङ्गमधिकृत्योच्यते—

निहतश्च स्थितिं भिन्दन्दानवोऽसौ बलद्विषा ।
दुहिता मेरुसावर्णेरहं नाम्ना स्वयम्प्रभा ॥ ६८ ॥

निहत इत्यादि—असौ दानवः दैत्यराजः स्थितिं मर्यादां भिन्दन् । 'स्थागापापचो भावे ।३।३।९५।' इति क्तिन् । बलद्विषा इन्द्रेण निहतः । यस्य चाहं दुहिता । स पिता । नाम्ना मेरुसावर्णिः अहं च नाम्ना स्वयंप्रभेति ॥६८॥

जूतिमिच्छत चेत्तूर्णं कीर्तिं वा पातुमात्मनः ।
करोमि वो बहिर्यूतीन्पिधध्वं पाणिभिर्दृशः ॥ ६९ ॥

जूतिमित्यादि—यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ । कीर्तिं वा आत्मनः पातुं रक्षितुम् 'पारक्षणे' तुमुन् । वः युष्मान् बहिर्यूतीन् बहिर्भूतान् । 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ।३।३।९७।' इत्यादिना निपातितः । तत्र यौतेर्जवतेश्च क्तिन् दीर्घत्वं च निपात्येते । कीर्तिरपि 'कृत संशब्दने' स्वार्थिको णिच् 'उपधायाश्च ।७।१।१०१।' इतीत्वं तस्मात् क्तिन् । अतः पाणिभिः दृशोदृष्टीः पिधध्वं आच्छादयध्वम् । अपिपूर्वाद्धाञ् लोटि द्विर्वचने 'दधस्तथोश्च ।८।२।३८।' इति अभ्यासस्य भष्भावे 'श्नाभ्यस्तयोरातः ।६।४।११२।' इत्याकारलोपे 'झलां जश् झशि । ८।४।५३।' इति धातोर्दकारे 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।' इत्युपसर्गाकारलोपे च रूपम् ॥ ६९ ॥

---

१ रक्षणत्राणे रणः क्वणे ।' इत्यमरः । २ हस्तैरित्यर्थः

**व्रज्यावती निरुद्धाऽक्षान् विद्येवाऽनुष्ठितक्रियान् ।**
**निरचिक्रमदिच्छातो वानरांश्चङ्क्रमावतः ॥ ७० ॥**

व्रज्येत्यादि—सा व्रज्यावती प्रशस्तगमनवती । 'व्रजयजोर्भावे क्यप् ।३।३।९८।' प्रशंसायां मतुप् । वानरान्निरुद्धाक्षान् निरचिक्रमत् निष्कासितवती । क्रमेर्ण्यन्तस्य लुङि 'सन्वल्लघुनि चङ्परेऽनग्लोपे ।७।४।९३।' इति सन्वद्भावात् 'सन्यतः ।७।४।७९।' इतीत्वम् । 'दीर्घो लघोः ।७।४।९४।' इति न दीर्घत्वं संयोगपरस्य गुरुत्वात् । अनुष्ठितक्रियानाचरिततदुपादिष्टव्यापारान् । 'कृञः श च ।३।३।१००।' इति शः । 'सार्वधातुके यक् ।३।१।६७।' रिङादेशश्च । चङ्क्रमावतः कुटिलगतिमतः । 'अः प्रत्ययात् ।३।३।१०२।' इत्यकारः । इच्छात इति वानराणामिच्छायाः । 'इच्छा ।३।३।१०१।' इति निपातितम् इषेः शप् प्रत्ययः छभावश्च निपात्यते । विद्या । 'संज्ञायाम् ।३।३।९९।' इति क्यप् । यथा विद्या अनुष्ठितक्रियान् कृतपुरश्चरणान् पुरुषानिच्छातोऽभीष्टं सम्पादयति तद्वत्सेति ॥ ७० ॥

**निष्क्रम्य शिक्षया तस्यास्त्रपावन्तो रसातलात् ।**
**ज्ञात्वा मासमतिक्रान्तं व्यथामवललम्बिरे ॥ ७१ ॥**

निष्क्रम्येत्यादि—तस्याः शिक्षया उपदेशेन 'गुरोश्च हलः ।३।३।१०३।' इत्यकारः । तस्माद्रसातलान्निष्क्रम्य निर्गम्य त्रपावन्तः लज्जिता इति भावः । स्त्रिया उपदेशेन निष्क्रान्ता वयमिति त्रपेति । 'षिद्भिदादिभ्योऽङ् ।३।३।१०४।' मासमतिक्रान्तं ज्ञात्वा बहिर्निर्गताः सन्तः व्यथां पीडां, लक्षणाया भयमित्यर्थः । 'षिद्भिदादिभ्योऽङ् ।३।३।१०४' इत्यङ् । अवललम्बिरे वयं मासावधिना प्रेपिताः स च मासो विनैव कार्येणातिक्रान्त इति स्वामिनो भयम् ॥ ७१ ॥

**चिन्तावन्तः कथां चक्रुरुपधाभेदभीरवः ।**
**अकृत्वा नृपतेः कार्यं पूजां लप्स्यामहे कथम् ॥ ७२ ॥**

चिन्तेत्यादि—उपधानमुपधा परीक्षा[1] । 'आतश्चोपसर्गे ।३।३।१०६।' इत्यङ् । तत्परिशुद्धो हि भृत्यः कार्येषु नियुज्यते । तदकरणादुपधाया[2] भेदोऽभावः तस्माद्भीरवः । चिन्तावन्त इतिकर्तव्यतामूढाः कथां चक्रुः कृतवन्तः । कीदृशीमित्याह । अकृत्वा नृपतेः कार्यं पूजां लप्स्यामहे कथमिति नैवेत्यर्थः । चिन्तादयः । 'चिन्तिपूजिकथिकुम्बिचर्चश्च ।३।३।१०५।' इति अङन्ताः ॥ ७२ ॥

---

१ 'भेदोपजातावुपधा धर्माद्यैर्यत्परीक्षणम् ।' इत्यमरः । २ कार्येषु भृत्यानियोजनादित्यर्थः ।

**प्रायोपासनया शान्ति मन्वानो वालिसम्भवः ।**
**युक्त्वा योगं स्थितः शैले विवृण्वंश्चित्तवेदनाम् ॥ ७३ ॥**

प्रायेत्यादि--उपासनेति । 'ण्यासश्रन्थो युच् । ३ । ३ । १०७ ।' प्रायेण अविच्छेदेन उपवासेनोपासना अनशनेनासनमित्यर्थः । तया शान्तिं कल्याणं मन्वानोऽवगच्छन् उपयान्तराभावात् । वालिसम्भवोऽङ्गदः । 'योगश्चित्तवृत्तिनिरोधः ।' इत्युक्तस्तं युक्त्वा सम्बध्य शैले स्थितः । चित्तवेदनां चित्तपीडां विवृण्वन् । 'घट्टिविदिवन्दिभ्यो युज् वक्तव्यः' इति वार्तिकेन युच् ॥ ७३ ॥

**प्रस्कन्दिकामिव प्राप्तो ध्यात्वा ब्रूते स्म जाम्बवान् ।**
**धिक् शालभञ्जिकाप्रख्यान् विषयान् कल्पनारुचीन् ॥ ७४ ॥**

प्रस्कन्दिकामित्यादि--त्वया का क्रिया कर्तव्येत्यन्यः पृष्टः सन् जाम्बवान् ध्यात्वा विचिन्त्य ब्रूते स्म । प्रस्कन्दिकामिव रोगविशेषमिव प्राप्तो यातः उत्साहाभावात् । 'रोगाख्यायां ण्वुल् बहुलम् ।३।३।१०८।' शालभञ्जिका क्रीडाविशेषः । 'सञ्ज्ञायाम् ।३।३।१०९।' इति ण्वुल् । 'नित्यं क्रीडाजीविकयोः ।२।२।१७।' इति समासः । तत्प्रख्या विषया रूपादयः अतितुच्छत्वात् । अतस्तान् धिक् । किम्भूता कल्पनारुचीन् कल्पनीयान् ॥ ७४ ॥

**यां कारिं राजपुत्रोऽयमनुतिष्ठति तां क्रियाम् ।**
**अहमप्यनुतिष्ठामि सोऽप्युक्त्वैवमुपाविशत् ॥ ७५ ॥**

यामित्यादि---अयं राजपुत्रोऽङ्गदो यां कारिं क्रियामनुतिष्ठति तां क्रियाम् अहमप्यनुतिष्ठामि । 'विभाषाऽऽख्यानपरिप्रश्नयोरिञ् च । ३।३।११०।' इति करोतेरिञ् । पक्षे 'कृञः श च ।३।३।१००।' इति शः । सोऽप्येवमुक्त्वा उपाविशत् अनशनेन[1] स्थितः ॥ ७५ ॥

**उवाच मारुतिर्वृद्धे संन्यासिन्यत्र वानरान् ।**
**अहं पर्यायसम्प्राप्तां कुर्वे प्रायोपवेशिकाम् ॥ ७६ ॥**

उवाचेत्यादि--मारुतिः पवननन्दनो हनुमानित्यर्थः नरानुवाच वृद्धे जाम्बवति संन्यासिनि अनशनवति[2] अहमप्यत्र शैले पर्यायेण परिपाट्या संप्राप्तां प्रायोपवेशिकाम् अनशनं कुर्वे। 'पर्यायार्हणोत्पत्तिषु ण्वुच् च।३।३।१११।' इति ण्वुच् ॥ ७६ ॥

---

१ भोजनपरित्यागेन । २ भोजनमकुर्वाण इत्यर्थः ।

**अभावे भवतां योऽस्मिञ्जीवेत्तस्याऽस्त्वजीवनिः ।**
**इत्युक्त्वा सर्वे एवास्थुर्बद्ध्वा योगासनानि ते ॥ ७७ ॥**

**अभाव इत्यादि**---अभावे विनाशे भवतां योऽस्मिन् लोके जीवेत् तस्याऽस्त्वजीवनिः धिग्जीवितम् । 'आक्रोशे नञ्यनिः ।३।३।११२।' एवमुक्त्वा सर्वे एव अस्थुः स्थिताः । तिष्ठतेः 'गातिस्थाघुपाभूभ्यः परस्मैपदेषु।२।४।७७।' इति सिचो लुक् । योगासनानि पद्मासनादीनि बद्ध्वा विरचय्य ॥ ७७ ॥

इतः परं स्त्रीलिङ्गभावं निवर्त्य कृदुदाह्रियते---

**अक्लेश्यमसिनाघ्नन्तं कबन्धवधमभ्यधुः ।**
**धिङ् नः प्रपतनं घोरं क्लेदान्तत्वमनाथवत् ॥ ७८ ॥**

**अक्लेश्यमित्यादि**---कबन्धस्य योजनबाहोर्वधमभ्यधुः अभिहितवन्तः । अभिपूर्वो धात्वभिधाने वर्तते । कीदृशम् अक्लेश्यं प्रयासरहितम् । कस्मात् असिना सुखमरणात् तं चाघ्नन्तम् अन्ते तस्याग्निरभूत् । अस्माकं धिक् प्रपतनं विनाशम् । दुःखेन घोरत्वात् । क्लेदान्तत्वम् अन्ते पूतीभावं तद्यत्रास्ति । अर्श आदित्वादच् । अनाथानामिव । अक्लेश्यप्रपतनशब्दौ भावसाधनौ । 'कृत्यल्युटो बहुलम् ।३।३।११३।' इति ल्युट् ॥ ७८ ॥

**ततो मन्दगतः पक्षी तेषां प्रायोपवेशनम् ।**
**अशनीयमिवाशंसुर्महानायादशोभनः ॥ ७९ ॥**

**तत इत्यादि**---ततोऽभिधानादनन्तरं महान् पक्षी सम्पातिनामा जटायुभ्राता । आयात् आगतवान् । मन्दगतो मन्दगमनः । 'नपुंसके भावे क्तः ।३।३।११४।' आहिताग्नित्वात् परनिपातः । तेषां तत्प्रायोपवेशनं तदशनीयमिव भोजनीयमिव । 'कृत्यल्युटो बहुलम् ।३।३।११३।' इति कृत्यः । आशंसुः आशंसनशीलः । अशोभनः शोभारहितः । दावाग्निना प्लुष्टशरीरत्वात् । 'ल्युट् च ।३।३।११५।' इति भावे ल्युट् । 'कर्मणि च येन संस्पर्शात् कर्त्तुः शरीरसुखम् । ३ ।३ । ११६ ।' इत्येतत्परिहृत्योदाहृतत्वात् ॥ ७९ ॥

**देहव्रश्चनतुण्डाग्रं तं विलोक्याशुभाकरम् ।**
**पापगोचरमात्मानमशोचन् वानरा मुहुः ॥ ८० ॥**

**देहेत्यादि**---वृश्च्यते येन तुण्डाग्रेण । 'करणाधिकरणयोश्च ।३।३।११७।' इति करणे ल्युट् । देहस्य व्रश्चनमिति कृद्योगे षष्ठी । देहव्रश्चनं तुण्डाग्रं यस्य

---

१ भावात्-सद्भावाद्विरुद्धस्तत्र ।

तं विलोक्य । वानरा अशुभाकरं पापस्योत्पत्तिस्थानम् । आकर इवाकरः । 'पुंसि संज्ञायां घः प्रायेण ।३।३।११८।' तत्र हि करणाधिकरणयोरिति वर्तते । एवम् उत्तरत्रापि चात्मानं पापगोचरं पापविषयं पापविषये पतिता वयमिति मुहुरशोचन् शोचितवन्तः । 'गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च । ३ । ३ । ११९।' इत्यधिकरणे निपातितः ॥ ८० ॥

जटायुः पुण्यकृत्पक्षी दण्डकाऽरण्यसञ्चरः ।
कृत्वा राघवकार्यं यः स्वराऽऽरूढोऽग्निसंस्कृतः ॥ ८१ ॥

जटायुरित्यादि—राघवकार्यंकृत्वा । अग्निसंस्कृतः अग्निना कृतसंस्कारः । कृतान्त्यसंस्कार इत्यर्थः । स्वः[1] स्वर्गमारूढः । जटायुः पुण्यकृत्पक्षी । संचरत्यस्मिन्निति संचरः। पूर्ववत् निपातितः। दण्डकारण्यं संचरोऽवस्थानं यस्येति॥८१॥

नरकस्यावतारोऽयं प्रत्यक्षोऽस्माकमागतः ।
अचेष्टा यदिहान्यायादनेनात्स्यामहे वयम् ॥ ८२ ॥

नरकस्येत्यादि—अवतीर्यते येन कर्मणेति । 'अवे तॄस्त्रोर्घञ् ।३।३।१२०।'इति घञ् । स एवायं नरकस्यावतारः प्रत्यक्षोऽस्माकमागतः । यद्यस्माद्वयमचेष्टाः निश्चलाः अनेन पक्षिणा अन्यायादयुक्त्या । नीयते अनेनेति निपूर्वादिणः 'अध्यायन्यायोद्यावसंहाराश्च ।३ । ३ । १२२ ।' इति निपातनात् घञ् । अत्स्यामहे भक्षयिष्यामहे । कर्माणि लृट् ॥ ८२ ॥

हृदयोदङ्कसंस्थानं कृतान्ताऽऽनायसन्निभम् ।
शरीराऽऽखनतुण्डाऽग्रं प्राप्याऽमुं शर्म दुर्लभम् ॥ ८३ ॥

हृदयेत्यादि—अमुं सम्पातिनं पक्षिणं प्राप्य । कीदृशं हृदयोदङ्कसंस्थानम् उदञ्चयते आकृष्यते अनेनेति उत्पूर्वादञ्चतेः 'उदङ्कोऽनुदके ।३।३। १२३।' इति घञ् निपात्यते । हृदयस्योदङ्कः संदंशः तत् संस्थानं तत्सदृशम् । कृतान्तानायसन्निभं यमजालतुल्यम् । तत्प्रविष्टस्य दुःखेन निर्गमत्वात् । 'जालमानायः।३।३।१२४।'इति नयतेराङ्पूर्वात्करणे घञ् निपात्यते । आखन्यते येन तुण्डाग्रेण । 'खनो घ च । ३ । ३ । १२५ ।' इति घः । शरीरस्याखनं तादृक् तुण्डाग्रं यस्येति । प्राप्य शर्म सुखं दुर्लभं कृच्छ्रलभ्यम् । 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् । ३ । ३ । १२६ ।' इति खल् । अत्र करणाधिकरणयोश्चेति निवृत्तम् 'तयोरेव कृत्यक्तखलर्थाः । ३ । ४ । ७० ।' इति

---

१ 'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः ।' इत्यमरः ।

योऽयम् । 'उपसर्गात् खल्घञोः । ७ । १ । ६७ ।' इति प्राप्तस्य नुमः 'न सुदुर्भ्यां केवलाभ्याम् ।७।१।६८।' इति प्रतिषेधः ॥ ८३ ॥

ईषदाढ्यङ्करोऽप्येष न परत्राऽशुभक्रियः।
अस्मानत्तुमितोऽभ्येति परिग्लानो बुभुक्षया ॥ ८४ ॥

ईषदित्यादि—य एष अस्मानत्तुमितः प्रदेशादभ्येति आगच्छति. स परत्र परलोके ईषदाढ्यङ्करोऽपि अनाढ्यैरीषदाढ्योऽपि न कृतः । अशुभेन कर्मणेत्यर्थात् । 'कर्तृकर्मणोश्च भूकृञोः ।३।३।१२७।' इति च्व्यर्थे कर्मोपपदात्करोतेः खल् । यतः परिग्लानो बुभुक्षया । यो हि कर्मणा शुभेन ईषदाढ्यङ्करोऽपि न कृतः स कथं न बुभुक्षया पीड्यते । परिग्लायतीति कर्तरि बहुलवचनात् ल्युट् । निष्ठान्तो वा । 'संयोगादेरातो धातोर्यण्वतः ।८।२।४३। इति निष्ठानत्वम् । अशुभक्रियः सत्त्वद्रोहाभिरतत्वात् ॥ ८४ ॥

सम्प्राप्य वानरान्पक्षी जगाद मधुरं वचः ।
के यूयं दुरुपस्थाने मनसाऽप्यद्रिमूर्धनि ॥ ८५ ॥

इति कृदधिकारः ।

संप्राप्येत्यादि—वानरान् संप्राप्य पक्षी जगाद गदितवान् । के यूयं अद्रिमूर्धनि पर्वतशिरसि दुरुपस्थाने दुःखेनोपस्थातुं शक्ये मनसापि किं पुनः शरीरेण । आतो युच् । ३ । ३ । १२८ ।' इति युच् । तत्रापि ईषदादयोऽनुवर्तन्ते । कर्तृकर्मणोरिति न स्मर्यते ॥ ८५ ॥

इति कृदधिकारः ॥

इतः परं प्रकीर्णकश्लोकानाह—

आत्मनः परिदेवध्वे कुर्वन्तो रामसंकथाम् ।
समानोदर्यमस्माकं जटायुं च स्तुथाऽऽदरात् ॥ ८६ ॥

आत्मन इत्यादि—आत्मनः परिदेवध्वे शोचथ 'देवृ देवने' इति भौवादिकः शासि 'न संयोगाद्वमन्तात् । ६ । ४ । १३७ ।' इत्यल्लोपो न भवति । जटायुं च समानोदर्यं भ्रातरमस्माकम् । 'समानोदरे शयित ओ चोदात्तः।४।४।१०८।' इति यत् । आदरात् प्रस्तुथ प्रस्तुतिं कुरुथ । जटायुः पुण्यकृदित्यादिना रामसत्कथां च कुर्वन्तः अतः के यूयमिति ॥ ८६ ॥

---

१ अत्तुं–भक्षितुम् । २ अस्मादित्यर्थः । ३ दुष्कृतीत्यर्थः । ४ देवनमत्र विलापः ।

**शङ्काधवित्रवचनं प्रत्यूचुर्वानरा खगम् ।**
**वयं शत्रुलविन्नेषोर्दूता रामस्य भूपतेः ॥ ८७ ॥**

..शङ्केत्यादि-धुनोत्यपनयत्यनेनेति धवित्रम् । 'अर्तिलूधूसूखनसहचर इत्रः ।३।२।१८४।इति करणे इत्रः । किमयं करिष्यतीति शङ्काधवित्रं वचनं यस्य तं खगं वानराः प्रत्यूचुः । शत्रुलवित्रा इषवो बाणा यस्य तस्य रामस्य भूपतेः वयं दूताः । पूर्ववदित्रं कृत्वा समासाः ॥ ८७ ॥

**केनाऽपि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियाम् ।**
**हृतां माहाकुलीनस्य तस्य लिप्सामहे वयम् ॥ ८८ ॥**

केनेत्यादि—तस्य रामस्य प्रियां केनापि दौष्कुलेयेन हृताम् । दुष्कुलस्याऽपत्यमिति 'दुष्कुलाड्ढक् । ४ । १ ।१४२ ।' इति ढक् । कुल्यां कुले साध्वीम् 'तत्र साधुः।४।४।८९।इति यत् । माहाकुलीं माहाकुलीनस्येति महाकुलस्यापत्यमिति 'महाकुलादञ्खञौ । ४ । १ ।१४१ ।' इति अञ्खञौ । लिप्सामहे वयं लब्धुमिच्छामः ॥ ८८ ॥

**त्रिंशत्तममहर्यातं मत्वा प्रत्यागमाऽवधिम् ।**
**अकृताऽर्था विषीदन्तः परलोकमुपास्महे ॥ ८९ ॥**

त्रिंशदित्यादि—त्रिंशतः पूरणम् । 'विंशत्यादिभ्यस्तमडन्यतरस्याम् ।५। २।५६।' इति तमट् । त्रिंशत्तमं यदहः तत् प्रत्यागमावधिं प्रत्यागमनस्यावधिं यातं अतीतं मत्वा अकृतार्था अनिष्पादितप्रयोजना विषीदन्तो विषादं गच्छन्तो व्याकुलीभवन्त इत्यर्थः । वयं परलोकमुपास्महे प्रायोपवेशनेन म्रियामहे ॥ ८९ ॥

**म्रियामहे न गच्छामः कौशल्यायनिवल्लभाम् ।**
**उपलम्भ्यामपश्यन्तः कौमारीं पततां वर ॥ ९० ॥**

म्रियामह इत्यादि—हे पततां पक्षिणां वर म्रियामहे प्राणांस्त्यजाम । न गच्छामः न प्राप्नुमः । किमिति कौमारीम् अकृतपूर्वदारपतिं लब्धवतीम् । 'कौमारापूर्ववचने ।४।२।१३।' इति साधुः । कौशल्यायनिवल्लभाम् । कौशल्याया अपत्यं कौशल्यायनी रामः 'कौशल्यकार्माार्याभ्यां च । ४ ।

---

१ यद्यपि रावणवंशप्रवर्त्तकः पुलस्त्यो न स्वयं दुष्टः, किंतु तस्य दुष्टत्वेन पुलस्त्यस्यापि दुष्टत्वमिति यथोक्तम् । २ सम्पातिमित्यर्थः ।

१।१।५५।' इति फिञ् । फस्यायनादेशः । तस्य वल्लभाम् इष्टामुपलम्भ्यां प्रशस्ताम् । 'पोरदुपधात् ।३।१।९८।' इति यत् । 'उपात्प्रशंसायाम् ।७।१।६६।' इति यत्प्रत्यये नुम् । अपश्यन्तोऽनुपलभमानाः ॥ ९० ॥ एते प्रकीर्णकाः ॥

इतः क्ङिदितिशेषमधिकृत्याह—

जगाद वानरान् पक्षी नाध्यगीढ्वं ध्रुवं स्मृतिम् ।
यूयं सङ्कुटितुं यस्मात् कालेऽस्मिन्नध्यवस्यथ ॥ ९१ ॥

जगादेत्यादि-ध्रुवम् अवश्यं स्मृतिं स्मृतिशास्त्रं नाध्यगीढ्वं नाधीतवन्त इति पक्षी वानरान् जगाद 'विभाषा लुङ्लृङोः ।२।४।५०।' इति विभाषा गाङादेशः । 'गाङ्कुटादिभ्यः ञ्णिन्ङित् ।१।२।१।' इति सिचो ङित्त्वम् । 'घुमास्थागापाजहातिसां हलि ।६।४।६६।' इतीत्वम् 'धि च ।८।२।२५।' इति सिचो लोपः । 'इणः षीध्वम्।८।३।७८।' इत्यादिना मूर्धन्यः । यस्माद्यूयमस्मिन् काले संकुटितुम् अवसातुमध्यवस्यथ अभिप्रायं कुरुथ । कुटादित्वात् ङित्त्वम् ॥९१॥

अयमेवावसातुं काल इति चेदाह—

नायमुद्विजितुं कालः स्वामिकार्याद् भवादृशाम् ।
हृतभार्ये च्युते राज्याद्रामे पर्युत्सुके भृशम् ॥ ९२ ॥

नायमित्यादि—भवादृशां युष्मद्विधानां स्वामिकार्यादुद्विजितुं नायं कालः । 'विज इट् ।१।२।२।' इति ङित्त्वम् । किमिति न भवतीति चेदाह राज्याच्च्युते भ्रष्टे रामे निर्वासितत्वात्।तत्रापि हृतभार्ये भृशमत्यर्थं पर्युत्सुके सीतायाम्।।९२॥

यत्नं प्रोर्णवितुं तूर्णं दिशं कुरुत दक्षिणाम् ।
प्रोर्णुवित्रीं दिवस्तत्र पुरीं द्रक्ष्यथ काञ्चनीम् ॥ ९३ ॥

यत्नमित्यादि—दक्षिणां दिशं प्रोर्णवितुम् आच्छादयितुं छादयिष्याम इति तुमुन् । तूर्णं शीघ्रं यत्नं कुरुत । तस्यां दिशि पुरीं द्रक्ष्यथ । काञ्चनीं सुवर्णसम्बन्धिनीमित्यर्थः। 'प्राणिरजतादिभ्योऽञ् ।४।३।१५४।'प्रोर्णुवित्रीम् अभिव्यापिनीम् । तृचि रूपम् दिव आकाशस्य । कर्मणि षष्ठी । 'विभाषोर्णोः ।१।२।३।' इति ङित्त्वपक्षे उवङ् । अङित्त्वपक्षे च गुणः । कुरुतेति 'सार्वधातुकमपित् ।१।२।४।' इति ङित्त्वे विकरणस्य गुणो न भवति । तस्य चार्धधातुकत्वात् अङित्त्वे धातोर्गुणः 'अत उत्सार्वधातुके ।६।४।११०।' इति उत् ॥ ९३ ॥

त्रिभिः कालापकम् ।

लङ्कां नाम्ना गिरेर्मूर्ध्नि राक्षसेन्द्रेण पालिताम् ।
निर्जित्य शक्रमानीता ददृशुर्यां सुरस्त्रियः ॥ ९४ ॥

लङ्कामित्यादि—यां पुरीं नाम्ना लङ्कां सुरस्त्रियो ददृशुः दृष्टवत्यः । 'असंयोगाल्लिट् कित् ।१।२।५।' इति कित्त्वम् । तां यातेति वक्ष्यमाणेन सम्बन्धः । गिरेः सुवेलनाम्नः पर्वतस्य मूर्ध्नि शिखरे स्थितां राक्षसेन्द्रेण पालितामिति दुर्गमत्वमाख्यातम् । शक्रं निर्जित्य सुरस्त्रिय आनीता इति च रावणस्य माहात्म्यम् ॥ ९४ ॥

बभूव याऽधिशैलेन्द्रं मृदित्वेवेन्द्रगोचरम् ।
कुषित्वा जगतां सारं सैका शङ्के कृता भुवि ॥ ९५ ॥

बभूवेत्यादि—अधिशैलेन्द्रं शैलेन्द्रस्य सुमेरोरुपरि । 'अव्ययं विभक्तिसमीप- २।१।६।'इत्यादिना सप्तम्यर्थेऽव्ययीभावः । इन्द्रगोचरमिन्द्रानिलयममरावत्याख्यं मृदित्वेव तिरस्कृत्येव बभूव । 'इन्धिभवतिभ्यां च ।१।२।६।' इति कित्त्वम् । जगतां सारं कुषित्वा निष्कुष्य । सैका भुवि कृता निर्मितेत्यहं शङ्के । तां यात । मृदित्वा कुषित्वेति 'न क्त्वा सेट् । १ ।२।१८।' इति कित्त्वप्रातिषेधे प्राप्ते 'मृडमृदगुधकुषक्लिशवदवसः क्त्वा । १।२।७।' इति कित्त्वम् ॥ ९५ ॥

अमृडित्वा सहस्राक्षं क्लिशित्वा कौशलैर्निजैः ।
उदित्वालं चिरं यत्नात्सैका धात्रा विनिर्मिता ॥ ९६ ॥

अमृडित्वेत्यादि—सहस्राक्षमिन्द्रममृडित्वा असुखिनं कृत्वा । निजैः आत्मीयैः कौशलैश्चातुर्यैः चिरं क्लिशित्वा प्रयत्नं कृत्वा । उदित्वा अभिधायालं पर्याप्तमेवं करिष्यामीति । यत्नात् महता प्रयासेन । सैका धात्रा विनिर्मिता । पूर्ववत्कित्त्वम् ॥ ९६ ॥

मुषित्वा धनदं पापो यां गृहीत्वावसद्द्विषन् ।
तां रुदित्वेव शक्रेण यात लङ्कामुपेक्षिताम् ॥ ९७ ॥

मुषित्वेत्यादि—मुषित्वा धनदं वैश्रवणं तस्मात्पुरं पुष्पकं च विमानमपहृतम्। पापः पापाचरणात् यां पुरीं गृहीत्वा अवसत् उषितः । द्विषन् शत्रुः । शक्रेण रुदित्वेवोपेक्षितामवधीरिताम् । 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च । १ । २।८।' इति कित्त्वम् । तत्र चकारेण क्त्वेत्यनुवर्तते ॥ ९७ ॥

विदित्वा शक्तिमात्मीयां रावणं विजिघृक्षवः ।
उक्तं पिपृच्छिषूणां वो मा स्म भूत सुषुप्सवः ॥ ९८ ॥

---

१ 'मनुष्यधर्मा धनदो राजराजो धनाधिपः ।' इत्यमरः । अत्रोत्प्रेक्षाऽलङ्कारः ।

विदित्वेत्यादि—आत्मीयां स्वसम्बन्धिनीं शक्तिं सामर्थ्यं विदित्वा। पूर्ववत्कित्त्वम्। रावणं विजिघृक्षवः विग्रहीतुमिच्छवः। सुषुप्सवः शयितुमिच्छवो मा स्म भूत। न प्रमत्ता भवतेत्यर्थः। रावणस्य बलीयस्त्वाद्विदमुक्तं मया वो युष्माकं पिपृच्छिषूणां प्रष्टुमिच्छूनाम्। अत्र 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।१।२।८।' इति सनः कित्त्वे सम्प्रसारणम्। प्रच्छेः 'किरश्च पञ्चभ्यः ।७।२।७५।' इतीडागमः ॥ ९८ ॥

**नाऽविविदिषुमभ्येति सम्पद्रुरुदिषुं नरम्।**
**किं मुमुषिषुवद्यात द्विषो नाऽपचिकीर्षया ॥ ९९ ॥**

नेत्यादि—वेदितुं ज्ञातुमिच्छुर्यो न भवति तं नरमविविदिषुं रुरुदिषुं रोदितुमेषणस्वभावं सम्पद्विभूतिर्नाभ्येति नागच्छतीति वो मयोक्तमिति योज्यम्। किं न यात न गच्छत। मुमुषिषुवत् चौरवदित्यर्थः। पूर्ववत्कित्त्वम्। द्विषः शत्रोः। 'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः।' इत्यमरः। अपचिकीर्षया अपकर्तुमिच्छया। 'इको झल् ।१।२।९।' इति कित्त्वे गुणो न भवतीति 'अज्झनगमां सनि ।३।४।१६।' इति दीर्घः। 'ॠत इद्धातोः ।७।४।१००।' ॥ ९९ ॥

**बुभुत्सवो द्रुतं सीतां भुत्सीध्वं प्रब्रवीमि वः।**
**मा च भुद्ध्वं मृषोक्तं नः कृषीढ्वं स्वामिने हितम् ॥ १०० ॥**

बुभुत्सव इत्यादि—बुभुत्सवो ज्ञातुमिच्छवः यदि सीताम्। बुधे[1]: सन्नन्तात् 'हलन्ताच्च ।१।२।१०।' इति कित्त्वम्। 'एकाचो बशो भष्झषन्तस्य स्ध्वोः ।८।२।३७।' इति भष्भावः। तदा द्रुतं तां भुत्सीध्वं जानीतेति वो युष्मान् ब्रवीमि। 'लिङ्सिचावात्मनेपदेषु ।१।२।११।' इति कित्त्वम्। मृषोक्तं मिथ्योक्तं नोऽस्माकं मा च भुद्ध्वं न जानीत, अपि तु सत्यम्। 'झलो झलि ।८।२।२६।' इति सिचो लोपः। 'झलां जश् झशि ।८।४।५३।' इति जस्त्वम्। कित्त्वं पूर्ववत्। अतो यूयं स्वामिने रामाय हितं कृषीढ्वं कुरुत। 'उश्च ।१।२।१२।' इति कित्त्वम्। 'इणः षीध्वंलुङ्लिटां धोऽङ्गात् ।८।३।७८।' इति मूर्धन्यः ॥ १०० ॥

**समगध्वं पुरः शत्रोर्मोदयध्वं रघूत्तमम्।**
**नोपायध्वं भयं सीतां नोपायंस्त दशाननः ॥ १०१ ॥**

---

१ बुधेः 'बुध अवगमने' इत्यस्माद्धातोः।

समगध्वमित्यादि—इदमहमाशंसे यदुत शत्रोः रावणस्य पुरः अग्रतः समगध्वं संगता भवत । 'आशंसायां भूतवच्च ।३।३।१३२।' इति लुङ् । "समो गम्यृच्छिभ्याम् ।१।२।३।' इति तङ् । 'वा गमः ।१।३।२९।' इति सिचः कित्त्वे 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति । ६ । ४ । ३७ ।' इत्यनुनासिकलोपः । 'ह्रस्वादङ्गात् ।८।२।२७।' इति सिचो लोपः । मोदयध्वं रघूत्तमं हर्षयत । तत्कार्यकरणात् । मा च भयमुपायध्वं सूचयत भयं मा कार्ष्टेत्यर्थः । 'आङो यमहनः ।१।३।२८।' इति तङ् । 'यमो गन्धने ।१।२।१५।' इति तङ् । यमो गन्धन इति सिचः कित्त्वे अनुनासिकलोपः । गन्धनं सूचनम् । अन्यथा युष्मासु गन्धितनयेषु नियतमसौ दशाननः सीतामुपायंस्त स्वीकृतवान् स्यात् । तस्य दुर्वृत्तत्वात् । 'आशंसायां भूतवच्च ।३।३।१३२।' इत्यनिष्टाशंसायां लुङ् । 'उपाद्यमः स्वकरणे । १ । ३ । ५६ ।' इति तङ् । स्वकरणं चात्र विवाहनमुक्तम् । 'विभाषोपयमने । १ ।२।१६।' इति अकित्त्वपक्षे रूपम् ॥ १०१ ॥

ततः प्रास्थिषताऽद्रीन्द्रं महेन्द्रं वानरा द्रुतम् ।
सर्वे किलकिलायन्तो धैर्यं चाऽऽधिषताऽधिकम् ॥ १०२ ॥

तत इत्यादि—ततः तदनन्तरम् सम्पातिवचनानन्तरं सर्वे वानरा महेन्द्रं पर्वतं प्रास्थिषत प्रस्थितवन्तः । धैर्यं चाधिकमाधिषत आहितवन्त आत्मनि । तिष्ठतेर्दधातेश्च ' स्थाध्वोरिच्च ।१।२।१७।' इति कित्त्वमित्त्वं च । तिष्ठतेः 'समवप्रविभ्यः स्थः ।१।३।२२।' इति तङ् । किलकिलायन्तः किलकिलाध्वनिं कुर्वाणाः । 'अव्यक्तानुकरणस्यात इतौ ।६।१।९८।' इतिडाच् तदन्तात् 'लोहितादिडाज्भ्यः क्यष्।३।१।१३। 'वा क्यषः ।१।३।९०।' इति परस्मैपदम् ॥ १०२ ॥

अथ पञ्चभिः कुलकम् ।

निकुञ्जे तस्य वर्तित्वा रम्ये प्रक्ष्वेदिताः परम् ।
मणिरत्नाधिशयितं प्रत्युदैक्षन्त तोयधिम् ॥ १०३ ॥

निकुञ्ज इत्यादि--तस्य पर्वतस्य निकुञ्जे लतादिपिहितस्थाने वर्तित्वा स्थित्वा। 'न क्त्वा सेट् ।१।२।१८।' इति कित्त्वप्रतिषेधः । परं प्रक्ष्वेदिता उच्चैरव्यक्त-

१ तस्य रावणस्य । २ 'निकुञ्जकुञ्जौ वा क्लीबे लताऽऽदिपिहितोदरे ।' इत्यमरोक्तेः ।

शब्दं कुर्वाणाः।'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः।१।२।१९।'इति कित्त्वप्रतिषेधः। तोयधिं प्रत्युदैक्षन्त दृष्टवन्तः। लङि रूपम्।कीदृशं मणिरत्नाधिशयितम्। 'क्तोऽधिकरणे च ।३।४।७६।' इति क्तः। पूर्ववत्कित्त्वप्रतिषेधः। मणिर्यद्रत्नमिति क्षीरत्वादावपि रत्नशब्दस्य दृष्टत्वात् एकपदव्यभिचारे विशेषणविशेष्यभावः। तस्याधिशयितमवस्थानमित्यर्थः ॥ १०३ ॥

**अमर्षितमिव घ्नन्तं तटाद्रीन् सलिलोर्मिभिः।**
**श्रिया समग्रं द्युतितं मदेनेव प्रलोठितम् ॥ १०४ ॥**

अमर्षित इत्यादि—सलिलोर्मिभिः कल्लोलैः। तटाद्रीन् तटस्थान् पर्वतान् घ्नन्तं प्रत्युदैक्षन्त। अमर्षितमिव 'मृषस्तितिक्षायाम् ।१।२।२०।' इति कित्त्वप्रतिषेधः। पश्चात् नञ्समासः। श्रिया हेतुभूतया समग्रं संपूर्णं। द्युतितमिति कर्तरि निष्ठा। यदि वा श्रिया कर्तृभूतया द्युतितं शोभितम्। यत्रेत्यध्याहृत्य तमैक्षन्तेति योज्यम्। एवं च कृत्वा उदुपधाद्भावादिकर्म्मणोरन्यतरस्याम् ।१।२।२१।' इति भावे निष्ठायां विकल्पेन कित्त्वप्रतिषेधात् कित्त्वमुदाहृतम्। मदेनेव मत्ततयेव। श्रिया हेतुभूतया प्रलोठितं घूर्णितुमारब्धम्। 'आदिकर्माणि क्तः कर्त्तरि च ।३।४।७१।' निष्ठायामकित्त्वमुदाहृतम् ॥ १०४ ॥

**पूतं शीतैर्नभस्वद्भिर्ग्रन्थित्वेव स्थितं रुचः।**
**गुम्फित्वेव निरस्यन्तं तरङ्गान् सर्वतो मुहुः ॥ १०५ ॥**

पूतमित्यादि—नभस्वद्भिर्वायुभिः शीतैः पूतं पवित्रीकृतम्।'पूङश्च।७।२।५१।' इति विकल्पेनेट्। अत एव पक्षे पूञः क्त्वानिष्ठयोः कित्त्वप्रतिषेधोऽत्र न भवति।तत्र सेडित्यनुवर्तते। रुचो दीप्तीर्ग्रन्थित्वेव संदर्भ्येव स्थितम्।'नोपधात्थफान्ताद्वा ।१।२।२३।' इति कित्त्वप्रतिषेधपक्षे रूपम्।सर्वतस्तरङ्गान् गुम्फित्वेव निरस्यन्तं क्षिपन्तम्। नोपधादिति विकल्पेन कित्त्वप्रतिषेधः। यत्रेत्यध्याहृत्य तमैक्षन्तेति योज्यम् ॥ १०५ ॥

**वञ्चित्वाप्यम्बरं दूरं स्वस्मिंस्तिष्ठन्तमात्मनि।**
**तृषित्वेवानिशं स्वादु पिबन्तं सरितां पयः ॥ १०६ ॥**

वञ्चित्वेत्यादि—स्थित्यनतिक्रमादम्बरं दूरं वञ्चित्वातिक्रम्य। 'वञ्चिलुञ्च्यृतश्च।१।२।२४।' इति कित्त्वप्रतिषेधः स्वस्मिन्नात्मनि स्वरूपे तिष्ठन्तम्। अत्र 'नश्छव्यप्रशान् ।८।३।७।' इति नकारस्य रुत्वम्। पूर्वस्य त्वनुनासिकादेशः। तृषित्वेव तृषित इव भूत्वा। 'तृषिमृषिकृशेः काश्यपस्य

।१।२।२५।' इति कित्त्वविकल्पः । तत्सलिलस्य स्वादुत्वात् । सरितां पयः स्वादु पिबन्तं अनिशमजस्रम् ॥ १०६ ॥

द्युतित्वा शशिना नक्तं रश्मिभिः परिवर्धितम् ।
मेरोर्जेतुमिवाभोगमुच्चैर्दिद्योतिषुं मुहुः ॥ १०७ ॥

द्युतित्वेत्यादि—शशिना नक्तम्[1] रात्रौ द्युतित्वा दीप्तिमता भूत्वा । रश्मिभिः परिवर्धितं वृद्धिं नीतं सन्तं तोयधिं मेरोराभोगं महत्त्वं जेतुमिव मुहुरुच्चैर्दिद्योतिषुं वर्धितुमिच्छुमित्यर्थः । अनेकार्थत्वाद्धातूनाम् । द्युतित्वा दिद्योतिषुमिति 'रलो व्युपधाद्धलादेः संश्च ।१।२।२६।' इति कित्त्वाकित्त्वे । तत्र द्युकारोपधादिकारोपधाच्च रलन्ताद्धलादेर्धातोः परौ क्त्वासनौ वा न कितौ भवत इति सूत्रार्थः ॥ १०७ ॥

विलोक्य सलिलोच्चयानधिसमुद्रमभ्रंलिहान्
भ्रमन्मकरभीषणं समधिगम्य चाधः पयः ।
गमागमसहं द्रुतं कपिवृषाः परिप्रैषयन्
गजेन्द्रगुरुविक्रमं तरुमृगोत्तमं मारुतिम्[2] ॥ १०८ ॥

विलोक्येत्यादि—कपिवृषाः कपिमुख्या मारुतिं हनूमन्तं द्रुतं परिप्रैषयन् व्यसर्जयन् । परिप्रपूर्वात् 'इष गतौ' इत्यस्मात् हेतुमण्ण्यन्तात् लङि रूपम् । किं कृत्वेत्याह । विलोक्य सलिलोच्चयान् सलिलोर्मीन् । ऊर्ध्वं चीयत इति 'एरच् ।३।३।५६।' इत्यच् । अधिसमुद्रं समुद्रस्योपरि । अभ्रंलिहान् दूरमुच्छ्रितान् । अधश्च पयः समधिगम्य ज्ञात्वा । कीदृशम् भ्रमद्भिर्मकरैर्भीषणं भयानकम् । भीषयतीति नन्द्यादित्वाल्ल्युः । गमागमसहं गमनागमनयोग्यं मारुतिम् । गजेन्द्रस्येव गुरुर्विक्रमो यस्य । तरुमृगेषु वानरेषूत्तममिति । 'सप्तमी शौण्डैः । २ । १ । ४ ।' इत्यत्र सप्तमीति योगविभागात् समासः ॥ १०८ ॥

॥ इति ङित्त्वाधिकारः ॥

इति श्रीजयमङ्गलसूरिविरचितया जयमङ्गलाख्यया व्याख्यया समलंकृते श्रीभट्टिप्रणीते रामचरितकाव्ये द्वितीयेऽधिकारकाण्डे लक्षणरूपे द्वितीयः परिच्छेदः, लक्ष्यरूपे कथानके सीताऽन्वेषणं नाम सप्तमः सर्गः ।

---

१ इदं रात्रावित्यर्थकमव्ययम् 'नक्तं च रजनावपि' इत्यमरः ।
२ अत्र पृथ्वीछन्दः 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति तल्लक्षणात् ।

## अष्टमः सर्गः ।

आत्मनेपदमधिकृत्याह—

**अगाधत ततो व्योम हनूमानुरुविग्रहः ।**
**अत्यशेरत तद्वेगं न सुपर्णाऽर्कमारुताः ॥ १ ॥**

अगाधतेति—ततो विसर्जनानन्तरं हनूमान् समुद्रलङ्घनाय व्योमाकाशमगाधत प्रस्थितवान् । 'गाधृप्रतिष्ठालिप्सयोः ।' इत्यस्माल्लङ् । 'अनुदात्तङित आत्मने पदम् ॥१।३।१२।' इत्यनुदात्तेत्त्वादात्मनेपदम् । उरुविग्रहः कामरूपित्वात् तदानीमुत्पादितविपुलकायः । तस्य चोत्पततो वेगं गरुडादित्यपवनाः नात्यशेरत नातिशयितवन्तः । ङित्त्वात्तङ् । 'शीङो रुट् ।७।१।६।' । 'शीङः सार्वधातुके गुणः।७।४।२१।' ॥ १ ॥

**अभायत यथाऽर्केण सुप्रातेन शरन्मुखे ।**
**गम्यमानं न तेनाऽऽसीदगतं क्रामता पुरः ॥ २ ॥**

अभायतेत्यादि—यथा अर्केण सुप्रातेन[1] सुप्रभातेन नीहाराद्यभावात् शोभनं प्रातरनेनेति । 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ।५।४।१२०।' इति समासान्तनिपातनम् । शरन्मुखे शरदारम्भे । अभायत दीप्यते स्म । 'भावकर्मणोः ।१।३।१३।' इति भावे तङ् । तद्वत्तेनाभायत । पुरोऽग्रतो यदर्केण गम्यमानमवष्टभ्यमानं वर्त्मेत्यर्थात् । कर्मण्यात्मनेपदम् । तेन हनूमता क्रामता गच्छता । शिति 'क्रमः परस्मैपदेषु ।३।७।७६।' इति दीर्घत्वम् । नागतमासीत् अपि तु सर्वमेव गतमिति ॥ २ ॥

**वियति व्यत्यतन्वातां मूर्ती हरिपयोनिधी ।**
**व्यत्यैतां चोत्तमं मार्गमर्केन्द्रेन्दुनिषेवितम् ॥ ३ ॥**

वियतीत्यादि—हरिपयोनिधी हनूमत्समुद्रौ मूर्ती स्वदेहौ वियत्याकाशे व्यत्यतन्वातां व्यतिविस्तारितवन्तौ । तनोतेर्लङ् । 'कर्तरि कर्मव्यतिहारे ।१।३।१४।' इत्यात्मनेपदम् । उत्तमं च मार्गं अर्केन्द्रेन्दुनिषेवितं व्यत्यैतां व्यतिगतवन्तौ । इणः परस्य लङः कर्मव्यतिहार इत्यात्मनेपदं प्राप्तं 'न गतिहिंसार्थेभ्यः ।१।३।१५।' इति गत्यर्थत्वात् प्रतिषिद्धं, तेन तसस्तामादेशः । तत्र हरेर्गच्छतः पुरतो यस्मिन्वियत्प्रदेशे स्वमूर्तिं विस्तारितुमवसरो भविता, तत्र

---

१ यद्वा शोभनं प्रभातमस्येति तेन तथोक्तेन । शोभनत्वं च तस्य प्रकृत्योज्ज्वलस्य मेघाद्यावरणाभावादेवेति बोध्यम् ।

पयोनिधिरूर्मिभिः स्वमूर्तिं वितस्तार। पयोनिधेश्च वेला तटं गच्छतो यत्र स्वमूर्तिविस्तारावसरो भावी तत्र हरिः स्वमूर्तिं वितस्तार। तथा पयोनिधेर्यं मार्गं गन्तुमवसरो भविता, हरिरुत्पत्य तं मार्गं गन्तुमैच्छत्। यं च हरेर्मार्गं गन्तुमवसरो भविता तं मार्गं पयोनिधिरभ्रंलिहैरूर्मिभिरैच्छत्। यत्र यत्क्रियावसरे क्रियां करोति स तत्र तत्क्रियाकारीत्युपचर्यते। यथा देवदत्तसाध्यां क्रियां यज्ञदत्तः कुर्वन् तत्कारीत्युच्यते। ततश्चेतरेणेतरसंबन्धिन्याः क्रियायाः करणात् अन्यतरसंबन्धिन्याश्चेतरकरणात् सम्भवति कर्मव्यतिहारः ॥ ३ ॥

व्यतिजिग्ये समुद्रोऽपि न धैर्यं तस्य गच्छतः।
व्यत्यगच्छन् न च गतं प्रचण्डोऽपि प्रभञ्जनः ॥ ४ ॥

व्यतीत्यादि—तस्य हरेर्गच्छतः स्वदेहस्याल्पतां कर्तुं योऽवसरो भावी तत्र समुद्रो नातिशयधैर्यं कृतवान्। तेन तस्य धैर्यं न जितं, तदानीं तस्योद्धतकल्लोलत्वात्। अपिशब्दाच्च हनूमानपि समुद्रस्य शान्तत्वं कर्तुं योऽवसरो भावी तत्र नातिशयधैर्यं कृतवान्। तेन तस्य धैर्यं वा न जितं, तदानीं तस्य विपुलकायत्वात्। तदेवं हनूमतः समुद्रो हनूमानपि समुद्रस्य धैर्यं न व्यतिजिग्ये नाभिबभूव। एकवचनस्य प्रत्येकाभिसंबन्धात्। कर्मव्यतिहारे पूर्ववदात्मनेपदम्। 'सन्लिटोर्जेः ।७।३।५७।' इति कुत्वम्। तस्य हनूमतो गतं गमनं प्रचण्डोऽपि महान् प्रभञ्जनो वायुर्न व्यत्यगच्छत् प्राप्नवान् ॥ ४ ॥

तस्यातिशयेन गच्छतः पथि राक्षसी संप्राप्ता तामसौ व्यापादितवानित्याह—

व्यतिघ्नन्तीं पथि घ्नन्तं राक्षसीं पवनाऽऽत्मजः।
जघानाऽऽविश्य वदनं निर्यान् भित्त्वोदरं द्रुतम् ॥ ५ ॥

व्यतीत्यादि—हनिष्याम्येनमिति राक्षस्या यो वधकरणावसरः तत्र व्यतिघ्नन् व्यतिघ्नन्तीं तस्यैनां हनिष्यामीति यो वधकरणावसरः तत्र घ्नन्तीं तदेवमितरेतरक्रियाकरणेन व्यतिघ्नन्तीं राक्षसीम्।'न गति हिंसार्थेभ्यः १।३।१५।' हिंसार्थत्वादात्मनेपदप्रतिषेधः। तां पवनात्मजो हनूमान् जघान। कथं वदनमाविश्य उदरं भित्त्वा द्रुतं निर्यान् निर्गच्छन्। यातेः शतरि रूपम् ॥५॥

अन्योन्यं स्म व्यतियुतः शब्दान् शब्दैस्तु भीषणान्।
उदन्वांश्चानिलोद्धूतो म्रियमाणा च राक्षसी ॥ ६ ॥

अन्योन्यमित्यादि—अन्योन्यमित्यन्योन्यस्येत्यर्थः। 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः स्त्रीनपुंसकयोरामभाव इति वक्तव्यम्।' अन्योन्यस्य

संबन्धिभिः शब्दैः उदन्वद्राक्षस्यौ शब्दान् भीषणानात्मीयान् व्यतियुतः स्म मिश्रितवन्तौ ।'यु मिश्रणामिश्रणयोः' इत्यस्मात् 'लट् स्मे।३।२।११८।' इति भूते लट् ।'इतरेतरान्योन्योपपदाच्च ।१।३।१६।' इति कर्मव्यतिहार आत्मनेपदप्रतिषेधः । तत्रोदन्वतः शब्दकरणाद्यो भीषणशब्दमिश्रणावसरो भावी तत्र राक्षसी म्रियमाणा शब्दान् भीषणानुदन्वच्छब्दैर्युयावे । राक्षस्याः शब्दकरणाद्यो भीषणशब्दमिश्रणावसरो भावी तत्रोदन्वाननिलोद्धूतः शब्दान् भीषणान् राक्षसीशब्दैर्युयावेति भावः ॥ ६ ॥

न्यविक्षत महाग्राहसङ्कुलं मकराऽऽलयम् ।
सैका बहूनां कुर्वाणा नक्राणां स्वाऽऽशितम्भवम् ॥ ७ ।

न्यविक्षतेत्यादि—महद्भिर्ग्राहैः संकुलं मकरालयं समुद्रं न्यविक्षत प्रविष्टवती[1]। 'नेर्विशः ।१।३।१७।' इत्यात्मनेपदम् । 'शल इगुपधादनिटः क्सः ।३।१।४५।' बहूनां नक्राणामेकापि सती स्वाशितम्भवं सुष्ठु तृप्तिं कुर्वाणा । 'आशिते भुवः करणभावयोः ।३।२।४५।' इति भावे खच् ॥ ७ ॥

कृतेनोपकृतं वायोः परिक्रीणानमुत्थितम् ।
पित्रा संरक्षितं शक्रात् स मैनाकाऽद्रिमैक्षत ॥ ८ ॥

कृतेनेत्यादि—स हनूमान् समुद्रादुत्थितं मैनाकाद्रिमैक्षत । वायोरुपकृतमुपकारं कृतेन प्रत्युपकारेण परिक्रीणानं परिक्रयं विचिन्वन्तम् । 'परिव्यवेभ्यः क्रियः ।१।३।१८।' इत्यकर्त्रभिप्रायविषयमात्मनेपदम् । पित्रा वायुना रक्षितं शक्रात् । तेन हि पक्षच्छेदकाले महता वेगेन समुद्रं नीत्वा रक्षित इति श्रूयते ॥ ८ ॥

खं पराजयमानोऽसावुन्नत्या पवनाऽऽत्मजम् ।
जगादाऽद्रिर्विजेषीष्ठा मयि विश्रम्य वैरिणम् ॥ ९ ॥

खमित्यादि—असावद्रिः उन्नत्या उन्नततया खं पराजयमानोऽभिभवन् पवनात्मजं जगाद । मयि विश्रम्य स्थित्वा वैरिणं शत्रुं विजेषीष्ठाः त्वमभिभूयाः । आशिषि लिङ् । उभयत्रापि 'विपराभ्यां जेः ।१।३।१९।' इति तङ् ॥ ९ ॥

फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु ।
साध्वनुक्रीडमानानि पश्य वृन्दानि पक्षिणाम् ॥ १० ॥

---

१ सादृश्येनैक्यं प्रापयामासेति भावः ।

फलानीत्यादि—चित्राणि नानाविधानि फलानि आदत्स्व गृहाण। 'आङो दोऽनास्यविहरणे । १ । ३ ।२०।' इत्यात्मनेपदम्। सानुषु मभैकदेशेषु परिक्रीडस्व विहर। पक्षिणां च वृन्दानि साधु शोभनं अनुक्रीडमानानि विहरन्ति सन्ति पश्य। उभयत्र 'क्रीडोऽनुसंपरिभ्यश्च।१।३।२१।' इति तङ्॥१०॥

क्षणं भद्राऽवतिष्ठस्व ततः प्रस्थास्यसे पुनः।
न तत् संस्थास्यते कार्यं दक्षेणोरीकृतं त्वया॥ ११ ॥

क्षणमित्यादि—हे भद्रं कल्याण ! क्षणमवतिष्ठस्व। ततः पश्चात्प्रस्थास्यसे यास्यसि। यच्च कार्यं करणीयं दक्षेणानलसेन अप्रमत्तेनेति भावः। त्वया ऊरीकृतमङ्गीकृतं न च संस्थास्यते अपि तु निष्पत्स्यत एवेत्यर्थः। सर्वत्र 'समवप्रविभ्यः स्थः।१।३।२२।' इति तङ्॥ ११ ॥

त्वयि नस्तिष्ठते प्रीतिस्तुभ्यं तिष्ठामहे वयम्।
उत्तिष्ठमानं मित्राऽर्थे कस्त्वां न बहु मन्यते॥ १२ ॥

त्वयीत्यादि—त्वयि विषये अस्माकं प्रीतिरस्ति। तेन संशये अस्माभिरन्यो निर्णेता नान्वेपणीयः। किंतु नोऽस्माकं प्रीतिरेव निर्णयं पश्यन्ती त्वयि तिष्ठते। 'प्रकाशनस्थेयाख्ययोश्च ।१।३।२३।' इत्यात्मनेपदम्। विवादपदनिर्णेता स्थेय उच्यते। तुभ्यं तिष्ठामहे वयमिति त्वयि विषये अस्माकं चेतो वर्तत इति स्वाभिप्रायम्। तुभ्यं तिष्ठामहे स्वाभिप्रायं निवेदयाम इत्यर्थः। अत्र प्रकाशनं च स्वाभिप्रायकथनम्। 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः।१।४।३४।' इति सम्प्रदानसंज्ञायां चतुर्थी। कस्मादेवं मां श्लाघस इति चेदाह। उत्तिष्ठमानं यतमानम्। 'उदोऽनूर्ध्वकर्मणि ।१।३।२४।' इत्यात्मनेपदम्। कस्त्वां न बहु मन्यते न श्लाघते॥ १२ ॥

ये सूर्यमुपतिष्ठन्ते मन्त्रैः संध्यात्रयं द्विजाः।
रक्षोभिस्तापितास्तेऽपि सिद्धिं ध्यायन्ति तेऽधुना॥ १३ ॥

य इत्यादि—ये द्विजा मन्त्रैः करणभूतैः सूर्यमुपतिष्ठन्ते प्रत्युपासते। 'उपान्मन्त्रकरणे ।१।३।२५।' इत्यात्मनेपदम्। संध्यात्रयं त्रिसंध्यम्। 'कालाध्वनोरत्यन्तसंयोगे २।३।५।' इत्यनेनात्यन्तसंयोगे द्वितीया। तेऽपि रक्षोभिस्तापिताः उपद्रुताः अधुना ते सिद्धिं ध्यायन्ति। किं पुनरहं यत्ते पितुः सुहृत्॥ १३ ॥

---

१ 'श्वः श्रेयसं शिवम्भद्रम्' इत्यमरः। २ 'अस्मदो द्वयोश्च १ । २ । ५९' इति बहुवचनम्। एवं पुरस्तादपि प्रत्येतव्यम्।

तदेव दर्शयन्नाह—

**अव्यग्रमुपतिष्ठस्व वीर ! वायोरहं सुहृत् ।**
**रविर्वितपतेऽत्यर्थमाश्वस्य मयि गम्यताम् ॥ १४ ॥**

अव्यग्रमित्यादि—हे वीर ! अव्यग्रमनाकुलं यथा स्यात्तथा मय्युपतिष्ठस्व सन्निहितो भव । 'अकर्मकाच्च ।१।३।२६।' इत्यात्मनेपदम् । यतो वायोस्तव पितुरहं सुहृत् । रविरत्यर्थं वितपते दीप्यते । 'उद्विभ्यां तपः ।१।३।२७।' इत्यात्मनेपदम् । तत्राकर्मकादिति वर्तते ।तस्मादाश्वस्य विश्रम्य गम्यताम्॥१४॥

**तीव्रमुत्तपमानोऽयमशक्यः सोढुमातपः ।**
**आघ्नान इव संदीप्तैरलातैः सर्वतो मुहुः ॥ १५ ॥**

तीव्रमित्यादि—तीव्रं सुष्ठु अतिशयितं वा यथा तथा उत्तपमानो दीप्यमान आतपः सोढुमशक्यः । पूर्ववदात्मनेपदम् । अलातैः उल्मुकैः संदीप्तैः सर्वत आघ्नान इव[1] ताडयन्निव । 'आङो यमहनः ।१।३।२८।'इत्याविवक्षितकर्मकत्वादात्मनेपदम् 'गमहनजनखनघसां लोपः क्ङित्यनङि ।६।४।९८।' इत्युपधालोपः 'हो हन्तेर्ञ्णिन्नेषु ।७।३।५४।' इति कुत्वम् ॥ १५ ॥

**संशृणुष्व कपे ! मत्कैः संगच्छस्व वनैः शुभैः ।**
**समारन्त ममाऽभीष्टाः सङ्कल्पास्त्वय्युपागते ॥ १६ ॥**

संशृणुष्वेत्यादि–हे कपे! संशृणुष्व आकर्णय । 'समो गम्यृच्छिभ्याम्।१।३।२९।' इत्यत्र अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम् ।' इत्यविवक्षितकर्मकत्वादात्मनेपदम् । शुभैः शोभमानैः । इगुपधलक्षणः कः । वनैर्मत्कैः मत्स्वामिकैः । अहं स्वामी येषामिति ।'स एषां ग्रामणीः ।५।२।७८।' इति कः।'प्रत्ययोत्तरपदयोश्च । ७ । २ । ९८ ।' इति मदादेशः । संगच्छस्व संगतो भव । पूर्ववदात्मनेपदम् । समारन्त ममाभीष्टा इति ममाभिप्रेता ये संकल्पा अभिप्रायाः 'कदा नु मे सुहृत्तया वा कश्चिदेष्यति यस्याहमुपयोगी स्याम्' इति ते समारन्त आगताः त्वय्युपागते सति । अर्तेर्लुङि: पूर्ववदात्मनेपदम् । 'सर्तिशास्त्यर्तिभ्यश्च । ३ । १ । ५६ ।' इत्याङि 'ऋदृशोऽङि गुणः । ७ । ४ । १६ ।' आडजादीनाम् । ६ । ४ । ७२ ।' भाषाविषयस्य प्रयोगः ॥ १६ ॥

---

१ 'इवेन समासो विभक्त्यलोपः । पूर्वपदस्य प्रकृतिस्वरत्वं च' इतीवेन समासः ।

न चैवं मिथ्या वायुर्मे सुहृदित्याह—

के न संविद्रते वायोर्मैनाकाऽद्रिर्यथा सखा।

यत्नादुपाह्वये प्रीतः संह्वयस्व विवक्षितम् ॥ १७ ॥

क इत्यादि—वायोर्मैनाकाद्रिर्यथा सखेति के न संविद्रते जानन्ति। वेत्तेः पूर्ववदात्मनेपदम्। 'वेत्तेर्विभाषा। ७। १। ७।' इति रुट्। तस्मात् प्रीतः सन् अहं यत्नादुपाह्वये भवन्तमाह्वयामि। ततः संह्वयस्व कथय विवक्षितमाभिप्रतम्। 'निसमुपविभ्यो ह्वः। १। ३। ३०।' इत्यकर्त्रभिप्राये लट्लोटोरात्मनेपदम्। ततोऽकर्मकादिति निवृत्तम्। सामान्येन विधानम् ॥ १७ ॥

द्यामिवाह्वयमानं तमवोचद्भूधरं कपिः।

उपकुर्वन्तमत्यर्थं प्रकुर्वाणोऽनुजीविवत् ॥ १८ ॥

द्यामित्यादि—द्यामिवाकाशमिवाह्वयमानं महत्तया स्पर्धमानम्। 'स्पर्द्धायामाङः। १। ३। ३१।' इत्यात्मनेपदम्। अत्यर्थमुपकुर्वन्तं आतिथ्येन तमीदृशं भूधरमवोचत्। कपिः प्रकुर्वाणः सेवमानोऽनुजीविवत् भृत्यवत्। 'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः। १। ३। ३२।' इति सेवने तङ् ॥ १८ ॥

कुलभार्यां प्रकुर्वाणमहं द्रष्टुं दशाननम्।

यामि त्वरावान् शैलेन्द्र ! मा कस्यचिदुपस्कृथाः ॥ १९ ॥

कुलभार्यामित्यादि—अहं दशाननं द्रष्टुं यामि कुलभार्यां प्रकुर्वाणं कुलनारीमभिगच्छन्तम्[1]। तस्यां सहसा प्रवर्तमानामित्यर्थः। साहसिक्ये तङ्। त्वरावान् त्वरायुक्तः। अतः हे शैलेन्द्र ! मा कस्यचिदशनपानादिकस्य उपस्कृथाः अतिशयवन्तं मा कार्षीरित्यर्थः।'माङि लुङ्। ३। ३। १७५।' प्रतियत्ने तङ्। 'तनादिभ्यस्तथासोः। २। ४। ७९।' इति सिचो लुक्। 'उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च। ६। १। १३९।' इति सुट्। कस्यचिदिति 'कृञः प्रतियत्ने। २। ३। ५३।' इति कर्मणि षष्ठी ॥ १९ ॥

योऽपचक्रे वनात् सीतामधिचक्रे न यं हरिः।

विकुर्वाणः स्वरानद्य बलं तस्य निहन्म्यहम् ॥ २० ॥

य इत्यादि—यः सीतामपचक्रे अभिबभूव। अवक्षेपणे तङ्। वनादिति वनमुपगम्य 'ल्यब्लोपे कर्म्मण्यधिकरणे च' इति ल्यब्लोपे कर्मणि पञ्चमी।

---

१ प्रकरोतेरभिगमनार्थकत्वं विरुद्धमिव।

हरिरिन्द्रो नाधिचक्रे न प्रसेहे । 'अधेः प्रसहने । १ । ३ । ३३ ।' इति तङ् । तस्य बलं दशाननस्य सामर्थ्यम् । कीदृशं स्वरान् विकुर्वाणं विविधान् स्वरान् कुर्वाणम् । 'वेः शब्दकर्मणः । १ । २ । ३४ ।' इति तङ् । तस्य दशाननस्य बलं निहन्मि ॥ २० ॥

विकुर्वे नगरे तस्य पापस्याऽद्य रघुद्विषः ।
विनेष्ये वा प्रियान् प्राणानुदानेष्येऽथवा यशः ॥ २१ ॥

विकुर्व इत्यादि—तस्य रघुद्विषो रामशत्रोः पापस्य नगरे पुर्यां अहमद्य विकुर्वे विविधं चेष्टे । 'अकर्मकाच्च।१।३।४५।' इति तङ् ।इति तत्र विकुर्वाणो यदि वा प्रियानपि प्राणान् स्वाम्यर्थे विनेष्ये अपनेष्यामि । 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ।१। ३ । ३६ ।' इति व्यये तङ् । यतो धर्मादिषु विनियोगो व्ययः । यशो वा उदानेष्ये ऊर्ध्वं नेष्यामि तस्यापकारकरणात् । अत्रोत्सञ्जने तङ् । उत्सञ्जनमुत्क्षेपणम् ॥ २१ ॥

विनेष्ये क्रोधमथवा क्रममाणोऽरिसंसदि ।
इत्युक्त्वा खे पराक्रंस्त तूर्णं सुनुर्नभस्वतः ॥ २२ ॥

विनेष्य इत्यादि—यदि वा क्रोधमात्मनो विनेष्ये अपनेष्यामि । 'कर्तृस्थे चाशरीरे कर्म्मणि । १ । ३ । ३७ ।' इति तङ् । कर्तृस्थस्य क्रोधकर्मणोऽशरीरत्वात् अत्र व्ययो न संभवतीति । अरिसंसदि शत्रुसभायां क्रममाणः अप्रतिबन्धेन प्रवर्तमानः । 'वृत्तिसर्गतायनेषु क्रमः । १ । ३ । ३८ ।' इति वृत्तौ तङ् । वृत्तिरप्रतिबन्धः । इत्येवमुक्त्वा सूनुर्नभस्वतः वायोस्तनयः खे तूर्णं पराक्रंस्त शीघ्रमुत्सेहे । 'उपपराभ्याम् । १ । ३ । ३९ ।' इत्यनेन सर्गे तङ् । सर्ग उत्साहः ॥ २२ ॥

परीक्षितुमुपाक्रंस्त राक्षसी तस्य विक्रमम् ।
दिवमाक्रममाणेव केतुतारा भयप्रदा ॥ २३ ॥

परीत्यादि—तस्य हनूमतो विक्रमं शौर्यं परीक्षितुं राक्षसी उपाक्रंस्त उत्सेहे । पूर्ववत्तङ् । दिवमाक्रममाणेव । यथा केतुः स्वर्भानुः तारा नभस्युद्गच्छति भयंकरा । 'आङ उद्गमने । १ । ३।४०।' इति तङ् । तत्र हि 'ज्योतिरुद्गमन—' इत्युक्तम् । केतुताराश्च ज्योतिःस्वभावत्वात् ॥ २३ ॥

---

१ 'अत्र रघुशब्दो लक्षणया राघवपरः ।

जले विक्रममाणाया हनूमाञ्छतयोजनम् ।
आस्यं प्रविश्य निरगादणूभूयाऽप्रचेतितः ॥ २४ ॥

जल इत्यादि---विक्रममाणायाः पद्भ्यां विचरन्त्याः । 'वेः पादविहरणे ।१।३।४१।' इति तङ् । जलग्रहणात् गतिविशेषं दर्शयति । आस्यं शतयोजनं शतं योजनानि यस्य प्रमाणतः । अत्र शतयोजनपदं लक्षणया बहुयोजनपरमेव बोध्यम् , अन्यथा शतयोजनावधावुदधौ तस्या एकदेशेऽवस्थानं न सङ्गच्छेत । तदणूभूय सूक्ष्मीभूय प्रविश्य निरगात् निर्गतः । उदरं विदार्येत्यर्थात् । अप्रचेतितः अविज्ञातः ॥ २४ ॥

द्रष्टुं प्रक्रममाणोऽसौ सीतामम्भोनिधेस्तटम् ।
उपाक्रंस्ताऽऽकुलं घोरैः क्रममाणैर्निशाचरैः ॥ २५ ॥

द्रष्टुमित्यादि---असौ हनूमान् सीतां द्रष्टुं प्रक्रममाणः आरभमाणः आदिकर्मणि यथा भोक्तुं प्रक्रमते इति । उदधेस्तटमुपाक्रंस्त गन्तुं प्रारब्धवानित्यर्थः । ततश्च प्रोपयोरादिकर्माणि समानार्थत्वात् 'प्रोपाभ्यां समर्थाभ्याम् ।१।३।४२।' इति तङ् । घोरैः रौद्रैः । निशाचरैराकुलं व्याप्तम् । तटं क्रममाणैः इतस्ततो गच्छद्भिः । 'अनुपसर्गाद्वा ।१।३।४३।' इति तङ् ॥ २५ ॥

आत्मानमपजानानः शशमात्रोऽनयद्दिनम् ।
ज्ञास्ये रात्राविति प्राज्ञः प्रत्यज्ञास्त क्रियापटुः ॥ २६ ॥

आत्मानमित्यादि—मा[1] कश्चिद्द्राक्षीदिति तथाविधमात्मानं शरीरमवजानानः अपह्नुवानः 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च' इत्यमरः। 'अपह्नवे ज्ञः ।१।२।४४।' इति तङ् । यो हि शशमात्रो भूत्वा स्थितः तेन कथमात्मा लोके नापलपितः स्यात् । अनयद्दिनम् अगमयद्दिवसम् । ज्ञास्ये रात्राविति प्रत्यज्ञास्त प्रतिज्ञातवानित्यर्थः । 'सम्प्रतिभ्यामनाध्याने ।१।३।४६।' इत्यात्मनेपदं लुङो भवति । आध्यानं चोत्कण्ठनम् । ज्ञास्ये इत्यकर्मकाच्चेत्यकर्मकक्रियावचनत्वादात्मनेपदम् । प्राज्ञः क्रियापटुरिति बुद्धिकौशलं कर्मकौशलं च दर्शयति ॥ २६ ॥

संजानानान् परिहरन् रावणाऽनुचरान् बहून् ।
लङ्कां समाविशद् रात्रौ वदमानोऽरिदुर्गमाम् ॥ २७ ॥

---

१ अत्र 'मा' इत्येव निषेधार्थकमव्ययम्, न तु 'माङ्' अन्यथाऽटो लोपः प्रसज्येत ।

संजानानानित्यादि—रावणस्यार्थेषु कार्येषु ये चरन्तीति 'चरेष्टः । ३। २।१६।' तान् बहून् संजानानान् चेतयतः परिहरन् । अनाध्याने तङ् । रात्रौ लङ्कां समाविशत् प्रविष्टवान् । अरिदुर्गमां राक्षसदुर्गमाम् । वदमानो भासमानः । 'भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः। १ ।३। ४७।' इत्यात्मनेपदम् ॥ २७ ॥

कंचिन् नोपावदिष्टाऽसौ केनचिद् व्यवदिष्ट न ।
शृण्वन् संप्रवदमानाद् रावणस्य गुणान् जनात् ॥ २८ ॥

कंचिदित्यादि—असौ प्रविष्टः सन् न कंचिदुपावदिष्ट उपसान्त्वितवान् । उपसम्भाषायां तङ् । केनचिद्व्यवदिष्ट न, न भाषितवान् विमतौ तङ् । विमतिर्नानामतिः । शृण्वन् आकर्णयन । जनात् संप्रवदमानात् संभूय भाषमाणात् । रावणस्य संबन्धिनो गुणान् । 'व्यक्तवाचां समुच्चारणे ।१।३।४८।'इत्यात्मनेपदम्। जनानां व्यक्तवाक्त्वात् ॥२८॥

जल्पितोत्क्रुष्टसंगीतप्रनृत्तस्मितवाल्गितैः ।
घोषस्यान्ववदिष्टेव लङ्का पूतक्रतोः पुरः ॥ २९ ॥

जल्पितेत्यादि—पूतक्रतोरिन्द्रस्य या पूः पुरीत्यर्थः । ' पूः स्त्री पुरी नगर्यौ वा' इत्यमरः । तस्या अमरावत्याः सम्बन्धिनो घोषस्यान्ववदिष्टेव लङ्का । पूताः क्रतवो यस्येति तस्य । अनुशब्दः सादृश्ये । सदृशं वादं कृतवती । तैर्जल्पितादिभिः । उभयत्रापि जल्पितादिघोषस्य तुल्यत्वात् । लङ्केति तत्स्थो जन उच्यते । तेन व्यक्तवाग्विषयत्वात् । 'अनोरकर्मकात् । १।३। ।४९।' इति तङ् । तत्र व्यक्तवाचामित्यनुवर्तते न समुच्चारण इति ॥२९॥

ऐद् विप्रवदमानैस्तां संयुक्तां ब्रह्मराक्षसैः ।
तथाऽवगिरमाणैश्च पिशाचैर्मांसशोणितम् ॥ ३० ॥

ऐदित्यादि—तां ब्रह्मराक्षसैः भयङ्करैर्निशाचरैः संयुक्तां हनूमान् ऐत् जगाम । इणो लङि रूपम् । विप्रवदमानैः परस्परविरुद्धार्थाभिधायिभिः । विप्रलापात्मके व्यक्तवाचां समुच्चारणे 'विभाषा विप्रलापे ।१।३।५०।' इति तङ् । तथा पिशाचैर्मांसशोणितमवगिरमाणैः भक्षयद्भिः संयुक्ताम् । गिरतेरभ्यवहारार्थत्वात् 'अवाद् ग्रः ।१।३।५१।' इति तङ् । मांसशोणितमिति 'जातिरप्राणिनाम् ।२।४।६।' इत्येकवद्भावः ॥ ३० ॥

---

१ भाषणादिभिरित्यर्थः । अत्र भावे क्तः ।

यथास्वं संगिरन्ते स्म गोष्ठीषु स्वामिनो गुणान् ।
पानशौण्डाः पथः क्षीबा वृन्दैरुदचरन्त च ॥ ३१ ॥

यथास्वमित्यादि—ब्रह्मराक्षसाः पिशाचाश्च यथास्वमात्मीयस्य स्वामिनो गुणान् गोष्ठीषु गोष्ठीमध्ये संगिरन्ते स्म अभ्युपगतवन्तः । 'समः प्रतिज्ञाने ।१।३।५२' इति तङ् । पानशौण्डाः पानसक्ताः क्षीबा मत्ताः सन्तः पथो मार्गानुदचेरन्त[1] उत्क्रम्य गच्छन्ति स्म । 'उदश्चरः सकर्मकात्।१।३। ५३ ।' इति तङ् । वृन्दैरिति सम्भूयेत्यर्थः ॥ ३१ ॥

यानैः समचरन्ताऽन्ये कुञ्जराऽश्वरथाऽऽदिभिः ।
सम्प्रायच्छन्त वन्दीभिरन्ये पुष्पफलं शुभम् ॥ ३२ ॥

यानैरित्यादि—अन्ये यानैः[2] कुञ्जरादिभिः समचरन्त संचरन्ते स्म । 'समस्तृतीयायुक्तात् ।१।३।५४।' इति तङ् । अन्ये वन्दीभिरानीताभिः । सम्प्रदाने तृतीया । अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवति इति वचनाद्वन्दीभ्यै[3] इत्यर्थः । पुष्पफलं शोभनं संप्रायच्छन्त ददाति स्म । 'दाणश्च सा चेच्चतुर्थ्यर्थे ।१।३।५५।' इति तङ् । पुष्पफलमिति जातेरेकवद्भावः ॥ ३२ ॥

कोपात् काश्चित् प्रियैः प्रत्तमुपायंसत नाऽऽसवम् ।
प्रेम जिज्ञासमानाभ्यस्ताभ्योऽऽशप्सत कामिनः ॥ ३३ ॥

कोपादित्यादि—काश्चित् स्त्रियः कोपात् अन्यस्त्रीगमनजनितात् आसवं[4] मद्यविशेषं नोपायंसत न स्वीकृतवत्यः । 'विभाषोपयमने ।१।२।१६।' इत्यकित्त्वपक्षे रूपम् । 'उपाद्यमः स्वकरणे ।१।३।५६।' इति तङ् । पाणिग्रहणपूर्वस्य स्वीकरणस्य तत्र स्थितत्वादौपचारिकमत्र स्वीकरणं द्रष्टव्यम् । 'समुदाङ्भ्यो यमोऽग्रन्थे ।१।३।७५।' इति वा तङ् । उदाङ्पूर्वस्य यम आदानार्थत्वात् । अवसरप्राप्तं सूत्रद्वयमुपाहृतं स्यात् । प्रियैः प्रत्तं दत्तम् । 'अच उपसर्गात्तः ।७।४।४७।' इति ददातेः । प्रेम जिज्ञासमानाभ्यः किमस्मासु प्रेमास्ति वा न वेति कृतकोपप्रकाशेन ज्ञातुमिच्छन्तीभ्यः । 'ज्ञाश्रुस्मृदृशां सनः ।१।३।५७।' इति तङ् । ताभ्यो योषिद्भ्यः । कामिनः अशप्सत न मे त्वदन्या प्रियास्तीति तदीयशरीरस्पर्शनेन शपथं चक्रुः । 'शप उपालम्भने' इत्यात्मने-

---

१ उत्पूर्वकस्य चरतेरुच्चारणार्थकत्वम्मलोत्सर्गार्थकत्वं वा प्रसिद्धम् । २ 'सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम् ।' इत्यमरः । ३ 'वन्दिनः स्तुतिपाठकाः ।' 'इत्यमरः । ४ मैरेयमासवः सीधुः' इत्यमरः ।

पदम् । वाचा उपलम्भनं शरीरस्पर्शनम् 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।१।४।३४।' इति सम्प्रदानसंज्ञायां चतुर्थी । तासां ज्ञापयितुमिष्यमाणत्वात् ॥ ३३ ॥

**प्रादिदृक्षत नो नृत्यं नाऽशुश्रूषत गायनान् ।**
**रामं सुस्मूर्षमाणोऽसौ कपिर्विरहदुःखितम् ॥ ३४ ॥**

प्रादिदृक्षतेत्यादि—असौ कपिर्लङ्कायां नो नृत्यं प्रादिदृक्षत । गायनान् गायकान् । 'गस्थकन् ।३।१।१४६।' ण्युट् च । नाशुश्रूषत न श्रोतुमिष्टवान् किमिति रामं विरहदुःखितं सुस्मूर्षमाणः स्मर्तुमिच्छन् । सन्नन्तेभ्यः पूर्ववदात्मनेपदम् । 'अज्झनगमां सनि ।६।४।१६।' इति दीर्घत्वम् । 'उदोष्ठ्यपूर्वस्य ।७।१।१०२।' इत्युत्त्वम् ॥ ३४ ॥

**अनुजिज्ञासतेवाऽथ लङ्कादर्शनमिन्दुना ।**
**तमोऽपहविमुक्तांऽशु पूर्वस्यां दिश्युदैयत ॥ ३५ ॥**

अन्वित्यादि—अथैतस्मिन् प्रस्तावे इन्दुना चन्द्रेण उदैयत उदितम् । इणो भावे लङि रूपम् । पूर्वस्यां दिशीति पूर्णेनेति दर्शयति । दृश्यते यत् दर्शनं रूपम् । लङ्काया रूपमनुजिज्ञासते । पूर्वेण प्राप्तस्यात्मनेपदस्य 'नानोर्ज्ञः ।१।३।५८।' इति प्रतिषेधः । तमोपहास्तमोविध्वंसमानाः विमुक्ताः प्रेरिता अंशवो यस्मिन् उदये । 'अपे क्लेशतमसोः ।३।२।१४४।' इति हन्तेर्डः । 'अग्नीन्द्वर्कास्तमोऽपहाः ।' इत्यमरः इति ॥ ३५ ॥

**आशुश्रूषन् स मैथिल्या वार्तां हर्म्येषु रक्षसाम् ।**
**शीयमानाऽन्धकारेषु समचारीदशङ्कितः ॥ ३६ ॥**

आशुश्रूषन्नित्यादि—स कपिर्मैथिल्याः सीताया वार्तामाशुश्रूषन् श्रोतुमिच्छन् । 'प्रत्याङ्भ्यां श्रुवः ।१।३।५९।' इत्यात्मनेपदप्रतिषेधः । रक्षसां हर्म्येषु गृहेषु । समचारीत् संक्रान्तवान् । 'अतो ल्रान्तस्य ।७।२।२।' इति वृद्धिः । शीयमानान्धकारेषु अपगच्छत्तमःसु । 'शद्लृ शातने' । 'शदेः शितः । १ । ३ । ६० ।' इति तङ् । 'पाघ्राध्मास्थाम्नादाणदृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । ७।३।७८।' इति शीयादेशः । अशङ्कितः शङ्कारहितः ॥ ३६ ॥

---

१ नो नैवेत्यर्थः । 'अभावे नह्यनो नापि' इत्यमरः । २ प्रस्तावे प्रकरणे ।

शतसाहस्रमारक्षं मध्यगं रक्षसां कपिः ।
ददर्श यं कृतान्तोऽपि म्रियेताऽऽसाद्य भीषणम् ॥ ३७ ॥

शतेत्यादि—मध्यगं मध्यप्रकोष्ठगतम् आरक्षं गोपकं शतसाहस्रं रक्षसां लक्षमात्रं ददर्श विलोकितवान् । शतसहस्रं परिमाणमस्येति प्राग्वते: संख्यापूर्वपदानां तदन्तग्रहणमलुकीति वचनात् । 'शतमानविंशतिकसहस्र-वसनादण् । ५ । १ । २७ ।' इति अणि 'संख्यायाः संवत्सरसङ्ख्यस्य च ।७।३।१५।' इत्युत्तरपदवृद्धिः । भीषणं भयानकम् आसाद्य प्राप्य । कृतान्तोऽपि यमोऽपि म्रियेत प्राणान् संत्यजेत् । 'कृतान्तो यमुनाभ्राता शमनो यमराड्यमः ।' इत्यमरः । 'म्रियतेर्लुङ्लिङोश्च ।१।३।६१।' इति तङ् । तत्र हि शित इत्यनुवर्तते ॥ ३७ ॥

अध्यासिसिषमाणेऽथ वियन्मध्यं निशाकरे ।
कासांचक्रे पुरी सौधैरतीवोद्भासिभिः सितैः ॥ ३८ ॥

अधीत्यादि—अथ निशाकरे चन्द्रमसि वियन्मध्यं अध्यासितुमारोढुमिच्छति सति । 'पूर्ववत्सनः ।१।३।६२।' इत्यात्मनेपदम् । अस्तेरनुदात्तेत्त्वमात्मनेपदनिमित्तम् । तेनैव सन्नन्तादपि भवति । अत्र सनि इटि कृते अजादेर्द्वितीयस्येति द्विर्वचनम् । पुरी लङ्का कासांचक्रे शोभते स्म । सौधैः सौधानां ज्योत्स्नया चोद्भास्यमानत्वात् । 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य । १ । ३ । ६३ ।' इति तङ् ॥ ३८ ॥

इन्दुं चषकसंक्रान्तमुपायुङ्क्त यथाऽमृतम् ।
प्रयुञ्जानः प्रिया वाचः समाजाऽनुरतो जनः ॥ ३९ ॥

इन्दुमित्यादि—एवं शोभितायां लङ्कायां समाजानुरतः पानगोष्ठीरतो जनः चषकसंक्रान्तं मद्यभाजने प्रतिबिम्बेन संक्रान्तमिन्दुमुपायुङ्क्त उपभुक्तवान् । प्रतिबिम्बावच्छिन्नस्य मद्यस्योपलक्ष्यमाणत्वादेवमुक्तम् । यथाऽमृतं अमृतमिव । प्रिया अनुकूला वाचः प्रयुञ्जानः अभिदधानः ।'प्रोपाभ्यां युजेरयज्ञपात्रेषु । १। ३।६४।' इति तङ् ॥ ३९ ॥

संक्षणुवान इवोत्कण्ठामुपाभुङ्क्त सुरामलम् ।
ज्योत्स्नायां विगलन्मानस्तरुणो रक्षसां गणः ॥ ४० ॥

---

1 अत्राश्लीलत्वं सन्धिवशात्स्पष्टम् ।

संक्ष्णुवान इत्यादि—रक्षसां तरुणो गणः उत्कण्ठां प्रियासु संस्मरणं संक्ष्णुवान इव समुत्तेजयन्निव। 'समः क्ष्णुवः। १। ३। ६५।' इति तङ्। ज्योत्स्नायां सुराम् अलं पर्याप्तमुपाभुङ्क्त अभ्याहृतवान्। 'भुजोऽनवने।१।३। ६६।' इति तङ्। विगलन्मानः ॥ ४० ॥

मध्वपाययत स्वच्छं सोत्पलं दयिताऽन्तिके।
आत्मानं सुरताऽऽभोगविश्रम्भोत्पादनं मुहुः ॥ ४१ ॥

मध्वित्यादि—कीदृशं मधु स्वच्छत्वात् सोत्पलतया सुरभित्वात् शोभनं जातं यतः स्वयमात्मानं मुहुरपाययत पायितवत्। 'णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने। १। ३। ६७।' इति तङ्। दयितान्तिके दयितस्य समीपे। सुरताभोगः सुरताविमर्दः तत्र विश्रम्भः तस्योत्पादनं जनकम्। उत्पादयतीति 'कृत्यल्युटो बहुलम्। ३। ३। ११३।' इति कर्तरि ल्युट् ॥ ४१ ॥

अभीषयन्त ये शक्रं राक्षसा रणपण्डिताः।
अविस्मापयमानस्तान्कपिराटीद् गृहाद् गृहम् ॥ ४२ ॥

अभीषयन्तेत्यादि—एवं रक्षःसु यथायथं चेष्टमानेषु ये राक्षसा रणपण्डिताः संग्रामविज्ञाः शक्रमभीषयन्त भीषितवन्तः। 'भीस्म्योर्हेतुभये।१।३।६८।' इति तङ्। 'भियो हेतुभये षुक्।७।३।४०।' इति षुक्। भयग्रहणमुपलक्षणं तेन स्मयतेरपि भवति। तानसौ कपिरविस्मापयमानः विस्मयमकारयन्। 'नित्यं स्मयतेः।६। १।५७।' इत्यात्वम्। गृहाद् गृहमाटीत् गतवान्। लुङि रूपम् ॥ ४२ ॥

सीतां दिदृक्षुः प्रच्छन्नः सोऽगर्धयत राक्षसान्।
अवञ्चयत मायाश्च स्वमायाभिर्नरद्विषाम् ॥ ४३ ॥

सीतामित्यादि—स कपिः सीतां दिदृक्षुः सीतां द्रष्टुमिच्छुः प्रच्छन्नः राक्षसानगर्धयत व्यामोहयत्। स्वमायाभिश्च नरद्विषां मायाश्च अवञ्चयत अतिसंहितवान्। 'गृधिवञ्च्योः प्रलम्भने।१।३।६९।' इति तङ् ॥ ४३ ॥

अपलापयमानस्य शत्रूंस्तस्याऽभवन्मतिः।
मिथ्या कारयते चारैर्घोषणां राक्षसाऽधिपः ॥ ४४ ॥

अपेत्यादि—तस्य कपेः शत्रून् राक्षसान्[1] अपलापयमानस्य न्यक्कुर्वतः। 'विभाषा लीयतेः। ६। १। ५१।' इत्यात्वे। 'लियः सम्माननशालिनी-

---

[1] राक्षसानामित्यर्थः।

करणयोश्च । १ । ३ । ७० ।' इति शालिनीकरणे न्यग्भावने आत्मनेपदम् । मतिरभवत् । कीदृशीत्याह-मिथ्या कारयत इति । अये राक्षसाधिपतिश्चारै-र्दण्डवाहकैः यां घोषणां पुनः पुनः कारयति जागृत जागृतेति तां मिथ्या-कारयते येनाहमविज्ञात एव प्रविष्टः । 'मिथ्योपपदात् कृञोऽभ्यासे । १ । ३ । ७१ ।' इति तङ् । अभ्यासश्च पुनः पुनःकरणम् ॥ ४४ ॥

अथ पञ्चभिः कुलकम् ।

गूहमानः स्वमाहात्म्यमटित्वा मन्त्रिसंसदः ।
नृभ्योऽपवदमानस्य रावणस्य गृहं ययौ ॥ ४५ ॥

गूहमान इत्यादि—स्वमाहात्म्यं स्वपराक्रमं गूहमानः आवृण्वन् । 'ऊदु-पधाया गोहः ।६।४।८९।' इत्यूत्त्वम् । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले । १।३।७२।' इति तङ् । अटित्वा मन्त्रिसंसदः शुकसारणादिगृहाणि गत्वा राव-णस्य गृहं ययौ । कीदृशस्य । नृभ्योऽपवदमानस्य कुप्यतः असूयतो वा ।'अपा-द्वदः ।१।३।७३।' इति तङ् । नृभ्य इति 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः । १।४।३७।' इति सम्प्रदानसंज्ञायां चतुर्थी ॥ ४५ ॥

कीदृशं गृहमित्याह—

दिशो द्योतयमानाभिर्दिव्यनारीभिराकुलम् ।
श्रियमायच्छमानाभिरुत्तमाभिरनुत्तमाम् ॥ ४६ ॥

दिश इत्यादि—दिशः द्योतयमानाभिः भासयमानाभिः । 'णिचश्च । १ । ३ । ७४ ।' इति तङ् । दिव्यनारीभिः उत्तमाभिः प्रधाननायिकाभि-राकुलं व्याप्तम् । श्रियमनुत्तमामतिशयवतीं आयच्छमानाभिः स्वीकुर्वाणाभिः । 'समुदाङ्भ्यो यमोऽग्रन्थे । १ । ३ । ७५ ।' इति तङ् ॥ ४६ ॥

नित्यमुद्यच्छमानाभिः स्मरसम्भोगकर्मसु ।
जानानाभिरलं लीला किलकिंचितविभ्रमान् ॥ ४७ ॥

यमित्यादि—स्मरसंभोगकर्मसु कामोपभोगक्रियासु । नित्यमुद्यच्छमा-नाभिः उत्सहमानाभिः । पूर्ववत्तङ । लीला जानानाभिः । 'अनुपसर्गाज्ज्ञः । १ । ३ । ७६ ।' इति तङ् । लीलाः स्त्रीणां शृङ्गारचेष्टाविशेषाः । तथा

---

१ परोदन्तमवगन्तुं नियुक्तैः । 'चारश्च गूढपुरुषः' इत्यमरः । २ 'उच्चैर्घुष्टं तु घोषणा ।' इत्यमरः । ३ 'मन्त्री धीसचिवोऽमात्यः' इत्यमरः ।

चोक्तम्––'विलासलीलाः किलकिंचितानि विव्वोकमोट्टायितविभ्रमाणि । विच्छित्तमाकुट्टमितेक्षितानि योज्यानि तज्ज्ञैः सुकुमारनृत्ते॥' इति । लक्षणं चैषां नृत्यशास्त्रे ॥ ४७ ॥

स्वं कर्म कारयन्नास्ते निश्चिन्तो या झषध्वजः ।
स्वाऽर्थं कारयमाणाभिर्यूनो मदविमोहितान् ॥ ४८ ॥

स्वमित्यादि–स्वमात्मीयं मोहनादिकर्म यादिव्यनारीः कारयन् अनुष्ठापयन् एष झषध्वजः कामदेवः निश्चिन्त आस्ते । ताभिराकुलमिति योज्यम् । 'हृक्रोरन्यतरस्याम् ।१।४।५३।' इति द्विकर्मकता । यूनः स्वार्थं स्वप्रयोजनं मैथुनाख्यं कारयमाणाभिः आकुलम् । ता हनूमानिति वक्ष्यमाणेन संबन्धः कीदृशान् मदविमोहितान् मधुपानमदपरवशान् । ताभिः ॥ ४८ ॥

कीदृशीभिरित्याह––
कान्ति स्वां वहमानाभिः स्वविग्रहान् ।
नेत्रैरिव पिबन्तीभिः पश्यतां चित्तसंहतीः ॥ ४९ ॥

कान्तिमित्यादि–––स्वां कान्ति शोभां वहमानाभिः । यजन्तीभिः स्वविग्रहान् ददतीभिः कामिभ्यः । तत्र स्वं कर्मेति 'णिचश्च । १ । ३ । ७४ ।' इत्यस्य विषयः । कान्ति स्वां स्वविग्रहानिति स्वरितञितः १ । ३ । ७२ ।' इत्यस्य विषयः ।'विभाषोपपदेन प्रतीयमाने ।१।३।७७।' इति विभाषा आत्मनेपदम् । इत्यात्मनेपदाधिकारः । शेषभूतत्वात् परस्मैपदविधानमाह––नेत्रैरिति। पश्यतां चित्तसंहतीः । चित्तसंदोहान् पिब न्तीभिरिव गृह्णन्तीभिरिव । 'शेषात्कर्तरि परस्मैपदम् । १ । ३ । ७८ ।' ॥ ४९ ॥

ता हनूमान् पराकुर्वन्नगमत्पुष्पकं प्रति ।
विमानं मन्दरस्याद्रेरनुकुर्वदिव श्रियम् ॥ ५० ॥

ता इत्यादि––ता दिव्यनारीः पराकुर्वन्नपक्षिपन् अगमत् । पुष्पकं प्रति कुबेरस्य पुष्पकविमानं प्रति । 'विमानं तु पुष्पकम् ।' इति कुबेरविमानाभिधानोक्तेः । येन पुष्पकविमानेन जगाम । कीदृशं मन्दरस्याद्रेः श्रियमनुकुर्वदिव । 'अनुपराभ्यां कृञः ।१ ।३।७९।' कर्त्रभिप्राये चात्मनेपदस्य प्राप्तत्वात् ॥ ५० ॥

---

१ कान्तेर्वहनायोगेऽपि वहनोक्त्या तथा निबिडत्वाद्यतिशयं द्योतयति ।
२ देवकुलोत्पन्ना रमणीरित्यर्थः । श्रियं शोभाम् ।

अथ युग्मम् ।

तास्मिन् कैलाससंकाशं शिरःशृङ्गं भुजद्रुमम् ।
अभिक्षिपन्तमैक्षिष्ट रावणं पर्वतश्रियम् ॥ ५१ ॥

तस्मिन्नित्यादि—तास्मिन् विमाने रावणमैक्षिष्ट । कैलाससंकाशं कैलासतुल्यम् । शिरःशृङ्गं शिरांसि शृङ्गाणीव यस्य । भुजद्रुमं भुजा द्रुमा इव यस्य । तं पर्वतस्य श्रियमभिक्षिपन्तम् आभिभवन्तम् । 'आभिप्रत्यतिभ्यः क्षिपः ।१।३।८०' इति परस्मैपदम् । तस्य स्वरितेत्त्वात् कर्त्रभिप्राय आत्मनेपदं प्राप्तम् ॥ ५१ ॥

प्रवहन्तं सदामोदं सुप्तं परिजनाऽन्वितम् ।
मघोने परिमृष्यन्तमारमन्तं परं स्मरे ॥ ५२ ॥

प्रवहन्तमित्यादि—सदामोदं कस्तूरिकादिपरिमलं प्रवहन्तम् । 'प्राद्वहः १।३।८१।' इति परस्मैपदं स्वरितेत्त्वात् । सुप्तं शयने संविष्टम् । परिजनान्वितं पारिपार्श्विकाधिष्ठितम् । मघोने इन्द्राय परिमृष्यन्तं असूयन्तम् । 'परेर्मृषः १।३।८२।' इति परस्मैपदं मृषेः स्वरितेत्त्वात् । 'क्रुधद्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः।१।४।३७।' इति सम्प्रदानसंज्ञायां चतुर्थी । स्मरे कामे परमत्यर्थम् आरमन्तं विश्रमं कुर्वाणम् ।'व्याङ्परिभ्यो रमः ।१।३।८३। इति परस्मैपदम् । रमेरनुदात्तेत्त्वात् ॥ ५२ ॥

व्यरमत्प्रधनाद्यस्मात् परित्रस्तः सहस्रदृक् ।
क्षणं पर्यरमत्तस्य दर्शनान्मारुताऽऽत्मजः ॥ ५३ ॥

व्यरमदित्यादि—यस्माद्रावणात् सहस्रदृगिन्द्रः । परित्रस्तः 'भीत्रार्थानां भयहेतुः । १।४।२५।' इत्यपादाने पञ्चमी । प्रधनात् युद्धात् । व्यरमत् उपरतव्यापारोऽभूत् । ' व्याङ्परिभ्यो रमः ।१।३।८३।' इति परस्मैपदम् । 'वा जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इत्यपादाने पञ्चमी । तस्य दर्शनान्मारुतात्मजः हनूमान् क्षणं पर्यरमत् तुष्टिमानभवदित्यर्थः । 'साधु रावण' इति । पूर्ववल्लङः परस्मैपदम् ॥ ५३ ॥

उपारंसीच्च संपश्यन् वानरस्तं चिकीर्षितात् ।
रम्यं मेरुमिवाऽऽधूतकाननं श्वसनोर्मिभिः ॥ ५४ ॥

---

१ 'निभसङ्काशनीकाशप्रतीकाशोपमादयः ।' इत्यमरः । २ सदामोदस्तम् । 'आमोदः सोऽतिनिर्हारी' इत्यमरः ।

उपेत्यादि—तं रावणं पश्यन् वानरः चिकीर्षितात्कर्तुमिष्टात् सीतान्वेषणादुपारंसीत् निवृत्तः । उपाच्चेत्यधिकृत्य 'विभाषाऽकर्मकात् ।१।३।८५।' इति लुङः परस्मैपदम् । तस्य मेरोरिव रम्यत्वात् तदाह मेरुमिव । श्वसनोर्मिभिः वातसमूहैः । आधूतकाननं प्रचलितवनं मेरुम् । तथा श्वसनोर्मिभिः श्वसितकल्लोलैः आधूतानि कानि शिरांस्याननानि च यस्येति ॥५४॥

**दृष्ट्वा दयितया साकं रहीभूतं दशाननम् ।**
**नाऽत्र सीतेत्युपारंस्त दुर्मना वायुसम्भवः ॥ ५५ ॥**

दृष्ट्वेत्यादि-रहीभूतं विजनस्थं दशाननम् । 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।५।४।५१।' इति च्वौ सलोपः । दयितया साकं दृष्ट्वा नात्र सीतेति कृत्वा उपारंस्त विमना निवर्तते स्म । 'विभाषाऽकर्मकात् ।१।३।८५।' इति तङ् । वायुसंभवो वायोः सम्भवो यस्य स हनुमान् ॥ ५५ ॥

**ततः प्राकारमारोहत् क्षपाटानविबोधयन् ।**
**नाऽयोधयत् समर्थोऽपि सीतादर्शनलालसः ॥ ५६ ॥**

तत इत्यादि—तत उत्तरकालं प्राकारमारोहन् आरूढवान् । क्षपाटान् राक्षसान् अविबोधयन् अचेतयन् । 'णिचश्च ।१।३।७४।' इत्यात्मनेपदे प्राप्ते 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ।१।३।८६।' इति लटः परस्मैपदम् । बुधेरणौ सकर्मकस्य चित्तवत्कर्तृकत्वात् हनूमतश्चित्तवत्त्वात् । तत्र ह्यकर्मका ये तेषामाचित्तवत्कर्तृत्वार्थमुपादानमित्युक्तम् । तान्नायोधयत् समर्थोऽपि न संग्रामितवान् । यतः सीतादर्शनलालसः लम्पटः । 'अणावकर्मकाच्चित्तवत्कर्तृकात् ।१।३।८८।' इत्यनेन उभयत्रापि लङः परस्मैपदम् । युधेरेकस्याचित्तवत्कर्तृकत्वात् ॥५६॥

**अध्यासीद्राघवस्याऽहं नाशयेयं कथं शुचम् ।**
**वैदेह्या जनयेयं वा कथमानन्दमुत्तमम् ॥ ५७ ॥**

अध्यासीदित्यादि—राघवस्याहं कथं केन प्रकारेण शुचं शोकं नाशयेयम् । प्रशमयेयम्, कथं वा वैदेह्याः सीताया आनन्दं जनयेयमिति हनुमानध्यासीत् चिन्तितवान् । 'ध्यै चिन्तायाम्' इत्यस्य लुङि रूपम् । नशिजन्योरकर्मकत्वात् 'अणावकर्मकाच्चित्तवत्कर्तृकात् १।३।८८।' इत्यनेन लिङः परस्मैपदम्, न तु 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः १।३।८६।' इत्यनेन परस्मैपदम् । जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति जनेर्मित्संज्ञायां ह्रस्वत्वम् ॥ ५७ ॥

---

१ कम्पिताशोकोद्यानमिति भावः । 'गहनं काननं वनम् ।' इत्यमरः ।

दृष्ट्वा राघवकान्तां तां द्रावयिष्यामि राक्षसान् ।
तस्या हि दर्शनात्पूर्वं विक्रमः कार्यनाशकृत् ॥ ५८ ॥

दृष्ट्वेत्यादि—इयमसाविति राघवस्य कान्तां दृष्ट्वा द्रावयिष्यामि राक्षसान् पलाययिष्यामि । अत्र 'अणावकर्मकाच्चित्तवत्कर्तृकात् । १ । ३ । ८८ ।' इत्यनेन परस्मैपदं, न तु 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः।१।३।८६।' इत्यनेनेति बोध्यम् । तस्याकर्मकस्य चित्तवत्कर्तृकत्वात् । हि यस्मात् तस्याः सीताया दर्शनात्पूर्वं विक्रमः कार्यस्य सीतादर्शनरूपस्य नाशकृत् ॥ ५८ ॥

चिन्तयन्नित्थमुत्तुङ्गैः प्रावयन्तीं दिवं वनैः ।
अशोकवनिकामारादपश्यत् स्तवकाऽऽचिताम् ॥ ५९ ॥

चिन्तयन्नित्यादि—इत्थं पूर्वोक्तप्रकारेण चिन्तयन्नारात्समीपे अशोकवनिकामपश्यत् । उत्तुङ्गैरुच्चैर्वनैर्दिवमाकाशं प्रावयन्तीं व्याप्नुवानाम् । दिवं यावदुन्नतैर्वृक्षैः पूर्णामित्यर्थः । 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः । १ । ३ ।८६।' इति तिप् । प्रवतेरकर्मकस्याचित्तवत्कर्तृकत्वात् । अशोकवनिकायाश्चाचित्तवतीत्वात् । स्तवकाचिताम् अशोकपुष्पस्तबकैश्छन्नाम् ॥ ५९ ॥

अथ पञ्चभिः कुलकम् ।

तां प्राविशत् कपिव्याघ्रस्तरूनचलयञ्शनैः ।
अत्रासयन्वनशयान्सुप्ताञ् शाखासु पक्षिणः ॥ ६० ॥

तामित्यादि—तामशोकवनिकां कपिव्याघ्रः कपिर्व्याघ्र इव[1] शनैर्मन्दं प्राविशत् । तरून्[2] चलयन् अकम्पयन् । चलेरकर्मकत्वाच्चित्तवत्कर्तृकादणाविल्यनेन च लटः परस्मैपदं न तु 'निगरणचलनार्थेभ्यश्च ।१।३।८७।' इत्यनेनेति बोध्यम् । तद्धि तत्र सकर्मकार्थे अचित्तवत्कर्तृकार्थे चेत्युक्तम् । वनशयान् पक्षिणः शाखासु सुप्तायन् अत्रासन् । 'अणावकर्मकाच्चित्तवत्कर्तृकात् । १।३।८८।' इत्यनेन परस्मैपदम् । वने शेरत इति 'अधिकरणे शेतेः । ३ । २ । १५ ।' इत्यच् । 'शयवासवासिष्वकालात् । ६ । ३ । १८' इति सप्तम्या विभाषा अलुक् ॥ ६० ॥

अवाद्वायुः शनैर्यस्यां लतां नर्तयमानवत् ।
नाऽऽयासयन्त संत्रस्ता ऋतवोऽन्योन्यसम्पदः ॥ ६१ ॥

---

१ हनुमानित्यर्थः । उपमितसमासोऽयम् । २ तरून् वृक्षान् । 'विटपी पादपस्तरुः ।' इत्यमरः ।

अवादित्यादि—यस्यामशोकवनिकायां वायुर्वातः शनैर्मन्दमवात्[१] वाति स्म । तामाटेति वक्ष्यमाणेन संबन्धः । लतां नर्तयमानवन् नृत्यमिव कारयन् । नृतिश्चलने वर्तते । ततश्च । 'निगरणचलनार्थेभ्यश्च ।१।३।८७।' इति परस्मैपदं प्राप्तं 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ।१।३।८९।' इति प्रतिषिद्धम् । ऋतवोऽन्योन्यसंपदः परस्परस्य विभूतीः नायासयन्त नोपपीडयन्ति स्म । संत्रस्ता रावणात् । आङ्पूर्वाद्यसेः चित्तवत्कर्तृकत्वात् 'अणावकर्म्मकाच्चित्तवत्कर्तृकात् । १ ।३। ८८ ।' इति परस्मैपदं प्राप्तं 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ।१।३।८९।' इति प्रतिषिद्धम् ॥ ६१ ॥

ज्योत्स्नाऽमृतं शशी यस्यां वापीर्विकसितोत्पलाः ।
अपाययत सम्पूर्णः सदा दशमुखाऽऽज्ञया ॥ ६२ ॥

ज्योत्स्नेत्यादि—यस्यां रावणाज्ञया शशी सदा संपूर्णः सन् ज्योत्स्नामृतं वापीरपाययत[२] पायितवान् । निगरणार्थत्वात्तिपि प्राप्ते 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ।१।३।८९।' इति प्रतिषिद्धे णिचश्चेति तङ् ॥ ६२ ॥

प्रादमयन्त पुष्पेषुं यस्यां वन्द्यः समाहृताः ।
परिमोहयमाणाभी राक्षसीभिः समावृताः ॥ ६३ ॥

प्रादमयन्तेत्यादि—यस्यां बन्द्यः समाहृताः समानीताः पुष्पेषुं कामं प्रादमयन्त शमितवत्यः । तन्मतस्याचरणात् । कीदृश्यः । परिमोहयमाणाभिः व्यामोहयन्तीभिः राक्षसीभिः परिवृताः । प्रदमिपरिमुह्योः[३] 'अणावकर्म्मकाच्चित्तवत्कर्तृकात् । १ ।३।८८।' इत्यनेन प्राप्तस्य परस्मैपदस्य 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः । १ । ३ । ८९ । इति प्रतिषेधे 'णिचश्च । १ । ३ । १४ ।' इत्यात्मनेपदम् ॥ ६३ ॥

यस्यां वासयते सीतां केवलं स्म रिपुः स्मरात् ।
न त्वरोचयताऽऽत्मानं चतुरो वृद्धिमानपि ॥ ६४ ॥

यस्यामित्यादि—रिपुर्दशाननः स्मरात् कामाद्धेतोः केवलं निष्फलं यस्यां सीतां वासयते स्म वासितवान् । न त्वरोचयत आत्मानं नैवात्मानमुपरोचितवान् । चतुरोऽपि योषिदाराधनकुशलोऽपि । वृद्धिमानपि संपद्युक्तोऽपि

---

१ 'वा गतिगन्धनयोः' लुङ् । २ वापीः दीर्घिकाः । 'वापी तु दीर्घिका' इत्यमरोक्तेः । ३ प्रपूर्वाद् 'दमु उपशमे' इत्यस्य, परिपूर्वकात् 'मुह वैचित्ये' इत्यस्य चत्यर्थः ।

रोचिवास्योः 'अणावकर्मकाच्चित्तवत्कर्तृकात् । १ । ३ । ८८। इति प्राप्तस्यापि च परस्मैपदस्य 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः । १ । ३ । ८९।' इति प्रतिषेधे णिचश्चेति तङ् ॥ ६४ ॥

मन्दायमानगमनो हरितायत्तरूं कपिः ।
द्रुमैः शकशकायद्भिर्मारुतेनाऽऽट सर्वतः ॥ ६५ ॥

मन्देत्यादि---कपिः सर्वतः सर्वत्र तामाट विजहार । यत्तदोर्नित्यसंबन्धात्तामिति गम्यते । मन्दायमानगमनः मन्दीभवद्गमनः । कीदृशीम् । हरितायत्तरूं शाद्वलीभवद्वृक्षाम् । अप्राणिजातेश्चेत्यूङ् । द्रुमैरुपलक्षिताम् । कीदृशैः । शकशकायद्भिः शकस्वभावैः शकीभवद्भिः । केन मारुतेन । अत्रामन्दं मन्दं भवति अहरिता हरिता भवन्तीति लोहितादित्वात् क्यप् । अशकाः शका भवन्तीति वाक्ये 'अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् ।५।४।५७।' इति डाच् । तस्मिन्विषयभूते 'डाचि बहुलं द्वे भवतः ।' 'नित्यमाम्रेडिते डाचीति वक्तव्याम्' इति पररूपत्वम् । डाजन्तात् शकशकाशब्दात् क्यप् । 'वा क्यषः । १ । ३ । ९०।' इति परस्मैपदम्, आत्मनेपदं च ॥ ६५ ॥

अस्यन्दन्निन्दुमणयो व्यरुचन् कुमुदाऽऽकराः ।
अलोठिपत वातेन प्रकीर्णाः स्तबकोच्चयाः ॥ ६६ ॥

अस्यन्दन्नित्यादि---चन्द्रोदयादिन्दुमणयः[१] अस्यन्दन् स्यन्दन्ते स्म । तामाटेति योज्यम् । व्यरुचन् कुमुदाकराः कैरववनानि विराजितवन्तः । स्तबकोच्चयाः गुच्छराशयः । वातेन प्रकीर्णाः इतस्ततो विक्षिप्ताः सन्तः अलोठिपत लुठन्ते स्म । सर्वत्र 'द्युद्भ्यो लुङि ।१।३।९१।' इति विभाषा परस्मैपदम् । द्युतादयश्च कृपूपर्यन्ताः ॥ ६६ ॥

सीताऽन्तिके विवृत्सन्तं वर्त्स्यत्सिद्धिं प्लवङ्गमम् ।
पतत्रिणः शुभा मन्द्रमानुवानास्त्वजिह्लदन् ॥ ६७ ॥

सीतेत्यादि---सीतायाः अन्तिके समीपे विवृत्सन्तं वर्तितुमिच्छन्तं प्लवङ्गमं[२] वर्त्स्यत्सिद्धिं वर्त्स्यन्ती भविष्यन्ती सिद्धिः सीतादर्शनलक्षणा यस्य । 'वृद्भ्यः स्यसनोः ।१।३।९२।' इति विभाषा तिप् । तं पतत्रिणः पक्षिणः शुभाः

---

१ चन्द्रकान्तापरनामानि रत्नानीति भावः । २ प्लवङ्गमं वानरम्, हनुमन्तमित्यर्थः ।

प्रशस्ता अजिह्लदन् सुखयन्ति स्म । णिचि लुङि चङि रूपम् । कीदृशाः मन्द्रं गम्भीरं मधुरमानुवानाः वाश्यमानाः । 'आङि नुप्रच्छ्योरुपसंख्यानम्' इति तङ् । 'णु स्तुतौ' इत्यादादिकस्य परस्मैपदित्वात् ॥ ६७ ॥

वर्तिष्यमाणमात्मानं सीता पत्युरिवाऽन्तिके ।
उदपश्यत्तदा तथ्यैर्निमित्तैरिष्टदर्शनैः ॥ ६८ ॥

वर्तिष्यमाणमित्यादि—सीताऽपि तदा तस्मिन् काले पत्यू रामस्यान्तिके आत्मानं वर्तिष्यमाणमिव उदपश्यत् उत्प्रेक्षते स्म[1] । 'वृद्भ्यः स्यसनोः ।।१।३।९२।' इति विभाषावचनात्तङ् । निमित्तैश्चक्षुःस्पन्दनादिभिः । तथ्यैर[2]विसंवादिभिः इष्टदर्शनैः इष्टार्थप्रकाशकैः । दर्शनमिति 'कृत्यल्युटो बहुलम् ।।३।३।११३।' इति कर्तरि ल्युट् ॥ ६८ ॥

निरवर्त्स्यन्न चेद्वार्ता सीताया वितथैव नः ।
अकल्प्स्यदुद्यतिः सर्वा हनूमानित्यचिन्तयत् ॥ ६९ ॥
इत्यात्मनेपदाधिकारः ।

निरवर्त्स्यन्नित्यादि—चेदिति यद्यर्थे । यदि सीताया वार्ता[3] न निरवर्त्स्यत् निवृत्तिं नायास्यत्, तदा वृथैव निष्फलैव नोऽस्माकमुद्यतिः सर्वा । अयमुद्यमः समुद्रलङ्घनादिकः । अकल्प्स्यत् अभविष्यत् । इत्येवं हनूमानचिन्तयत् । क्रियातिपत्तौ लृङ् । तत्र निरवर्त्स्यदिति 'वृद्भ्यः स्यसनोः।१।३।९२।' इति विभाषापरस्मैपदम् । अकल्प्स्यदिति 'लुटि च क्लृपः ।१।३।९३।' इति चकारात् स्यसनोरपि भवति विभाषापरस्मैपदम् । उद्यतिरिति यमेः'स्त्रियां क्तिन् ।३।३।९४।' इति क्तिनि 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ।६।४।३७।' इत्यनेन अनुनासिकलोपः ॥ ६९ ॥ इत्यात्मनेपदाधिकारः ॥

इतः प्रभृति[4] कारकमधिकृत्याह—

अथ त्रिभिर्विशेषकम् ।

वृक्षाद्वृक्षं परिक्रामन्रावणाद्बिभ्यतीं भृशम् ।
शत्रोस्त्राणमपश्यन्तीमदृश्यो जनकाऽऽत्मजाम् ॥ ७० ॥

---

१ सम्भावयति स्मेवेति भावः । २ सत्यैरित्यर्थः । ३ वार्ता वृत्तान्तः । 'वार्ता प्रवृत्तिर्वृत्तान्त' इत्यमरः । ४ इदमारभ्येत्यर्थकमव्ययम् 'कार्त्तिक्याः प्रभृति' इति भाष्योक्तयैतद्योगे पञ्चमी च ।

वृक्षादित्यादि—तां जनकात्मजां सीतां स कपिकुञ्जरोऽपश्यदिति वक्ष्यमाणेन संबन्धः । वृक्षात् वृक्षं परिक्रामन् गच्छन् । 'ध्रुवमपायेऽपादानम् ।१।४।२४।' इत्यपादानसंज्ञायां पञ्चमी । रावणात् बिभ्यतीं भृशं त्रस्यन्तीम् अत्यर्थं शत्रो रावणाद्रक्षामपश्यन्तीं यतो भयं ततः कुतो रक्षेति 'भीत्रार्थानां भयहेतुः। १।४।२५।'इत्यपादानसंज्ञायां पञ्चमी । अदृश्यः प्रच्छन्नो भूत्वा ।'ऋदुपधाच्चाक्लृपिचृतेः ।३।१।११० ।' इति क्यप् ।। ७० ।।

तां पराजयमानां स प्रीते रक्ष्यां दशाऽऽननात् ।
अन्तर्दधानां रक्षोभ्यो मलिनां म्लानमूर्धजाम् ।। ७१ ।।

तामित्यादि—प्रीतेः रावणसंबन्धिन्याः पराजयमानां विमुखीभवन्तीम् । 'पराजेरसोढः ।१।४।२६ ।' इत्यपादानत्वम् । असोढोऽर्थः प्रीतिः । रक्ष्यां दशाननात् रावणविषये स्वयं निवार्यप्रसराम् । 'वारणार्थानामीप्सितः ।१।४। २७।' इत्यपादानत्वम् । प्रवृत्तिविघातलक्षणया रक्षणक्रियया आत्मसंबन्धिन्या दशाननस्य व्याप्तुमभिप्रेतत्वात्, अन्तर्दधानां रक्षोभ्यः मा मां रक्षांसि द्राक्षुरिति । ततश्च 'अन्तर्धौ येनादर्शनमिच्छति ।१।४।२८।' इत्यपादानसंज्ञा । अन्तर्धिनिमित्तं हि रक्षोभिरात्मनो दर्शनस्यानीप्सितत्वात् । मलिनां शरीरेण म्लानमूर्धजां मलिनकेशां बद्धवेणीत्वात् ।। ७१ ।।

रामादधीतसंदेशो वायोर्जातश्च्युतस्मिताम् ।
प्रभवन्तीमिवादित्यादपश्यत्कपिकुञ्जरः ।। ७२ ।।

रामादित्यादि—सत्कृत्य अधीतसंदेशो गृहीतसंदेशः कपिकुञ्जरः। 'आख्यातोपयोगे ।१।४।२९।' इत्यपादानसंज्ञा । रामस्याख्यातृत्वात् । सावधानतया संदेशग्रहणात् नियमपूर्वकविद्यावत् संदेशग्रहणम् । वायोर्जात इति 'जनिकर्तुः प्रकृतिः ।१।४।३०।' इत्यपादानसंज्ञा । जन्यर्थस्य जन्मनः कर्त्ता हनुमान् तस्य वायुः प्रकृतिः कारणम् । च्युतस्मितां शोकाक्रान्तत्वात् । प्रभवन्तीमिवादित्यात् ।'भुवः प्रभवः ।१।४।३१।' इत्यनेन भवत्यर्थस्य सीतायाः कर्तृभूतायाः प्रथमत उपलभ्यमानत्वात् । अतः प्रभव आदित्यः तस्यास्तेजस्वित्वात् ।। ७२।।

रोचमानः कुदृष्टिभ्यो रक्षोभ्यः प्रत्तवाङ्श्रियम् ।
श्लाघमानः परस्त्रीभ्यस्तत्राऽऽगाद्राक्षसाऽधिपः ।। ७३ ।।

**रोचमान इत्यादि**—तत्र तस्यामशोकवनिकायां राक्षसाधिपो रावणः आगात् आगतवान्। रोचमानः कुदृष्टिभ्यः त्यक्तत्रयीधर्मत्वात्। ये कुदृष्टयः कुबुद्धयः तान् स्वविषये स्पृहावतः कारयन्नित्यर्थः। 'रुच्यर्थानां प्रीयमाणः ।१।४। ३३।' इति सम्प्रदानसंज्ञायां चतुर्थी। रुचेरभिलाषस्य तत्रावस्थानात्। कुदृष्टयः प्रीयमाणाः। रक्षोभ्यः श्रियं विभूतिं प्रत्तवान्। 'कर्मणा यमभिप्रैति स सम्प्रदानम् ।१।४।३२।' इति सम्प्रदानम्। ददातिक्रियया राक्षसानामभिप्रीयमाणत्वात्। श्लाघमानः परस्त्रीभ्यः युष्मद्विषयेऽस्माकं श्लाघेति परकलत्राणि ज्ञापयितुमेषयन्। 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।१।४।३४।' इति सम्प्रदानत्वम्। श्लाघया बहुमानेन ज्ञापयितुमिष्यमाणत्वात्तासाम् ॥ ७३ ॥

**अशप्त निह्नुवानोऽसौ सीतायै स्मरमोहितः ।**
**धारयन्निव चैतस्यै वसूनि प्रत्यपद्यत ॥ ७४ ॥**

**अशप्तेत्यादि**—सीतायै निह्नुवानः क्रौर्यादिकं न मेऽस्तीति सीतां ज्ञापयितुमेषयन्नित्यर्थः। तस्यै सीतायै अशपत्। शपथं सीतां ज्ञापयितुमैषदित्यर्थः। किमित्येवमाह। स्मरमोहितः। अत्र शपथापह्नुतिक्रियया सीतामाज्ञापयितुमिष्यमाणत्वात् पूर्ववत् सम्प्रदानसंज्ञा। किं चास्यै सीतायै स्वामिनीभूतायै वसूनि द्रव्याणि प्रत्यपद्यत अङ्गीकृतवान्। धारयन्निव गृहीतवित्त इव। अत्र 'धारेरुत्तमर्णः ।१।४।३५।' इति सीतायाः कदाचिदुत्तमर्णया तुल्यत्वात् ॥७४॥

**तस्यै स्पृहयमाणोऽसौ बहु प्रियमभाषत ।**
**सानुनीतिश्च सीतायै नाक्रुध्यन्नाप्यसूयत॥ ७५ ॥**

**तस्यायित्यादि**—असौ राक्षसाधिपः स्पृहयमाणः सीतामाप्तुमिच्छन् बहुप्रियमभाषत वक्ष्यमाणम्। 'स्पृहेरीप्सितः । १ । ४ ३६ ।' इति स्पृहयतेः स्वार्थिकण्यन्तस्य प्रयोगे सीताया ईप्स्यमानत्वात्। सानुनीतिश्च सानुनयः सीतायै नाक्रुध्यत् तां प्रति कोपं न कृतवान्। नाप्यसूयत दोषाविष्करणलक्षणामसूयां न कृतवान्। क्रुध्यतिसूयत्योर्दैवादिकयोरुदात्तेनङितोर्लङि प्रयोगे 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः । १ । ४ । ३७ ।' इति सम्प्रदानम् ॥ ७५ ॥

**संक्रुध्यसि मृषा किं त्वं दिदृक्षुं मां मृगेक्षणे !**
**ईक्षितव्यं परस्त्रीभ्यः स्वधर्मो रक्षसामयम् ॥ ७६ ॥**

---

१ त्रयीति–पदमृग्यजुः सामाख्यवेदत्रयपरम्। तथा च वैदिकमार्गतो विमुखत्वादित्यर्थः।

संक्रुध्यसीत्यादि---किं त्वं शुभाशुभे दिदृक्षु द्रष्टुमिच्छुं मां हे मृगेक्षणे ! संक्रुध्यसि । 'क्रुधद्रुहोरुपसृष्टयोः कर्म।१।४।३८।' इति कर्मसंज्ञा । क्रुधेरुपसर्गेण युक्तत्वात् । कुतस्ते परिज्ञानं यत्परस्त्रीषु शुभाशुभं निरूपयसि अन्यत्र दुष्टाशयत्वात् । अथ कथं मृषा संक्रुध्यामीति चेदाह---ईक्षितव्यं परस्त्रीभ्यः का शुभा न शुभेति यदीक्षितव्यमीक्षणीयं तदयं स्वधर्मो रक्षसाम् । 'राधीक्ष्योर्यस्य विप्रश्नः । १ । ४ । ३९ ।' इति सम्प्रदानसञ्ज्ञा । यतः स्त्रीविषये विविधस्य प्रश्नस्य क्रियमाणत्वात् ॥ ७६ ॥

**शृण्वद्भ्यः प्रतिशृण्वन्ति मध्यमा भीरु नोत्तमाः ।**
**गृणद्भ्योऽनुगृणन्त्यन्येऽकृतार्था नैव मद्विधाः ॥ ७७ ॥**

शृण्वद्भ्य इत्यादि---अनेनात्मनः प्रभावं दर्शयति । शृण्वद्भ्यः प्रार्थयमानेभ्यः स्वामिन्निदं क्रियतामिति मध्यमाः प्रभवः प्रतिशृण्वन्ति ओमित्युपगच्छन्ति ।हे भीरु[1] ! नोत्तमा मादृशाः । ते हि स्वातन्त्र्यात्स्वयमेव हितं प्रतिपद्यन्त इति भावः । 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ।१।४।४०।' इति सम्प्रदानसंज्ञा। पूर्वस्याः प्रार्थनक्रियायाः प्रार्थयितुः कर्तृत्वात् । अन्ये प्रभवोऽकृतार्थाः अलब्धलाभाः गृणद्भ्यः अनुग्राह्यस्य भृत्यस्य कस्याचिन्न स्तुतिं कुर्वद्भ्यो मन्त्रिभ्यःअनुगृणन्ति तान् प्रोत्साहयन्ति । अनुगृणीत अनुगृणीतेति ममानुगतो भवतीति नैव मद्विधा अनुगृणन्ति कृतार्थत्वात् । 'गृ शब्दे' इत्यस्य प्रयोगे 'अनुप्रतिगृणश्च । १।४।४१।' इति सम्प्रदानसंज्ञा । गृणातेः स्तुतिक्रियापेक्षया कर्तृत्वात् ॥ ७७॥

**इच्छ स्नेहेन दीव्यन्ती विषयान्भुवनेश्वरम् ।**
**संभोगाय परिक्रीतः कर्तास्मि तव नाऽप्रियम् ॥ ७८ ॥**

इच्छेत्यादि---ईदृशं पूजितं भुवनेश्वरं त्रिलोकविजयिनमिच्छ अङ्गीकुरु । आत्मानमुद्दिश्य स्नेहेन प्रेम्णा । 'साधकतमं करणम् ।१।४।४२।' इति करणसंज्ञा । दीव्यन्ती क्रीडन्ती विषयान् शब्दादिभिरित्यर्थः । 'दिवः कर्म च ।१। ४।४३।' इति करणसंज्ञापवादात् कर्मसंज्ञा । संभोगाय परिक्रीतः त्वद्विषयभोगेन परिक्रीत इत्यर्थः । 'परिक्रयणे सम्प्रदानमन्यतरस्याम् ।१।४।४४।' इति सम्प्रदानत्वम् । तव नाप्रियं कर्तास्मि न करिष्यामि ॥ ७८ ॥

**आस्स्व साकं मया सौधे माऽधिष्ठा निर्जनं वनम् ।**
**माऽधिवात्सीर्भुवं शय्यामधिशेष्व स्मरोत्सुका ॥ ७९ ॥**

---

[1] हे वामलोचने इत्यर्थः । 'भीरुरार्ते त्रिलिङ्गः स्याद्वरयोषिति योषिति ।' इति मेदिनी ।

आस्स्वेत्यादि---मया साकं सार्धं सौधे धवलगृहे आस्स्व तिष्ठ । आसेर्लोटि रूपम् । 'आधारोऽधिकरणम् ।१।४।४५।' इत्यधिकरणसंज्ञायां सप्तमी । माऽधिष्ठा निर्जनं वनम् । 'अधिशीङ्स्थासां कर्म ।१।४।४६।' इत्यधिकरणे कर्मसंज्ञा । लुङि रूपम् । माऽधिवात्सीः भुवं भूमौ मा शयिष्ठाः । माङि लुङि रूपम् । 'उपान्वध्याङ्वसः ।१।४।४८।' इति अधिकरणे कर्मसंज्ञा । किंतु शय्यामधिशेष्व । शीङो लोटि रूपम् । 'अधिशीङ्स्थासां कर्म ।१।४।४६।' इति कर्मसंज्ञा । स्मरोत्सुका कामार्थिनी ॥ ७९ ॥

अभिन्यविक्षथास्त्वं मे यथैवाऽव्याहता मनः ।
तवाऽप्यध्यावसन्तं मां मा रौत्सीर्हृदयं तथा ॥ ८० ॥

अभीत्यादि---यथैव त्वमव्याहता अनिवारिता सती मे मम मनः अभिन्यविक्षथाः आभिनिविष्टासि । लुङि रूपम् । 'नेर्विशः ।१।३।१७।' इति तङ् । 'अभिनिविशश्च । १ । ४ । ४७ ।' इत्यधिकरणे मनसः कर्मसंज्ञा । तथा त्वमपि त्वद्धृदयमध्यावसन्तं मां मा रौत्सीः मा निवारय । रुधेर्लुङि रूपम् । 'उपान्वध्याङ्वसः । १ । ४ । ४८ ।' इति हृदयस्य कर्मसंज्ञा ॥ ८० ॥

माऽवमंस्था नमस्यन्तमकार्यज्ञे जगत्पतिम् ।
संदृष्टे मयि काकुत्स्थमधन्यं कामयेत का ॥ ८१ ॥

मेत्यादि---हे अकार्यज्ञे ! अविशेषज्ञे ! मां जगत्पतिं नमस्यन्तं माऽवमंस्थाः। लुङि रूपम् । 'कर्तुरीप्सिततमं कर्म ।१।४।४९। इति कर्मसंज्ञा । अवमानक्रियया कर्तृसंबन्धिन्या जगत्पतेराप्तुमिष्टत्वात् । संदृष्टे मयि काकुत्स्थमधन्यं मन्दभाग्यं का कामयेत का इच्छेत् । नैवेत्यर्थः । 'तथायुक्तं चानीप्सितम् ।१।४।५०।'इति कर्मसंज्ञा । येनैव प्रकारेण कर्तुरीप्सिततमं क्रियया युक्तं तेनैवेप्सितादन्यस्य रामस्य प्रयुज्यमानत्वात् ॥ ८१ ॥

यः पयो दोग्धि पाषाणं स रामाद्भूतिमाप्नुयात् ।
रावणं गमय प्रीतिं बोधयन्तं हिताऽहितम् ॥ ८२ ॥

य इत्यादि---यथा पाषाणात् पयो न संभवति तथा रामादपि विभूतिरिति नैराश्यं दर्शयति । पयसः पूर्वेणैव कर्मसंज्ञा । पाषाणस्य 'अकथितं च । १।४।५१।' इत्यनेन कर्मसंज्ञा । रावणं गमय प्रीतिं भवत्या सह प्रीतिं गच्छन्तं गमय प्रीतिम्। स्वयमेव हिताहितं भवतीं बुध्यमानां बोधयन्तम् ।'गतिबुद्धिप्रत्यव-

---

१ विभूतिरैश्वर्यम्, 'विभूतिर्भूतिरैश्वर्यम्' इत्यमरः ।

सानार्थशब्दकर्म्माकर्म्मकाणामणिकर्त्ता स णौ ।१।४।५२।' इति कर्मसंज्ञा । गतिबुद्धयोरण्यन्तावस्थायां तयोः कर्तृत्वात् ॥ ८२ ॥

**प्रीतोऽहं भोजयिष्यामि भवतीं भुवनत्रयम् ।**
**किं विलापयसेऽत्यर्थं पार्श्वे शायय रावणम् ॥ ८३ ॥**

प्रीत इत्यादि--अहं प्रीतः सन् भुवनत्रयं तत्समुत्थं. भोज्यं भोक्तुं योग्यं भवतीं भोजयिष्यामि । प्रत्यवसानार्थत्वात्कर्मसंज्ञा । प्रत्यवसानमभ्यवहारः । अकर्त्रभिप्राये 'णिचश्च । १ । ३ । ७४ ।' इत्यात्मनेपदं न भवति । विलपन्तं विविधं भाषमाणं किं विलापयसेऽत्यर्थं नाहं त्वामिच्छामीति ब्रुवाणा । अत्र शब्दकर्मकत्वात् कर्मसंज्ञा । कर्त्रभिप्राये णिचश्चेत्यात्मनेपदम् । तस्मादिदं प्रार्थये पार्श्वे रावणं शायय । अत्राकर्मकत्वात्कर्मसंज्ञा ॥ ८३ ॥

**आज्ञां कारय रक्षोभिर्मां प्रियाण्युपहारय ।**
**कः शक्रेण कृतं नेच्छेदधिमूर्धानमञ्जलिम् ॥ ८४ ॥**

## इति कारकाधिकारः ।

आज्ञामित्यादि–रक्षांसि त्वदाज्ञां कुर्वन्त्येव । कारय प्रियाणि च त्वत्सम्बन्धीनि मामुपहरन्तमुपहारय उत्पादय । 'हृक्रोरन्यतरस्याम् । १ । ४ । ५३ ।' इति कर्मसंज्ञा । शक्रेण[1] कृतं विरचितं अञ्जलिमधिमूर्धानं अधिगतः प्राप्तो मूर्धा येनेति । को नेच्छेत् 'स्वतन्त्रः कर्त्ता । १ । ४ । ५४ ।' इति कर्तृसंज्ञा । शक्रेण प्रणतोऽहमित्यर्थः । प्रयोज्यकर्ता नोदाहृतोऽण्यन्तावस्थायामुदाहृतत्वात् ॥८४ ॥

इति कारकाधिकारः ॥

इतः प्रभृति कर्मप्रवचनीयमधिकृत्याह--

**वचनं रक्षसां पत्युरनु क्रुद्धा पतिप्रिया ।**
**पापानुवसितं सीता रावणं प्राब्रवीद्वचः ॥ ८५ ॥**

वचनमित्यादि—रक्षसां पत्यू रावणस्य वचनमनु लक्ष्यीकृत्य । 'अनुर्लक्षणे । १ । ४ । ८४ ।' इति कर्मप्रवचनीयसंज्ञायां द्वितीया । क्रुद्धा सती सीता । पतिप्रिया[2] पतिः प्रियो यस्या इति । रावणं प्राब्रवीद्वचो वक्ष्यमाणम् । पापानुवसितं पापेन संयुक्तम् । 'तृतीयार्थे । १ । ४ । ८५ ।' इत्यनेन कर्मप्रवचनीयसंज्ञायां द्वितीया । पापमनुवसित इति । द्वितीयेति योगविभागात्समासः । सुप्सुपेति वा ॥ ८५ ॥

---

१ शक्रेणेन्द्रेणेत्यर्थः ।'जिष्णुर्लेखर्षभः शक्रः' इत्यमरः । २ पतिरेव प्रियो यस्या इति पतिप्रिया पतिव्रतेत्यर्थः ।

न भवाननु रामं चेदुप शूरेषु वा ततः।
अपवाह्यच्छलाद्वीरौ किमर्थं मामिहाऽहरः॥ ८६॥

नेत्यादि–यदि भवाननु रामम् रामान्न हीन इत्यर्थः। 'हीने। १।४।८६।' इत्यनेन कर्मप्रवचनीयसंज्ञा। अनुशब्दश्च स्वहीनार्थद्योतकः। हीनश्चोत्कृष्टापेक्षः। उपशूरेषु वा शूरेभ्यो वा यद्यधिको भवान्। 'उपोऽधिके च। १। ४। ८७।' इति चकाराद्धीने उपशब्दस्य कर्मप्रवचनीयसंज्ञा। 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी। २। ३। ९।' इत्यनेन सप्तमी। उपशब्दस्याधिकद्योतनात्। किमर्थं कनकमृगच्छलेन। वीरौ रामलक्ष्मणौ अपवाह्य अन्यतो नीत्वा। मामिहाहरः लङ्कामानीतवान्॥ ८६॥

उप शूरं न ते वृत्तं कथं रात्रिचराऽधम।
यत्संप्रत्यप लोकेभ्यो लङ्कायां वसतिर्भयात्॥ ८७॥

उपेत्यादि—हे रात्रिचराधम! कथं ते वृत्तं चरितं नोप शूरं शूरेभ्यो न हीनम्। 'उपोऽधिके च। १। ४। ८७।' इति चकाराद्धीने उपशब्दस्य कर्मप्रवचनीयसंज्ञा। यद्यस्मात् संप्रत्यधुना भयाल्लङ्कायां जलपर्वतदुर्गायां वसतिः। वसेरतिः 'वहिवस्यर्तिभ्यश्चित्' इत्यौणादिकः। अप लोकेभ्यो लोकान् वर्जयित्वा। 'अपपरी वर्जने। १। ४। ८८।' इति कर्मप्रवचनीयसंज्ञायाम्, पञ्चम्यपाङ्परिभिः। २। ३। १०।' इति पञ्चमी॥ ८७॥

आ रामदर्शनात्पाप विद्योतस्व स्त्रियः प्रति।
सद्वृत्ताननु दुर्वृत्तः परस्त्रीं जातमन्मथः॥ ८८॥

आ रामेत्यादि—हे पाप! आ रामदर्शनात् रामदर्शनं यावत्। 'आङ् मर्यादावचने।१।४।८९।' इति पूर्ववत्पञ्चमी। स्त्रियः प्रति योषितो लक्ष्यीकृत्य। विद्योतस्व स्थिरो भव। स्त्रिय इति। 'वाऽमशसोः।६।४।८०।' इति इयङ्। 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः। १। ४। ९०।' इति कर्मप्रवचनीयत्वम्। सद्वृत्ताननु दुर्वृत्तः सदाचारिणामुपरि दुर्वृत्त इत्यर्थः। इत्थंभूताख्यानेऽनोः कर्मप्रवचनीयत्वम्। परस्त्रीं जातमन्मथः। अत्र वीप्सायां कर्मप्रवचनीयत्वम्॥ ८८॥

अभिद्योतिष्यते रामो भवन्तमचिरादिह।
उद्गूर्णबाणः संग्रामे यो नारायणतः प्रति॥ ८९॥

अभीत्यादि—भवन्तमभि भवन्तं लक्ष्यीकृत्य। 'अभिरभागे। १।४।९१।' इति कर्मप्रवचनीयत्वम्। अचिरादिह लङ्कायां रामो द्योतिष्यते असह्यतेजाः

भविष्यति । य उद्गूर्णबाणः संग्रामे नारायणतः प्रति तेन तुल्यः । 'प्रतिः प्रतिनिधिप्रतिदानयोः ।१।४।९२।' इति प्रतिनिधौ कर्मप्रवचनीयत्वम् । 'प्रतिनिधिप्रतिदाने च यस्मात् । २ । ३ । ११ ।' इति पञ्चमी । प्रतियोगे पञ्चम्यास्तसिः । मुख्यसदृशः प्रतिनिधिः ॥ ८९ ॥

**कुतोऽधि यास्यसि क्रूर निहतस्तेन पत्रिभिः ।**
**न सूक्तं भवताऽत्युग्रमतिरामं मदोद्धत ॥ ९० ॥**

कुत इत्यादि—हे क्रूर ! तेन रामेण उद्गूर्णबाणेन पत्रिभिः शरैः निहतः सन् कुतोऽधियास्यसि केन प्रकारेण निःसरिष्यासि । 'अधिपरी अनर्थकौ । १ । ४ । ९३ ।' इति अधेः कर्मप्रवचनीयसंज्ञा । धात्वर्थव्यतिरेकेणार्थस्यानभिधानादनर्थकत्वम् । संज्ञा च गत्युपसर्गसंज्ञाबाधनार्था । तेन 'तिङि चोदात्तवति ।८।१।७१।' इति निघाताभावो द्रष्टव्यः । पञ्चमी च 'प्रश्नाख्यानयोः' इत्युपसंख्यानाद्भवति । किमिति हनिष्यतीति चेन्—यतो भवता न सूक्तं प्रशस्तमुक्तम् । 'सुः पूजायाम् । १।४।९४।' इति कर्मप्रवचनीयत्वम् । 'गतिरनन्तरः ।६।२।४९।' इति स्वराभावः । अत्युग्रमतिरौद्रम् । अतिरामं राममधिक्षिप्य । काकुत्स्थमधन्यमिति । 'अतिरतिक्रमणे च । १।४।९५।' इति कर्मप्रवचनीयत्वम् । चकारात्पूजायां च तत्र धाष्युक्तमिति प्रयोगः । हे मदोद्धत ! ॥ ९० ॥

**परिशेषं न नामाऽपि स्थापयिष्यति ते विभुः ।**
**अपि स्थाणुं जयेद्रामो भवतो ग्रहणं कियत् ॥ ९१ ॥**

परीत्यादि—रामो विभुः प्रभुः ते परिशेषं नामापि संज्ञामपि न स्थापयिष्यति, किमु देहम् । 'अपिः पदार्थसम्भावनाऽन्ववसर्गगर्हासमुच्चयेषु ।१।४।७६।' इति पदार्थे कर्मप्रवचनीयसंज्ञा । पदस्य देहस्याप्रयुज्यमानस्यार्थे अपिशब्दो वर्तते । अपि स्थाणुं जयेद्रामो यमाराध्याधिपत्यं प्राप्तवानसि तमपि स्थाणुं महादेवं जेतुं संभाव्यते भवतो ग्रहणं कियत् । यस्त्वेवं न भवति । अत्र संभावनायां कर्मप्रवचनीयत्वम् । संभावने लिङ् । उपसर्गबाधनत्वात्संज्ञायाः 'उपसर्गात्सुनोति-।८।३।६५ ।' इत्यादिना षत्वं न भवति ॥ ९१ ॥

**अपि स्तुह्यपि सेधाऽस्मांस्तथ्यमुक्तं नराऽशन ।**
**अपि सिञ्चेः कृशानौ त्वं दर्पं मय्यपि योऽभिकः ॥ ९२ ॥**

---

१ 'पत्रिणौ शरपक्षिणौ ।' इत्यमरः ।

अपीत्यादि—हे नराशन ! मया तथ्यमुक्तं यन्नामापि न स्थापयिष्यतीति । अस्मानपि स्तुहि साधूक्तमिति प्रशंस । 'सेर्ह्यपिच्च । ३।४।८७।' इति अपिति ङित्त्वाद्गुणाभावः । अपि सध निगृहाण यथेच्छं तथा क्रियताम् । मया तु सत्यमेवोक्तमिति भावः । अत्रान्ववसर्गे कामचारानुज्ञाने कर्मप्रवचनीयसंज्ञा । किंच कृशानावग्नौ दर्पम् अपि सिञ्चेः क्षरेस्त्वम् । अत्र गर्हायां लिङि रूपम् । योऽयं मय्यपि मद्विपयेऽपि अभिकः कामयिता । 'अनुकाभिकाभीकः कमिता ५।२।७४।' इति निपातितः । उपसर्गसंज्ञाबाधनार्थत्वात् स्तौतिसेधिसिचां पत्वं न भवति ॥ ९२ ॥

**अधिरामे पराक्रान्तमधिकर्ता स ते क्षयम् ।**
**इत्युक्त्वा मैथिली तूष्णीमासांचक्रे दशाऽननम् ॥ ९३ ॥**

अधीत्यादि—पराक्रान्तस्य शौर्यस्य राम ईशितेत्यस्मिन्नर्थे अधिरामे पराक्रान्तम् । 'नपुंसके भावे क्तः ।३।३।११४।' । इति क्तः । 'अधिरीश्वरे १।४।९७।' इति स्वस्वामिभावसंबन्धे अधेः कर्मप्रवचनीयसंज्ञा । 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी । २ । ३ । ९ ।' इति सप्तमी । यश्चैवं स रामस्ते क्षयमधिकर्ता करिष्यति । अत्र कर्मण्येव द्वितीया । न तु 'कर्मप्रवचनीययुक्ते द्वितीया ।२।३।८।' इत्यनेन । 'विभाषा कृञि ।१।४।९८।' इति या संज्ञा तस्या गत्युपसर्गसंज्ञाबाधनार्थत्वात् । संज्ञापक्षे 'तिङि चोदात्तवति ।८।१।७१।' इति निघाताभावो द्रष्टव्य इति । एवमुक्त्वा दशाननं मैथिली तूष्णीमासाञ्चक्रे तूष्णीं स्थितवती । 'आस उपवेशने' लिट् ॥ ९३ ॥

इति कर्मप्रवचनीयाधिकारः ।

इतः प्रभृति 'अनभिहिते' इत्यधिकृत्य विभक्तिविधानमाह—

**ततः खड्गं समुद्यम्य रावणः क्रूरविग्रहः ।**
**वैदेहीमन्तरा क्रुद्धः क्षणमूचे विनिश्वसन् ॥ ९४ ॥**

तत इत्यादि—ततः सीतावचनादुत्तरकालं रावणः खड्गं समुद्यम्य उत्क्षिप्य । कर्मणि द्वितीया । क्रूरविग्रहः[1] दुष्प्रेक्ष्यत्वात् । वैदेहीमन्तरा क्रुद्धः वैदेह्या वधे कुपितः । 'अन्तराऽन्तरेण युक्ते ।२।३।४।' इति षष्ठ्यपवादाद्द्वितीया । अन्तराशब्दो मध्यमाधेयप्रधानमाचष्टे, आधेयश्चात्र वधः ।

---

१ भयङ्कराकार इत्यर्थः । क्रूरो भयावहो विग्रहः शरीरं स्वरूपमिति यावत्, यस्य सः । 'शरीरं वर्ष्म विग्रहः ।' इत्यमरः ।

क्षणमूचे उक्तवान् । उक्तिक्रियया क्षणस्य कालस्य साकल्येन संबन्धात् 'कालाध्वनोरत्यन्तसंयोगे । २ । ३ । ५ ।' इति द्वितीया । विनिश्वसन् क्रोधात् ॥ ९४ ॥

**चिरेणाऽनुगुणं प्रोक्ता प्रतिपत्तिपराङ्मुखी।**
**न मासे प्रतिपत्तासे मां चेन्मर्तासि मैथिलि ॥ ९५ ॥**

चिरेणेत्यादि—हे मैथिलि ! चिरेणापि कालेनानुगुणमनुकूलं मया प्रोक्तापि सती प्रतिपत्तिपराङ्मुखी । उक्तस्यार्थस्यानुष्ठानं प्रतिपत्तिः तस्यां पराङ्मुखी । इदानीं यदि त्वं मासे त्रिंशद्दिवसलक्षणे मां न प्रतिपत्तासे नाङ्गीकरिष्यसि तदा मर्तासि मरिष्यसि । उभयमपि लुटि रूपम् । तत्र चिरेण प्रोक्ता इति । 'अपवर्गे तृतीया ।२।३।६।' विवक्षितार्थप्रकाशनं फलं तस्य प्राप्तौ तत्क्रियापरिसमाप्तिरपवर्ग इति । मां मासे न प्रतिपत्तास इति 'सप्तमीपञ्चम्यौ कारकमध्ये ।२।३।७।' इति सप्तमी । कर्मकर्त्रोः कारकयोर्मध्यत्वात् मासस्य ॥ ९५ ॥

**प्रायुङ्क्त राक्षसीर्भीमा मन्दिराय प्रतिव्रजन्।**
**भयानि दत्त सीतायै सर्वा यूयं कृते मम ॥ ९६ ॥**

प्रायुङ्क्तेत्यादि—रावणो राक्षसीर्भीमा भयानकाः प्रायुङ्क्त समादिष्टवान् । लङि रूपम् । मन्दिराय प्रतिव्रजन् गृहाय प्रतिव्रजन् । 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि । २ ।३।१२।' इति तु चतुर्थी । कर्मप्रवचनीयादिसूत्रचतुष्टयेनोदाहृतं कर्मप्रवचनीयाधिकार एव दर्शितत्वात् । किमादिशदित्याह—सर्वा यूयं सीतायै भयानि दत्त । लोटि रूपम् । 'चतुर्थी संप्रदाने । २ । ३ ।१३।' इति चतुर्थी । संपूज्यादृत्य प्रकर्षेण दीयत इति संप्रदानम् । मम कृते मदनुग्रहनिमित्तम् ॥ ९६ ॥

**गते तस्मिन्समाजग्मुर्भयाय प्रति मैथिलीम्।**
**राक्षस्यो रावणप्रीत्यै क्रूरं चोचुरलं मुहुः ॥ ९७ ॥**

गत इत्यादि—तस्मिन् रावणे गते सति राक्षस्यः समाजग्मुः सम्भूयागताः । 'समो गम्यृच्छिभ्याम् ।१।३।२९।' इत्यात्मनेपदं न भवति, आङा व्यवहितत्वात् । मैथिलीं प्रति लक्ष्यीकृत्य भयाय सीतायै भयं दातुम् । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः ।२।३।१४।' इति चतुर्थी । ददातेः क्रियार्थोपपदस्य स्थानिनः प्रयुज्यमानस्य भयं कर्म । क्रिया चात्र समागमः । तत्रोपपदं क्रियार्थमिति क्रूरं भयानकम् । मुहुः प्रतिक्षणम् अलं पर्याप्तमूचुः

उक्तवत्यः । रावणप्रीत्यै रावणस्यैवं प्रीतिः स्यादिति । 'तुमर्थाच्च भाववचनात् ।२।३।१५।' इति चतुर्थी । क्रियायां क्रियार्थायामिति तुमुना समानार्थत्वात् ।'भाववचनाश्च।४।३।११।' इत्यनेन विहितस्य क्तिनः क्रियार्थम् । उपपदं क्रूराभिधानम् ॥ ९७ ॥

रावणाय नमस्कुर्याः स्यात्सीते स्वस्ति ते ध्रुवम् ।
अन्यथा प्रातराशाय कुर्याम त्वामलं वयम् ॥ ९८ ॥

रावणायेत्यादि—हे सीते ! रावणाय नमस्कुर्या रावणं नमस्कुरु । एवं च सति तुभ्यं स्वस्ति कल्याणं ध्रुवं स्यात् । युष्मच्छब्दस्य चतुर्थ्येकवचनान्तस्य ते आदेशः । 'नमस्कृत्वा' इति पाठान्तरम् । तत्र नमस्कृत्वा स्थितायै तुभ्यमित्यध्याहृत्य योज्यम् । अन्यथा ह्यसमानकर्तृकत्वात् क्त्वाप्रत्ययो न घटते ।'नमस्कृत्य' इति पाठान्तरम् । साक्षात्प्रभृतिषु नमःशब्दस्य विकल्पेन गतिसंज्ञा । गत्यभावपक्षे नित्यं गतिसमासाभावे ल्यबादेशः । 'नमस्पुरसोर्गत्योः । ८ । ३ । ४० ।' इति विसर्जनीयस्य सकारादेशश्च न संभवतीति । अन्यथेति यदि न नमस्कुर्याःतदा अलं प्रातराशाय प्रातर्भोजनाय त्वां कुर्याम वयमित्यूचुः । 'नित्यं ङितः ।३।४।९९।' इति सलोपः । रावणायेत्यादिषु 'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च ।२।३।१६।' इति चतुर्थी ॥ ९८ ॥

तृणाय मत्वा ताः सर्वा वदन्तीस्त्रिजटावदत् ।
आत्मानं हत दुर्वृत्ताः स्वमांसैः कुरुताशनम् ॥ ९९ ॥

तृणायेत्यादि—अथानन्तरं राक्षसीर्वदन्तीः त्रिजटा रावणस्वसा अवदत् उक्तवती । तृणाय मत्वा तृणमिव संगणय्य । 'मन्यकर्मण्यनादरे विभाषाप्राणिषु ।२।३।१७।' इति चतुर्थी । तत्र 'कुत्सितग्रहणं कर्तव्यम्' इत्युक्तम् । इह मा भूत् तृणं मत्वेति । किमवदत् आत्मानं हत मारयत । दुर्वृत्ताः दुराचाराः । स्वमांसैः कुरुताशनमिति करणे तृतीया ॥ ९९ ॥

---

१ अत्र 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी ।' इति कर्म्मणि द्वितीयैव यद्यपि प्राप्ता, तथाऽपि तस्यापवादभूतेन 'क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः। २ । ३ । १४' इति शास्त्रेण चतुर्थ्येव । तथा च 'नृसिंहाय नमस्कृत्य' इत्यादिवत् । 'रावणाय' इत्यत्रापि रावणं प्रसादयितुमित्यर्थविवक्षया तुमर्था चतुर्थी । न तु यथा व्याख्यात्रा 'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च २ । ३ । १६ ' इति शास्त्रेण चतुर्थीमभिप्रयतोक्ता चतुर्थीति बोध्यम् । २ एतस्मिन् पक्षे 'नमः' इति पृथक्, 'कृत्वा' इति च पृथक् पदम् । ३ 'नमस्कृत्य' इति पाठान्तरेऽपि तुमर्थैव चतुर्थी ।

किमर्थमेवमाहेत्याह—

**अद्य सीता मया दृष्टा सूर्यं चन्द्रमसा सह ।**
**स्वप्ने स्पृशन्ती मध्येन तनुः श्यामा सुलोचना ॥ १०० ॥**

अद्येत्यादि—स्वप्ने मया अद्य सीता दृष्टा । कर्तरि तृतीया । सूर्यं स्पृशन्ती चन्द्रमसा सह । सहयोगे 'सहयुक्तेऽप्रधाने२।३।१९।' इति तृतीया । सूर्याचन्द्रमसाविति रामलक्ष्मणाविति भावः । मध्येन तनुः तन्वी । 'इत्थंभूतलक्षणे।२।३।२१।' इति तृतीया । 'वोतो गुणवचनात्।४।१।४४।' इति ङीबभावपक्षे रूपम् । श्यामा वर्णेन । सुलोचना शोभननेत्रा ॥ १०० ॥

**तास्तया तर्जिताः सर्वा मुखैर्भीमा यथागतम् ।**
**ययुः सुषुप्सवस्तल्पं भीमैर्वचनकर्मभिः ॥ १०१ ॥**

ता इत्यादि—ता राक्षस्यस्तया त्रिजटया तर्जिता भर्त्सिताः । सुषुप्सवः स्वप्तुमिच्छवस्तल्पं[1] शयनीयं ययुर्गताः । यथागतं यतो यतस्तल्पादुत्थायागताः 'यथाऽसादृश्ये । २ । १ । ७ ।' इति वीप्सायामव्ययीभावः । मुखैर्भीमा रौद्राः मुखानां विकृतत्वात् । 'येनाङ्गविकारः ।२।३।२०।' इति तृतीया । भीमैर्वचनकर्मभिः उपलक्षिताः । इत्थंभूते तृतीया ॥ १०१ ॥

**गतासु तासु मैथिल्या संजानानोऽनिलात्मजः ।**
**आयातेन दशाऽऽस्यस्य संस्थितोऽन्तर्हितश्चिरम् ॥ १०२ ॥**

गतास्वित्यादि—तासु राक्षसीषु गतासु । अनिलात्मजो हनूमान् 'रामसंकथां प्रास्तावीत' इति वक्ष्यमाणेन संबन्धः । मैथिल्या[2] संजानानः इयं सेत्यवगच्छन् । 'संज्ञोऽन्यतरस्यां कर्मणि ।२।३।२२।' इति कर्मणि तृतीया । 'संप्रतिभ्यामनाध्याने ।१।३।४६।' इति तङ् । दशास्यस्यायातेनागमनेन हेतुना चिरमन्तर्हितो निलीनः स्थितः । 'हेतौ ।२।३।२३।' इति तृतीया ॥ १०२ ॥

**ऋणाद्बद्ध इवोन्मुक्तो वियोगेन ऋतुद्विपः ।**
**हेतोर्बोधस्य मैथिल्याः प्रास्तावीद्रामसंकथाम् ॥ १०३ ॥**

ऋणादित्यादि—ऋणाद्धेतोर्बद्धः इवोन्मुक्तो यथा स्थानान्तरं गतवान् । 'अकर्तर्यृणे पञ्चमी । २।३।२४ ।' इति पञ्चमी । ऋणस्याकर्तृहेतुत्वात् । ऋणेन बन्धित इवेति नोक्तम् । अप्रयोजनकर्तृत्वादृणस्य । उन्मुक्तः ऋतुद्विपो रावणस्य वियोगेन विश्लेषेण । 'विभाषा गुणेऽस्त्रियाम् । २ । ३ । २५ ।' इति पक्षे तृती-

---

१ 'तल्पं शय्याट्टदारेषु' इत्यमरः । २ मैथिलेशनन्दिन्या सीतयेत्यर्थः ।

थोदाहृता न पञ्चमी। वियोगस्य गुणपदार्थत्वात्। किमिति संकथां प्रास्तावीदित्याह—हेतोर्बोधस्य मैथिल्याः । एष रामदूत इति मैथिल्या बोधोऽवगमः स्यात् । 'षष्ठी हेतुप्रयोगे ।२।३।२६।' इति बोधशब्दस्य षष्ठी । प्रास्तावीदिति 'स्तुसुधूञ्भ्यः परस्मैपदेषु ।७।२।७२।' इतीट् ।'नेटि ।७।२।१४।' इति हलन्तलक्षणाया वृद्धेः प्रतिषेधः नेगन्तलक्षणायाः ॥ १०३ ॥

तं दृष्ट्वाऽचिन्तयत्सीता हेतोः कस्यैष रावणः ।
अवरुह्य तरोरारादेति वानरविग्रहः ॥ १०४ ॥

तमित्यादि—तं हनूमन्तं रामं स्तुवन्तं दृष्ट्वा सीता अचिन्तयत्। कस्य हेतोः एष रावणो वानरविग्रहः सन् ऐति आयाति। आङ्पूर्वस्येणो रूपम् । 'सर्वनाम्नस्तृतीया च ।२।३।२७।' इति षष्ठी। किंशब्दस्य सर्वनामत्वात् । आरात् अन्तिके । तरोरिति 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते । २।३।२९।' इत्याराच्छब्दयोगे पञ्चमी। अवरुह्यावतीर्येति । अवरोहणापेक्षया ह्यपादाने पञ्चमी । अपेक्षाया यौगपद्याभावात् । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति आराद्योगे न वर्तते ॥ १०४ ॥

पूर्वस्मादन्यवद्भाति भावाद्दशरथिं स्तुवन् ।
ऋते क्रौर्यात्समायातो मां विश्वासयितुं नु किम् ॥ १०५ ॥

पूर्वस्मादित्यादि—पूर्वस्माद्रावणादन्यवद्भाति ज्ञायते। अन्येन तुल्यं वर्तते इति कृत्वा अन्यशब्दयोगे पञ्चमी। यतो भावात् स्नेहाद्दाशरथिं स्तुवन् । किं नु क्रौर्यादृते क्रौर्यं वर्जयित्वा । ऋतेशब्दयोगे पञ्चमी। मां विश्वासयितुं संभावयितुं किमागत इत्यचिन्तयत् ॥ १०५ ॥

इतरो रावणादेष राघवाऽनुचरो यदि ।
सफलानि निमित्तानि प्राक्प्रभातात्ततो मम ॥ १०६ ॥

इतर इत्यादि—यदि रावणादितरः प्रतियोगी राघवानुचरः राघवार्थकारी। इतरयोगे पञ्चमी। ततो मम सफलानि स्वप्नलक्षणानि दर्शनादीनि निमित्तानि। प्राक् प्रभातात् आदित्योदयात्पूर्वस्मिन् काले। अन्यस्य हि प्रभातादुत्तरकाले सफलानि। अञ्चूत्तरपदयोगे पञ्चमी ॥ १०६ ॥

उत्तराहि वसन् रामः समुद्राद्रक्षसां पुरम् ।
अवैल्लवणतोयस्य स्थितां दक्षिणतः कथम् ॥ १०७ ॥

उत्तराहीत्यादि—रामदूतोऽयमिति न संभाव्यते । यतः समुद्रादुत्तरा या दिक् तस्यामुत्तराहि वसन् रामः।'आहि च दूरे।५।३।३७।'इत्यनुवृत्य उत्तराच्च। ५।३।३८।' इत्याहि । तत्राहिप्रत्ययान्तेन उत्तराहिशब्देन योगे समुद्रादिति पञ्चमी । लवणतोयस्य लवणसमुद्रस्य दक्षिणतो दक्षिणस्यां दिशि स्थितां रक्षसां पुरीं लङ्कां कथमवैत्[1] ज्ञातवान् । दक्षिणत इति 'दक्षिणोत्तराभ्यामतसुच् ।५।३।२८।' तदन्तेन योगे 'षष्ठ्यतसर्थप्रत्ययेन । २ । ३ । ३० ।' इति षष्ठी ॥ १०७ ॥

दण्डकान्दक्षिणेनाऽहं सरितोऽद्रीन्वनानि च ।
अतिक्रम्याऽम्बुधिं चैव पुंसामगममाहृता ॥ १०८ ॥

दण्डकानित्यादि—दण्डकानामदूरे या दक्षिणा दिक् तस्यामिति । 'एनबन्यतरस्यामदूरेऽपञ्चम्याः ।५।३।३५।' इति सप्तम्यन्तादेनप् प्रत्ययः । तदन्तेन योगे 'एनपा द्वितीया ।२।३।३१।' इति द्वितीया । दक्षिणेन दण्डकानां दक्षिणस्यां दिशि । सरितोऽद्रीन् वनानि च अम्बुधिं चातिक्रम्य पुंसामगममगम्यम् । 'ग्रहवृदृनिश्चिगमश्च ।३।३।५८।' इत्यप् । अहमाहृता आनीता । तत्कथमवैदित्यचिन्तयत् ॥ १०८ ॥

पृथङ्नभस्वतश्चण्डाद्वैनतेयेन वा विना ।
गन्तुमुत्सहते नेह कश्चित्किमुत वानरः ॥ १०९ ॥

पृथगित्यादि—नभस्वतो वातात् चण्डात् पृथक् वायुं त्यक्त्वा । वैनतेयेन वा विना गरुडं वा वर्जयित्वा ।'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् । २ । ३ । ३२ ।' इति तृतीयापञ्चम्यौ । इह लङ्कायां कश्चित् गन्तुं नोत्सहते किमुत वानरः ॥ १०९ ॥

इति चिन्तावतीं कृच्छ्रात्समासाद्य कपिद्विपः ।
मुक्तां स्तोकेन रक्षोभिः प्रोचेऽहं रामकिङ्करः ॥ ११० ॥

इतीत्यादि—एवमुक्तेन प्रकारेण चिन्तावतीं कपिद्विपो हनूमान् । कृच्छ्रात्समासाद्य कथमप्युपगम्य । अहं रामकिङ्करः रामप्रेषणकर इति प्रोचे । मुक्तां स्तोकेनाल्पेन रक्षोभिः कर्तृभिः । 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ।२।३।३३।' इति तृतीयापञ्चम्यौ । कृच्छ्रस्तोकयोरसत्त्ववचनयोः करणत्वात् ॥ ११० ॥

---

[1] अवोपसर्गपूर्वकस्येणो लङि रूपम् ।

यदि त्वं रामकिङ्करः क्वासावित्याह—

**विप्रकृष्टं महेन्द्रस्य न दूरं विन्ध्यपर्वतात् ।**
**नाऽनभ्याशे समुद्रस्य तव माल्यवति प्रियः ॥ १११ ॥**

विप्रेत्यादि—माल्यवति पर्वते तव प्रियो रामः महेन्द्रस्य पर्वतस्य विप्रकृष्टं दूरम् । विन्ध्यपर्वताच्च न दूरम् । 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्।२।३।३४।' इति षष्ठीपञ्चम्यौ । महेन्द्रपर्वतविन्ध्ययोर्दूरविप्रकृष्टयोस्तु 'दूरान्तिकार्थेभ्यो द्वितीया च ।२।३।३५।' इति द्वितीया । नानभ्याशे न दूरे समुद्रस्य । 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ।२।३।३४।' इति षष्ठी । माल्यवति 'सप्तम्यधिकरणे च ।२।३।३६।' इति सप्तमी । चकाराद्दूरान्तिकार्थेभ्यश्च । तेनानभ्याश इति सप्तमी ॥ १११ ॥

**असंप्राप्ते दशग्रीवे प्रविष्टोऽहमिदं वनम् ।**
**तस्मिन्प्रतिगते द्रष्टुं त्वामुपाक्रंस्यचेतितः ॥ ११२ ॥**

असमित्यादि—दशग्रीवे दशवदने असंप्राप्ते अप्रविष्टे अहमचेतितः सन् इदं वनमशोकवनिकाख्यं प्रविष्ट इति । तस्मिन् प्रतिगते त्वां द्रष्टुमुपाक्रंसि समुत्सहे स्म । 'यस्य च भावेन भावलक्षणम् । २ । ३ ।३७ ।' इति सप्तमी । कपेः प्रवेशोपक्रमयोः रावणसंप्राप्तिप्रतिगमनक्रियाभ्यां लक्ष्यमाणत्वात् । उपक्रंसीति 'उपपराभ्याम् ।१।३।३९।' इत्यनेन वृत्त्यादिषु सर्ग उत्साहे क्रमेस्तङ् । उत्तमपुरुषैकवचनम् । 'स्नुक्रमोरनात्मनेपदनिमित्ते । ७ । २ । ३६ ।' इति । सिच इट् न भवति ॥ ११२ ॥

यद्यादावेव प्रविष्टोऽसि तर्हि किमिति स्वकर्म न दर्शितवानसीत्याह—

**तस्मिन्वदति रुष्टोऽपि नाऽकार्षं देवि विक्रमम् ।**
**अविनाशाय कार्यस्य विचिन्वानः परापरम् ॥ ११३ ॥**

तस्मिन्नित्यादि—हे देवि ! तस्मिन् वदति रुष्टोऽपि विक्रमं नाकार्षं तं तथा वदन्तमनादृत्य विक्रमं नाकार्षमित्यर्थः । 'षष्ठी चानादरे ।२।३।३८।' इति चकारात्सप्तमी । किमर्थम्—कार्यस्य संदेशकथादेरविनाशाय।[1] विचिन्वानः परापरं पौर्वापर्यं निरूपयन् । कर्त्रभिप्राये तङ् ॥ ११३ ॥

कथं वानरस्त्वं तस्य किङ्कर इत्याह—

**वानरेषु कपिः स्वामी नरेष्वधिपतेः सखा ।**
**जातो रामस्य सुग्रीवस्ततो दूतोऽहमागतः ॥ ११४ ॥**

---

१ परिपालनायेति भावः ।

वानरेष्वित्यादि--वानरेषु स्वामी यः कपिः सुग्रीवः स नरेष्वधिपतेः रामस्य सखा जातः। 'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ।२।३।३९।' इति षष्ठीसप्तम्योर्विधानात् सप्तम्युदाहृता । ततोऽहं दूत आगतः ॥ ११४ ॥

आगत्य च लङ्कां प्रविश्य इहायात इत्याह--

अथ युग्मम् ।

ईश्वरस्य निशाटानां विलोक्य निखिलां पुरीम् ।
कुशलोऽन्वेषणस्याऽहमायुक्तो दूतकर्मणि ॥ ११५ ॥

ईश्वरस्येत्यादि---निशाटानां राक्षसानामीश्वरस्य दशाननस्य । अत्र षष्ठ्युदाहृता । पुरीं निखिलां निःशेषां विलोक्य किं तत्र वर्तते इति । प्राप्त इति वक्ष्यमाणेन संबन्धः । कुशलोऽन्वेषणस्याहं सीताया अन्वेषणस्य निपुणः । आयुक्तो दूतकर्मणि दूतक्रियायां व्यापृतः। 'आयुक्तकुशलाभ्यां चासेवायाम् ।२। ३।४०।' इति षष्ठीसप्तम्यौ ॥ ११५ ॥

दर्शनीयतमाः पश्यन् स्त्रीषु दिव्यास्वपि स्त्रियः ।
प्राप्तो व्यालतमान्व्यस्यन् भुजङ्गेभ्योऽपि राक्षसान् ॥ ११६ ॥

दर्शनीयेत्यादि--तत्र दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् 'यतश्च निर्धारणम् ।२।३।४१।' इति सप्तमी । दर्शनीयतमत्वेन गुणेन पृथक्करणात् । भुजङ्गेभ्योऽपि व्यालतमान् हिंस्रान् राक्षसान् व्यस्यन् अपक्षिपन । 'पञ्चमी विभक्ते ।२।३।४२।' इति पञ्चमी । भुजङ्गेभ्यो राक्षसानां विभागात् । प्राप्तो देव्याः पादमूलमित्यर्थात् ॥ ११६ ॥

किमवस्थो राम इत्याह--

भवत्यामुत्सुको रामः प्रसितः संगमेन ते ।
मघासु कृतनिर्वापः पितृभ्यो मां व्यसर्जयत् ॥ ११७ ॥

भवत्यामित्यादि--भवत्यां त्वयि उत्सुकः उन्मनाः रामस्ते तव संगमेन प्रसितः प्रसक्तः । 'प्रसितोत्सुकाभ्यां तृतीया च ।२।३।४४।' इति चकारात्सप्तमी । मघाभिर्युक्तः कालः तत्समीपे चन्द्रमसो वर्तमानत्वात् । 'नक्षत्रेण युक्तः कालः ।४।२।३।' इत्यण् । तस्य 'लुबविशेषे । ४ । २ ।४ ।' इति लुप् । तस्मिन् काले पितृभ्यः कृतनिर्वापः दत्तदानः मां व्यसर्जयत् । 'नक्षत्रे च लुपि ।२।३।४५।' इति सप्तमी । तत्रापि 'लुपि युक्तवद्व्यक्तिवचने । १ । २ ।

---

१ दिवि भवा इति दिव्यास्तासु । २ अतिहिंस्रानिति वक्तव्यम् ।

५१।' इति स्त्रीलिङ्गबहुवचने भवतः । व्यसर्जयदिति विपूर्वकात्सर्गशब्दात् 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इत्यनेन णिचि लङि रूपम् ॥ ११७ ॥

संदेहनिवृत्त्यर्थं चाभिज्ञानं दर्शयन्नाह–

अयं मैथिल्यभिज्ञानं काकुत्स्थस्याऽङ्गुलीयकः ।
भवत्याः स्मरताऽत्यर्थमर्पितः सादरं मम ॥ ११८ ॥

अयमित्यादि–काकुत्स्थस्यायमङ्गुलीयकोऽभिज्ञानं चिह्नमयमभिज्ञानमिति लिङ्गाधिक्ये प्रातिपदिकमात्रे प्रथमा । मैथिलीति संबोधनादिके 'संबोधने च ।२।३।४७।' इति प्रथमा । सामान्त्रितं संबुद्धिश्चात्रैव द्रष्टव्यम् । काकुत्स्थस्येति 'षष्ठी शेषे ।२।३।५०।' इति षष्ठी । भवत्या अत्यर्थं स्मरता सादरमर्पितम् । 'अधीगर्थदयेशां कर्म्मणि । २ । ३ । ५२ ।' इति स्मरणार्थे कर्मणः शेषत्वविवक्षायां षष्ठी ॥ ११८ ॥

रामस्य दयमानोऽसावध्येति तव लक्ष्मणः ।
उपास्कृषातां राजेन्द्रावागमस्येह मा त्रसीः ॥ ११९ ॥

रामस्येत्यादि–असौ लक्ष्मणो रामस्य दयमानो रामं रक्षन् शुचं मा कार्षीरिति । दयतेः कर्मणि षष्ठी । तवाध्येति त्वां स्मरति । 'अधीगर्थदयेशां कर्मणि–२।३।५२' इति षष्ठी । आश्वासनार्थमाह–मा त्रसीः उद्वेगं मा कार्षीः । त्रसेरीदित्वान्निष्ठायामिट्प्रतिषेधात् सिच इट् भवति । यतो राजेन्द्रौ रामलक्ष्मणौ । इहागमस्यागमनस्य । भावे अप् । उपास्कृषातां प्रतियत्नं कृतवन्तौ । आगमनस्य निश्चितत्वात् तस्यैव सुग्रीवसख्येन गुणाधानात्,तेन 'कृञः प्रतियत्ने ।२।३।५३।' इति कर्मणि षष्ठी । प्रतियत्ने लुङ् तङ् सुट् ॥ ११९ ॥

रावणस्येह रोक्ष्यन्ति कपयो भीमविक्रमाः ।
धृत्या नाथस्व वैदेहि मन्योरुज्जासयाऽऽत्मनः ॥ १२० ॥

रावणस्येत्यादि––इह लङ्कायां कपयो भीमविक्रमाः असह्यपराक्रमाः रावणस्य रोक्ष्यन्ति सरोगं रावणं करिष्यन्ति । भीमविक्रमा इति गुणप्रधानो निर्देशः । ततश्च विक्रमे रुजः भावकर्तृकत्वात् रुजार्थानाम् 'भाववचनानामज्वरेः। २ । ३ । ५४ ।' इति षष्ठी । अतो हे वैदेहि ! धृत्या नाथस्व आशंसस्व धृतिं लभस्वेत्यर्थः । 'आशिषि नाथः ।२।३।५५।' इति कर्मणि षष्ठी । 'आशिषि नाथ इति वाच्यम्' इति तङ् । मन्योरुज्जासयात्मनो मन्युं नाशय । 'जसु ताडने'

चौरादिकस्य हिंसार्थत्वात्तेन 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम् । २ । ३ । ५६ ।' इति कर्मणि षष्ठी ॥ १२० ॥

राक्षसानां मयि गते रामः प्रणिहनिष्यति ।
प्राणानामपणिष्टाऽयं रावणस्त्वामिहानयन् ॥ १२१ ॥

राक्षसानामित्यादि—मयि गते रामो राक्षसानां प्रणिहनिष्यति राक्षसान् मारयिष्यति । पूर्ववत् कर्मणि षष्ठी । 'निप्रहण' इति संघातविगृहीतविपर्यस्तप्रहणमित्युक्तम् । 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च । ८ । ४ । १७ ।' इति णत्वम् । किंच प्राणानामपणिष्टायमिति अयं रावणस्त्वामिहानयन् प्राणानपणिष्ट विक्रीतवान् । 'व्यवहृपणोः समर्थयोः ।२।३।५७।' इति षष्ठी । 'प्राणानामपणायिष्ट' इति पाठान्तरम् । तदयुक्तम्, स्तुत्यर्थस्य पणेस्तत्र ग्रहणात् 'गुपूधूपविच्छिपणिपनिभ्य आयः ।३।१।२८।' इत्यायप्रत्ययो न भवति ॥ १२१ ॥

अदेवीद्बन्धुभोगानां प्रादेवीदात्मसम्पदम् ।
शतकृत्वस्तवैकस्याः स्मरत्यह्नो रघूत्तमः ॥ १२२ ॥

अदेवीदित्यादि—न केवलं प्राणानपणिष्ट बन्धुभोगानामदेवीत् बन्धुभोगान् विक्रीतवान् । 'दिवस्तदर्थस्य ।२।३।५८।' इति षष्ठी । दिवो व्यवहारार्थत्वात् । प्रादेवीदात्मसंपदं विक्रीतवान् । 'विभाषोपसर्गे ।२।३।५९।' इति पक्षे द्वितीया । प्रशब्देन युक्तत्वात् । रामानुरागं पुनर्दर्शयन्नाह । शतकृत्व इति बहुत्वोपलक्षणार्थम् । 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् । ५ । ४।१७।' तवैकस्या अह्नो रघूत्तमः स्मरति । 'अधीगर्थदयेशां कर्म्मणि ।२।३।५२।' इति षष्ठी । अह्न इति एकस्मिन्नप्यह्नि । 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ।२।३।६४।' इति षष्ठी ॥ १२२ ॥

एवं तामाश्वास्य संदेशं दापयितुमाह—

तवोपशायिका यावद्राक्षस्यश्चेतयन्ति न ।
प्रतिसंदिश्यतां तावद्भर्तुः शार्ङ्गस्य मैथिलि ॥ १२३ ॥

तवेत्यादि—हे मैथिलि ! तवोपशायिका परिपाट्या शयनं याभी राक्षसीभिः सहेत्यर्थात् ।'पर्यायार्हणोत्पत्तिषु ण्वुच् ।३।३।१११।'इति ण्वुच् । यावन्न चेतयन्ति न प्रतिबुध्यन्ते तावत् प्रतिसंदिश्यतां प्रतिसंदेशो दीयताम् । शार्ङ्गस्य भर्तुः शार्ङ्गधनुर्धारयतो रामस्य । तव शार्ङ्गस्येति यथाक्रमम् 'कर्तृकर्मणोः कृति । २।३।६५।' इति षष्ठी ॥ १२३ ॥

पुरः प्रवेशमाश्चर्यं बुद्ध्वा शाखामृगेण सा ।
चूडामणिमभिज्ञानं ददौ रामस्य संमतम् ॥ १२४ ॥

पुर इत्यादि—शाखामृगेण मर्कटेन पुरो लङ्कायाः दुष्प्रवेशायाः प्रवेशः तमाश्चर्यमद्भुतं बुद्ध्वा सा सीता चूडामणिमभिज्ञानं ददौ । सर्वमुक्तमस्य संभाव्यत इति । 'उभयप्राप्तौ कर्मणि २।३।६६।' इति षष्ठी । प्रवेश इत्युभयप्राप्तौ कृति लङ्का-हनूमतोः कर्मकर्तृत्वात् । रामस्य सम्मतं प्रियम् । 'मतिबुद्धि-पूजार्थेभ्यश्च ।३।२।१८८।' इति वर्तमाने निष्ठा । 'न लोकाव्ययनिष्ठा-खलर्थतृनाम् ।२।३।६९।' इति षष्ठीप्रतिषेधे प्राप्ते 'क्तस्य च वर्तमाने । २।३।६७।' इति षष्ठी ॥ १२४ ॥

रामस्य शयितं भुक्तं जल्पितं हसितं स्थितम् ।
प्रक्रान्तं च मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् ॥ १२५ ॥

रामस्येत्यादि—रामस्य अभिज्ञानं दत्त्वा शयितादिकं मुहुः पृष्ट्वा हनूमन्तं व्यसर्जयत् प्रेषितवती । तस्य शयितं शयनस्थानं किं भूमौ शेते अन्यत्रेति वा । भुक्तं भोजनस्थानं किं गृहे भुङ्क्ते मुनिजनगृहे वेति । जल्पितं मन्त्रस्थानं किं रहसि मन्त्रयते प्रकाशे वेति । हसितं हसनस्थानं किं शृङ्गारवस्तुनि हसति वीरवस्तुनि वेति । स्थितं निवासस्थानं किं गुहायां तिष्ठत्युत तरुतले वेति । प्रक्रान्तं प्रचङ्क्रमणस्थानम् । 'अनुनासिकस्य क्विझलोः क्ङिति ।६।४।१५।' इति दीर्घः । किम् अङ्गने क्रम्यते अन्यत्र वेति । एषां ध्रौव्यगतिप्रत्यवसानार्थत्वात् 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ।३।४।७६।' इति क्तः । तस्य प्रयोगे 'अधिकरणवाचिनश्च ।२।३।६८।' इति षष्ठी ॥ १२५ ॥

असौ दधदभिज्ञानं चिकीर्षुः कर्म दारुणम् ।
गामुकोऽप्यन्तिकं भर्तुर्मनसाऽचिन्तयत्क्षणम् ॥ १२६ ॥

असावित्यादि—असौ हनूमान् दधत् धारयन्नभिज्ञानं चिह्नम् । 'कर्तृ-कर्मणोः कृति ।२।३।६५।' इति षष्ठ्यां प्राप्तायाम् 'न लोकाव्ययनिष्ठाखलर्थ-तृनाम् ।२।३।६९।' इति लप्रयोगे प्रतिषेधः । ल इति शानजादयो गृहीताः । दारुणमशोकवनिकाभङ्गादिकं कर्म चिकीर्षुः कर्तुमिच्छुः। उकारप्रश्लेषात् षष्ठ्याः प्रतिषेधः। भर्तुः स्वामिनः अन्तिकं समीपं गामुकोऽपि गमनशीलोऽपि । उकप्रयोगे षष्ठीप्रतिषेधः । मनसा क्षणमचिन्तयत् चिन्तितवान् वक्ष्यमाणं कर्म ॥ १२६ ॥

कृत्वा कर्म यथाऽऽदिष्टं पूर्वकार्याऽविरोधि यः ।
करोत्यभ्यधिकं कृत्यं तमाहुर्दूतमुत्तमम् ॥ १२७ ॥

कृत्वेत्यादि---यो दूतो यथादिष्टं कर्म कार्यं कृत्वा। अत्र कृत्वेत्यव्ययप्रयोगे षष्ठीप्रतिषेधः। तत उत्तरकालं पूर्वकर्माविरोधि पूर्वकृतस्य कार्यस्य यदविरोधि तदभ्यधिकं करोति तमुत्तमं दूतमाहुर्विदुर्नीतिविद इति शेषः। मया च यथादिष्टं सीतान्वेषणं कृतमिति भावः॥ १२७॥

तदेव च दर्शयन्नाह—

वैदेहीं दृष्टवान्कर्म कृत्वाऽन्यैरपि दुष्करम्।
यशो यास्याम्युपादाता वार्तामाख्यायकः प्रभोः॥ १२८॥

वैदेहीमित्यादि—अहमद्य तावद्वैदेहीं दृष्टवान्। निष्ठाप्रयोगे षष्ठीप्रतिषेधः। अन्यदपि कार्यमतिदुष्करं कृत्वा। खल्प्रयोगे षष्ठीप्रतिषेधः। ततो यश उपादाता। आत्मसात्कर्ता। इदमतिदुष्करं तेन कृतमिति। तृन्नन्तस्य प्रयोगेऽपि तत्प्रतिषेधः। वार्तामाख्यायकः प्रभोर्वार्तामाख्यातास्मीति भविष्यदधिकारात् 'तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम्। ३। ३। १०।' इति ण्वुल्। 'अकेनोर्भविष्यदाधमर्ण्ययोः।२।३।७०।' इति षष्ठीप्रतिषेधः॥ १२८॥

राक्षसेन्द्रस्य संरक्ष्यं मया लव्यमिदं वनम्।
इति संचिन्त्य सदृशं नन्दनस्याभनक्कपिः॥ १२९॥

राक्षसेत्यादि--इदं वनम शोकवनिकाख्यं राक्षसेन्द्रस्य संरक्ष्यं रक्षार्हम्। 'अर्हे कृत्यतृचश्च।३।३।१६९।' इत्यधिकृत्य 'ऋहलोर्ण्यत्।३।१।१२४।' इति ण्यत्। तन्मया लव्य लवनीयम्। 'कृत्यानां कर्तरि वा। २। ३।७१।' इति षष्ठीतृतीये कर्तरि भवतः। इत्येवं संचिन्त्य कपिर्नन्दनस्य वनस्य सदृशं तुल्यम्। 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्। २। ३। ७२।' इति पक्षे षष्ठी। अभनक् भग्नवान्। भञ्जेर्लङि 'श्नान्नलोपः।६।४।२३।' इति नलोपे हल्ङ्यादिलोपे जश्त्वे चर्त्वे च रूपम्॥ १२९॥

राघवाभ्यां शिवं दूतस्तयोरहमिति ब्रुवन्।
हितो भनज्मि रामस्य कः किं ब्रूतेऽत्र राक्षसः॥ १३०॥

राघवाभ्यामित्यादि—राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भद्रमस्तु। तयोर्हनूमान् दूतो हितो रामस्य भनज्मीदं वनम्। एवं च क्रियमाणे को भवतां मध्ये राक्षसः किं ब्रूते इत्येवं ब्रुवन्। बभञ्ज पवनात्मजो रिपुवनमिति वक्ष्यमाणेन संबन्धः। राघवाभ्यां शिवं हितो रामस्येति 'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः २।३।६३।' इति षष्ठीचतुर्थ्यौ॥१३०॥
इति विभक्त्यधिकारः।

विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं
कुसुमनिपातचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनम् ।
शकुननिनादनादिककुब्विलोलविपलायमानहरिणं
हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजो रिपुवनम् ॥१३१॥

विलुलितेत्यादि—कीदृशं बभञ्ज । विलुलितानां पुष्पाणां रेणुभिः कपिशं पिङ्गम् । प्रशान्ता अवसन्नाः कलिकाः पलाशानि पत्राणि कुसुमानि च यत्र । कुसुमानां निपातेन विचित्रा वसुधा यत्र । सशब्दैर्निपतद्भिर्द्रुमैरुत्का उन्मनसः शकुना यत्र । शकुनानां पलायमानानां निनादेन नादिताः संजातनादाः ककुभो दिशो यत्र । विलोला व्याकुला विपलायमाना हरिणा यत्र । हरिणस्येव विलोचने यस्याः सीतायाः तस्या अधिवसतिं निवासम् ॥ १३१ ॥

इत्यनभिहिताधिकारः ।

इति श्रीजयमङ्गलाऽऽख्यया व्याख्यया समलंकृते श्रीभट्टिकाव्ये
द्वितीयेऽधिकारकाण्डे लक्षणरूपे तृतीयः परिच्छेदः,
लक्ष्यरूपे कथानकेऽशोकवनिकाभङ्गो
नामाष्टमः सर्गः ।

---

## नवमः सर्गः ।

अथ प्रकीर्णकाः ।

अत्रान्तरे प्रकीर्णकश्लोकानाह—

द्रुभङ्गध्वनिसंविग्नाः कुवत्पक्षिकुलाऽऽकुलाः ।
अकार्षुः क्षणदाचर्यो रावणस्य निवेदनम् ॥ १ ॥

द्रुभङ्गेत्यादि—क्षणदाचर्यो निशाचर्यः 'चरेष्टः।३।२।१६।' इति टः। रावणस्य निवेदनमकार्षुः कृतवत्यः वक्ष्यमाणप्रकारेण । द्रुभङ्गध्वनिसंविग्नाः शाखाभङ्गशब्देन संत्रस्ताः । 'ओविजी भय-चलनयोः' 'ओदितश्च । ८ । २ । ४५ ।' इति निष्ठानत्वम् । कुवत्पक्षिकुलाकुलाः कुवद्भिः कूजद्भिः पक्षिकुलैराकुला व्यस्तमानसाः । 'कु शब्दे' आदादिकस्तस्य उवङादेशः ॥ १२ ॥

---

१ अत्र 'अश्वललितम्' वृत्तम् । 'यदिह नजौ भजौ भजभलगास्तदाश्वललितं हरार्कयति तत्' इति तल्लक्षणात् ।

यदताप्सीच्छनैर्भानुर्यत्राऽवासीन्मितं मरुत् ।
यदाप्यानं हिमोस्रेण भनक्त्युपवनं कपिः ॥ २ ॥

यदित्यादि—यद्वनं भानुः शनैर्मन्दमताप्सीत् तपति स्म । हलन्तलक्षणा वृद्धिः । मरुत् मितं स्तोकमवासीत् वाति स्म । हिमोस्रेण शिशिररश्मिना आप्यानं वृद्धिं नीतम् । प्यायतेः 'लोपो व्योर्वलि ।६।१।६६।' इति यलोपः । ओदित्त्वान्नत्वम् । तदुपवनं कपिर्भनक्ति चूर्णयतीति निवेदनमकार्षुः ॥ २ ॥

ततोऽशीतिसहस्राणि किङ्कराणां समादिशत् ।
इन्द्रजित्सूर्विनाशाय मारुतेः क्रोधमूर्च्छितः ॥ ३ ॥

तत इत्यादि—निवेदनानन्तरमिन्द्रजित्सूः रावणः । इन्द्रजितं सूत इति 'सत्सूद्विषद्रुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् । ३।२।६१।' इत्यनुपसर्गे क्विप् । मारुतेर्हनूमतो विनाशाय । अशीतिसहस्राणि समादिशत् समादिष्टवान् । किङ्कराणां किं कुर्वन्तीति 'दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ।३।२।२१।'इति टच् । क्रोधमूर्च्छितः क्रोधोद्धतः । मूर्च्छेः समुच्छ्राये वर्तमानत्वात् ॥ ३ ॥

शक्त्यृष्टिपरिघप्रासगदामुद्गरपाणयः ।
व्यश्नुवाना दिशः प्रापुर्वनं दृष्टिविषोपमाः ॥ ४ ॥

शक्तीत्यादि—ते किङ्करा वनं प्रापुः प्राप्तवन्तः । शक्त्यादयः प्रहरणविशेषाः पाणौ येषामिति 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः'।व्यश्नुवानाः दिशो व्याप्नुवन्तः । 'अशू व्याप्तौ' सौत्रादिकः । दृष्टिविषोपमा भुजङ्गवत् दृष्ट्वैव विनाशयन्त इत्यर्थः ॥ ४ ॥

दध्वान मेघवद्भीममादाय परिघं कपिः ।
नेदुर्दीप्तायुधास्तेऽपि तडित्वन्त इवाऽम्बुदाः ॥ ५ ॥

दध्वानेत्यादि—कपिर्भीमं परिघं भयानकमर्गलमादाय मेघवद्दध्वान ध्वनति स्म । तेऽपि किङ्कराः तडित्वन्त इवाम्बुदा इव । नेदुः नदन्ति स्म । किङ्कराणां कृष्णत्वात् मेघैः सादृश्यम्, आयुधानां च तडितेति ॥ ५ ॥

कपिनाम्भोधिधीरेण समगंसत राक्षसाः ।
वर्षासूद्धततोयौघाः समुद्रेणेव सिन्धवः ॥ ६ ॥

कपिनेत्यादि—कपिना अम्भोधिधीरेणाक्षोभ्यत्वात् । राक्षसाः समगंसत संगताः । 'समो गम्यृच्छिभ्याम् ।१।३।२९। इति तङ् । लुङ् । यथा सिन्धवो नद्यः उद्धततोयौघाः उद्रिक्तजलपूराः समुद्रेण सङ्गच्छन्ते तथा ॥ ६ ॥

लाङ्गूलमुद्धतं धुन्वन्नुद्वहन्परिघं गुरुम् ।
तस्थौ तोरणमारुह्य पूर्वं न प्रजहार सः ॥ ७ ॥

लाङ्गूलमित्यादि—स हनूमान् लाङ्गूलं पुच्छमुद्धतम् उत्क्षिप्तं धुन्वन् ।'धूञ् कम्पने' इति स्वादौ पठितः । परिघं गुरुम् उद्वहन् तोरणमारुह्य तस्थौ । न तु पूर्वं प्रजहार प्रहृतवान्, शूराणां पश्चात् प्रहारित्वात् ॥ ७ ॥ एते प्रकीर्णकाः ।

इतः परं सिचि वृद्धिमधिकृत्याह—

अक्षारिषुः शराम्भांसि तस्मिन्रक्षःपयोधराः ।
न चाऽह्वालीन्नचाऽव्राजीत्त्रासं कपिमहीधरः ॥ ८ ॥

अक्षारिषुरित्यादि—तस्मिन् वने रक्षःपयोधराः रक्षांसि पयोधरा इव । शराम्भांसि शरान् अम्भांसीव । अक्षारिषुः क्षरितवन्तः । क्षरतिरकर्मकः 'क्षरेत्क्षतजवृत्तिः'इत्यादि प्रयोगेषु दृश्यते । इह तु सकर्मको विवक्षितः । कपिर्महीधर इव । न चाह्वालीत् न चलितवान् । द्वयोरपि 'अतो हलादेर्लघोः ।७।२।७।' इति विकल्पे प्राप्ते 'अतो ल्रान्तस्य ।७।२।२।' इति सिचि वृद्धिः । त्रासं भयं च नाव्राजीत् न जगाम । महीधरतुल्यत्वात् । 'नेटि ।७।२।४।' इति प्रतिषेधस्य 'अतो हलादेर्लघोः ।७।२।७।' इति विकल्पिते 'वदव्रज-हलन्तस्याचः ।७।२।३।' इति वृद्धिः ॥ ८ ॥

अवादीत्तिष्ठतेत्युच्चैः प्रादेवीत्परिघं कपिः ।
तथा यथा रणे प्राणान्बहूनामग्रहीद्द्विषाम् ॥ ९ ॥

अवादीदित्यादि—तत उत्तरकालं कपिस्तिष्ठत मा पलायध्वमिति उच्चैस्तानवादीत् । पूर्ववद्वृद्धिः । तथा तेन प्रकारेण परिघं परिघेण प्रादेवीत् विजिगीषते स्म । 'दिवः कर्म च ।१।४।४३।' इति परिघस्य कर्मसंज्ञा । दिवेः 'नेटि ।७।२।४।' इति वृद्धिप्रतिषेधः । यथा बहूनां द्विषां शत्रूणां प्राणान्न्यग्रहीत् निगृहीतवान् । 'अतो हलादेर्लघोः ।७।२।७।' इति विकल्पे प्राप्ते 'ह्यन्तक्षणश्वसजागृणिश्व्येदिताम् ।७।२।५।' इति प्रतिषेधः ॥ ९ ॥

व्रणैरवमिषू रक्तं देहैः प्रौर्णाविषुर्भुवम् ।
दिशः प्रौर्णाविषुश्चान्ये यातुधाना भवद्भियः ॥ १० ॥

व्रणैरित्यादि---यातुधाना राक्षसा व्रणैः प्रहारमार्गैः रक्तं शोणितमवमिषुः वमन्ति स्म । 'ह्ययन्तक्षणश्वसजागृणिश्व्येदिताम् ।७।२।५।' इति वृद्धिप्रतिषेधः । देहैर्भुवं प्रौर्णाविषुः छादितवन्तः । अन्ये यातुधानाः भवद्भियः भवन्ती भीर्येषामिति भयात्पलायमानाः । दिशः प्रौर्णाविषुः छादितवन्तः । 'उर्णोतेर्विभाषा ।७।२।६।' इति विकल्पः । उर्णोतेः 'विभाषोर्णोः ।१।२।३।' इत्यङित्त्वपक्षे द्रष्टव्यः, ङित्त्वे गुणवृद्धिप्रतिषेधात् ॥ १० ॥

अरासिषुश्च्युतोत्साहा भिन्नदेहाः प्रियासवः ।
कपेरत्रासिषुर्नादान्मृगाः सिंहध्वनेरिव ॥ ११ ॥

इति सिचि वृद्ध्यधिकारः ।

अरासिषुरित्यादि--च्युतोत्साहाः निरुत्साहाः अरासिषुः मृताः स्म इति शब्दितवन्तः । यतः प्रियासवः प्रियप्राणाः । कपेः संबन्धिनो नादादत्रासिषुः त्रस्ताः । 'उभयत्रापि नेटि । ७ । २ । ५ ।' इति प्रतिषिद्धे 'अतो हलादेर्लघोः ७।२।७।' इति विकल्पः ॥ ११ ॥

इति सिचि वृद्ध्यधिकारः ॥

इत इट्प्रतिषेधमधिकृत्याह-

मायानामीश्वरास्तेऽपि शस्त्रहस्ता रथैः कपिम् ।
प्रत्याववृतिरे हन्तुं हन्तव्या मारुतेः पुनः ॥ १२ ॥

मायानामित्यादि---अथानन्तरं राक्षसा ये दिशो गताः ते कपिं हन्तुं पुनः प्रत्याववृतिरे प्रतिनिवृत्ताः । मायानामीश्वराः प्रभवः । 'स्थेशभासपिसकसो वरच् । ३ । २ । १७५ ।' इति वरच् । 'नेड्वशि कृति ।७।२।८ ।' इति नेट् । 'आर्धधातुक-७।२।३५।'इत्यादिना प्राप्तत्वात् । रथैस्तत्र गताः सन्तः । शस्त्रहस्ताः शस्त्राणि हस्तेषु येषामिति। 'हनि-कुश' इत्यादिना रमेरौणादिकः क्थन् । रथाः। 'असि--चमि'इत्यादिना शसेरौणादिकस्त्रन् । 'हसिमृग्वा'-इत्यादिना हसेस्तन् । तयोः 'तितुत्रतथ-८।२।९।' इत्यादिना इट्प्रतिषेधः । हन्तव्या मारुतेरिति हनूमतो वधार्हाः । 'कृत्यानां कर्तरि वा।२।३।७१।' इति षष्ठी । 'एकाच उपदेशेऽनुदात्तात् । ७।२।१०।' इतीट्प्रतिषेधः । हन्तेर्नोन्तष्वेनिट्त्वात् ॥ १२ ॥

तांश्चेतव्यान् क्षितौ श्रित्वा वानरस्तोरणं युतान् ।
जघानाऽऽधूय परिघं विजिघृक्षून्समागतान् ॥ १३ ॥

तानित्यादि—समुदिता एकस्यामेव वेलायां मया हन्तव्या इति वानरस्तोरणमाश्रितवान् । स तोरणं श्रित्वा तान् राक्षसान् विजिघृक्षून् विग्रहीतुमिच्छून् । युतान् समुदितान् । समागतान् ढौकितान् । क्षितौ पृथिव्यां चेतव्याम् पुञ्जीकर्तव्यान् । जघान हतवान् । परिघमाधूय परिभ्राम्य । तत्र चेतव्यानिति 'एकाच उपदेशेऽनुदात्तात्—७ । २ । १० ।' इतीट्प्रतिषेधः । क्षिताविति । 'क्तिच्क्तौ च संज्ञायाम् । ३ । ३ । १७४ ।' इति क्तिच् । 'तितुत्रतथसिसुसरकसेषु च । ७ । २ । ९ ।' इतीट्प्रतिषेधः । श्रित्वा युतानिति 'श्र्युकः किति । ७ । २ । ११ ।' इति इट्प्रतिषेधः । विजिघृक्षूनिति 'सनि ग्रहगुहोश्च । ७ । २ । १२ ।' इति । तत्र 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च । १ । २ । ८ ।' इति सनः कित्त्वं 'ग्रहिज्या वयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । ६ । १ । १६ ।' इति संप्रसारणं ढत्वकत्वषत्वानि ॥ १३ ॥

संजुघुक्षव आयूंषि ततः प्रतिरुरूषवः ।
रावणाऽन्तिकमाजग्मुर्हतशेषा निशाचराः ॥ १४ ॥

संजुघुक्षव इत्यादि—तत उत्तरकालं ये हतशेषा निशाचराः ते संजुघुक्षव आयूंषि जीवितानि गोहितुमिच्छवः । गुहेः पूर्ववत्प्रतिषेधः । रावणान्तिकमाजग्मुः आगताः । प्रतिरुरूषवः वक्ष्यमाणमर्थं कथयितुमिच्छवः । अत्रापि पूर्ववत्प्रतिषेधः । तत्र चकारेणोगन्तानां सनि समुच्चितत्वात् ॥१४॥

एकेन बहवः शूराः साविष्काराः प्रमत्तवत् ।
वैमुख्यं चकृमेत्युच्चैरूचुर्दशमुखान्तिके ॥ १५ ॥

एकेनेत्यादि—वयं बहवः शूराः साविष्काराः साहंकारा अपि सन्तः एकेनापि कपिना हेतुभूतेन वैमुख्यं चकृम पराङ्मुखत्वमनुष्ठितवन्तः प्रमत्तवत् मद्यपानमत्ता इव । एवं च चित्तव्याक्षेपादुत्तमपुरुषे लिटि कृते 'कृसृभृवृस्तुद्रुस्रुश्रुवा लिटि ।७। २ । १३ ।' इतीट्प्रतिषेधः नियमित इति । एवं दशमुखान्तिके उच्चैरूचुः ॥ १५ ॥

मांसोपभोगसंशूनानुद्विग्नांस्तानवेत्य सः ।
उद्वृत्तनयनो मित्रान्मन्त्रिणः स्वान्व्यसर्जयत् ॥ १६ ॥

मांसेत्यादि—स दशमुखस्तानुद्विग्नान् भीतानवेत्य ज्ञात्वा स्वानात्मीयान् मन्त्रिणो व्यसर्जयत् प्राहिणोत् । कीदृशांस्तान् । मांसोपभोगसंशूनान्

मांसोपभोगेन स्थूलवर्ष्मणः । उभयत्रापि । 'श्वीदितो निष्ठायाम् । ७ । २ । १४ ।' इतीट्प्रतिषेधः । तत्र श्वयतेर्यजादित्वात् संप्रसारणम् 'हलः । ६ । ४ । २ ।' इति संप्रसारणस्य दीर्घः । द्वयोरप्योदित्त्वान्निष्ठानत्वम् । उद्वृत्तनयनो रोषात् निष्क्रान्ततारकः । 'यस्य विभाषा । ७ । २ । १५ ।' इतीट्प्रतिषेधः । वृतेरुदित्वात् । मित्रान् स्निग्धान् मन्त्रिणः।'ओदितश्च ।७।२।१६।'इतीट्प्रतिषेधः। 'रदाभ्यां निष्ठातो नः । ८ । २ । ४२ ।' इति निष्ठानत्वम् ॥ १६ ॥

**प्रमेदिताः सपुत्रास्ते सुस्वान्ता बाढविक्रमाः ।**
**अम्लिष्टनादा निरगुः फाण्टचित्रास्त्रपाणयः ॥ १७ ॥**

प्रमेदिता इत्यादि—ते मन्त्रिणः सपुत्राः पुत्रैः सह निरगुः निर्गताः । 'इणो गा लुङि । २ । ४ । ४५ ।' प्रमेदिताः स्निग्धीभवितुमारब्धाः । आदिकर्मणि निष्ठा । ततो 'विभाषा भावादिकर्मणोः' इति प्रतिषेधः । इट्पक्षे 'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः । १ । २ । १९ ।' इति कित्त्वप्रतिषेधात् गुणः । सुस्वान्ताः स्वामिनि कल्याणमनसः । बाढविक्रमाः भृशपराक्रमाः । अम्लिष्टनादाः : विस्पष्टवाचः मन्त्रिणां वाग्मित्वात् । फाण्टचित्रास्त्रपाणयः यदशृतमपिष्टं कषायमुदकसंपर्कमात्राद्विभक्तरसम् ईषदुष्णं तदल्पप्रयाससाध्यत्वात् अनायाससाध्यं फाण्टमित्युच्यते तेन चित्राणि रञ्जितानि अस्त्राणि पाणौ येषामिति । स्वान्तादयः 'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु । ७ । २ । १८ ।' इति निपातिताः ॥ १७ ॥

अथ द्वाभ्यां युग्मम् ।

**तान्दृष्ट्वाऽतिदृढान्धृष्टान् प्राप्तान्परिवृढाज्ञया ।**
**कष्टं विनर्दतः क्रूरांश्च शस्त्रघुष्टकरान्कपिः ॥ १८ ॥**

तानित्यादि—तान् दृष्ट्वा कपिः आर्दिददिति वक्ष्यमाणेन संबन्धः । किंभूतान् धृष्टान् । धृष्णोतीति धृष्टः । 'धृषिशसी वैयात्ये ।७।२।१९।' इतीट्प्रतिषेधः । अतिदृढान् बलवतः । 'दृढः स्थूलबलयोः । ७ । २ । २०।' इति निपातनम् । परिवृढाज्ञया परिवृढस्य प्रभोराज्ञया प्राप्तान् । 'प्रभौ परिवृढः । ७ । २ । २१ ।' इति निपातनम् । कष्टं विनर्दतः कृच्छ्रं ध्वनतः । गम्भीररवं वा । 'कृच्छ्रगहनयोः कषः ।७।२।२२।' इतीट्प्रतिषेधः । क्रूरान् हिंस्रान् । शस्त्रघुष्टकरान् । 'घुषिरविशब्दने । ७ । २ । २३ ।' इतीट्प्रतिषेधः ॥१८॥

अव्यर्णो गिरिकूटाभानभ्यर्णानार्दिदद्द्रुतम् ।
वृत्तशस्त्रान्महाऽरम्भानदान्तांस्त्रिदशैरपि ॥ १९ ॥

अव्यर्ण इत्यादि—अव्यर्णोऽपीडितः । 'अर्दः संनिविभ्यः । ७ । २ ।२४।' इतीट्प्रतिषेधः । गिरिकूटाभान् महागिरिसदृशप्रमाणान् । अभ्यर्णानविदूरान् । 'अभेश्चाविदूर्ये ।७।२।२५।' इतीट्प्रतिषेधः । द्रुतमार्दिदत् हिंसितवान् । अर्दः स्वार्थिकण्यन्तस्य लुङि रूपम् । वृत्तशस्त्रोऽधीतशस्त्रविद्यः । 'णेरध्ययने वृत्तम् ।७।२।२६।' इति इडभावो णिलुक् च निपात्यते । महारम्भान् अनल्पव्यापारान् । त्रिदशैरप्यदान्तान् अशमितान् । 'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ।७।२।२७।' इतीडभावो णिलुक् च निपात्यते ॥ १९ ॥

दमितारिः प्रशान्तौजा नादापूरितदिङ्मुखः ।
जघान रुषितो रुष्टांस्त्वरितस्तूर्णमागतान् ॥ २० ॥

दमितारिरित्यादि—ये तु प्रशान्तौजसः शमितबलाः सन्तो रुष्टाः तूर्णमागताः तान् कपिर्जघान व्यापादितवान् । प्रतापाद्दाम्यन्तोऽरयो दमिता येन दमितारिः । प्रशान्तं शत्रूणामोजो येन स प्रशान्तौजाः । नादापूरितादिङ्मुखः तस्य हृष्टत्वात् । रुषितः क्रुद्धः । त्वरितः ससंभ्रमः । अत्र दमितप्रशमितपूरिताः ण्यन्ताः 'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः । ७ । २ । ३७ ।' इति विकल्पितेटः । रुष्टरुषितत्वरिताः 'रुष्यमत्वरसंघुषास्वनाम् ।७।२।२८।' इतीड् वा ॥ २० ॥

तेषां निहन्यमानानां सङ्घुष्टैः कर्णभेदिभिः ।
अभूदभ्यमितत्रासमास्वान्ताऽशेषादिग्जगत् ॥ २१ ॥

तेषामित्यादि—तेषां रक्षसां निहन्यमानानां संघुष्टैः शब्दैः कर्णभेदिभिः बाधिर्यकरैः । अभ्यमितत्रासं अभिगतत्रासं जगदभूत् । आस्वान्ताः अशेषा दिशो यस्मिन् जगति । संघुष्टाभ्यमितास्वान्ताः 'रुष्यमत्वरसंघुषास्वनाम् ।७।२।२८।'इति विकल्पितेटः ॥ २१ ॥

भयसंहृष्टरोमाणस्ततस्तेऽपचितद्विषः ।
क्षणेन क्षीणविक्रान्ताः कपिनाऽनेषत क्षयम् ॥ २२ ॥

इतीट्प्रतिषेधाधिकारः ।

भयेत्यादि—ततस्ते राक्षसाः कपिना क्षणेन क्षयं विनाशममनेषत नीताः । कर्मणि लुङ् । भयसंहृष्टरोमाणः भयोद्गतरोमाञ्चाः । 'हृषेर्लोमसु ।७।२।२९।' इति विभाषितेट् । अपचितद्विषः अपचितानाम् पूजितानां ऋषीणां शत्रवः । 'अपचितश्च ।७।२।३०।' इति निपातः । क्षीणविक्रान्ताः क्षीणं विक्रान्तं पराक्रमो येषाम् । 'क्षियो दीर्घात् ।८।२।४६।' इति निष्ठात-कारस्य नः ॥ २२ ॥

इतीट्प्रतिषेधाधिकारः ।

इतः प्रभृतीटमधिकृत्याह—

हत्वा रक्षांसि लवितुमक्रमीन्मारुतिः पुनः ।
अशोकवनिकामेव निगृहीतारिशासनः ॥ २३ ॥

हत्वेत्यादि—रक्षांसि हत्वा मारुतिरशोकवनिकामेव पुनर्लवितं छेत्तुम् । आर्धधातुकस्येट् । अक्रमीत् गतवान् । 'स्नुक्रमोरनात्मनेपदनिमित्ते ।७।२।३६।' इतीट् । निगृहीतारिशासनः ध्वस्तारिव्यवस्थः । 'ग्रहोऽलिटि दीर्घः । ७।२।३७।' इतीटो दीर्घत्वम् ॥ २३ ॥

आवरीतुमिवाऽऽकाशं वरितुं वीनिवोत्थितम् ।
वनं प्रभञ्जनसुतो नादयिष्ट विनाशयन् ॥ २४ ॥

आवरीतुमित्यादि—प्रभञ्जनसुतो हनूमान् । वनमशोकवनिकाख्यं विना-शयन् नादयिष्ट दयां न कृतवान् । लुङि रूपम् । आकाशमावरीतुमिव अवष्टब्धुमिवोत्थितं वनम् । वीन् पक्षिणो वरितुं प्रार्थयितुमिवोत्थितं 'आग-च्छत, नान्यत्र यात, इहैव फलवृद्धिं प्राप्स्यथ' इति । आवरीतुं वरितुमिति 'वृतो वा ।७।२।३८।' इति विकल्पेनेटो दीर्घत्वम् ॥ २४ ॥

वरिषीष्ट शिवं क्षिप्यन् मैथिल्याः कल्पशाखिनः ।
प्रावारिषुरिव क्षोणीं क्षिप्ता वृक्षाः समन्ततः ॥ २५ ॥

वरिषीष्टेत्यादि—ये कल्पशाखिनः कल्पवृक्षाः स्वर्गादादायारोपितास्तानु-न्मूल्य यथास्थानं क्षिप्यन् मैथिल्याः शिवं कल्याणं वरिषीष्ट प्रार्थितवान् । मैथिल्या भद्रमस्त्वित्याशंसावचने लिङ् । 'न लिङि ।७।२।३९।' इति

दीर्घप्रतिषेधः । अन्ये च वृक्षास्तेन समन्ततः क्षिप्ताः सन्तः क्षोणीं पृथ्वीं प्रावारिषुरिवाच्छादितवन्त इव । तेषामनाच्छादितत्वादिवार्थः । 'सिचि वृद्धिः परस्मैपदेषु ।७।२।१।' इति वृद्धिः ॥ २५ ॥

संवुवूर्षुः स्वमाकूतमाज्ञां विवरिषुर्द्रुतम् ।
अवरिष्टाक्षमक्षम्यं कपिं हन्तुं दशाननः ॥ २६ ॥

समित्यादि—रामदूतेन कपिना कर्मेदृशं कृतमिति स्वमाकूतमभिप्रायं संवुवूर्षुः संवरीतुमिच्छुः । दशाननो द्रुतमाज्ञां विवरिषुः प्रकटितुमिच्छुः । अक्षं स्वसुतमवरिष्ट प्रार्थितवान् । कर्त्रभिप्राये तङ् । किमर्थं कपिं हन्तुं हनिष्यामीति । अक्षम्यं क्षन्तुमशक्यम् । 'पोरदुपधात् ।३।१।९८।' इति यत् । संवुवूर्षुः, विवरिषुरिति उगन्तत्वात् 'सनि ग्रहगुहोश्च ।७।२।१२।' इति चकारेणेट्प्रतिषेधे प्राप्ते 'इट् सनि वा ।७।२।४१।' इति विभाषेट् । तत्रानिट्पक्षे 'इको झल् ।१।२।९।' इति कित्त्वे 'उदोष्ठ्यपूर्वस्य ।७।१।१०२।' इत्युत्वपक्षेऽगुण एवं ॥ २६ ॥

ऊचे संवरिषीष्ठास्त्वं गच्छ शत्रोः पराक्रमम् ।
ध्वृषीष्ठा युधि मायाभिः स्वरिता शत्रुसम्मुखम् ॥ २७ ॥

ऊच इत्यादि—किमित्याह—त्वं गच्छ शत्रोः पराक्रमं संवरिषीष्ठाः संछादय । आशिषि 'लिङ्सिचोरात्मनेपदेषु ।७।२।४२।' इति वृञो विभाषेट् । 'उश्च ।१।२।१२।' इतीट्पक्षे न कित्त्वम् । ध्वृषीष्ठाः युधि मायाभिः कर्तृभूताभिः त्वं कुटिलीकृषीष्ठाः । 'ध्वृ हूर्च्छने' ( हूर्च्छनं कौटिल्यम् ) तस्य चोदात्तत्वात् आशिषि कर्मणि लिङ् । 'ऋतश्च संयोगादेः । ७ । २ । ४३ ।' इति विभाषेट् । अनिट्पक्षे उश्चेति कित्त्वम् । स्वरिता उपतापयिता । शत्रुसंमुखं शत्रोरग्रतः । अतो द्रुतं संस्वरिषीष्ठा इति वक्ष्यमाणेन योज्यम् ॥ 'स्वृ शब्दोपतापयोः' इत्यस्य 'स्वरतिसूतिसूयतिधूञूदितो वा ।७।२।४४।' इति विभाषेट् । लिङ्सिचोरिति नानुवर्तते ॥ २७ ॥

द्रुतं संस्वरिषीष्ठास्त्वं निर्भयः प्रधनोत्तमे ।
स मायानामगात्स्तोता कपेर्विधवितुं द्युतिम् ॥ २८ ॥

द्रुतमित्यादि—संस्वरिषीष्ठाः उपतापय । निर्भयः सन् । आशिषि लिङ् । समो गम्यृच्छिभ्याम् ।१।३ । २९ । इत्यत्र 'विदिप्रच्छिस्वरतीनामुपसंख्यानम्' इत्यात्मनेपदम् । अत्र 'ऋतश्च संयोगादेः । ७ । २ । ४३ ।' इतितीट् । प्रध-

नोत्तमे सङ्ग्रामवरे । एवमुक्तः सन् स मायानां सोता जनकः कपेर्द्युतिं तेजो विधवितुमपनेतुमगात् गतः। सोता धावितुमिति 'स्वरतिसूतिसूयतिधूञूदितो वा ।७।२ ।४४।' इति विभाषेट् ॥ २८ ॥

विगाढारं वनस्याऽसौ शत्रूणां गाहिता कपिः ।
अक्षं रधितुमारेभे रद्धा लङ्कानिवासिनाम् ॥ २९ ॥

विगाढारमित्यादि—असौ कपिः वनस्य विगाढा अवलोढयिता । अरं शीघ्रम् । शत्रूणां गाहिता विनाशयिता । कर्मणि षष्ठी । ऊदित्त्वाद्विभाषेट् । 'स्वरतिसूतिसूयतिधूञूदितो वा ।७।२।४४।' इतीट् । अक्षं रधितुं हिंसितुमारेभे प्रवृत्तः । लङ्कानिवासिनां रक्षसां रद्धा हिंसिता । 'रधादिभ्यश्च ।७।२।४५।' इति विभाषेट् ॥ २९ ॥

निष्कोषितव्यान्निष्कोष्टुं प्राणान्दशमुखाऽऽत्मजात् ।
आदाय परिघं तस्थौ वनान्निष्कुषितद्रुमः ॥ ३० ॥

निष्कोषितव्यानित्यादि—दशमुखात्मजादक्षात् प्राणान्निष्कोषितव्यान् अपनेतव्यान् अपनयार्हान् निष्कोष्टुम् अपनेष्यामीति परिघमादाय तस्थौ । निरः कुषः ।७।२।४६।' इति विभाषेट् । निष्कुषितद्रुमः वनादपनीतवृक्षः । 'इण् निष्ठायाम् ।७।२।४७।' इतीट् ॥ ३० ॥

एष्टारमेषिता संख्ये सोढारं सहिता भृशम् ॥
रेष्टारं रेषितुं व्यास्यद्रोष्टाऽक्षः शस्त्रसंहतीः ॥ ३१ ॥

एष्टारमित्यादि—कपिं युद्धस्यैष्टारम् एषिता एषणशीलोऽक्षः । ताच्छील्ये तृन् । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ।२।३।६९।' इति षष्ठीप्रतिषेधः । सोढारं प्रहरणस्य सहितारं सहिता भृशं सहनशीलः । रेष्टारं हिंसकं रेषितुं हिंसितुम् । रोष्टा रोषणशीलः शस्त्रसंहतीर्व्यास्यत् क्षिप्तवान् । लङि रूपम् । सर्वत्र 'तीषसहलुभरुषरिषः ।७।२।४८।' इति वेट् ॥ ३१ ॥

शस्त्रैर्दिदेविषुं संख्ये दुद्यूषुः परिघं कपिः ।
अर्दिधिषुर्यशः कीर्तिमीर्त्सुं वृक्षैरताडयत् ॥ ३२ ॥

शस्त्रैरित्यादि—कपिः अर्दिधिषुः यशो वर्धितुमिच्छुः । परिघं दुद्यूषुः परिघेण क्रीडितुमिच्छुः अक्षं वृक्षैरताडयत् हतवान् । कीदृशम् शस्त्रैर्दिदेविषुं क्रीडितुमिच्छुम् । कीर्तिमीर्त्सुं वर्धितुमिच्छुम् । दिवेरिवन्तस्य 'ऋधु वृद्धौ' इत्यस्य च 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ।७।२।४९।' इति

विभाषेतट् । तत्र दिवेरिडभावपक्षे 'च्छ्वोः शूडनासिके च ।६।४।१९।' ऋधेः आप्ज्ञप्यृधामीत् ।७।४।५५।' इतीत्वमभ्यासलोपश्च ॥ ३२ ॥

**भूयस्तं धिप्सुमाहूय राजपुत्रं दिदम्भिषुः ।**
**अहंस्ततः स मूर्च्छावान्संशिश्रीषुरभूद्ध्वजम् ॥ ३३ ॥**

भूय इत्यादि—तं राजपुत्रम् अक्षं धिप्सुं दम्भितुं वञ्चयितुमिच्छुम् । भूयः पुनरपि दिदम्भिषुः वञ्चयितुमिच्छुः । आहूयागच्छेत्यहन् हतवान् । ततः सोऽक्षः मूर्च्छावान् मूर्च्छायुक्तः । ध्वजमात्मीयं संशिश्रीषुः संश्रयितुमिच्छुः अभूत् भूतः । अत्र दम्भेः श्रयतेश्च 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ।७।२।४९।' इतीट् । अत्र श्रयतेरनिट्पक्षे 'अज्झनगमां सनि ।६।४।१६।' इति दीर्घः । द्वितीयस्य च 'दम्भ इच्च ।७।४।५६।' इत्यभ्यासलोपः । दम्भेर्हल्ग्रहणस्य जातिपरत्वात्सिद्धमिति कित्त्वे अनुनासिकलोपः । 'एकाचो बशो भष् झषन्तस्य स्ध्वोः ।८।२।३७।' इति भष् । 'खरि च ।८।४।५५।' इति चर्त्वम् ॥ ३३ ॥

**आश्वस्याऽक्षः क्षणाल्लोकान्बिभ्रक्षुरिव तेजसा ।**
**रुषा बिभ्रज्जिषुप्रख्यं कपिं बाणैरवाकिरत् ॥ ३४ ॥**

आश्वस्येत्यादि—क्षणात् क्षणमात्रेणाश्वस्य संज्ञां लब्ध्वा लोकान् जनान् तेजसा क्रोधोत्थेन बिभ्रक्षुरिव । अथ स कपिं बाणैरवाकिरत् संछादितवान् । कीदृशम्—बिभ्रज्जिषुप्रख्यं अग्नितुल्यम् । बिभ्रज्जिषुः, बिभ्रक्षुरिति 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् । ७ । २ । ४९ ।' इति विभाषेट् । तत्रानिट्पक्षे 'स्कोः संयोगाद्योरन्ते च । ८।२।२९।' इति सलोपः । 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ।८।२।३६।' इति षः । इट्पक्षे सकारस्य जश्त्वं श्चुत्वं च ॥ ३४ ॥

**संयुयूषुं दिशो बाणैरक्षं यियविषुर्द्रुमैः ।**
**कपिर्मायामिवाऽकार्षीद्दर्शयन्विक्रमं रणे ॥ ३५ ॥**

संयुयूषुमित्यादि—बाणैर्दिशः संयुयूषुं मिश्रयितुमिच्छुम् अक्षं कपिः द्रुमैर्यियविषुः योतुमिच्छुर्मायामिवेन्द्रजालमिवाकार्षीत् कृतवान् । रणे विक्रमं दर्शयन् । यौतेः सनि 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्।७।२।२९।' इति विभाषेट् । 'ओः पुयण्ज्यपरे ।७।४।८०।' इतीत्वम् । 'अज्झनगमां सनि । ६।४।१६।' इति दीर्घः ॥ ३५ ॥

वानरं प्रोर्णुनविषुः शस्त्रैरक्षो विदिद्युते ।
तं प्रोर्णुनूषुरुपलैः सवृक्षैराबभौ कपिः ॥ ३६ ॥

वानरमित्यादि-वानरं प्रोर्णुनविषुः छादयितुमिच्छुरक्षः विदिद्युते विद्योतते स्म । 'द्युतिस्वाप्योः सम्प्रसारणम् ।७।४।६७।' इति सम्प्रसारणम् । कपिरपि तमक्षम् उपलैर्वृक्षसहितैः प्रोर्णुनूषुः संवरीतुमिच्छुराबभौ भाति स्म । ऊर्णोतेः पूर्ववद्विभाषेट् । इट्पक्षे गुणः । अन्यत्र 'अज्झनगमां सनि ।६।४।१६।' इति दीर्घः । उभयत्र 'नन्द्राः संयोगादयः । ६ । १ । ३ ।' इति रेफो न द्विरुच्यते ॥ ३६ ॥

स्वां जिज्ञापयिषू शक्तिं बुभूर्षू नु जगन्ति किम् ।
शस्त्रैरित्यकृषातां तौ पश्यतां बुद्धिमाहवे ॥ ३७ ॥

स्वामित्यादि—तौ कपिराक्षसौ किं स्वां शक्तिं जिज्ञापयिषू बोधयितुमिच्छू इव बुभूर्षू त्रिजगन्ति किं नु त्रैलोक्यं शस्त्रैः भर्तुं पूरयितुमिच्छू इत्येवं बुद्धिमाहवे पश्यतां प्रेक्षकाणाम् अकृषातां कृतवन्तौ । जिज्ञापयिषू बुभूर्षू इति विभाषेट् । तत्र 'भृञ् भरणे' इति भौवादिकस्य ग्रहणम् । 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् । ७ । २ । ४९ ।' इति सूत्रे 'भर' इति शपा निर्देशात् ॥ ३७ ॥

मायाभिः सुचिरं क्लिष्ट्वा राक्षसोऽक्लिशितक्रियम् ।
सम्प्राप्य वानरं भूमौ पपात परिघाऽऽहतः ॥ ३८ ॥

मायाभिरित्यादि—राक्षसो मायाभिः सुचिरं क्लिष्ट्वा क्लेशं कृत्वा वानरमक्लिशितक्रियमनभिभूतव्यापारं संप्राप्य परिघाहतो भूमौ पापत । 'क्लिशः क्त्वानिष्ठयोः ।७।२।५०।' इति विभाषेट् ॥ ३८ ॥

अथ युग्मम् ।

पवितोऽनुगुणैर्वातैः शीतैः पूत्वा पयोनिधौ ।
बभञ्जाऽध्युषितं भूयः क्षुधित्वा पत्त्रिभिर्वनम् ॥ ३९ ॥

पवित इत्यादि—कपिरपि पयोनिधौ पूत्वा स्नात्वा अनुगुणैरनुकूलैः शीतैर्वातैः पवितः पवित्रीकृतः । 'पूङश्च ।७।२।५१।' इति विभाषेट् । भूयः पुनर्वनं बभञ्ज । कीदृशम् । पत्त्रिभिः पक्षिभिः क्षुधित्वा क्षुधितैर्भूत्वा । अध्युषितं कृतनिवासम् । 'वसतिक्षुधोरिट् ।७।२।५२।' इतीट् ॥ ३९ ॥

उच्चैरञ्चितलाङ्गूलः शिरोऽञ्चित्वेव संवहन् ।
दधद्विलुभितं वातैः केशरं वह्निपिङ्गलम् ॥ ४० ॥

उच्चैरित्यादि---उच्चैरूर्ध्वमञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य । शोभनविन्यासेन स्थितत्वात् । शिरोऽञ्चित्वेव संवहन् अनम्रत्वात् पूजयित्वेव शिरो बिभ्राणः । 'अञ्चेः पूजायाम् ।७।२।५३।' इति विभाषेट् । वह्निपिङ्गलं च केशरं सटां दधत् बिभ्रत् । वातैर्विलुभितम् आकुलितम् । 'लुभो विमोहने । ७।२।५४।' इतीट् । विमोहनमाकुलीकरणम् ॥ ४० ॥

जरित्वेव जवेनाऽन्ये निपेतुस्तस्य शाखिनः ।
व्रश्चित्वा विवशानन्यान्बलेनाऽपातयत्तरून् ॥ ४१ ॥

जरित्वेत्यादि—तस्य कपेर्जवेन वेगेन अन्ये शाखिनः जरित्वेव जीर्णा इव भूत्वा निपेतुः । अन्यांस्तरून् बलेन व्रश्चित्वा छित्त्वा । विवशान् स्रस्तपल्लवानपातयत् पातितवान् । 'जृव्रश्च्योः क्त्वि ।७।२।५५।' इतीट् ॥ ४१ ॥

दमित्वाप्यरिसङ्घातानश्रान्त्वा कपिकेशरी ।
वनं चचार कर्तिष्यन्नर्त्स्यन्निव निरङ्कुशः ॥ ४२ ॥

दमित्वेत्यादि---कपिकेशरी हनूमान् अरिसंघातान् दमित्वा उपशमं नीत्वा । अश्रान्त्वा अपरिश्रान्तो भूत्वा वनं चचार । 'उदितो वा । ७ । २ । ५६ ।' इति विकल्पेनेट् । निरङ्कुशः निरवग्रहः । कर्तिष्यन् छेत्स्यन् । नर्त्स्यन्निव नर्तुकाम इव । 'सेऽसिचि कृतचृतछृदतृदनृतः । ७ । २ । ५७ ।' इति विभाषेट् ॥ ४२ ॥

पारं जिगमिषन्सोऽथ पुनरावर्त्स्यतां द्विषाम् ।
मत्तद्विरदवद्रेमे वने लङ्कानिवासिनाम् ॥ ४३ ॥

पारमित्यादि---अथ स कपिर्द्विषां पारं जिगमिषन् गन्तुमिच्छन् । 'गमेरिट् परस्मैपदेषु । ७ । २ । ५८ ।' इतीट् । पुनरावर्त्स्यतां प्रतीपीभविष्यताम् । 'न वृद्भ्यश्चतुर्भ्यः । ७ । २ । ५९ ।' इतीट्प्रतिषेधः । 'वृद्भ्यः स्यसनोः । १ । ३ । ९२ ।' इति परस्मैपदम् । लङ्कानिवासिनां वने मत्तद्विरद इव रेमे क्रीडितवान् ॥ ४३ ॥

यद्यकल्प्स्यदभिप्रायो योद्धुं रक्षःपतेः स्वयम् ।
तमप्यकर्त्स्यमद्याऽहं वदन्नित्यचरत्कपिः ॥ ४४ ॥

यदीत्यादि—रक्षःपतेः रावणस्य स्वयं योद्धुं यद्यभिप्रायोऽकल्प्स्यत् समपत्स्यत् । 'तासि च क्लृपः । ७ । २ । । ६० ।' इति चकारात् स्यकारे च नेट् । तदा तमप्यहमकल्स्र्यम् उत्सारयामि । अहमद्येति एवं वदन् कपिर्वनमचरत् । 'सेऽसिचि कृतचृतच्छृदतृदनृतः । ७ । २ । ५७ ।' इति विभाषेट् । अकल्प्स्यदकल्स्र्यमिति च ' लिङ्निमित्ते लृङ् क्रियातिपत्तौ । ३ । ३ । १३९ ।' इति लृङ् । हेतुहेतुमद्भावश्च लिङो निमित्तम् ॥ ४४ ॥

हते तस्मिन्प्रियं श्रुत्वा कल्प्ता प्रीतिं परां प्रभुः ।
तोषोऽद्यैव च सीतायाः परश्चेतसि कल्प्स्यति ॥ ४५ ॥

हत इत्यादि—तस्मिन् रक्षःपतौ हते प्रियं श्रुत्वा प्रभुः रामः परां प्रीतिं कल्प्ता जनयिता । अत्रान्तर्भावितो ण्यर्थः । धातोरकर्मकत्वात् । सीतायाश्चाद्यैव चेतसि तोषः परो महान् कल्प्स्यति सम्पत्स्यते । 'तासि च क्लृपः । ७ । २ । ६० ।' इतीट्प्रतिषेधः । 'लुटि च क्लृपः । १ । ३ । ९३ ।' इति परस्मैपदम् ॥ ४५ ॥

आहूय रावणोऽवोचदथेन्द्रजितमन्तिकात् ।
वने मत्त इव क्रुद्धो गजेन्द्रः प्रधनेष्वटन् ॥ ४६ ॥

आहूयेत्यादि—अथ रावणः इन्द्रजितमाहूय अन्तिकमवोचत् । किमवोचदित्याह—वने मत्त इव । यथा गजेन्द्रो मत्तः क्रुद्धो वने पर्यटन् द्विषामन्तं गतवान् तथा त्वं प्रधनेषु संग्रामेष्वटन् । द्विषामन्तं ययाथेति वक्ष्यमाणश्लोकेनान्वयः ॥ ४६ ॥

ययाथ त्वं द्विषामन्तं भूयो यातासि चाऽसकृत् ।
शशक्थ जेतुं त्वं देवान्मायाः सस्मर्थ संयति ॥ ४७ ॥

ययाथेत्यादि—न केवलं ययाथ, भूयः पुनरपि यातासि यास्यसि । यातेः क्रादिनियमात् प्राप्तस्येटः 'अचस्तास्वत्थल्यनिटो नित्यम् । ७ । २ । ६१ ।' इति प्रतिषेधः । तस्य हि तासौ नित्यमनिट्त्वम् । 'अजन्ता धातवोऽनुदात्ताः' इति वचनात् । देवान् जेतुं त्वमसकृत् बहुधा शशक्थ शक्तोऽसि । 'उपदेशेऽत्वतः । ७ । २ । ६२ ।' इति थलीट्प्रतिषेधः । शकेस्तासौ नित्यानिट्त्वम् । शकिस्तु कान्त इति वचनात् । मायाश्च कूटयुद्धानि । संयति युद्धे । सस्मर्थ ज्ञातवानसि । 'ऋतो भारद्वाजस्य । ७ । २ । ६३ ।' इतीट्प्रतिषेधः ॥ ४७ ॥

त्वं ससर्जिथ शस्त्राणि दद्रष्ठाऽरींश्च दुःसहान् ।
शस्त्रैरादिथ शस्त्राणि त्वमेव महतामपि ॥ ४८ ॥

त्वमित्यादि—शस्त्राणि त्वं ससर्जिथ क्षिप्तवानसि । अरींश्च दुःसहान् युध्यतः दद्रष्ठ दृष्टवानसि न पलायितोऽसि । 'विभाषा सृजिदृशोः । ७ । २ । ६५ ।' इति थलि विभाषेट् । अनिट्पक्षे 'सृजिदृशोर्झल्यमकिति । । ६ । १ । ५८ ।' इत्यम् । षत्वष्टुत्वे । महतामपि मध्ये त्वमेव शस्त्राणि परकीयानि शस्त्रैः स्वैरादिथ जग्धवानसि । 'इडत्त्यर्तिव्ययतीनाम् । ७ । २ । ६६ ।' इत्यदेरिट् ॥ ४८ ॥

स त्वं हनिष्यन्दुर्बुद्धिं कपिं व्रज ममाऽऽज्ञया ।
मा नाऽञ्जीः राक्षसीर्मायाः प्रस्तावीर्मा न विक्रमम् ॥ ४९ ॥

स त्वमित्यादि—स त्वमेवंविधः कपिं दुर्बुद्धिं चपलत्वाद्धनिष्यन् हनिष्यामीति मदाज्ञया व्रज । 'ऋद्धनोः स्ये । ७ । २ । ७० ।' इतीट् । 'वस्वेकाजाद्घसाम् । ७ । २ । ६७ ।' इत्यादिसूत्रत्रयं नोदाहृतम् । वस्वादेशस्य छन्दोविषयत्वात् । राक्षसीर्माया मा नाञ्जीः मा न व्यक्तीकुरु । अपि तु व्यक्तीकुर्वित्यर्थः । 'अञ्जेः सिचि । ७ ।२ । ७१ ।' इतीट् । विक्रमं न मा प्रस्तावीः मा न प्रारभस्व । 'स्तुसुधूञ्भ्यः परस्मैपदेषु । ७ । २ । ७२ ।' इतीट् ॥ ४९ ॥

मा न सावीर्महाऽस्त्राणि मा न धावीरिरिं रणे ।
वानरं मा न संयंसीर्व्रज तूर्णमशङ्कितः ॥ ५० ॥

मा नेत्यादि–रणे महास्त्राणि मा न सावीः मा न प्रसुहि । मा न मुञ्चेत्यर्थः। 'षु प्रसवैश्वर्ययोः' इत्यस्य रूपम् । अरिञ्च मा न धावीः मा न कम्पय अपि तु भीषयस्वेत्यर्थः । पूर्ववदिट् । वानरं मा न संयंसीः मा न वधीः । 'यमरमनमातां सक् च ।७।२।७३।' इति सगिटौ ।'समुदाङ्भ्यो यमो ग्रन्थे ।१। ३।७५।' इति तङ् न भवति । तत्राकर्मकादिति वर्तते । यत एवं तस्मादशङ्कितस्तूर्णं व्रज ॥ ५० ॥

अनंसीच्चरणौ तस्य मन्दिरादिन्द्राजिद्व्रजन् ।
अवाप्य चाशिषस्तस्मादायासीत्प्रीतिमुत्तमाम् ॥ ५१ ॥

अनंसीदित्यादि–एवमुक्त इन्द्रजित् मान्दिरात् व्रजन् गमिष्यन् । 'वर्तमानसामीप्ये वर्तमानवद्वा ।३।३।१३१।' इति लट् । तस्य पितुश्चरणावनंसीत् नतवान् । तस्माद्रावणादाशिष अवाप्योत्तमां प्रीतिमायासीत् । पूर्ववत्सगिटौ॥५१॥

गते तस्मिन्नुपारंसीत्संरम्भाद्रक्षसां पतिः ।
इन्द्रजिद्विक्रमाभिज्ञो मन्वानो वानरं जितम् ॥ ५२ ॥

गत इत्यादि—गते तस्मिन् रक्षसां पतिः रावणः संरम्भात् क्रोधादुपारंसीत् निवृत्तवान् । पूर्ववत्सगिटौ । रमेः 'उपाच्च ।१।३।८४।' इति तिप् । स इन्द्रजित् वानरं जितं मन्वानोऽवगच्छन् । यतो विक्रमाभिज्ञः । अगादिति वक्ष्यमाणेन सम्बन्धः ॥ ५२ ॥

अथ युग्मम् ।

संसिस्मयिषमाणोऽगान्मायां व्यञ्जिजिषुर्द्विषः ।
जगत्पिपविषुर्वायुः कल्पान्त इव दुर्धरः ॥ ५३ ॥
लोकानाशिशिषोस्तुल्यः कृतान्तस्य विपर्यये ।
वने चिकरिषोर्वृक्षान्बलं जिगरिषुः कपेः ॥ ५४ ॥

संसिस्मयिषमाण इत्यादि—संसिस्मयिषमाणः उपहासितुमिच्छन् द्विषः शत्रून् । अगात् गतवात् । 'पूर्ववत्सनः ।१।३।६२।' इति तङ् । मायां व्यञ्जिजिषुः व्यक्तीकर्तुमिच्छुः । 'स्मिपूङ्रञ्ज्वशां सनि ।७।२।७४।' इतीट् । तत्राञ्जेः 'न न्द्राः संयोगादयः ।६।१।३।' इति नकारो न द्विरुच्यते । कल्पान्ते युगान्ते वायुरिव दुर्धरः जगत् पिपविषुः पवितुमुत्क्षेप्तुमिच्छुः विपर्यये विनाशकाले लोकानाशिशिषोः भक्षयितुमिच्छोः । कृतान्तस्य तुल्योऽगादिति पूर्वेण संबन्धः । पूर्ववदिट् । वने वृक्षांश्चिकरिषोः विक्षेप्तुमिच्छोः । कपेर्बलं सामर्थ्यं जिगरिषुः अपनेतुमिच्छुः । कॄग्रोरुगन्तत्वात् 'सनि ग्रहगुहोश्च ।७।२।१२।' इति प्रतिषेधे प्राप्ते 'इट् सनि वा ।७।२।४१।' इति विकल्पे प्राप्ते 'किरश्च पञ्चभ्यः । ७।२।२५।' इतीट् । किरतेरिटो दीर्घत्वं नेच्छन्तीति न दीर्घः ॥ ५३ ॥ ५४ ॥

रोदिति स्मेव चाऽयाति तस्मिन्पक्षिगणः शुचा ।
मुक्तकण्ठं हतान्वृक्षान्बन्धून्बन्धोरिवाऽऽगमे ॥ ५५ ॥

रोदितीत्यादि—तस्मिन्निन्द्रजिति आयात्यागच्छति सति पक्षिगणः हतान् वृक्षान् कपिनाशितान् शुचा शोकेन मुक्तकण्ठं सशब्दं नामग्राहं रोदिति स्मेव रुदितवानिव । नामग्रहणपूर्वया रोदनाक्रियया व्याप्यमानत्वात् वृक्षाणां कर्मसंज्ञा । 'रुदादिभ्यः सार्वधातुके ।७।२।७६।' इतीट् । बन्धून् बन्धोरिव यथा बन्धो रागमने कश्चित् बन्धून् रोदिति ॥ ५५ ॥

आश्वसीदिव चायाति तद्वेगपवनाहृतम् ।
विचित्रस्तबकोद्भासि वनं लुलितपल्लवम् ॥ ५६ ॥

आश्वसीदित्यादि--तस्मिन्नायाति वनं तद्वेगपवनाहृतं सत् आश्वसीदिव संजीवितमिव । लङि रूपम् । यतो विचित्रस्तबकोद्भासि लुलितपल्लवं च जातम् । पूर्ववदिट् ॥ ५६ ॥

न प्राणिषि दुराचार मायानामीशिषे न च ।
नेडिषे यदि काकुत्स्थं तमूचे वानरो वचः ॥ ५७ ॥

इतीडधिकारः ।

नेत्यादि--वानरस्तमागच्छन्तमिदं वचनमूचे । हे दुराचार ! न प्राणिषि न जीवसि । 'अन च' इत्यस्य रूपम् । पूर्ववदिट् । 'अनितेः ।८।४।१९।' इति णत्वम् । न च मायानामीशिषे नेशिता भवसि । 'ईशः से ।७।२।७७।' इतीट् । 'अधीगर्थदयेशां कर्म्मणि ।२।३।५२।' इति कर्मणि षष्ठी । यदि काकुत्स्थं नेडिषे न स्तौषि । 'ईडजनोर्ध्वे च ।७।२।७८।' इति चकारात् से चेतीट् ॥ ५७ ॥

इतोडधिकारः ।

इदानीं 'विसर्जनीयस्य सः ।८।३।३४।' इत्यधिकृत्याह—

ससैन्यश्छादयन्संख्ये प्रावर्तिष्ट तमिन्द्रजित् ।
शरैः क्षुरप्रैर्मायाभिः शतशः सर्वतो मुहुः ॥ ५८ ॥

ससैन्य इत्यादि—इन्द्रजित् ससैन्यः सबलः तं वानरं सर्वतः शरैः क्षुरप्रैः भल्लैः छादयन् मुहुः क्षणं मायाभिः शतशोऽनेकधा संख्ये प्रावर्तिष्ट प्रवृत्तः । लुङि रूपम् । तत्र ससैन्यश्छादयन् इत्यत्र । 'विसर्जनीयस्य सः ।८।३।३४।' इति सत्वं छकारे परे श्चुत्वम् । शरैः क्षुरप्रैरिति सत्वापवादः । शर्परे खरि विसर्जनीयस्य विसर्जनीयः विसर्जनीयस्य विकारनिवृत्त्यर्थः । मायाभिः शतशः सर्वत इति 'वा शरि । ८। ३। ३६।' इति विकल्पः विसर्जनीयः सकारो वा ॥ ५८ ॥

वानरः कुलशैलाभः प्रसह्यायुधशीकरम् ।
रक्षस्पाशान्यशस्काम्यस्तमस्कल्पानदुद्रुवत् ॥ ५९ ॥

वानर इत्यादि—वानरः कुलशैलाभः संग्रामे स्थिरत्वात् । आयुधं शीकरमिव नैरन्तर्येण पतनात् । प्रसह्याभिभूय । 'कुप्वोः ≍क≍पौ च ।८।३। ३७ ।' इति वा जिह्वामूलीयोपध्मानीयौ । रक्षस्पाशान् कुत्सितराक्षसान् । 'याप्ये पाशप् । ५ ३ । ४७ ।' स्वार्थिका अपि प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते । यशस्काम्यन् आत्मनो यश इच्छन् । अत्र तकारे परतः 'नश्छव्यप्रशान् । ८ । ३ । ७ ।' इति रुत्वं विसर्जनीयसकारौ च पूर्वस्यानुनासिकः । तमस्कल्पान् ईषदसमाप्ततमसः । कुप्वोरपवादः 'सोऽपदादौ । ८ । ३ । ३८ ।' इति सकारः । तत्र 'पाशकल्पककाम्येषु' इति परिगणनम् । अदुद्रुवत् ढौकते स्म । 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् । ३ । १ । ४८ ।' इति चङ् ॥ ५९ ॥

धनुष्पाशभृतः सङ्ख्ये ज्योतिष्कल्पोरुकेशरः ।
दुधाव निर्नमस्कारान् राक्षसेन्द्रपुरस्कृतान् ॥ ६० ॥

धनुरित्यादि—धनुष्पाशभृतः कुत्सितधनुर्धरान् राक्षसान् । ज्योतिष्कल्पोरुकेशरः अग्नितुल्यबृहत्सटो वानरः । 'इणः षः । ८ । ३ । ३९ ।' इति पाशादिष्वेव विसर्जनीयस्य षत्वम् । दुधाव कम्पितवान् । यस्मान्निर्नमस्कारान् अप्रणामान् । राक्षसेन्द्रेणेन्द्रजिता पुरस्कृतान् अग्रतः स्थापितान् । 'नमस्पुरसोर्गत्योः । ८ । ३ । ४० ।' इति विसर्जनीयस्य सकारः । इण उत्तरस्य तु विसर्जनीयस्य स एवाधिक्रियते । तत्र नमःशब्दस्य साक्षात्प्रभृतिषु पाठात् । पुरःशब्दस्य 'पुरोऽव्ययम् । १ । ४ । ६७ ।' इति गतिसञ्ज्ञा ॥ ६० ॥

स्वामिनो निष्क्रयं गन्तुमाविष्कृतबलः कपिः ।
रराज समरे शत्रून् घ्नन्दुष्कृतबहिष्कृतः ॥ ६१ ॥

स्वामिन इत्यादि—स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुं शत्रून् घ्नन् विनाशयन् कपिः रराज । आविष्कृतबलः प्रकटितसामर्थ्यः । दुष्कृतबहिष्कृतः । दुष्कृतं पापं बहिष्कृतमनेनेति 'वाहिताग्न्यादिषु । २ । २।३७।' इति द्रष्टव्यम् । सर्वत्र 'इदुदुपधस्य चाप्रत्ययस्य । ८ । ३ । ४१ ।' इत्यनेनाप्रत्ययविसर्जनीयस्य षत्वम् ॥ ६१ ॥

चतुष्काष्ठं क्षिपन् वृक्षान् तिरस्कुर्वन्नरीन्रणे ।
तिरस्कृतदिगाभोगो ददृशे बहुधा भ्रमन् ॥ ६२ ॥

चतुरित्यादि—चतस्रः काष्ठा दिशो यस्मिन् क्षेपण इति क्रियाविशेषणम् । पूर्ववत् षत्वम् । चतसृषु दिक्षु वृक्षान् रणे क्षिपन् भ्रमन् एकोऽपि बहुधा ददृशे दृष्टः कपिः । क्षिपन्निति तौदादिकः । अरींस्तिरस्कुर्वन् अभिभवन् तिरस्कृतदिगाभोगः अपनीतदिग्विस्तरः । 'तिरसोऽन्यतरस्याम् । ८ । ३ ।४२।' इति पक्षे सत्वम् ॥ ६२ ॥

अथ युग्मम् ।

द्विष्कुर्वतां चतुष्कुर्वन्नभिघातं नगैर्द्विषाम् ।
बहिष्करिष्यन् सङ्ग्रामाद्रिपून् ज्वलनपिङ्गलः ॥ ६३ ॥

द्विष्कुर्वतामित्यादि—असौ कपिराटीदिति वक्ष्यमाणेन सम्बन्धः । कीदृशः । द्विष्कुर्वतां द्वौ वारावभिघातं कुर्वतां द्विषां चतुष्कुर्वन् चतुरो वारान् नगैर्वृक्षैरभिघातं कुर्वन् । 'द्विस्त्रिश्चतुरिति कृत्वोऽर्थे । ८ । ३ । ४३ ।' इति विसर्जनीयस्य वा षत्वम् । अरीन् संग्रामाद्बहिष्करिष्यन् अपनेष्यामीति । 'इसुसोः सामर्थ्ये । ८ । ३ । ४४ ।' इति विसर्जनीयस्य पक्षे षत्वम् । सामर्थ्यं चात्र व्यपेक्षा, नैकार्थीभावः । बहिष्करिष्यन्निति द्वयोः परस्परव्यपेक्षत्वात् ॥ ६३ ॥

ज्योतिष्कुर्वन्निवैकोऽसावाटीत्सङ्ख्ये परार्ध्यवत् ।
तमनायुष्करं प्राप शक्रशत्रुर्धनुष्करः ॥ ६४ ॥

ज्योतिरित्यादि—एकोऽपि ज्वलनपिङ्गलः ज्योतिष्कुर्वन्निव अग्निं दीपयन्निव । पूर्ववत्पक्षे विसर्जनीयस्य षः । परार्ध्यवत् दिव्य इव । परार्धो द्युलोकः । ब्रह्माण्डसंबन्धिन ऊर्ध्वभागस्योत्कृष्टत्वात् । तत्र भव इति 'परावराधमोत्तमपूर्वाच्च ।४।३।५।'इति यत् । संख्ये संग्रामे आटीत् परिचक्राम । 'इट ईटि । ८ । २ । २८ ।' इति सिचो लोपः । तं कानरमनायुष्करं प्राणापहारिणं शक्रशत्रुरिन्द्रजित् प्राप प्राप्तवान् । धनुष्करः धनुः करे यस्येति । 'नित्यं समासेऽनुत्तरपदस्थस्य ।८।३।४५। इति षत्वम् ॥ ६४ ॥

अस्यन्नरुष्करान् बाणान् ज्योतिष्करसमद्युतिः ।
यशस्करो यशस्कामं कपिं बाणैरताडयत् ॥ ६५ ॥

अस्यन्नित्यादि—बाणानरुष्करान् व्रणजनकान् । 'दिवाविभा-।३।२।२१।' इत्यादिना टः । अस्यन् क्षिप्यन् । ज्योतिष्करसमद्युतिः ज्योतिष्करणशीलः आदित्यः । 'कृञो हेतुताच्छील्यानुलोम्येषु ।३।२।२०।' इति टः । तेन तुल्य

इत्यर्थः। पूर्ववत् षत्वम्। यशस्करो यशोजननशीलः। इन्द्रजित् यशस्कामं यशसि कामोऽस्येति तं कपिं बाणैरवाकिरत् अताडयत्। 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य। ८। ३। ४६।' इत्यनव्ययविसर्जनीयस्य सत्वम्॥ ६५॥

चकाराऽधस्पदं नासौ चरन् वियति मारुतिः।
मर्माविद्भिस्तमस्काण्डैर्विध्यमानोऽप्यनेकधा॥ ६६॥

## इति सत्वाधिकारः।

चकारेत्यादि—असौ मारुतिर्वियति चरन् अधस्पदं पृथिव्यां पदं न चकार। अधस्पदमिति मयूरव्यंसकादित्वात्समासः।'कस्कादिषु च।८।३।४८।' इति सत्वम्। मर्माणि विध्यन्तीति क्विप्। 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ। ६। ३। ११६।' इति पूर्वपदस्य दीर्घत्वम्॥ ६६॥

इति सत्वाधिकारः।

इतः प्रभृति 'अपदान्तस्य मूर्धन्यः।८।३।५५।' इत्यधिकृत्याह—

पुरुहूतद्विषो धूर्षु युक्तान् यानस्य वाजिनः।
आयूंषि त्वक्षु निर्भिद्य प्राभञ्जनिरमोचयत्॥ ६७॥

पुरुहूतेत्यादि—पुरुहूतद्विष इन्द्रजितः संबन्धिनो यानस्य रथस्य धूर्षु युक्तान् वाजिनः त्वक्षु चर्मसु निर्भिद्य प्राभञ्जनिर्मारुतिरायूंषि जीवितानि अमोचयत् त्याजितवान्। धूर्षु त्वक्ष्विति 'आदेशप्रत्ययोः।८।३।५९।' इति षः। प्रत्ययसकारत्वात्। तत्र हि 'इण्कोः' इति वर्तते। परेण च णकारेण प्रत्याहारः। आयूंषीति 'नुम्विसर्जनीय शर्व्यवायेऽपि।८।३।५८।' इति षत्वम्। 'सहेः साडः सः।८।३।५६।' इति छन्दोविषयत्वान्नोदाहृतम्। ततः 'छन्दसि सहः।३।२।६३।' इति ण्विप्रत्ययस्य विधानात्। एवं च 'पृतनाषाड्द्विष' इति पाठान्तरमयुक्तम्॥ ६७॥

सुषुपुस्ते यदा भूमौ रावणिः सारथिं तदा।
आहर्तुमन्यानाशिषत्प्रोषितत्रासकर्कशः॥ ६८॥

सुषुपुरित्यादि—ते यदा भूमौ सुषुपुः निपेतुः। आदेशसकारत्वात् पूर्ववत् षत्वम्। तदा रावणिरन्यानश्वानाहर्तुमानेतुं सारथिमाशिषत् आदिष्टवान्। 'सर्तिशास्त्यर्तिभ्यश्च। ३। १। ५६।' इत्यङ्। 'शास इदङ्हलोः। ६। ४।३४।' इतीकारः। 'शासिवसिघसीनां च। ८। ३। ६०।' इति षत्वम्।

प्रोषितत्रासः प्रोषितादूरामादुपगतभयः । कर्कशश्च रौद्रः । प्रोषित इति यजादित्वात्संप्रसारणम् । षत्वं पूर्ववत् ॥ ६८ ॥

**प्रतुष्टूषुः पुनर्युद्धमासिषञ्जयिषुर्भयम् ।**
**आतस्थौ रथमात्मीयानुत्सिसाहयिषन्निव ॥ ६९ ॥**

प्रतुष्टूषुरित्यादि—अक्षा आनीता इति पुनरपि युद्धं प्रतुष्टूषुः प्रस्तोतुमारब्धुमिच्छुः सन् । 'अज्झनगमां सनि ।६।४।१६।' इति दीर्घः । 'सनाशंसभिक्ष उः ।३।२।१६८।' इत्युः । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ।२।३।६९।' इति षष्ठीप्रतिषेधः । रथमातस्थौ आरूढवान् । भयमासिषञ्जयिषुः संश्लेषयितुमिच्छुः हनूमता । अत्र स्तौतेः सनि षत्वभूतसञ्ज्ञेश्च 'स्तौतिण्योरेव षण्यभ्यासात् ।८।३।६१।' इति अभ्यासादुत्तरस्य षत्वम् । आत्मीयान् भृत्यानुत्सिसाहयिषन्निव उत्साहयितुमिच्छन्निव युध्यध्वमिति । स्तौतीत्यादिना षत्वे प्राप्ते 'सः स्विदिस्वदिसहीनां च ।८।३।६२।' इति षकारस्य सत्वम् ॥ ६९ ॥

**बलान्यभिषिषिक्षन्तं तरुभिः कपिवारिदम् ।**
**विजिगीषुः पुनश्चक्रे व्यूहं दुर्जयमिन्द्रजित् ॥ ७० ॥**

बलानीत्यादि—कपिवारिदं कपिं वारिदमिव । बलान्यभिषिषिक्षन्तं तरुभिः अभिषेक्तुं छादयितुमिच्छन्तम् । 'स्थादिष्वभ्यासेन चाभ्यसस्य ।८।३।६४।' इत्यभ्याससकारस्य च षत्वम् । तमेवंविधं कपिम् विजिगीषुर्विजेतुमिच्छुः इन्द्रजित् । 'सँल्लिटोर्जेः ।७।१।५७।' इति कुत्वम् । पुनर्व्यूहं बलसन्निवेशं दुर्जयाख्यं चक्रे । हस्त्यश्वादिसैनिकानां मण्डलस्थित्या विरच्यते ॥ ७० ॥

**अभिष्यन्तः कपिं क्रोधादभ्यषिञ्चन्निवात्मनः ।**
**सम्प्रहारसमुद्भूतै रक्तैः कोष्णैररुश्च्युतैः ॥ ७१ ॥**

अभिष्यन्त इत्यादि—राक्षसाः क्रोधादात्मनोऽभिष्यन्तः अन्तं नयन्तः । 'षोऽन्तकर्मणि' इत्यस्माच्छतरि 'ओतः श्यनि ।७।३।७१' इत्योकारलोपः । 'उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ।८।३।६५।' इति षत्वम् । सम्प्रहारसमुद्भूतैः रक्तैः कोष्णैरीषदुष्णैः । अरुश्च्युतैः व्रणान्निर्गतैः कपिमभ्यषिञ्चन्निव अभिषिक्तवन्त इव । लङि रूपम् । 'प्राक् सितादड्व्यवायेऽपि ।८।३।६३।' इति षत्वम् ॥ ७१ ॥

सङ्ग्रामे तानधिष्ठास्यन् निषद्य पुरतोरणम् ।
अविषीदन्नवष्टब्धान् व्यष्टभ्नान् नरविष्वणान् ॥ ७२ ॥

सङ्ग्राम इत्यादि—ये प्राणिनः अभिषिञ्चन्ति तान्नरविष्वणान् राक्षसान् । सङ्ग्रामे अधिष्ठास्यन् अस्वतन्त्रीकरिष्यन् कपिः । 'उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ।८।३।६५।' इति षत्वम् । पुरतोरणं पुरद्वारं व्यष्टभ्नात् आश्रितवान् । निषद्य तत्रैव पुरतोतरणे स्थित्वा प्राणिनो मा प्रविक्षुरिति अविषीदन् विषादमगच्छन् । निषद्याविषीदन्निति 'सदिरप्रतेः ।८।३।६६।' इति षत्वम् । अवष्टब्धान् अविदूरान् । 'अवाच्चालम्बनाविदूर्ययोः ।८।३।६८।' इति षत्वम् । व्यष्टभ्नादिति अड्व्यवाये वेः 'स्तन्भेः ।८।३।६७।' इति षत्वम् । 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च ।३।१।८२।' इति श्नाप्रत्ययः । सशब्दायामभ्यवहारक्रियायां स्वनतिर्वर्तते । नराणां विष्वणा इति समासः । नरान् सशब्दमभ्यवहरन्त इत्यर्थः । 'वेश्च स्वनो भोजने ।८।३।६९ ।' इति षत्वम् ॥ ७२ ॥

विषह्य राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन् ।
यन्न व्यषहतेन्द्रोऽपि कपिः पर्यषहिष्ट तत् ॥ ७३ ॥

विषह्येत्यादि—विषह्य सोढ्वा कपिचेष्टितमित्यर्थात् । 'सात्पदाद्योः । ८ । ३ । १११ ।' इति प्रतिषेधे प्राप्ते 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ।८।३।७०।' इति षत्वम् । राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन् विक्षिप्तवन्तः । लङि रूपम् । यच्च शस्त्रजालमिन्द्रोऽपि न व्यषहत न सोढवान् । लङि रूपम् । तत्कपिः पर्यषाहिष्ट । लुङि रूपम् । सहेः 'सिवादीनां वाड्व्यवायेऽपि ।८।३।७१।' इति विभाषा षत्वम् ॥ ७३ ॥

विष्यन्दमानरुधिरो रक्तविस्यन्दपाटलान् ।
विष्कन्तॄन्परिघेणाहन्नविस्कन्ता कपिर्द्विषः ॥ ७४ ॥

विष्यन्देत्यादि—विष्यन्दमानरुधिरः क्षरद्रक्तः कपिः परिघेणाहन् ताडितवान् । द्विषः शत्रून् । रक्तविस्यन्दपाटलान् रक्तस्रुतिलोहितान् 'अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु । ८ । ३ । ७२ ।' इति विभाषा षत्वम्, रक्तस्याप्राणित्वात् । विष्कन्तॄन् । विविधं स्कन्तुं गन्तुं शीलमेषामिति तृन् । अविस्कन्ता कपिः अगमनशील स्थानशील इत्यर्थः । 'वेः स्कन्देरनिष्ठायाम् । ८ । ३ । ७३।' इति विभाषा षत्वम् ॥ ७४ ॥

मेघनादः परिस्कन्दन् परिष्कन्दन्तमाश्वरिम् ।
अबध्नादपरिस्कन्दं ब्रह्मपाशेन विस्फुरन् ॥ ७५ ॥

मेघनाद इत्यादि—मेघनाद इन्द्रजित् परिस्कन्दन् परितो भ्रमन् । परिष्कन्दन्तं परिभ्रमन्तमरिं कपिं ब्रह्मपाशेन ब्रह्मणा दत्तेन पाशेन आशु शीघ्रमबध्नात् बद्धवान् । लिङि श्नाप्रत्यये रूपम् । 'परेश्च ।८।३।७४।' इति वा षत्वम् । अपरिस्कन्दम् अप्राच्यभरतत्वात् । तेन 'परिस्कन्दः प्राच्यभरतेषु' इति निपातनम् । विस्फुरन् द्वेषादुद्गच्छन्नित्यर्थः । 'स्फुरतिस्फुलत्योर्निर्निविभ्यः।८।३।७६।' इति विभाषा षत्वम् ॥ ७५ ॥

विस्फुलद्भिर्गृहीतोऽसौ निष्फुलः पुरुषाऽशनैः ।
विष्कम्भितुं समर्थोऽपि नाऽचलद्ब्रह्मगौरवात् ॥ ७६ ॥

विस्फुलद्भिरित्यादि—असौ कपिः पुरुषाशनैः राक्षसैः विस्फुलद्भिः हर्षाच्चलद्भिर्गृहीतः । निष्फुलः सतेजाः । निष्फुलति दीप्यतीति पचाद्यच् । पूर्ववद्विभाषा षत्वम् । विष्कम्भितुं व्यापारितुं समर्थोऽपि ब्रह्मगौरवान्नाचलत् न चलितः । मा भून्मोघो ब्राह्मः पाश इति । 'वेः स्कभ्नातेर्नित्यम् । ८ । ३ । ७७ ।' इति षत्वम् ॥ ७६ ॥

कृषीढ्वं भर्तुरानन्दं मा न प्रोढ्वं द्रुतं वियत् ।
वानरं नेतुमित्युच्चैरिन्द्रजित्प्रावदत् स्वकान् ॥ ७७ ॥

कृषीढ्वमित्यादि—भर्तुः रावणस्य आनन्दं कृषीढ्वं कुरुध्वम् । लिङि रूपम् । अतो वानरं द्रुतं नेतुं वियदाकाशं मा न प्रोढ्वं मा नोत्पतिष्ट । माङि लुङ् । 'इणः षीध्वंलुङ्लिटां धोऽङ्गात् । ८ । ३ । ७८ ।' इति धकारस्य मूर्धन्यढकारः । इत्येवमुच्चैरिन्द्राजित् स्वकान् भृत्यान् प्रावदत् । वदेर्लङि रूपम् ॥ ७७ ॥

गतमङ्गुलिषङ्गं त्वां भीरुष्ठानादिहाऽऽगतम् ।
खादिष्याम इति प्रोचुर्नयन्तो मारुतिं द्विषः ॥ ७८ ॥

गतमित्यादि—अङ्गुलीनां सङ्गः अङ्गुलिषङ्गस्तं गतं प्राप्तम् । हस्तप्राप्तमित्यर्थः । 'समासेऽङ्गुलेः सङ्गः ।८ ।३ । ८० ।' इति षत्वम् । भीरोः कातरस्य यत् स्थानं तस्माद्भीरुष्ठानादिहागतम् । 'भीरोः स्थानम् ।८। ३ । ८१ ।' इति षत्वम् । खादिष्याम इति प्रोचुः । द्विषो राक्षसा मारुतिं नयन्तो नेष्यन्तः । वर्तमानसामीप्ये भविष्यति लट् ॥ ७८ ॥

अग्निष्टोमादिसंस्थेषु ज्योतिष्टोमाऽऽदिषु द्विजान्।
योऽरक्षीत्तस्य दूतोऽयं मानुषस्येति चावदन् ॥ ७९ ॥

अग्नीत्यादि---अग्निष्टोमादिसंस्थेषु सदृशेषु ज्योतिष्टोमादिषु यो द्विजानरक्षीत् तस्य मानुषस्यायं दूत इति चावदन्। नयन्तो द्विषः। 'अग्नेः स्तुत्स्तोमसोमाः । ८ । ३ । ८२ ।' 'ज्योतिरायुषः स्तोमः । ८ । ३ । ८३ ।' इति षत्वम् ॥ ७९ ॥

नासां मातृष्वसेय्याश्च रावणस्य लुलाव यः।
मातुः स्वसुश्च तनयान् खरादीन्निजघान यः ॥ ८० ॥

नासामित्यादि---रावणस्य या मातुः स्वसा भगिनी सा मातृष्वसा। 'मातृपितृभ्यां स्वसा । ८ । ३ । ८४ ।' इति षत्वम्। तस्या अपत्यं मातृष्वसेयी। 'मातृष्वसुश्च । ४ । १ । १३४ ।' इति ठगन्तलोपौ। तस्या यो नासां लुलाव। मातुः स्वसुश्च तनयान् खरादीन्निजघान। 'मातुः पितुर्भ्यामन्यतरस्याम् ।८।३।८५।' इति षत्वाभावपक्षे 'विभाषा स्वसृपत्योः ।६।३।२४।' इति षष्ठ्या अलुक् ॥ ८० ॥

प्रादुःषन्ति न संत्रासा यस्य रक्षःसमागमे।
तस्य क्षत्रियदुःषूतेरयं प्रणिधिरागतः ॥ ८१ ॥

प्रादुरित्यादि---यस्य रक्षःसमागमे संत्रासाः भयानि न प्रादुःषन्ति न प्रादुर्भवन्ति। 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ।८।३।८७। इति दुःशब्दादुत्तरस्थास्तिसकारस्य 'श्नसोरल्लोपः ।६।४।१११।' इत्यल्लोपे कृते षत्वम्। प्रादुःसकारस्य च ष्टुत्वम्। तस्य क्षत्रियदुःषूतेः दुष्पुत्रस्यायं प्रणिधिरागत इति चावदन् नयन्तः। सूयत इति सूतिः। दुर्निन्दायामिति। सूतेः सकारस्य 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः ।८।३।८८।' इति षत्वम् ॥ ८१ ॥

दृष्ट्वा सुषुप्तं राजेन्द्रं पापोऽयं विषमाशयः।
चारकर्मणि निष्णातः प्रविष्टः प्रमदावनम् ॥ ८२ ॥

दृष्ट्वेत्यादि---राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः। सुषुप्तं गाढनिद्रम्। 'वचिस्वपियजादीनां किति । ६ । १ । १५ ।' इति सम्प्रसारणम्। पापोऽयं विषमाशयः। 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः ।८।३।८८।' इति षत्वम्। चारकर्मणि निष्णातः कुशलः। 'निनदीभ्यां स्नातेः कौशले ।८।३।८९।' इति षत्वम् ॥ ८२ ॥

अथ पञ्चभिः कुलकम् ।

**सुप्रतिष्णातसूत्राणां कपिष्ठलसमत्विषाम् ।**
**स्थितां वृत्ते द्विजातीनां रात्रावैक्षत मैथिलीम् ॥ ८३ ॥**

सुप्रतीत्यादि---येषां द्विजातीनां सुप्रतिष्णातानि ग्रन्थतोऽर्थतश्च निश्चितानि सूत्राणि तेषां सुप्रतिष्णातसूत्राणाम् । 'सूत्रं प्रतिष्णातम् । ८ । ३ । ९० ।' इति निपातनम् । कपिष्ठलसमत्विषां कपिष्ठलो नाम द्विजर्षभो गोत्रप्रवर्तकः । 'कपिष्ठलो गोत्रे ।८।३।९१।' इति साधुः । तत्तुल्यतेजसां द्विजातीनां वृत्ते चरिते स्थितां मैथिलीं रात्रौ ऐक्षत ॥ ८३ ॥

कीदृशीमित्याह--

**सर्वनारीगुणैः प्रष्ठां विष्टरस्थां गविष्ठिराम् ।**
**शयानां कुष्ठले तारां दिविष्ठामिव निर्म्मलाम् ॥ ८४ ॥**

सर्वेत्यादि--यावन्तो नारीगुणाः तैः प्रष्ठाम् अग्रगामिनीम् । 'प्रष्ठोऽग्रगामिनि ।८।३।९२।' इति साधुः । विष्टरस्थामासनस्थाम् । 'वृक्षासनयोर्विष्टरः ।८।३।९३।' इति साधुः । गविष्ठिरां वाचि स्थिराम् । 'गवियुधिभ्याम् स्थिरः ।८।३।९५।' इति षत्वम् । अस्मादेव वचनात् सप्तम्या अलुक् । कुष्ठले शयानां कोः स्थले भूतले शुद्धे । 'विकुशमिपरिभ्यः स्थलम् ।८।३।९६।' इति षत्वम् । दिविष्ठां दिवि तिष्ठतीति 'सुपि स्थः ।३।२।४।' इति कः । 'तत्पुरुषे कृति बहुलम् ।६।३।१४।' इति सप्तम्या अलुक् । गगनस्थां तारामिव निर्मलाम् । 'अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्कङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः।८।३।९७।' इति षत्वम् ॥ ८४ ॥

**सुषाम्नीं सर्वतेजस्सु तन्वीं ज्योतिष्टमां शुभाम् ।**
**निष्टपन्तीमिवाऽऽत्मानं ज्योतिःसात्कुर्वतीं वनम् ॥ ८५ ॥**

सुषाम्नीमित्यादि---शोभनं साम यस्या इति विगृह्य 'अन उपधालोपिनोऽन्यतरस्याम् ।४।१।२८।' इति ङीप् । 'सुषामादिषु च ।८।३।९८।' इति षत्वम् । सुष्ठु प्रियंवदामित्यर्थः । तन्वीं कृशाम् । शुभां कल्याणीम् । सर्वतेजस्सु ज्योतिष्टमाम् अतिशयेन ज्योतिष्मतीम् । 'ह्रस्वात्तादौ तद्धिते ।८।३।१०१।' इति षत्वम् । एवं च कृत्वा निष्टपन्तीमिवात्मानं सकृज्ज्वलयन्तीमिवात्मानम् । 'निसस्तपतावनासेवने ।८।३।१०२।' इति षत्वम् । वनं ज्योतिःसात्कुर्वतीं अज्योतिर्ज्योतिः कुर्वाणाम् । कारस्न्येन दीपयन्तीमित्यर्थः ।

कार्त्स्न्ये सातिप्रत्ययः । तत्र 'नुम्विसर्जनीयशर्व्यवायेऽपि ।८।३।५८।' इति प्राप्तस्य षत्वस्य 'सात्पदाद्योः ।८।३।१११।' इति प्रतिषेधः । युष्मदित्यादिनोदाहृतं छान्दसत्वात् ॥ ८५ ॥

मधुसाद्भूतकिञ्जल्कपिञ्जरभ्रमराकुलाम् ।
उल्लसद्भूत्कुसुमां पुण्यां हेमरत्नलतामिव ॥ ८६ ॥

मध्वित्यादि---मधुसाद्भूतकिञ्जल्कं कार्त्स्न्येन मधुतामापन्नम् यत्किञ्जल्कं पुष्पकेसरं तन्मधुसाद्भूतकिञ्जल्कम् । 'आदेशप्रत्यययोः ।८।३।५९।' इति प्राप्तस्य पूर्ववत्प्रतिषेधः । तेन पिञ्जराः पिङ्गलाः ये भ्रमराः तैराकुलाम् । उल्लसत्कुसुमां चलत्पुष्पाम् हेमरत्नलतामिव । यथा हेमरत्नमयीं कल्पतरुलतां पुण्यां पवित्रां तद्वत्तामपीत्यर्थः ॥ ८६ ॥

विलोचनाम्बु मुञ्चन्तीं कुर्वाणां परिसेसिचाम् ।
हृदयस्येव शोकाऽग्निसंतप्तस्योत्तमव्रताम् ॥ ८७ ॥

विलोचनेत्यादि---विलोचनाम्बु अश्रु मुञ्चन्तीं विक्षिपन्तीम् । हृदयस्य शोकाग्निसंतप्तस्य परिसेसिचाम् भृशं निर्वाणमिव कुर्वाणामीक्षतेति पूर्वेण सम्बन्धः । सिचेर्यङन्तात् स्त्रीलिङ्गे भावे अकारप्रत्ययः । 'उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् । ८ ।३।६५।' इत्यभ्यासव्यवायेऽपि प्राप्तस्य षत्वस्य 'सिचो यङि । ८ । ३ । ११२ ।' इति प्रतिषेधः । उत्तमव्रतां पतिव्रतात्वात् ॥ ८७ ॥

दृष्ट्वा तामभनग्वृक्षान्द्विषो घ्नन्पारिसेधतः ।
परितस्तान्विचिक्षेप क्रुद्धः स्वयमिवानिलः ॥ ८८ ॥

दृष्ट्वेत्यादि---तां दृष्ट्वा वृक्षानभनक् चूर्णितवान् । द्विषः शत्रून् पारिसेधतः आगच्छतः घ्नन् हिंसन् । पूर्ववत्प्राप्तस्य 'सेधतेर्गतौ ।८।३।११३।' इति प्रतिषेधः। परितश्च समन्तादुद्विचिक्षेप उन्मूलितवान् । लिटः संयोगादित्वादकित्त्वे गुणः। क्रुद्धः स्वयमिव साक्षादिवानिलः ॥ ८८ ॥

अप्रतिस्तब्धविक्रान्तमनिस्तब्धो महाहवे ।
विसोढवन्तमस्त्राणि व्यतस्तम्भद्घनध्वनिः ॥ ८९ ॥

अप्रतीत्यादि---घनध्वनिर्मेघनादः अनिस्तब्धोऽनभिभूतः अप्रतिस्तब्धविक्रान्तम् अनाभिभूतविक्रमं कपिम् । 'स्तन्भेः ।८।३।६७।' इति प्राप्तस्य षत्वस्य 'प्रतिस्तब्धनिस्तब्धौ च ।८।३।११४।' इति प्रतिषेधनिपातनम् । अस्त्राणि महा-

इवे विसोढवन्तं 'सोढः ।८।३।११५।' इति प्रतिषेधः । व्यतस्तम्भत् निष्पादितवान् । एवं नयन्तोऽवदानिति योज्यम् । स्तम्भेर्ण्यन्तस्य 'स्तम्भुसिवुसहां चङि ।८।३।११६।' इति षत्वप्रतिषेधः ॥ ८९ ॥

ते विज्ञायाभिसोष्यन्तं रक्तै रक्षांसि सव्यथाः ।
अन्यैरप्यायतं नेहुर्वरत्राशृङ्खलाऽऽदिभिः ॥ ९० ॥

त इत्यादि—ते राक्षासाः ये मारुतिं नेष्यन्तः । रक्तैः रक्षांसि विसोष्यन्तं अभिषेक्ष्यन्तं कपिम् । 'सुनोतेः स्यसनोः ।८।३।११७।' इति न षत्वम् । यद्याकृष्यमाणो न नीयेत अवश्यम् राक्षासान् रक्तः सोष्यतीति विज्ञाय सव्यथाः सभयाः सन्तः । अन्यैरपि वरत्राशृङ्खलादिभिरायतं दीर्घं नेहुः बध्नन्ति स्म । 'णह बन्धने' इत्यस्य लिटि रूपम् ॥ ९० ॥

विषसादेन्द्रजिद्बुद्ध्वा बन्धे बन्धान्तरक्रियाम् ।
दिव्यबन्धो विषहते नापरं बन्धनं यतः ॥ ९१ ॥

इति षत्वाधिकारः ॥

विषसादेत्यादि—बन्धे दिव्ये बन्धान्तरक्रियां बन्धनविशेषकरणं बुद्ध्वा इन्द्रजित् विषसाद विषादमुपगतः । नियतं दिव्यबन्धं मुक्तवानिति । यतो दिव्यबन्धो नापरं स्वयं बन्धनं विषहते । अतो विषसादेति योज्यम् । सदिस्वञ्जयोः परस्य लिटि षत्वप्रतिषेधः । पूर्वस्य तु 'सदिरप्रतेः । ८ । ३ । ६६ ।' इति भवत्येव । विषहत इति न प्रतिषेधः । तत्र सोढरूपस्य ग्रहणात् ॥ ९१ ॥
इति मूर्धन्याधिकारः ।

इतःप्रभृति णत्वमधिकृत्याह—

मुष्णन्तमिव तेजांसि विस्तीर्णोरस्थलं पुरः ।
उपसेदुर्दशग्रीवं गृहीत्वा राक्षसाः कपिम् ॥ ९२ ॥

मुष्णन्तमित्यादि—राक्षसाः पुरः कपिमादाय दशग्रीवमासेदुः ढौकितवन्तः । ननु दर्शनगोचरं गताः । अप्रभातत्वात् । कीदृशम् । तेजांसि मुष्णन्तमिव खण्डयन्तमिव । विस्तीर्णोरःस्थलं विस्तृतवक्षसम् । तत्र 'रषाभ्यां नो णः समानपदे । ८ । ४ । १ ।' इति णत्वम् ॥ ९२ ॥

बहुधा भिन्नमर्माणो भीमाः खरणसाऽऽदयः ।
अग्रेवणं वर्तमाने प्रतीच्यां चन्द्रमण्डले ॥ ९३ ॥

बहुधेत्यादि—वानरद्विषो राक्षसा ऊचुरिति वक्ष्यमाणेन सम्बन्धः । कीदृशाः किमूचुरित्याह—बहुधा भिन्नमर्माण इति । यानि कालान्तरे प्राणहराणि मर्माणि तानि बहुधा भिन्नानि येषामिति बहुव्रीहिः । अट्पवर्गसमुदायस्य व्यवधानात् 'अट्कुप्वाङ्नुम्व्यवायेऽपि ।८।४।२।' इति णत्वम् । खरणसादयः खरस्येव नासिका यस्येति । 'अञ्नासिकायाः संज्ञायां नसं चास्थूलात् ।५।४।११८।' इत्यच् नसादेशश्च । 'पूर्वपदात्संज्ञायामगः ।८।४।११८।' इति णत्वम् । खरणसादयो राक्षसाः । वनस्याग्रे अग्रेवणम् । राजदन्तादित्वात्परनिपातः । 'वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः ।८।४।४।' इति णत्वम् । प्रतीच्यां दिशि यद्वनं तस्य वनस्याग्रे उपरि वर्तमाने चन्द्रमण्डले प्रभातसंध्यायामित्यर्थः ॥ ९३ ॥

निर्वणं कृतमुद्यानमनेनाऽऽम्रवणाऽऽदिभिः ।
देवदारुवनाभिश्रैरित्यूचुर्वानरद्विषः ॥ ९४ ॥

निर्वणमित्यादि—उद्यानं संनिवेशविशेषः निर्वणं वृक्षरहितम् अनेन कपिना कृतम् । आम्रवणादिभिरुपलक्षितम् । उभयत्रापि 'प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसञ्ज्ञायामपि । ८ । ४ । ५ ।' इति णत्वम् । देवदारुवनामिश्रैः । 'विभाषौषधिवनस्पतिभ्यः । ८ । ४ । ६ ।' इति णत्वं न भवति । 'द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम्' इति वचनात् । इत्येवमूचुः ॥९४॥

उपास्थिषत सम्प्रीताः पूर्वाह्णे रोषवाहणम् ।
राक्षसाः कपिमादाय पतिं रुधिरपायिणाम् ॥ ९५ ॥

उपेत्यादि—ते राक्षसाः पतिमुपास्थिषत उपागताः । दृष्टिपथं गता इत्यर्थः । 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्' इति संगतिकरणे तङ् । 'स्थाघ्वोरिच्च । १ । २ । १७ ।' सम्प्रीता हृष्टाः तेपामनुज्ञातप्रवेशत्वात् । पूर्वाह्णे प्रत्यूषसि । 'अह्नोऽदन्तात् ।८।४।७।' इति णत्वम् । रोषवाहणं कपिमादाय । रोषस्यासन्नीकृतम् । 'वाहनमाहितात् ।८।४।८।' इति णत्वम् । रोषस्य तत्राधीयमानत्वात् । पतिं रुधिरपायिणां राक्षसानाम् । 'पानं देशे ।८।४।९।' इति णत्वम् ॥ ९५ ॥

सुरापाणपरिक्षीवं रिपुदर्पहरोदयम् ।
परस्त्री वाहिनं प्रापुः साऽऽविष्कारं सुरापिणः ॥ ९६ ॥

सुरेत्यादि—सुरापाणात्परिक्षीवं मत्तं रावणम् । 'वा भावकरणयोः । ८।४।१०।' इति णत्वम् । रिपुदर्पहर उदयो वृद्धिर्यस्य तम् । परस्त्रियं

वाहयितुमुपभोक्तुं शीलं यस्य तं परस्त्रीवाहिनम् । 'प्रातिपदिकान्तनुम्विभक्तिषु च ।८।४।११।' इति णत्वाभावः पाक्षिकः । प्रापुः सुष्ठु निकटीकृताः । साविष्कारा: साहङ्काराः । सुरापिणः सुरापैर्युक्ताः । सुरां पिबन्तीति 'गापोष्टक् ।३।२।८।' इति टक् । ते येषां सन्तीति मत्वर्थीयः । 'एकाजुत्तरपदे णः । ८ । ४ । १२ ।' इति णत्वम् । उत्तरस्य प्रातिपदिकान्तस्यैकाच्त्वात् ॥ ९६ ॥

संघर्षयोगिणः पादौ प्रणेमुस्त्रिदशद्विषः ।
प्रहिण्वन्तो हनूमन्तं प्रमीणन्तं द्विषन्मतीः ॥ ९७ ॥

समित्यादि—संघर्षयोगिणः स्पर्धायोगिनः । 'कुमति च ।८।४।१३।' इति णत्वम् । ते अन्योऽन्याभिभवेच्छया त्रिदशद्विषो रावणस्य पादौ प्रणेमुः । 'उपसर्गादसमासेऽपि णोपदेशस्य ।८।४।१४।' इति णत्वम् । हनूमन्तं प्रहिण्वन्तः ढौकयन्तः । द्विषन्मतीः शत्रुबुद्धीः प्रमीणन्तम् अभिभवन्तम् । 'मीञ् हिंसायाम् ।' क्रैयादिकः । 'हिनुमीना ।८।४।१५।' इति णत्वम् ॥ ९७ ॥

प्रवपाणि शिरो भूमौ वानरस्य वनच्छिदः ।
आमन्त्रयत संक्रुद्धः समितिं रक्षसां पतिः ॥ ९८ ॥

प्रवपाणीत्यादि—अस्य वानरस्य वनच्छिदः शिरो भूमौ प्रवपाणि छित्त्वा पातयामि । 'आनि लोट् ।८।४।१६।' इति णत्वम् । वपिरत्र पातने वर्तते । संक्रुद्धः रक्षसां पतिः स्वामी समितिं समूहम् आमन्त्रयत भाषितवान् ॥ ९८ ॥

प्रण्यगादीत् प्रणिघ्नन्तं घनः प्रणिनदन्निव ।
ततः प्रणिहितः स्वार्थे राक्षसेन्द्रं विभीषणः ॥ ९९ ॥

प्रण्यगादीदित्यादि—तत उत्तरकालं विभीषणो राक्षसेन्द्रं प्रणिघ्नन्तं हन्तुमारभमाणं प्रण्यगादीत् वक्तुं प्रवृत्तः । घन इव प्रणिनदन् गर्जन् । स्वार्थे राक्षसेन्द्रस्य प्रणिहितोऽवहितमनाः । सर्वत्र 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ।८।४।१७।' इति णत्वम् ॥ ९९ ॥

प्रणिशाम्य दशग्रीव ! प्रणियातुमलं रुषम् ।
प्रणिजानीहि हन्यन्ते दूता दोषे न सत्यपि ॥ १०० ॥

प्रणिशाम्येत्यादि—हे दशग्रीव ! प्रणिशाम्य रोषं त्यज । लोटि श्यनि रूपम् । 'शमामष्टानां दीर्घः श्यनि ।७।३।७४।' इति दीर्घः । रूपं प्रणियातुमलं न

किंचित् । पूर्ववण्णत्वम् । प्रणिजानीहि अवगच्छ । सत्यपि दोषे न हन्यन्ते दूता इति । जानातेः शेषधातोरुपदेशावस्थायां अकखाद्यषान्तत्वात् । 'शेषे विभाषा कखादावषान्त उपदेशे ।८।४।१८।' इति णत्वम् ॥ १०० ॥

प्राणयन्तमरिं प्रोचे राक्षसेन्द्रो विभीषणम् ।
प्राणिणिषुर्न पापोऽयं, योऽभाङ्क्षीत्प्रमदावनम् ॥ १०१ ॥

प्राणयन्तमित्यादि–अरिं कपिं यः प्राणयति जीवयति तं प्राणयन्तं विभीषणम् । 'श्वस प्राणने । अन च' इत्यस्य रूपम् । 'अनितेः ।८।४।१९।' इति णत्वम् । प्रोचे राक्षसेन्द्रः । न प्राणिणिषुः न जीवितुमिच्छुरयं पापः । 'उभौ साभ्यासस्य ।८।४।२१।' इति णत्वं द्वयोरपि । योऽभाङ्क्षीत् भग्नवान् प्रमदावनम् । हलन्तलक्षणा वृद्धिः ॥ १०१ ॥

प्राघानिषत रक्षांसि येनाऽऽप्तानि वने मम ।
न प्रहण्मः कथं पापं वद पूर्वापकारिणम् ॥ १०२ ॥

प्राघानिषतेत्यादि–मम आप्तानि अक्षप्रभृतीनि येन वने प्राघानिषत मारितानि । कर्माणि लुङ् । चिण्वदिट् । 'हो हन्तेर्ञ्णिन्नेषु ।७।३।५४।' इति घत्वम् । तपरपरिच्छिन्नाकारपूर्वस्य नकारस्य 'हन्तेरत्पूर्वस्य ८ । ४ । २२ ।' इति णत्वं न भवति । तं पूर्वापकारिणं पापं कथं न प्रहण्मः मारयाम इति वद कथय । 'वमोर्वा ।८।४।२३।' इति णत्वम् ॥ १०२ ॥

वेश्मान्तर्हणनं कोपान्मम शत्रोः करिष्यतः ।
मा कार्षीरन्तरयणं प्रयाणार्हमवेह्यमुम् ॥ १०३ ॥

वेश्मेत्यादि—शत्रोर्वेश्मान्तः गृहमध्य एव हननं कोपान्मम करिष्यतः । 'अन्तरदेशे ।८।४।२४।' इति नकारस्य णत्वम् । हननस्याभावरूपस्यादेशत्वात् । अन्तरयणमन्तरायणं विघातं मा कार्षीः 'अयनं च ।८।४।२५।' इति णत्वम् । प्रयाणार्हं दीर्घप्रस्थानार्हममुमवेहि अवगच्छ । 'कृत्यचः।८।४।२९।'इति णत्वम्। अच उत्तरस्य नकारस्य कृत्स्थत्वात् ॥ १०३ ॥

प्रहीणजीवितं कुर्युर्ये न शत्रुमुपस्थितम् ।
न्याय्याया अपि ते लक्ष्म्याः कुर्वन्त्याशु प्रहापणम् ॥ १०४ ॥

प्रहीणेत्यादि–शत्रुमुपस्थितं प्रहीणजीवितं ये न कुर्युः । जहातेः 'ओदितश्च ।८।२।४५।' इति निष्ठादेशनकारस्य पूर्ववण्णत्वम् । ते न्याय्याया अपि कुलक्रमादागताया अपि लक्ष्म्याः प्रहापणं त्याजनं कुर्वन्ति 'णेर्विभाषा।८।४।३०।' इति णत्वम् ॥ १०४ ॥

कः कृत्वा रावणाऽऽमर्षप्रकोपणमवद्यधीः ।
शक्तो जगति शक्रोऽपि कर्तुमायुःप्रगोपणम् ॥ १०५ ॥

कः कृत्वेत्यादि—अवद्यधीः योऽबुद्धिः रावणामर्षस्य प्रकोपणमभिवृद्धिं कृत्वा आयुःप्रगोपणं कर्तुं शक्रोऽपि कः शक्तः । 'हलश्चेजुपधात् ।८।३।३१।' इति णत्वम् । कुपगुपयोर्हलन्तयोरिगुपधत्वात् ॥१०५॥

वनान्तप्रेङ्खणः पापः फलानां परिणिंसकः ।
प्रणिक्षिष्यति नो भूयः प्रणिन्द्यास्मान्मधून्ययम् ॥ १०६ ॥

वनेत्यादि—प्रेङ्खति गच्छतीति प्रपूर्वादिङ्खेः कर्तरि ल्युट् । वनान्तस्य वनसमीपस्य प्रेङ्खणः । 'इजादेः सनुमः ।८४३२।' इति णत्वम् । फलानां परिणिंसकः भक्षयिता । 'णिसि चुम्बने' इत्यस्य रूपम् । अस्मान् प्रणिन्द्य तिरस्कृत्य । भूयः पुनरप्ययं मधूनि नोऽस्माकं प्रणिक्षिष्यति भोक्ष्यति । 'णिक्ष चुम्बने' इत्यस्य रूपम् ।'वा निंसनिक्षनिन्दाम् ।८।३।३३।'इति णत्वम् ॥१०६॥

हरेः प्रगमनं नास्ति न प्रभानं हिमद्रुहः ।
नाऽतिप्रवेपनं वायोर्मया गोपायिते वने ॥ १०७ ॥

हरेरित्यादि—मया गोपायिते रक्षिते वने हरेरिन्द्रस्यापि चन्द्रस्य वा प्रगमनं संचारो नास्ति । हिमद्रुहः आदित्यस्य न प्रभानं न प्रकर्षेण दीप्तिः । वायोर्नातिप्रवेपनं मन्दगमनम् । तदनेन भग्नमित्यर्थात् । 'कृत्यचः ।८।४।२९।' इति प्राप्तस्य णत्वस्य 'न भाभूपूकमिगमिप्यायीवेपाम् । ८ । ४ । ३४ ।' इत्यादिना प्रतिषेधः ॥ १०७ ॥

दुष्पानः पुनरेतेन कपिना भृङ्गसम्भृतः ।
प्रनष्टविनयेनाग्र्यः स्वादुः पुष्पाऽऽसवो वने ॥ १०८ ॥

दुष्पान इत्यादि—पुनरेतेन प्रनष्टविनयेन कपिना पुष्पासवो दुष्पानः दुःखेन पाय्यत इति 'आतो युच् ।३।३।१२८।' षात्पदान्तात् । ८ । ४ । ३५ ।' इति णत्वस्य प्रतिषेधः । भृङ्गसम्भृतो भ्रमरसंचितः । प्रनष्ट इति 'नशेः षान्तस्य ।८।४।३६।' इति प्रतिषेधः । अग्र्यः श्रेष्ठः ॥ १०८ ॥

रोषभाममुखेनैवं क्षुभ्नतोक्ते प्लवङ्गमः ।
प्रोचे सानुनयं वाक्यं रावणं स्वार्थसिद्धये ॥ १०९ ॥

इति णत्वाधिकारः ।

रोषेत्यादि--रोषभीममुखेन इति 'पदव्यवायेऽपि ।८।४।३८।' इति णत्वप्रतिषेधः, भीममुख इत्यनेन निमित्तनिमित्तिनोर्व्यवधानात् । 'क्षुभ्नादिषु च ।८।४।३९।' इति णत्वप्रतिषेधः । एवमुक्ते सति प्लवङ्गमः रावणं प्रोचे वक्तुं प्रवृत्तः । वाक्यं वक्ष्यमाणं सानुनयम् अनुकूलम् । किमर्थं स्वार्थस्य सिद्धये । स्वार्थश्च सीताप्रत्यर्पणम् ॥ १०९ ॥ इति णत्वाधिकारः ।

इतः प्रभृति प्रकीर्णकश्लोकानाह--

**दूतमेकं कपिं बद्धमानीतं वेश्म पश्यतः ।**
**लोकत्रयपतेः क्रोधः कथं तृणलघुस्तव ॥ ११० ॥**

दूतमित्यादि--दूतं संदेशस्य हारकं एकमद्वितीयम् बद्धम् अस्वतन्त्रीकृतं वेश्मानीतं पश्यत इति सर्वमेतन्न रोषकारणम् । अतो लोकत्रयपतेस्तवायं तृणवल्लघुरसारः कथं कोपः ॥ ११० ॥

**अग्न्याहितजनप्रह्वे विजिगीषापराङ्मुखे ।**
**कस्माद्वानीतिनिष्णस्य संरम्भस्तव तापसे ॥ १११ ॥**

अग्नीत्यादि--अग्न्याहितजनप्रह्वे आहिताग्नौ जने प्रवणे । वाहिताग्न्यादिषु पूर्वनिपातः । तस्मिन् विजिगीषापराङ्मुखे त्यक्तराज्यत्वात् तापसे रामे । 'तपःसहस्राभ्यां विनीनी ।५।२।१०२।' 'अण् च ।५।२।१०३।' इत्यण् । नीतिनिष्णस्य तव । नीतौ पटुप्रज्ञस्य कस्माद्धेतोः संरम्भः रोषः ॥ १११ ॥

**न सर्वरात्रकल्याण्यः स्त्रियो वा रत्नभूमयः ।**
**यं विनिर्जित्य लभ्यन्ते कः कुर्यात्तेन विग्रहम् ॥ ११२ ॥**

नेत्यादि---यं विनिर्जित्य सर्वरात्रे कल्याण्यः स्त्रियो न लभ्यन्ते । सर्वाश्च ता रात्रयश्चेति 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ।२।१।४९।' इति समासः । 'अहःसर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः ।५।४।८७।' इत्यच् । सर्वरात्रं कल्याण्य इति सः । वा रत्नभूमयः रत्नाकराः रत्नानि भूमयश्चेति सः । कः तेन सह विग्रहं कुर्यात् सन्धिरेव युक्तः ॥ ११२ ॥

तदेव दर्शयन्नाह---

**संगच्छ रामसुग्रीवौ भुवनस्य समृद्धये ।**
**रत्नपूर्णाविवाम्भोधी हिमवान् पूर्वपश्चिमौ ॥ ११३ ॥**

संगच्छेत्यादि---यथा रत्नपूर्णावम्भोनिधी पूर्वपश्चिमौ भुवनस्य समृद्धये हिमवान् संगतवान् तथा त्वमपि रामसुग्रीवौ भुवनस्य समृद्धये संगच्छ

संगतिं कुरु । सकर्मकत्वात् 'समो गम्यृच्छिभ्याम् ।१।३।२९।' इति तङ् न भवति ॥ ११३ ॥

तच्च संततं परदारार्पणेनैवेति दर्शयन्नाह—

सुहृदौ रामसुग्रीवौ किंकराः कपियूथपाः ।
परदारार्पणेनैव लभ्यन्ते मुञ्च मैथिलीम् ॥ ११४ ॥

सुहृदावित्यादि---रामसुग्रीवौ सुहृदौ लभ्येते । 'सुहृद्दुर्हृदौ मित्रामित्रयोः ।५।४।१५०।' इति निपातनम् । तत्प्रीतिलाभात् किङ्करा लभ्यन्ते । किं कुर्वन्तीति 'दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ।३।२।२१।' इति टः । कपियूथपा नीलप्रभृतयः । तस्मान्मुञ्च मैथिलीमिति ॥ ११४ ॥

किंच सीताप्रत्यर्पणात् पुरुषार्थप्राप्तिरिति दर्शयन्नाह—

धर्मं प्रत्यर्पयन् सीतामर्थं रामेण मित्रताम् ।
कामं विश्वासवासेन सीतां दत्त्वाऽऽप्नुहि त्रयम् ॥ ११५ ॥

धर्ममित्यादि—सीतां प्रत्यर्पयन् धर्मम् । अधर्मविरतेः अर्थम् । रामेण मित्रताम् । सर्वलाभानामर्थसंपन्नमित्रलाभस्य महत्त्वात् । विश्वासवासेन रामविश्वासपूर्वकेणावस्थानेन कामम् । अतः सीतां दत्त्वा आप्नुहि लभस्व । त्रयं त्रिवर्गं त्रयोऽवयवा अस्येति । 'द्वित्रिभ्यां तयस्यायज्वा । ५।२।४३।' ॥ ११५ ॥

रिपुरेवास्तु किं तेन मित्रीकृतेन, न वासौ शक्तोऽपकर्तुमिति चेदाह—

विराधताडकावालिकबन्धखरदूषणैः ।
न च न ज्ञापितो यादृङ्मारीचेनापि ते रिपुः ॥ ११६ ॥

विराधेत्यादि---यादृगसौ रिपुः तादृग्विराधादिभिः न च न ज्ञापितः तव । अपि तु ज्ञापित एवेत्यर्थः । तस्मात्तेन सह मैत्री युक्ता न विग्रह इति भावः । यादृगिति 'त्यदादिषु दृशोऽनालोचने कञ्च ।३।२।६०।' इति चकारात् क्विन् । 'आ सर्वनाम्नः ।६।३।९१।' इत्याकारादेशः ॥ ११६ ॥

खरादीन् व्यापादयता तेनैव वैरकारणमाचरितं न मयेति चेदाह—

खराऽऽदिनिधनं चापि मा मंस्था वैरकारणम् ।
आत्मानं रक्षितुं यस्मात्कृतं तन्न जिगीषया ॥ ११७ ॥

खरेत्यादि—खरादिनिधनं चापि, वैरकारणं मा मंस्थाः मा ज्ञासीः । लुङि रूपम् । यस्मादात्मानं संरक्षितुम् तत् खरादिनिधनं कृतं, न तु जिगीषया विजेतुमिच्छया ॥ ११७ ॥

ततः क्रोधाऽनिलाऽऽपातकम्प्राऽऽस्याऽम्भोजसंहतिः ।
महाह्रद इव क्षुभ्यन् कपिमाह स्म रावणः ॥ ११८ ॥

तत इत्यादि—ततः कपिवाक्यानन्तरं क्रोधोऽनिल इव तस्यापातेन संश्लेषेण कम्प्रा कम्पनशीला आस्याम्भोजानां मुखपद्मानां संहतिर्यस्य स एवं महाह्रद इव क्षुभ्यन् चलन् । दिवादित्वाच्छ्यन् ॥ ११८ ॥

हतराक्षसयोधस्य विरुग्णोद्यानशाखिनः ।
दूतोऽस्मीति ब्रुवाणस्य किं दूतसदृशं तव ॥ ११९ ॥

हतेत्यादि—हताः राक्षसयोधाः अक्षप्रभृतयो येन । विरुग्णा भग्नाः । 'ओदितश्च ।८।२।४५।' इति निष्ठानत्वम् । उद्यानशाखिनो येन । तस्यैवंविधस्य तव दूतोऽस्मीति ब्रुवाणस्य किं ? दूतसदृशम् । संदेशमात्रस्य प्रापका हि दूता इति भावः ॥ ११९ ॥

अभ्यर्हितजनप्रह्वे तापसे कस्मात्संरम्भ इत्याह—

पङ्गुबालस्त्रियो निघ्नन् कबन्धखरताडकाः ।
तपस्वी यदि काकुत्स्थः कीदृक् कथय पातकी ॥ १२० ॥

पङ्गुबालेत्यादि—पङ्गुमङ्गविकलं कबन्धं बालं खरं स्त्रियं ताडकां निघ्नन् व्यापादयन् यदि तपस्वी काकुत्स्थः, कीदृक् पातकीति कथय । 'इदं-किमोरीश् की ।६।३।९०।' इति 'की' आदेशः ॥ १२० ॥

यदुक्तं 'यं विनीर्जित्य स्त्रियो रत्नभूमयश्च न लभ्यन्ते' इत्याह—

अभिमानफलं जानन्महत्त्वं कथमुक्तवान् ।
रत्नादिलाभशून्यत्वान्निष्फलं रामविग्रहम् ॥ १२१ ॥

अभीत्यादि—अभिमानः फलं यस्य महत्त्वस्य तज्जानन् रत्नादिलाभशून्यं रामविग्रहं कथं निष्फलमुक्तवानसि ? । विग्रहे सति अभिमानफलं महत्त्वं स्यात् ॥ १२१ ॥

---

१ योद्धारो राक्षसा इत्यर्थः ।

'सीतां प्रत्यर्पयन् धर्ममाप्नुहि' इत्येतदप्ययुक्तमित्याह—

**परस्त्रीभोगहरणं धर्म एव नराशिनाम् ।**
**सुखमस्तीत्यभाषिष्ठाः का मे साशङ्कता त्वयि ॥ १२२ ॥**

परेत्यादि---परस्त्रीणां हरणं परेषां भोगहरणं च द्वयमपि नराशिनां धर्म एव आचार एव । अतो सुखमस्तीत्यभाषिष्ठाः अभिहितवानसीति सीतां प्रत्यर्पयन् धर्ममाप्नुहीति । लुङि रूपम् । भयात् प्रत्यर्पयसि चेदाह--का मे साशङ्कता त्वयीति त्रैलोक्यविजयित्वात् । त्वयीति हनूमद्व्यपदेशेन रामं सूचयति॥१२२॥

'संगच्छ रामसुग्रीवौ' इत्येतदपि न घटत इत्याह—

**ब्रूहि दूरविभिन्नानामृद्धिशीलक्रियान्वयैः ।**
**हनूमन् कीदृशं सख्यं नरवानररक्षसाम् ॥ १२३ ॥**

ब्रूहीत्यादि---ऋद्ध्या विभूत्या, शीलेन स्वभावेन, क्रियया अनुष्ठानेन, अन्वयेन कुलेन, दूरविभिन्नानां नरादीनां कीदृशं सख्यमिति हे हनूमन् ! त्वमेव ब्रूहि ॥ १२३ ॥

'विराधादिभिर्ज्ञापितोऽसि यादृगरिः' इत्यस्योत्तरमाह—

**एको द्वाभ्यां विराधस्तु जिताभ्यामविवक्षितः ।**
**हतश्छलेन मूढोऽयं तेनाऽपि तव कः स्मयः ॥ १२४ ॥**

एक इत्यादि—एकेनापि विराधेन प्रथमं द्वावपि जितौ ताभ्यां पश्चाद्धतः । तत्रापि न प्रकाशम्, अपि तु छलेन । यतोऽसौ मूढोऽल्पबुद्धिः । तथाप्यविवक्षितः । शौर्योन्न प्रतीतः । तेनापि हतेन तव कः विस्मयो जातः॥१२४॥

**मन्नियोगाच्च मारीचः पलायनपरायणः ।**
**युयुत्सारहितो रामं ममारापहरन्वने ॥ १२५ ॥**

मन्नियोगादित्यादि----मारीचस्तु यतो राममपहरन् ममार । मन्नियोगादादेशात् । पलायनपरायणः अपसर्पणनिष्ठः सन् । पलायनपरायण इति परस्य नामरूपत्वादनुपसर्गत्वान्न लत्वम् । युयुत्सारहितः योद्धुमिच्छारहितः । मन्नियोगादिति 'प्रत्ययोत्तरपदयोश्च । ७ । २ । ९८ ।' इति अस्मदो मदादेशः ॥ १२५ ॥

**निजघानाऽन्यसंसक्तं सत्यं रामो लतामृगम् ।**
**त्वमेव ब्रूहि संचिन्त्य युक्तं तन्महतां यदि ॥ १२६ ॥**

---

१ मनुष्यभक्षकाणाम्, रक्षसामिति यावत् ।

निजघानेत्यादि---रामो लतामृगं वानरं वालिनं निजघानेति सत्यमेतत्। किंतु अन्यसंसक्तं सुग्रीवेण सह युध्यमानं हतवान्। तच्च त्वमेव संचिन्त्य ब्रूहि युक्तं तन्महतां यदि ॥ १२३ ॥

पुंसा भक्ष्येण बन्धूनामात्मानं रक्षितुं वधः।
क्षमिष्यते दशास्येन कत्येयं तव दुर्मतिः ॥ १२७ ॥

पुंसेत्यादि---आत्मानं रक्षितुं पुंसा भक्ष्येण भक्षणार्हेण। सतां बन्धूनां खरदूषणादीनां वधो दशास्येन क्षमिष्यते साहिष्यते कत्येयं कभवेयं तव दुर्मतिर्दुष्टबुद्धिः। कशब्दात् 'अव्ययात्त्यप्। ४। २।१०४।' 'अमेहकतसित्रेभ्य'एव इति परिगणनात् ॥ १२७ ॥

इदानीं कपिर्दशाननोक्तं दूषयन्नाह----

कपिर्जगाद दूतोऽहमुपायं तव दर्शने।
द्रुमराक्षसविध्वंसमकार्षं बुद्धिपूर्वकम् ॥ १२८ ॥

कपिरित्यादि---तव दर्शने अन्य उपायो नास्तीति बुद्धिपूर्वकं निरूप्य द्रुमभङ्गं राक्षसविनाशं च उपायमकार्षं कृतवानस्मीति कपिर्जगाद। अन्यथा दूतोऽहमागत इति मदावलिप्तः को मां गणयेत्? । अतः सदृशमेव मया कृतमिति ॥ १२८ ॥

आत्रिकूटमकार्षुर्ये त्वत्का निर्जङ्गमं जगत्।
दशग्रीव कथं ब्रूषे तानवध्यान्महीपतेः ॥ १२९ ॥

आत्रीत्यादि---हे दशग्रीव! ये त्वत्काः त्वाद्ग्रमणीकाः कबन्धादयः। 'स एषां ग्रामणीः। ५।२।७८।' इति कन्। आत्रिकूटं त्रिकूटपर्वतमभिव्याप्य जगत् निर्जङ्गमं निर्जन्तुकमकार्षुः। तान् महीपतेः रामस्य कथमवध्यान् ब्रूषे!। अशिष्टनिग्रहो हि महीपतेर्धर्मः। जङ्गम इति गमेर्यङ्लुगन्तस्यापि रूपम् ॥ १२९ ॥

अभिमानफलं प्रोक्तं यत् त्वया राम विग्रहे।
विनेशुस्तेन शतशः कुलान्यसुररक्षसाम् ॥ १३० ॥

---

१ 'आङ्मर्यादाभिविध्योः २। १। १३' इति समासः।

**अभीत्यादि**—'मा भूद्रामविग्रहे रत्नादिलाभः अभिमानफलं महत्त्वमस्ति' इति यत्त्वया प्रोक्तं तेन निमित्तेन शतशोऽनेकशः असुररक्षसां कुलानि विनेशुः विनष्टानि ॥ १३० ॥

**यत् स्वधर्ममधर्मं त्वं दुर्बलं प्रत्यपद्यथाः।**
**रिपौ रामे च निःशङ्को नैतत्क्षेमंकरं चिरम् ॥ १३१ ॥**

**यदित्यादि**—यदधर्मं परस्त्रीभोगहरणं दुर्बलम् असारम् अश्रेयसामावाहकत्वात् । स्वधर्ममात्मीयमाचारं त्वं प्रत्यपद्यथाः प्रतिपन्नवानसि 'स्वधर्म एव नराशिनाम्' इति । लङि श्यनि रूपम् । यच्च रिपौ रामे निःशङ्कः निर्भयः विहरसि 'का मे साशङ्कता त्वयि' इति । तदेतदुभयमपि न चिरं क्षेमंकरं कल्याणकरम् । 'क्षेमप्रियमद्रेऽण्च ।३।२।४४।' इति खच् ॥ १३१ ॥

**अन्वयाऽऽदिविभिन्नानां यथा सख्यमनीप्सितम् ।**
**नैषीर्विरोधमप्येवं सार्धं पुरुषवानरैः ॥ १३२ ॥**

**अन्वयेत्यादि**—यथा नरादीनाम् अन्वयादिभिर्दूराविभिन्नत्वात् सख्यमनीप्सितम् आप्तुमनिष्टम् , एवं पुरुषवानरैः सार्धं विग्रहमपि नैषीः नेष्टवानसि ॥ १३२ ॥

**विराधं तपसां विघ्नं जघान विजितो यदि।**
**वरो धनुर्भृतां रामः स कथं न विवक्षितः ॥ १३३ ॥**

**विराधमित्यादि**—तपसां विघ्नं विराधम् । विहन्यतेऽस्मिन्निति 'घञर्थे कविधानम्' इति कः । तादृक्छलेनापि हन्तुं न दोषायेति दर्शयति—धनुर्भृतां वरः श्रेष्ठः सन् विजितोऽभिभूतोऽपि रामो यदि जघान स कथं न विवक्षितः यतो राममप्यसौ जितवान् ॥ १३३ ॥

**प्रणश्यन्नपि नाऽशक्नोदत्येतुं बाणगोचरम् ।**
**त्वयैवोक्तं महामायो मारीचो रामहस्तिनः ॥ १३४ ॥**

**प्रणश्यन्नित्यादि**—मारीचः प्रणश्यन्नपि पलायनपरोऽपि सन् महामायः कनकमृगरूपधारित्वात् । रामहस्तिनः रामो हस्तीव तस्य बाणगोचरं बाणपदवीम् अत्येतुमतिक्रमितुं नाशक्नोत् न शक्तवानिति त्वयैवोक्तम् , ममारेत्यभिदधता न मया । यदि शक्नोति अतिक्रमितुं न ममार ॥ १३४ ॥

---

१ अन्वयादिभिः वंशादिभिः । २ निहन्तारम् ।

**अन्याऽऽसक्तस्य यद्वीर्यं न त्वं स्मरसि वालिनः ।**
**मूर्च्छावान् नमतः संध्यां ध्रुवं तद्बाहुपीडितः ॥ १३५ ॥**

अन्यत्यादि---संध्यां देवतां नमतः अन्यासक्तस्य वालिनो यद्वीर्यं सामर्थ्यं तत् ध्रुवमवश्यं त्वं न स्मरसि न चेतयसि । कुतः बाहुपीडितः सन् मूर्च्छावान् जातः । अत एव न स्मरसि येनैवमुक्तवानसि 'निजघानान्य-संसक्तम्' इति ॥ १३५ ॥

**असद्बन्धुवधोपज्ञं विमुञ्च बलिविग्रहम् ।**
**सीतामर्पय नन्तव्ये कोशदण्डाऽऽत्मभूमिभिः ॥ १३६ ॥**

असदित्यादि---यतो बलवद्वधोऽपि बलीयान् रामः तस्माद्वालिना रामेण सह विग्रहं मुञ्च त्यज । कीदृशम् । बन्धुवधोपज्ञं प्रथमतो ज्ञातिविनाशेन विदितमित्यर्थः । उपज्ञायत इत्युपज्ञा । 'आतश्चोपसर्गे । ३ । ३ । १०६ ।' इत्यङ् । बन्धुवधस्योपज्ञेति समासः ।'उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ।२।४। २१।' इति नपुंसकलिङ्गता । तत्सामानाधिकरण्यादसदिति नपुंसकलिङ्गता । नन्तव्ये प्राणामार्हे । कोशदण्डात्मभूमिभिः सह सीतामर्पय ॥ १३६ ॥

**स्फुटपरुषमसह्यमित्थमुच्चैः सदसि मरुत्तनयेन भाष्यमाणः ।**
**परिजनमभितो विलोक्य दाहं दशवदनः प्रदिदेश वानरस्य ॥१३७॥**

## इति भट्टिकाव्ये नवमः सर्गः ।

इति प्रकीर्णकाः ।

स्फुटेत्यादि–इत्थं स्फुटपरुषम् उक्तप्रकारेण स्फुटं स्पष्टम् परुषं रूक्षम् अत एवासह्यं सोढुमशक्यम् । उच्चैर्महता ध्वनिना सदसि सभायां मरुत्तनयेन भाष्यमाणोऽभिहितः इत्थमित्यनेन वस्तुनः परिसमापितत्वात् । तेन वर्तमा-नसामीप्ये लट् । परिजनमभितः उभयपार्श्वे स्थितान् भृत्यान् विलोक्य वानरस्य दाहं प्रदिदेश आदिष्टवान् ॥ १३७ ॥

इति श्रीजयमङ्गलसूरिविरचितया जयमङ्गलाऽऽख्यया व्याख्यया
समलंकृते श्रीभट्टिप्रणीते रामचरिते काव्ये द्वितीयेऽधिकार-
काण्डे लक्षणरूपे चतुर्थः परिच्छेदः ।
लक्ष्यरूपे कथानके 'मारुतिसंयमो' नाम नवमः सर्गः ।
अधिकारकाण्डं समाप्तम् ।

---

१ अत्र 'पुष्पिताग्रा' वृत्तम्, 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति तल्लक्षणात् ।

# अथ प्रसन्नकाण्डम् ।

## दशमः सर्गः ।

शब्दलक्षणमुक्तमपि लक्षयन् काव्यलक्षणार्थं प्रसन्नकाण्डमुच्यते—काव्यस्यात्र प्रसन्नत्वात् । प्रथमं चेदं लक्षणं यत् प्रसन्नता नाम अविद्वदङ्गनाबालप्रतीतार्थं प्रसन्नवदिति । शब्दलक्षणं पुनः प्रकीर्णमेव द्रष्टव्यम् । तत्रास्मिन् काण्डे चत्वारः परिच्छेदाः । अलंकारमाधुर्यप्रदर्शनदोषाः भाषासमावेशश्चेति । तत्रालंकारो द्विविधः, शब्दालङ्कारोऽर्थालङ्कारश्चेति । तत्र पूर्वो द्विविधः, अनुप्रासो यमकं चेति उभयं दर्शयन्नाह—

### अनुप्रासवत् ।

अथ स वल्कदुकूलकुथाऽऽदिभिः[1] परिगतो ज्वलदुद्धतवालधिः ।
उदपतद्दिवमाकुललोचनैर्नृरिपुभिः सभयैरभिवीक्षितः ॥ १ ॥

अथेत्यादि—अथ दाहादेशानन्तरं स वानरो वियदाकाशमुदपतत् उत्पातितवान् । वल्कम् अंशुकम् 'शुकवल्कोल्का' इति निपातनम् । कुथःकुशः आदि शब्दादन्यैरपि मुञ्जादिभिः परिगतः परिवेष्टितः । ज्वलन्नुद्धत ऊर्ध्वीकृतो वालधिः पुच्छं यस्य सः । नृरिपुभिः राक्षसैः । सभयैराकुललोचनैरभिवीक्षितः किमयमनुष्ठास्यतीति । अनुप्रासवदिति अनुप्रासो यस्मिन् विद्यत इति । तस्य च लक्षणं—'सरूपवर्णविन्यासमनुप्रासं प्रचक्षते' इति ॥ १ ॥

यमकस्यापि लक्षणम्—'तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् । वर्णानां यः पुनर्वादो यमकं तन्निरूप्यते ॥' इति तदनेकविधं दर्शयन्नाह—

### युक्पादयमकम् ।

रणपण्डितोऽग्र्यविबुधारिपुरे कलहं स राममहितः कृतवान् ।
ज्वलदग्निरावणगृहं च बलात् कलहंसराममहितः कृतवान् ॥ २ ॥

---

[1] अत्र द्रुतविलम्बितं वृत्तम्, 'द्रुतविलम्बितमाह नभौ भरौ ।' इति तल्लक्षणात् ।

रणेत्यादि—स कपिः वियदुत्पतितो राममहितो रामपूजितः रणपण्डितो युद्धकुशलः अग्र्यविबुधारिपुरे अग्र्यो यो विबुधः इन्द्रः तस्य योऽरिर्दशाननस्तस्य पुरे लङ्कायां कलहं कृतवान् । (कलहंसान् रमयतीति कलहंसरामम् । रमेर्ण्यन्तात्कर्मण्यण् । तादृशं रावणगृहं बलाद्वार्यमाणोऽपि ज्वलदग्नि दीप्यमानपावकं कृतवान् कृतं विद्यते यस्येति कृतापेक्षीत्यर्थः । अहितः शत्रुः । युक्पादयमकमिति युजोर्द्वितीयचतुर्थयोः पादयोर्यमितत्वात् ॥ २ ॥

पादान्तयमकम् ।

**निखिलाऽभवन् न सहसा सहसा ज्वलनेन पूः प्रभवता भवता ।**
**वनिताजनेन वियता वियता त्रिपुराऽऽपदं नगमिता गमिता ॥ ३ ॥**

निखिलेत्यादि—ज्वलनेनाग्निना प्रभवता वृद्धिं गच्छता भवता समुत्पद्यमानेन सहसा तत्क्षणं पूः पुरी निखिला सर्वा न सहसा अभवत् सानन्दा न जाता । हासस्यानन्दकार्यत्वान् एवमुक्तम् । 'स्वनहसोर्वा ।३।३।६२।' इत्यपि रूपम् । वनिताजनेन वियता नभसा वियता भयादितस्ततो गच्छता त्रिपुरापदं गमिता प्रापिता पूः त्रिपुरेष्वपि दह्यमानेषु भयादितस्ततो जनो गतः नगं त्रिकूटपर्वतमिता सती । पादान्तयमकमिति पादान्तेषु यमितत्वात् ॥ ३ ॥

पादाऽऽदियमकम् ।

**सरसां सरसां परिमुच्य तनुं पततां पततां ककुभो बहुशः ।**
**सकलैः सकलैः परितः करुणैरुदितै रुदितैरिव खं निचितम् ॥ ४ ॥**

सरसामित्यादि—सरसाम् तोयाशयानां तनुं शरीरम् । सरसां सार्द्रां परिमुच्य त्रासात्त्यक्त्वा पततां पक्षिणां बहुशः बहून् वारान् ककुभो दिशः पततां गच्छतां उदितैः शब्दितैः । वदेर्यजादित्वात्सम्प्रसारणम् । सकलैः समस्तैः सकलैः माधुर्यवद्भिः । कलशब्दस्य गुणमात्रवृत्तित्वान्न तद्वति वर्तते । ततश्च सहशब्देन समासो भवति । करुणैः कारुण्यजनकै रुदितैरिव क्रन्दितैरिव परितः समन्तात् खमाकाशं निचितं व्याप्तम् । पादादियमकमिति पादानामादौ यमितत्वात् ॥ ४ ॥

---

१ अत्र 'प्रमिताक्षरा' वृत्तम् । 'प्रमिताक्षरा सजससैः कथिता' इति तल्लक्षणात् । २ अत्रापि 'प्रमिताक्षरा' छन्दः, तल्लक्षणं चोक्तं प्राक् । ३ अत्र 'तोटकं' वृत्तम्, 'इह तोटकमम्बुधिसैः प्रथितम्' इति तल्लक्षणात् । एवमग्रिमेऽपि पद्ये इदमेव छन्दः । न चात्र यमकमेव, किं तूत्प्रेक्षाऽपि ।

## पादमध्ययमकम् ।

न च कांचन काञ्चनसद्मचितिं न कपिः शिखिना शिखिना समयौत् ।
न च न द्रवता द्रवता परितो हिमहानकृता न कृता क च न ॥५॥

न चेत्यादि—काञ्चनसद्माचितिं सौवर्णगृहसंहतिं कांचन कांचिदपि शिखिना अग्निना शिखिना ज्वालावता न कपिर्न च समयौत् न च न मिश्रितवान् । अपि तु संश्लेषं नीतवान् । यौतेर्लुङि 'उतो वृद्धिर्लुकि हलि । ७।३।८९।' इति वृद्धिः। क च कश्चिन्नाम हिमहानकृता हिमहानस्य हिमापचयस्य कर्त्रा शिखिना । जहातेर्भावे ल्युट् । न च न द्रवता न च न विसर्पता अपि तु इतस्ततो गच्छता द्रवता द्रवभावः परितः न न कृता । किन्तु कृतैव । काञ्चनसद्मचितेरित्यर्थात् । पादमध्ययमकमिति पादानां मध्ये यमितत्वात् ॥ ५ ॥

## चक्रवालयमकम् ।

अवसितं हसितं प्रसितं मुदा विलसितं ह्रसितं स्मरभासितम् ।
न समदाः प्रमदा हत सम्मदाः पुरहितं विहितं न समीहितम्॥६॥[1]

अवसितमित्यादि—हसितं यत्प्रसितं संतत्प्रवृत्तम् । नित्यप्रमुदितत्वात्तत्रत्यजनस्य तदभिसङ्गमादवसितं अपगतम् । 'षोऽन्तकर्मणि' इत्यस्य 'द्यतिस्यतिमास्थामिति किति । ७ । ४ । ४० ।' इतीत्वम् । मुदा हर्षेण यद्विलसितं शृङ्गारविचेष्टितं लसितं श्लिष्टमनुबद्धमिति यावत् । स्मरभासितं मन्मथदीपितम् । ह्रसितम् अल्पीकृतम् । प्रमदाश्च स्त्रियः न समदाः सदर्पा न जाताः हतसंमुदा ध्वस्तहर्षाः 'प्रमदसम्मदौ हर्षे । ३ । ३ । ६८ ।' इति निपातनम् । यच्च पुरहितं पुरानुकूलं समीहितं कर्तुरीप्सितं तन्न विहितं नानुष्ठितमित्यर्थः चक्रवालयमकमिति मण्डलाकारेण यमितत्वात् । तथाहि । द्वयोर्द्वयोः पदयोरन्त्यवर्णानां नेमिवदवस्थितत्वात् मध्यस्य वर्णस्य विसदृशस्य नाभिवदिति । तथाचास्य लक्षणम्—'पदानामवसाने तु वाक्ये स्यात्तुल्यवर्णता । प्रतिपादं भवेद्यत्र चक्रवालं तदुच्यते ॥' इति ॥ ६ ॥

---

१ अत्र 'द्रुतविलम्बितं' छन्दः, तल्लक्षणं चोक्तं प्राक् ।

## समुद्गयमकम् ।

समिद्धशरणा दीप्ता देहे लङ्का मतेश्वरा ।
समिद्धशरणादीप्ता देहेऽलंकामतेश्वरा ॥ ७ ॥

समिद्धेत्यादि—देहे अभ्यन्तरभागे समिद्धशरणा उज्ज्वलगृहा तत एव दीप्ता शोभावती लङ्का पुरी मतेश्वरा ज्ञातमहादेवा । तत्रान्यदेवस्य नामापि न गृह्यते । समिधो दधति हतवन्तो वेति समिद्धा ऋषयः । पूर्वस्मात् 'आतोऽनुपसर्गे कः । ३ । २ । ३ ।' इति कः । द्वितीयस्मात् 'अन्येष्वपि दृश्यते । ३ । २ । १०१ ।' इति डः । अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात् धात्वन्तरादपि भवति 'झयो होऽन्यतरस्याम् । ८ । ४ । ६२ ।' इति पूर्वसवर्णः । तान् शृणन्ति हिंसन्तीति । 'कृत्यल्युटो बहुलम् । ३ । ३ । ११३ ।' इति कर्तरि ल्युट् । समिद्धशरणा राक्षसास्तान् दानमानाभ्यामादीपयति प्रोत्साहयतीति क्विप् । समिद्धशरणादीप् । रावणः तेन ताय्यते इति तायतेः कर्मणि कारके विवक्षिते संपदादिदर्शनात् क्विप् । 'वेरपृक्तस्य । ६ । १ । ६७ ।' इति 'लोपात्पूर्वे लोपो व्योर्वलि । ६ । १ । ६६ ।' इति लोपः । समिद्धशरणादीप्ता रावणस्य पालनीया । समिद्धशरणादीप्ता लङ्का देहे दग्धा । अलं कामोऽस्येत्यलंकामः । तद्भावः अलंकामता । तस्यामलंकामतायां पर्याप्तेच्छायां ईश्वरा लङ्का । सर्वेच्छासम्पादनात् । समुद्गयमकमिति समुद्गाकारेण यमितत्वात् पादद्वयोरर्धद्वययोश्च संपुटवत्सादृश्यम् ॥ ७ ॥

## काञ्चीयमकम् ।

पिशिताशिनामनुदिशं स्फुटतां स्फुटतां जगाम परिविह्वलता ।
ह्वलता जनेन बहुधा चरितं चरितं महत्त्वरहितं महता ॥ ८ ॥

पिशिताशिनामित्यादि—पिशिताशिनां मांसाशिनां राक्षसानामनुदिशं दिशि दिशि । 'अव्ययीभावे शरत्प्रभृतिभ्यः । ५ । ४ । १०७ ।' इति टच् । स्फुटतां पलायमानानां परिविह्वलता स्फुटतां स्पष्टतां जगाम । जनेन चेतरेण ह्वलता चलता महता शौर्यादिगुणयुक्तेनापि सता यच्चरितं चेष्टितं बहुधा बहुप्रकारं तन्महत्त्वरहितं महत्ताविकलमाचरितम् अनुष्ठितं

१ अत्र 'प्रमिताक्षरा' छन्दः। 'प्रमिताक्षरा सजससैः कथिता।' इति च तल्लक्षणम् ।

भयात् । काञ्चीयमकमिति रसनाकारेण यमितत्वात् । तथाद्यपादस्यान्ते परस्यादौ च सदृशो विन्यासः ॥ ८ ॥

### यमकाऽऽवली । वलितं वलितं

न गजा नगजा दयिता दयिता विगतं विगतं ललितं ललितम् ।
प्रमदा प्रमदाऽऽमहता महतामरणं मरणं समयात् समयात् ॥९ ॥[1]

नेत्यादि—गजा हस्तिनः नगजाः पर्वतजाताः । अत एव दयिता इष्टा न दयिताः न रक्षिताः । दयतिरत्र रक्षणार्थः । विगतं वीनां पक्षिणां गतं गमनमपि विगतं नष्टम् । ललितं यदीप्सितं वस्तु तल्ललितं पाडितम् । प्रमदा योषित् प्रमदा प्रगतो मदो यस्या इति प्रमदा । हर्षशून्येत्यर्थः । आमहता रोगपीडितेव । आमो रोगः । इवशब्दलोपोऽत्र द्रष्टव्यः । आमेन पीडिता पलायनहता वा । 'अम गत्यादिषु ।' महतां शूराणां अरणम् अविद्यमानयुद्धं मरणं विनाशं समयात् संप्राप्तम् । यातेर्लङि रूपम् । मम-न्यान् कालेन यमकावलीति यमकमाला ॥ ९ ॥

### अयुक्पादयमकम् ।

न वानरैः पराक्रान्तां महद्भिर्भीमविक्रमैः ।
न वा नरैः पराक्रान्तां ददाह नगरीं कपिः ॥ १० ॥

नेत्यादि—वानरैरन्यैर्महद्भिर्महाप्राणैर्भीमविक्रमैः असह्यशौर्यैः शक्रादिभिः न पराक्रान्तां नावष्टब्धां नगरीं लङ्कां नरैर्मनुष्यैर्न च पराक्रान्तां विगृहीतां कपिर्हनूमान् ददाह दग्धवान् । अयुक्पादयमकमिति प्रथमतृतीययोर्य-मितत्वात् ॥ १० ॥

### पादाद्यन्तयमकम् ।

द्रुतं द्रुतं वह्निसमागतं गतं महीमहीनद्युतिरोचितं चितम् ।
समं समन्तादपगोपुरं पुरं परैः परैरप्यनिराकृतं कृतम् ॥ ११ ॥

द्रुतमित्यादि—यत्पुरं चितं सौवर्णगृहसंहत्या व्याप्तं तद्वह्निसमागतम् अग्नि-संयुक्तं द्रुतं विलीनम् । द्रुतं प्रवाहेण प्रवृत्तं द्रुतं शीघ्रम् अहीनया उत्कृष्टया द्युत्या तेजसा रोचितं भासितं महीं गतं प्राप्तम् अपगोपुरम् अपगतपुरद्वारम्, अत एव समन्तात्सर्वतः समं तुल्यं कृतम् । परैः शत्रुभिः परैरपि उत्कृष्टैरपि

---

1 अत्र 'तोटकं' छन्दः ।

शक्रादिभिर्निराकृतम् अनभिभूतं सत् । पादाद्यन्तयमकमिति पादस्यादावन्ते च यमितत्वात् ॥ ११ ॥

## मिथुनयमकम् ।

नश्यन्ति ददर्श वृन्दानि कपीन्द्रः ।
हारीण्यबलानां हारीण्यबलानाम् ॥ १२ ॥

नश्यन्तीत्यादि—अबलानां स्त्रीणाम् अबलानाम् अविद्यमानरक्षकाणां वृन्दानि समूहः । हारीणि हारवन्ति, हारीणि अवश्यं हरन्ति । आवश्यके णिनिः । चेतसार्थात् । नश्यन्ति पलायमानानि सन्ति कपीन्द्रो ददर्श । मिथुनयमकमिति पदद्वयस्य चक्रवाकमिथुनवदवस्थितत्वात् ॥ १२ ॥

## वृन्तयमकम् ।

नारीणामपनुनुदुर्न देहखेदा नारीणाऽमलसलिला हिरण्यवाप्यः ।
नाऽऽरीणामनलपरीतपत्रपुष्पान् नाऽरीणामभवदुपेत्य शर्म वृक्षान् ।१३

नारीणामित्यादि—अरीणां संबन्धिन्यो हिरण्यवाप्यः सुवर्णघटिता वाप्यः । नारीणां स्त्रीणाम् अग्नितापान्देहखेदान्नापनुनुदुः नापनीतवत्यः । कुतः आरीणामलसलिलाः । 'रीङ् स्रवणे ।' इत्यस्मादाङ्पूर्वात् 'स्वादय ओदितः' इति निष्ठानत्वम् । आरीणं गतममलं सलिलं यासु हिरण्यवापीष्विति । वृक्षांश्चोपेत्य गत्वा तासां शर्म सुखं नाभवत् न जातम् । अनलपरीतपत्रपुष्पत्वाद्वृक्षाणाम् । आरीणां नारीणामिति योज्यम् । शत्रुसंबन्धिनीनामित्यर्थः । अरीणामिमा इति 'तस्येदम् ।४।३।१२०।' इत्यण् । तदन्तात् 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ।।४।१।१५।' इति ङीप् । अत्र वृक्षानुपेत्य स्थितानामित्यध्याहर्तव्यम् । अन्यथासमानकर्तृकत्वात् पूर्वकाले क्त्वाप्रत्ययो न स्यात् । वृन्तयमकमिति प्रतिपदं पुष्पफलस्येव मूलेऽवस्थितत्वात् ॥ १३ ॥

## पुष्पयमकम् ।

अथ लुलितपतत्रिमालं रुग्णासनबाणकेशरतमालम् ।
स वनं विविक्तमालं सीतां द्रष्टुं जगामाऽलम् ॥ १४ ॥

अथेत्यादि—दाहानन्तरं लुलितानां चालितानां पतत्रिणां पक्षिणां माला संहतिर्यस्मिन् तद्वनमशोकवनिकाख्यं स कपिर्जगाम । रुग्णाः भग्ना असनादयो

---

१ अत्र 'वंशस्थं' वृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ।
२ अत्र 'तनुमध्या' छन्दः । 'त्यौ तनुमध्या' इति छन्दोऽनुशासनोक्तेः ।
३ अत्र 'प्रहर्षिणी' वृत्तम् ।'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ।' इति तल्लक्षणात् ।

यस्मिन् वने । तत्रासनः पीतसालः, बाणः ग्रन्थिका, केशरो नागकेशरो देववल्लभो वा । विविक्ताः शुचयो मालाः स्रजो यस्मिन् तद्विविक्तमालम् । द्रष्टुम् अलं पर्याप्तः सीतां द्रक्ष्यामीति जगाम । पुष्पयमकमिति प्रतिपादं वृन्तादुपरि पुष्पमिवावस्थितत्वात् ॥ १४ ॥

## पादाऽऽदिमध्ययमकम् ।

घनगिरीन्द्रविलङ्घनशालिना वनगता वनजद्युतिलोचना ।
जनमता ददृशे जनकाऽऽत्मजा तरुमृगेण तरुस्थलशायिनी ॥१५॥[2]

घनेत्यादि—तरुमृगेण कपिना जनकात्मजा ददृशे दृष्टा । घनाः निरन्तराः ये गिरीन्द्राः मेघसदृशा वा तेषां यल्लङ्घनम् अतिक्रमणं तेन शालिना युक्तेन कपिना । वनलता काननस्था वनजद्युतिलोचना पद्मस्येव कान्तिर्ययोर्लोचनयोस्ते तथाविधे लोचने यस्याः । 'न क्रोडादिबह्वचः ।४।१।५६।' इति ङीप्प्रतिषेधः ।(जनमता जनेनावबुद्धा पातिव्रतेयामिति) 'मनु अवबोधने' इत्यस्य भूते निष्ठायां रूपम् । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ।२।३।६९।' इति षष्ठीप्रतिषेधः । कर्तरि तृतीया । तस्यां च 'कर्तृकरणे कृता बहुलम् ।२।१।३२।' इति समासः । वर्तमाने तु 'मतिबुद्धिपूजार्थेभ्यश्च । ३ । २ । १८८।' इति क्तप्रत्ययः। 'क्तस्य च वर्तमाने ।२।३।६७।' इति षष्ठी । तस्यां च 'क्तेन च पूजायाम् ।२।२।१२।' इति समासप्रतिषेधः स्यात् । तरुस्थलशायिनी तरुमूले यत् स्थलं तत्रैव शयाना । सत्यपि शयने । तेन 'व्रते । ३ । २ । ८०।' इति णिनिः । आदिमध्ययमकमिति पादानामादौ मध्ये च घन वन-जन-तरुशब्दानां यमितत्वात् ॥ १५ ॥

## विपथयमकम् ।

कान्ता सहमाना दुःखं च्युतभूषा ।
रामस्य वियुक्ता कान्ता सहमाना ॥ १६ ॥

कान्तेत्यादि—कान्ता कमनीया सहमाना वेदयमाना दुःखं वियोगजम् च्युतभूषा च्युता भूषा भूषणानि यस्याः सा रामस्य कान्ता प्रिया वियुक्ता वियोगिनी

१ अत्रार्याछन्दः, 'लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः । षष्ठोऽयं नलघू वा प्रथमेऽर्द्धे नियतमार्यायाः । षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपदनियमः । चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो ल्ः ॥' इति तल्लक्षणात् । २ अत्र । 'द्रुतविलम्बितं' वृत्तम् ।

सहमाना सह मानेन वर्त्तते इति 'वोपसर्जनस्य ।६।३।८२।' इति सभाव-विकल्पः । ददृशे इति सम्बन्धः । विपथयमकमिति पादद्वयातिक्रमाद्विपथेन विमार्गेण यमितत्वात् ॥ १६ ॥

## मध्यान्तयमकम् ।

मितमवददुदारं तां हनूमान् मुदाऽरं
रघुवृषभसकाशं यामि देवि ! प्रकाशम् ।
तव विदितविषादो दृष्टकृत्स्नाऽऽमिषादः
श्रियमनिशमवन्तं पर्वतं माल्यवन्तम् ॥ १७ ॥[1]

मितमित्यादि--मितम् अल्पाक्षरम् अर्थावगाढं तां सीतां हनूमान् मुदा हर्षेण युक्तः अवदत् कथितवान् ।किमित्याह--अरं शीघ्रं हे देवि, रघुवृषभसकाशं रामसमीपं माल्यवन्तं पर्वतं प्रकाशं प्रकटं यामि । तव विदितविषादो ज्ञातावसादः। दृष्टकृत्स्नामिषादः वीक्षिताशेषनिशाचरः। आमिषं मांसमदन्तीति 'कर्मण्यण् । ३ । २ । १ ।' 'वाऽसरूपोऽस्त्रियाम् । ३ । १ । ९४ ।' इति वचनात् । 'अदोऽनन्ने ।३ । २ । ६८।' इति विट्प्रत्ययेनाणो विकल्पेन बाधनात् । श्रियं शोभाम् अनिशमवन्तं रक्षन्तं पर्वतम् । मध्यान्तयमकमिति पादस्य मध्ये अन्ते च यमितत्वात् ॥ १७ ॥

## गर्भयमकम् ।

उदपतद्वियदप्रगमः परैरुचितमुन्नतिमत्पृथुसत्त्ववत् ।
रुचितमुन्नतिमत्पृथुसत्त्ववत्प्रतिविधाय वपुर्भयदं द्विषाम् ॥ १८ ॥[2]

उदपतदित्यादि-वियदाकाशमुदपतत् उत्पपात। परैःशत्रुभिरप्रगमः अनभिभवनीयः । गमेः 'ग्रहवृदृनिश्चिगमश्च ।३।३।५८।' इति कर्मण्यप् । 'कर्तृकर्मणोः कृति ।२।३।६५।' इत्यत्र 'विभाषोपसर्गे' । २ । ४ ।५९।' इति मण्डूकप्लुत्या अनुवर्तनीयम् । सोपसर्गस्य प्रयोगे विभाषा षष्ठी। रुचितं शोभितं वियन्निर्मलत्वात् । अथवा अप्रगमोऽन्येषामित्यर्थात् + परैरुत्कृष्टैरन्तारिक्षचारिभिः रुचितं दीपितम् । उन्नतिमत् उच्छ्राययुक्तम् । पृथुसत्त्ववद्भिः प्राणिभि-

---

१ अत्र 'तनुमध्यान्' वृत्तम् । २ अत्र 'मालिनी' छन्दः । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणम् ।

थुकम् । किं कृत्वा उदपतदित्याह-वपुः शरीरं प्रतिविधाय कृत्वा । रुचितान् तुष्टान्मोदयतीति रुचितमुत् । ण्यर्थोऽत्रान्तर्भूतः । द्विषां शत्रूणां भयदम् । नतिमत् तदानीं देवेषु कृतशिरःप्रणामत्वात् । अथवा रुचिरमेवाभीष्टमेव वपुः । उन्नतिमत् विभूतिमत् । पृथुसत्त्ववत् विस्तीर्णसत्त्ववत् । सत्त्वगुणयुक्तं वा । गर्भयमकमिति द्वयोः पादयोर्मध्ये पादद्वयस्य यमितत्वात् ॥ १८ ॥

## सर्वयमकम् ।

बभौ मरुत्वान् विकृतः समुद्रो बभौ मरुत्वान् विकृतः समुद्रः ।
बभौ मरुत्वान् विकृतःसमुद्रो बभौ मरुत्वान् विकृतः समुद्रः॥ १९॥[1]

बभावित्यादि—मरुत्वान् हनूमान्, पितृत्वेन मरुद्विद्यते अस्येति 'झयः । ८ । २ । १० ।' इति वत्वम् । विविधं कृतं वनभङ्गादि कर्म येन तथोक्तः विविधं वा कृन्ततीति विकृतः । इगुपधलक्षणः कः । वृक्षादीनां छेदक इत्यर्थः । समुद्रो मुद्रयाभिज्ञानेन चूडामणिना सह वर्तत इति । समुत्पतितो नभसि तेजःपुञ्ज इव बभौ दीप्यते स्म । इत्ययं प्रथमः पादः । तस्मिन् तथाभूते मरुत्वानिन्द्रः । अनुजीवितया मरुतो देवा अस्य सन्तीतिति कृत्वा । विकृतः रावणपरिभवात् विहतदेवाधिपत्यः । विकृतः। स च समुद्रः मुद्रया अप्सरसा सह वर्तमानः । ससुपलब्धमारुतिवृत्तान्तः । बभौ दृष्टवान् । कपिना तावदिदं कृतं गमः पुनः समूलं छेत्स्यतीति । अनेकार्थत्वाद्धातूनां [illegible]तिरत्र तुष्टौ वर्तते । इत्ययं द्वितीयः । समुद्रो जलनिधिः मरुत्वान् हनूमदुत्पतनजनितवायुना युक्तः अत एव विकृतोऽतिक्रान्तमर्यादः बभौ बभूव । अत्र सत्तायां प्रयुक्तः । इत्ययं तृतीयः । स लोकपालो मरुत्वान् महाभूतात्मकेन युक्तः मरुत्वान् । पूर्ववन्मतुप् । मरुत्वानिति व्याख्याने 'झलां जशोऽन्ते ।८।२।३९।' इति जश् स्यात् । मुदो हर्षस्य दाता पुत्रो मे सुखेन यास्यतीति मुदं राति ददातीति 'आतोऽनुपसर्गे कः ।३।२।३।' विकृतो मन्दगाबिः। बभौ बाति स्म । अत्र गतौ प्रयुक्तः। इत्ययं चतुर्थः । अन्यस्त्वाह यमकेषु क्रियापदस्याभिधेयत्वं न दुष्यतीति तेन दीप्त्यर्थ एव योज्यः । सर्वयमकमिति चतुर्णामपि पादानां सदृशत्वात् ॥ १९ ॥

---

1 अत्र 'द्रुतविलम्बितं' वृत्तम् ।

## महायमकम् ।

अभियाता वरं तुङ्गं भूभृतं रुचिरं पुरः।
कर्कशं प्रथितं धाम ससत्त्वं पुष्करेक्षणम् ॥ २० ॥

अभियातेत्यादि—भूभृतं रामं वरं श्रेष्ठं तुङ्गं महाकुलीनत्वादिति सर्वेषामुपरि स्थितं गुणै रुचिरं सर्वाङ्गसुन्दरं पुरोऽग्रतो वक्षःस्थले कर्कशं लोमशं प्रथितं लोके प्रख्यातं धाम गृहं वर्णाश्रमधर्माणां ससत्त्वं पराक्रमयोगात् । पुष्करेक्षणं पद्मलोचनम् अभियाता आभिमुख्येन यास्यति हनूमान् । लुटि रूपम् ॥ २० ॥

अभियाऽताऽऽवरं तुङ्गं भूभृतं रुचिरं पुरः ।
कर्कशं प्रथितं धाम ससत्त्वं पुष्करे क्षणम् ॥ २१ ॥

अभियातेत्यादि—भूभृतं पर्वतं यत्राङ्गदादयः स्थिताः तमभिया अभिगच्छता हनूमता । कुतः पुरो लङ्कायाः सकाशात् । पुष्करे आकाशे धाम तेजः क्षणं मुहूर्तं प्रथितं विस्तारितम् । अभियातीति 'अन्येभ्योऽपि दृश्यते । ३ ।२। १७८ ।' इति क्विप् । तृतीयैकवचने । 'आतो धातोः ।६।४।१४०।' इत्याकारलोपे अभियेति रूपम् । कीदृशम् अतावरं सातत्येनाततीति पचाद्यच् । अतो वायुः आदित्यो वा । आवृणोतीत्यपि आवरः । (अतस्यावरं यतस्तुङ्गम् उच्चैस्तरम् ।) रुचिरं तुष्टिदं रुचिं रातीति । कर्कशं कठिनस्वभावम् । ससत्त्वं प्राणियुक्तम् । महायमकमिति श्लोकस्यैकस्य द्वितीयेन श्लोकेन यमितत्वात् ॥ २१ ॥

## आद्यन्तयमकम् ।

चित्रं चित्रमिवाऽऽयातो विचित्रं तस्य भूभृतम् ।
हरयो वेगमासाद्य संत्रस्ता मुमुहुर्मुहुः ॥ २२ ॥

चित्रमित्यादि—भूभृतम् भूधरं पर्वतं चित्रं गैरिकादिभिर्नानावर्णम् अत एव चित्रमिवालेख्यमिव । आयातः आगच्छतस्तस्य हनूमतः वेगं जवं चित्रम् अद्भुतमासाद्य प्राप्य हरयः कपयः संत्रस्ताः सभयाः मुमुहुः मुहुः क्षणम् । आद्यन्तयमकमिति श्लोकस्यादावन्ते च यमितत्वात् ॥ २२ ॥

---

१ भुवं बिभर्ति रक्षतीति तं तथोक्तम् । २ भुवं बिभर्ति धारयतीति तम् । पृथिव्या ह्यवष्टम्भभूताः पर्वताः ।

अर्थालंकारस्तु दीपकरूपकादिभेदेनानेकप्रकारः । तत्र वाक्यार्थप्रकाशनाद्दीपकमुच्यते । तदादिमध्यान्तभेदात्त्रिविधमिति दर्शयन्नाह—

### आदिदीपकम्[1] ।

गच्छन् स वारीण्यकिरत्पयोधेः कूलस्थितांस्तानि तरूनधुन्वन् ।
पुष्पाऽऽस्तरांस्तेऽङ्गसुखानतन्वंस्तान् किन्नरा मन्मथिनोऽध्यतिष्ठन् २३॥

गच्छन्नित्यादि—स हनूमान् वेगेन गच्छन् पयोधेर्वारीणि वेगजेन वायुना अकिरत् निक्षिप्तवान् । तानि वारीणि अधिक्षिप्तानि कूलस्थितांस्तरूनधुन्वन् कम्पितवन्ति । 'धूञ् कम्पने' इति सौवादिकः । ते तरवः कम्पिताः पुष्पास्तरान् । पुष्पाणां प्रकरान् आस्तीर्यन्त इति 'ऋदोरप् ।३।३।५७।' इत्यप् ।अङ्गसुखान् मृदुस्पर्शत्वात् कायस्य सुखहेतूनतन्वन् विस्तारितवन्तः । तान् पुष्पास्तरान् किन्नराः मन्मथिनः कामवन्तः अध्यतिष्ठन् अध्यासितवन्तः । 'अधिशीङ्स्थासां कर्म । १ । ४।४६।' इत्यधिकरणस्य कर्मसंज्ञा । आदिदीपकमिति क्रियापदस्यादौ श्रूयमाणत्वात् । द्विविधं ह्यादिदीपकम् । एकतिङनेकतिङ्सहितं च ।तत्र यत्पूर्वं तदेकमप्यनेकार्थप्रकाशकम् । यथाह भामहः–'मदो जनयति प्रीतिमानन्दं मानभङ्गुरम् । यत्प्रियासंगमोत्कण्ठामसह्यां मनसः शुचम् ॥' इति । यत्तु द्वितीयं तत्समस्तवाक्यार्थप्रकाशं यथेदमेव । तत्र ह्युत्तरेषां वाक्यार्थानामाद्येनैव दीपनात् । तस्मिन्नसति शेषाणामस्फुटत्वात् । पूर्वकं परित्यज्य द्वितीयस्य प्रदर्शनं यत् तत्प्रतीपदीपकं नाम चतुर्थमस्तीति दर्शनार्थम् । तद्यथा-'तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् । मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय प्रश्रयान् गुणान् कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितम् ॥' इति । शेषो यदत्र परस्परमसंबद्धमिति ॥ २३ ॥

### अन्तदीपकम् ।

स गिरिं तरुखण्डमण्डितं समवाप्य त्वरया लतामृगः ।
स्मितदर्शितकार्यनिश्चयः कपिसैन्यैर्मुदितैरमण्डयत् ॥ २४ ॥

स गिरिमित्यादि—स लतामृगो हनूमान् प्रयोजककर्ता । गिरिमङ्गदादि-

---

[1] दीपकलक्षणं तु "सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् । सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ।" इति प्रकाशकारेणोक्तम्, अथ कथमिव सङ्गच्छत इति चिन्त्यम् । एवं परत्रापि ।

भिरध्यासितं तरुखण्डमण्डितं त्वरया वेगेन समवाप्य कपिसैन्यैर्मुदितैर्हृष्टैः प्रयोज्यकर्तृभिः अमण्डयत् । 'मडि भूषायाम्' इति भौवादिकः । चौरादिके तु कपिसैन्यैः करणभूतैरिति योज्यम् । मुदितत्वे कारणमाह---स्मितदर्शितकार्यनिश्चयः ईषद्धसितप्रकटीकृतसीतोपलब्धिनिश्चयः । अन्तदीपकमिति अमण्डयदिति क्रियापदस्यान्ते निर्दिष्टत्वात् ॥ २४ ॥

## मध्यदीपकम् ।

गरुडाऽनिलतिग्मरश्मयः पततां यद्यपि सम्मता जवे ।
अचिरेण कृताऽर्थमागतं तममन्यन्त तथाप्यतीव ते ॥ २५ ॥[1]

गरुडेत्यादि---पततां गच्छतां मध्ये यद्यपि गरुडादयो जवे वेगविषये संमताः अभिमताः तथापि तं हनूमन्तम् अचिरेणैव कालेन कृतार्थं कृतकृत्यमागतम् अतीव जविनं ते कपयः अमन्यन्त । मन्यतेर्लङि रूपम् । मध्यदीपकमिति क्रियापदस्य मध्ये निर्दिष्टत्वात् ॥ २५ ॥

## रूपकम् ।

रूपकमनेकविधं दर्शयन्नाह---

व्रणकन्दरलीनशस्त्रसर्पः पृथुवक्षःस्थलकर्कशोरुभित्तिः ।
च्युतशोणितबद्धधातुरागः शुशुभे वानरभूधरस्तदाऽसौ ॥ २६ ॥[2]

व्रणेत्यादि---असौ वानरो भूधर इव वानरभूधरः 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे । २ । १ । ५६ ।' इति समासः । तदा तस्मिन्वानरमध्यगमनकाले कृतार्थः शुशुभे शोभते स्म ।'व्रणानि शस्त्रकृतानि कन्दराणीव । शस्त्राणि सर्पा इव शस्त्रसर्पाः व्रणकन्दरेषु लीनाः शस्त्रसर्पा यस्य । वक्षःस्थलं कर्कशोरुभित्तिरिव सा पृथुः विस्तीर्णा यस्य सः । शोणितं बद्धधातुराग इव श्लिष्टगैरिकादिराग इव सः च्युतो यस्य । सर्वत्र 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे । २ । १ । ५६ ।' इति समासः । रूपकमिति सावयवेन भूधरेणोपमानेन सावयवस्य कपेरुपमेयस्य तत्स्वभावतयाध्यारोपितत्वात् । यथोक्तम्---'उपमानेन तुल्यत्वमुपमेयस्य रूप्यते । गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः ॥' इति ॥ २६ ॥

---

१ अत्र 'सुन्दरी' छन्दः, 'अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा' इति तल्लक्षणात् । २ अत्रापि सुन्दरी छन्दः । ३ अत्र औपच्छन्दसिकं छन्दः, 'पर्यन्ते र्यौ तथैव शेषं त्वौपच्छन्दसिकं सुधीभिरुक्तम् ।' इति लक्षणात् । अत्र सर्वत्रत्यनेन 'षड् विषमेऽष्टौ समे कलास्ताश्च समेस्युर्नो निरन्तराः । न समाऽत्र पराश्रिताकलाः' इत्यस्य परामर्शः

अस्यैव भेदा अपरे चत्वारः । एतद्विशिष्टोपमायुक्तं रूपकम् ।

चलपिङ्गकेशरहिरण्यलताः स्फुटनेत्रपङ्क्तिमणिसंहतयः ।
कलधौतसानव इवाऽथ गिरेः कपयो बभुः पवनजागमने ॥२७॥

चलेत्यादि—अथ पवनजागमने हनूमदागमने कपयो गिरेस्तस्यैव कलधौतसानव इव सौवर्णकदेशा इव बभुः शोभन्ते स्म । पिङ्गकेशराणि पिङ्गलसटाः तानि हिरण्यलता इव सुवर्णलता इव ताश्चला येषां कपीनाम् । नेत्रपङ्क्त्यो मणिसंहतय इव ताः स्फुटा उज्ज्वला येषामिति । ( एतदपि रूपकमेव ) । किंतु कलधौतत्वेन सानूनां विशिष्टत्वाद्विशिष्टोपमायुक्तं रूपकं नाम ॥ २७ ॥

एतच्छेषार्थान्ववसितमवतंसकम् ।

कपितोयनिधीन् प्लवङ्गमेन्दुर्मदयित्वा मधुरेण दर्शनेन ।
वचनाऽमृतदीधितीर्वितन्वन्नकृतानन्दपरीतनेत्रवारीन् ॥ २८ ॥

कपीत्यादि—प्लवङ्गम इन्दुरिव प्लवङ्गमेन्दुः । कपयस्तोयनिधय इव तान् कपितोयनिधीन् । मधुरेण सुखेन दर्शनेन मदयित्वा हर्षयित्वा । 'मदी हर्षग्लेपनयोः' घटादित्वान्मित्त्वे ह्रस्वत्वम् । वचनानि अमृतमयदीधितय इव ता अमृतदीधितीर्वितन्वन् विस्तारयन् । लोकवृत्तान्तसंबोधकमाह्लादकं वचनं तन्वन्नित्यर्थः । आनन्देन हर्षेण परीतं संजातं नेत्रवारि येषां तानेवंविधानकृत कृतवान् । एतद्रूपकं शेषार्थान्ववसितम् । रूपितादन्यो योऽर्थः 'आनन्दपरीतनेत्रवारीन्' इति स शेषः । ( तेनान्ववसितं युक्तमवतंसकं नाम विस्तारस्यार्थस्य लपितत्वात् ) तदेवान्यैः खण्डरूपकमित्युच्यते ॥२८॥

अर्धरूपकम् ।

परिखेदितविन्ध्यवीरुधः परिपीताऽमलनिर्झराऽम्भसः ।
दुधुवुर्मधुकाननं ततः कपिनागा मुदिताऽङ्गदाऽऽज्ञया ॥ २९ ॥

खेदितेत्यादि—तत उत्तरकालं कपयो नागा इव हस्तिन इव कपिनागाः मुदितस्याङ्गदस्याज्ञया मधुकाननं सुग्रीवस्य क्रीडोद्यानं दुधुवुः धूतवन्तः । मधून्युपभुज्य संभ्रममकुर्वन्नित्यर्थः । परिखेदिताः परिमृदिताः

१ अत्र 'प्रमिताक्षरा' छन्दः । २ अत्र 'औपच्छन्दसिकं' छन्दः ।

विन्ध्यवीरुधो विन्ध्यलतागुल्मा यैः । परिपीतममलनिर्झराम्भो यैस्ते । अर्ध-रूपकमिति पश्चिमार्धे कपिनागा इति रूपितम् ॥ २९ ॥

एतदन्वर्थोपमायुक्तं ललामकम् ।

विटपिमृगविषादध्वान्तनुद्वानरार्कः
प्रियवचनमयूखैर्बोधिताऽर्थाऽरविन्दः ।
उदयगिरिमिवाऽद्रिं सम्प्रमुच्याऽभ्यगात्खं
नृपहृदयगुहास्थं घ्नन्प्रमोहाऽन्धकारम् ॥ ३० ॥

विटपीत्यादि—वानरोऽर्क इव वानरार्कः । उदयगिरिमिवाद्रिं पर्वतं महेन्द्रं संप्रमुच्य खमाकाशमभ्यगात् अभिगतवान् । विटपि-मृगाणां यो विषाद आसीत् कथं सीतान्वेष्णीयेति स ध्वान्तमिव तं नुदतीति क्विप् । प्रियवचनानि मयूखा इव तैः गभूतैः बोधितमर्थार-विन्दं येन । अर्थः सीतोपलब्धिः सोऽरविन्दमिव ।नृपहृदयं गुहेव तत्र तिष्ठतीति नृपहृदयगुहास्थम् । प्रमोहो विषादोऽन्धक इव तं घ्नन् हनि-ष्यन् । वर्तमानसमीपत्वात् भविष्यति लट् । एतद्धि रूपकं अन्वर्थयो-पमया युक्तं ललाम नाम । यत उदेत्यस्मादित्युदयः 'पुंसि संज्ञायां' कर्तरि च कारके' इत्यधिकृत्य 'एरच् । ३ । ३ । ५६ ।' इत्यच् । स इति गिरिश्चेत्यनुगता-र्थता । यत्रान्वर्थता नास्त्युपमायाः तदुपमायुक्तमेव वचनात् यम् ॥ ३० ॥

इवोपमा । (उदाह)

उपमाऽलंकारं दर्शयन्नाह—

रघुतनयमगात्तपोवनस्थं विधृतजटाऽजिनवल्कलं हनूमान्
परमिव पुरुषं नरेण युक्तं समशमवेशसमाधिनाऽनुजेन ॥[२] ३१ ॥

रघुतनयमित्यादि—हनूमान् रघुतनयमगात् प्राप्तवान् । तपःप्रधा वनं तपोवनं तत्र स्थितम् । विधृता जटा अजिनं चर्म वल्कलं च येन सः । अनुजेन कनीयसा भ्रात्रा लक्ष्मणेन समास्तुल्याः शमा वेशाः समाध-यश्च यस्य तेन युक्तं परमुत्तमं पुरुषमिव पुरुषोत्तममिव नरेण [३] । बदरिकाश्रमे नरनारायणयोस्तपश्चर्यया स्थितत्वात् । इवोपमेति इवे-नोपमार्थस्य गम्यमानत्वात् । उपमाया लक्षणम्—'विरुद्धेनोपमानेन

१ अत्र 'सुन्दरी' छन्दः । २ अत्र मालिनी छन्दः, 'ननमयययुतेयं मालिनी भोगिलोकैः ।' इति तल्लक्षणम् । ३ इवेन द्योत्योपमेति भावः । वस्तुतस्तूपमैवाल

कालक्रियादिभिः । उपमेयस्य यत्साम्यं गुणमात्रेण सोपमा ॥' इति । अत्र विरुद्धदेशकालक्रियाः पुरुषोत्तम उपमानम्, तेन रामस्योपमेयस्य तपोवनस्थत्वेन ( विधृतजटाजिनवल्कलत्वेन नरानुकारिलक्ष्मणेनानुगतत्वेन च गुणमात्रेण साम्यमुपमानम् ॥ ३१ ॥ )

## यथोपमा ।

यथेवशब्द उपमार्थसूचकस्तथान्योऽपीति दर्शयन्नाह—

करपुटनिहितं दधत् स रत्नं परिविरलाङ्गुलिनिर्गताऽल्पदीप्ति ।
तनुकपिलघनस्थितं यथेन्दुं नृपमनमत्परिभुग्नजानुमूर्धा ॥ ३२ ॥

करपुटनिहितमित्यादि—करपुटे करयुग्मे निहितं न्यस्तं रत्नं सीताचूडामणिं परिविरलाङ्गुलिभ्यो निर्गता अल्पा दीप्तयो यस्य तद्रत्नं दधद्धारयन् स हनूमान् नृपं राममनमत् प्रणतवान् । परिभुग्ने अवनते जानुनी मूर्धा च यस्य हनूमतः । यथेन्दुम् इन्दुमिव तनुः अच्छः कपिलश्च यो घनः मेघः तत्र स्थितमिन्दुमिव रत्नम् । यथोपमेति यथाशब्देनोपमार्थस्य गम्यमानत्वात् ॥ ३२ ॥

## सहोपमा ।

रुचिरोन्नतरत्नगौरवः परिपूर्णाऽमृतरश्मिमण्डलः ।
समदृश्यत जीविताऽऽशया सह रामेण वधूशिरोमणिः ॥ ३३ ॥

रुचिरेत्यादि—वधूशिरोमणिः सीताचूडामणिः । उन्नतं महद्रत्नगौरवं महार्घ्यादिलक्षणं यस्य रुचिरो दीप्तिमांश्चासौ उन्नतरत्नगौरवश्चेति सः । परिपूर्णस्यामृतरश्मेश्चन्द्रमसो मण्डलमिव मण्डलं यस्य सः । रामेण समदृश्यत संदृष्टः । कर्मणि लङ् । जीविताशया सह सार्धं तद्दर्शनतो जीवितोऽस्मीति तदाशया सह । सा रुचिरा तुष्टिदा रुचिं राति ददातीति कृत्वा । उन्नतरत्नगौरवादुन्नतं रत्नेष्विव गौरवं बहुमानो यस्यामिति । परिपूर्णममृतममरणं रश्मिमण्डलं यस्यामिति । सहोपमेति सहशब्देन जीविताशया, उपमाद्योतनात् ॥ ३३ ॥

## तद्धितोपमा ।

अप्रसन्नरुचिं वनाऽऽगतां तमनाऽऽमृष्टरजोविधूसरम् ।

---

१ यथापदेन बोध्योपमा ।

समपश्यदपेतमैथिलिं दधतं गौरवमात्रमात्मवत् ॥ ३४ ॥

अवसन्नरुचिमित्यादि—तं शिरोमणिं आत्मवदात्मानमिव समपश्यद्रामः। 'तेन तुल्यं क्रिया चेद्वतिः । ५ । १ ।११५।' इति वतिः । अवसन्नरुचिं मन्दप्रभं वेणीबन्धनमलिनत्वात् । इतरत्र सशोकत्वात् । वनागतम् अशोकवनिकाख्याद्वनादागतम् इतरं पितुरादेशाद्वनमागतम् । सुप्सुपेति समासः । अनामृष्टम् अनपनीतम् यद्रजः तेन विधूसरम् । उभयमपि अपेतमैथिलिम् अपेता मैथिली येन यस्माद्वा । दधतं गौरवमात्रं गुरुत्वमेव न दीप्त्यादिकम्, इतरं माहात्म्यं दधतम् । तद्धितोपमेति तद्धितप्रत्यया द्रष्टव्याः[1] ॥ ३४ ॥

## लुप्तोपमा ।

सामर्थ्यसम्पादितवाञ्छितार्थश्चिन्तामणिः स्यान्न कथं हनूमान् ।
सलक्ष्मणो भूमिपतिस्तदानीं शाखामृगानीकपतिश्च मेने ॥ ३५ ॥

सामर्थ्येत्यादि—सामर्थ्येन शक्त्या संपादितो निष्पादितो वाञ्छितोऽभिलषितोऽर्थो येन स हनूमान् कथं चिन्तामणिश्चिन्तामणिरिव न स्यात् । इति तदानीं मेने ज्ञातवान् । सलक्ष्मणः सह लक्ष्मणेन भूमिपती रामः शाखामृगानीकपतिश्च सुग्रीवः । लुप्तोपमेति चिन्तामणिरित्यत्रेवशब्दार्थस्य गम्यमानत्वात्[2] ॥ ३५ ॥

## समोपमा ।

युष्मानचेतन् क्षयवायुकल्पान् सीतास्फुलिङ्गं परिगृह्य जाल्मः ।
लङ्कावनं सिंहसमोऽधिशेते मर्तुं द्विषन्नित्यवदद्धनूमान् ॥ ३६ ॥

युष्मानित्यादि—युष्मान् रामादीन् क्षयवायुकल्पान् प्रलयकालमहावायुसदृशान् अचेतन् अजानन् । 'चिती संज्ञाने' इति भौवादिकः । द्विषन् दशाननः जाल्मः मूर्खः सीतास्फुलिङ्गं सीतामग्निकणमिव परिगृह्यादाय लङ्कां वनमिवाधिशेते । मर्तुं मरिष्यामीति सिंहसमं इत्यवदद्धनूमान् । समोपमेति समशब्देनोपमाया अभिधानात् । एवं निभसदृशादयोऽपि द्रष्टव्याः ॥ ३६ ॥

## अर्थान्तरन्यासः ।

इदानीमलंकारान्तराण्याह—

अहृत धनेश्वरस्य युधि यः समेतमायो धनं
तमहमितो विलोक्य विबुधैः कृतोत्तमाऽऽयोधनम् ।

१ अत्र तुल्यार्थस्य वतेस्तद्धितत्वात्तथोक्ता । २ वस्तुतस्त्वत्रोत्प्रेक्षा । 'सम्भावना स्यादुत्प्रेक्षा' इति तल्लक्षणात् । ३ अत्र लुप्तोपमा । ४ अत्र समपदेन समासेऽपि सैव ।

विभवमदेन निह्नुतह्रियाऽतिमात्रसम्पन्नकं
व्यथयति सत्पथादधिगताथवेह सम्पन्नकम् ॥ ३७ ॥

अहृतेत्यादि—यो द्विषन् युधि संग्रामे समेतमायः समेता प्राप्ता माया येनेति तृतीयार्थे बहुव्रीहिः । मायावीत्यर्थः । धनेश्वरस्य धनदस्य धनमहृत हृतवान् । 'ह्रस्वादङ्गात् ।८।२।२७।' इति सिचो लोपः । तं विबुधैर्देवैः सह कृतोत्तमायोधनं कृतमहासंग्रामम् । निह्नुता अपलपिता ह्रीर्लज्जा येन विभवमदेन तेन निह्नुतह्रिया अतिमात्रं सुष्ठु सम्पन्नकं युक्तं येन परस्त्रियमपहृत्यानीतवानसौ तं विलोक्य अहमितः प्राप्तः । विभवमदो लज्जां त्याजयतीत्यमुमेवार्थम् अनुस्मृत्यार्थान्तरमाह—अथवेति । अथवाशब्दो निपातसमुदायः यस्मादर्थे वर्तते । यस्मादिह लोके संपत् विभूतिरधिगता प्राप्ता सत्पथात् सन्मार्गात् कं न व्यथयति चालयति । व्यथिरत्र चलने वर्तते । अर्थान्तरन्यास इति उक्तादर्थादन्यस्योपन्यासात् । यथोक्तम्—"उपन्यसनमर्थस्य प्रक्रान्तादपरस्य यत् । ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यथा ॥' इति[1] ॥ ३७ ॥

## आक्षेपः ।

ऋद्धिमान् राक्षसो मूढश्चित्रं नाऽसौ यदुद्धतः ।
को वा हेतुरनार्याणां धर्म्ये वर्त्मनि वर्तितुम् ॥ ३८ ॥

ऋद्धिमानित्यादि—यदसावुद्धतो दुर्वृत्तः न तच्चित्रमाश्चर्यम् । यस्मादसौ ऋद्धिमान् राक्षसश्च । उभयथा विमूढ इत्येतदयुक्तमिति प्रतिषेधयन्नाह—को वेति । किमनेनोक्तेन, यस्मादनार्याणां तद्विधानां धर्म्ये धर्मादनपेते वर्त्मनि मार्गे वर्तितुं को वा हेतुः किं नाम कारणम्, नैवेत्यर्थः । आक्षेप इति प्रतिषेधो नाम । (यथोक्तम्—'प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया । आक्षेप इति तं सन्तः शंसन्ति द्विविधो यथा ॥") इति । अत्र पूर्वार्धेनोक्तो य इष्टोऽर्थः तस्य को वेत्यादिना विशेषप्रतिपादनेच्छया प्रतिषेध इति । स च उक्तवक्ष्यमाणविषयभेदाद्द्विविधः । अयमुक्तविषयः ॥ ३८ ॥

---

१ अत्र 'नन्दनं' वृत्तम् 'शिवतुरगैस्तु नन्दनमिदं नजौ भजौ रद्वयम् ।' इति तल्लक्षणात् ।

## आक्षेप एव।

तस्याधिवासे तनुरुत्सुकासौ दृष्टा मया रामपतिः प्रमन्युः।
कार्यस्य सारोऽयमुदीरितो वः प्रोक्तेन शेषेण किमुद्धृतेन ॥ ३९ ॥

तस्येत्यादि—तस्य रावणस्याधिवासे लङ्कायाम् असौ रामपतिः सीता मया दृष्टा। रामः पतिर्यस्या इति। 'विभाषा सपूर्वस्य ।४।१।३४।' इति नकाराभावपक्षे रूपम्। तनुः कृशाङ्गी। 'वोतो गुणवचनात् ।४।१।४४।' इति ङीषो विकल्पः। उत्सुका सोत्कण्ठा, प्रमन्युः प्रकृष्टशोका। 'ऊङुतः ।४।१।६६।' इत्यूङ् न भवति। तत्रायोपधादिति मनुष्यजातेरिति च वर्तते। अयं कार्यस्यास्मदर्दा तस्य सारःशरीरं सीतादर्शनम् उदीरितः कथितः। वो युष्मभ्यम्। शेषेणोद्धृतेन अशोक वनिकाभङ्गादिना किं प्रोक्तेन। न किंचित् प्रयोजनम्। स एवेत्ययमप्याक्षेप एव किंतु वक्ष्यमाणविषयः। अत्र पूर्वार्धेनोक्तो य इष्टोऽर्थः तस्य विशेषाभि धित्सया प्रोक्तेनेत्यादिना शेषार्थप्रतिषेधः ॥ ३९ ॥

## व्यतिरेकः।

समतां शशिलेखयोपयायादवदाता प्रतनुः क्षयेण सीता।
यदि नाम कलङ्क इन्दुलेखामतिवृत्तो लघयेन्न चाऽपि भावी ॥४०॥[१]

समितामित्यादि—सीता अवदाता शुद्धा प्रतनुः प्रकर्षेण तन्वी क्षयेण दौर्बल्येन एतावता तुल्यधर्मत्वाच्छशिलेखया समतां तुल्यतामुपयायात उपगच्छेत्। यदि कलङ्को नामापरोऽतिवृत्तोऽतिक्रान्तः इन्दुलेखां न लघयेत् न न्यूनयेत्। तथा भावी आगामी नालघयिष्यत् यदि। न चैवं तस्माच्चन्द्रलेखया न समेति भावः। व्यतिरेक इति अयं व्यतिरेको नाम अन्वयः। पूर्वार्धेनोपमानोपमेययोरर्थो दर्शितः, तस्य पश्चार्धेन भेददर्शनात्। यथोक्तम्—'उपमानवतोऽर्थस्य यद्विशेषनिदर्शनम्। व्यतिरेकं तमिच्छन्ति विशेषोत्पादनाद्यथा ॥' इति ॥ ४० ॥

## विभावना।

अपरीक्षितकारिणा गृहीतां त्वमनासेवितवृद्धपण्डितेन।
अविरोधितनिष्ठुरेण साध्वीं दयितां त्रातुमलं घटस्व राजन् ॥ ४१ ॥

अपरीक्षितकारिणेत्यादि—अपरीक्षितकारिणा अविचारितकरणशीलेन, अनासेवितवृद्धपण्डितेन अपर्युपासितज्ञानवृद्धसत्पथेन, अविरोधितनिष्ठुरेणा-

१ अत्र 'औपच्छन्दसिकं' वृत्तम्। तल्लक्षणं तूक्तं प्राक्।

नमस्कृतोऽपि क्रूरः सन् यः शत्रुः तेन गृहीतां साध्वीं पतिव्रतां दयितामिष्टां आत्मार्हां त्रातुं रक्षितुमलं पर्याप्तं त्वं घटस्व यतस्व । हे राजन्नित्यवदद्धनूमान् । विभावनेति परीक्षा सेवा विरोधनं चेति तिस्रः क्रियाः ' तासां यः प्रतिषेधः नञा तेन अपरीक्षापूर्वकं यत् करणं तथा वृद्धसेवापूर्वकं यत्पण्डितत्वं यच्चाविरोधपूर्वकं निष्ठुरत्वं तस्य क्रियाफलस्य विभावनात् प्रकाशनात् । यथोक्तम्—'क्रियायाः प्रतिषेधेन तत्फलस्य विभावनात् । ज्ञेया विभावनैवासौ सान्वर्थं कथ्यते यथा ॥' इति ॥ ४१ ॥

## समासोक्तिः ।

स च विह्वलसत्त्वसंकुलः परिशुष्यन्नभवन्महाह्रदः ।
परितः परितापमूर्च्छितः पतितं चाऽम्बु निरभ्रमीप्सितम् ॥४२॥[1]

स चेत्यादि—स च रामो महाह्रदः महाह्रदसमः सीताविरहात् विह्वलेनाकुलेन सत्त्वेन चेतसा संकुलो व्याप्तः । परिशुष्यन् शोषमुपगच्छन् परितः समन्तात् परितापमूर्च्छितः शोकसंतापेन मूर्च्छान्वितोऽभवत् भूतः । अनन्तरं चाम्बु जलं सीतावार्ताश्रवणमीप्सितम् अभिप्रेतं निरभ्रमाकस्मिकं पतितमित्येकोऽर्थः । महाह्रदः परिशुष्यन् विह्वलैः सत्त्वैर्मत्स्यादिभिः संकुलो व्याप्तः । परितापमूर्च्छितः अर्कतापान्वितोऽभवत् । अम्बु च निरभ्रं विना मेघेन पतितमिति द्वितीयः । समासोक्तिः । यथोक्तम्—'यत्रोक्तेर्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः । सा समासोक्तिरुदिता संक्षिप्तार्थतया यथा ॥' इति । एवं च कृत्वा अयं श्लेषाद्भिद्यते । श्लेषे हि द्वयोरपि श्रूयमाणत्वात् ॥ ४२ ॥

## अतिशयोक्तिः ।

अथ लक्ष्मणतुल्यरूपवेशं गमनाऽऽदेशविनिर्गताऽग्रहस्तम् ।
कपयोऽनुययुः समेत्य रामं नतसुग्रीवगृहीतसाऽऽदराज्ञम् ॥ ४३ ॥[2]

अथेत्यादि—अथ वार्ताश्रवणानन्तरं कपयः समेत्य मिलित्वा राममनुययुः अनुगतवन्तः । लक्ष्मणेन तुल्यं रूपं वेशश्च यस्य रामस्य गमनाय प्रयाणाय आदेशः तदर्थं विनिर्गतौ अग्रहस्तौ यस्य । नतेन प्रणतेन सुग्रीवेण गृहीता प्रतिष्ठिता सादराज्ञा यस्य तं रामम् । अतिशयोक्तिरिति अतिशयाभिधानात् । अत्र सुष्ठ्वपि नामासौ लक्ष्मणेन तुल्यरूपवेशः स्यात्, न तु प्रत्यक्षप्रमाण-

१ अत्र 'औपच्छन्दसिकं' वृत्तम् । २ अत्र 'सुन्दरी' छन्दः ।

परिच्छेद्य इति लोकातिक्रान्तवचनमेतद्वचनम् । अवश्यं च कश्चिद्विशेषोऽस्ति । यथोक्तम्-'निमित्ततो यत्र वचो लोकातिक्रान्तगोचरम् । मन्यन्तेऽतिशयोक्तिं तामलंकारतया यथा ॥' इति ॥ ४३ ॥

अथ सप्तभिः कुलकम् ।

## यथासंख्यम् ।

कपिपृष्ठगतौ ततो नरेन्द्रौ कपयश्च ज्वलिताऽग्निपिङ्गलाऽक्षाः ।
मुमुचुः प्रययुर्द्रुतं समीयुर्वसुधां व्योम महीधरं महेन्द्रम् ॥ ४४ ॥

कपिपृष्ठगतावित्यादि—ततोऽनन्तरं नरेन्द्रौ रामलक्ष्मणौ कपयश्च सर्वे एते मुमुचुः वसुधां त्यक्तवन्तः । प्रययुर्व्योम आकाशम् । महेन्द्रं महीधरं समीयुः गतवन्तः । लिटः कित्त्वे गुणाभावाद्धातोरियङ् । नरेन्द्रौ किंभूतौ । कपिपृष्ठगतौ हनूमन्तमारूढौ । यथासंख्यमिति मुमुचुरित्यादीनां क्रियाणां वसुधादीनां च कर्मणामनुक्रमशो निर्देशात् । यथोक्तम्—'भूयसामुपदिष्टानां क्रियाणामथ कर्मणाम् । क्रमशो योऽनुनिर्देशो यथासंख्यं तदुच्यते ॥' इति ॥ ४४ ॥

## उत्प्रेक्षा ।

स्थितमिव परिरक्षितुं समन्तादुदधिजलौघपरिप्लवाद्धरित्रीम् ।
गगनतलवसुन्धरान्तराले जलनिधिवेगसहं प्रसार्य देहम् ॥ ४५ ॥

स्थितमित्यादि—उदधिजलौघात्समन्ततो यः परिप्लवो विनाशः तस्माद्धरित्रीं परिरक्षितुमिव गगनतलवसुन्धरयोरन्तराले देहं शरीरं जलनिधिवेगं सहत इति मूलविभुजादित्वात्कः । प्रसार्य स्थितं महेन्द्रं समीयुः । उत्प्रेक्षेति । यथोक्तम्—'अविवक्षितसामान्यात्किञ्चिच्चोपमया सह । अतद्गुणक्रियारोपादुत्प्रेक्षातिशयान्विता ॥' इति । अत्र महीधरसामान्यस्यापि विवक्षितत्वादविवक्षितं सामान्यत्वं रक्षितुमिवेति किञ्चिदुपमया सह महेन्द्रगिरेरतद्गुणतया रक्षणक्रियायोगः । गगनतलं वसुन्धरां व्याप्य स्थितमित्यतिशयान्विता ॥ ४५ ॥

---

१ अत्र 'औपच्छन्दसिकं' छन्दः। २ अत्रापि तदेव वृत्तम् । ३ अत्र 'पुष्पिताग्रा' वृत्तम् ।

वार्ता ।

विषधरनिलये निविष्टमूलं शिखरशतैः परिमृष्टदेवलोकम् ।
घनविपुलनितम्बपूरिताशं फलकुसुमाऽऽचितवृक्षरम्यकुञ्जम् ॥४६॥१

विषधरनिलय इत्यादि–विषधरनिलये पाताले निविष्टमूलं महेन्द्रम् । शिखरशतैः करणभूतैः परिमृष्टः संमृष्टो देवलोको येन । घनैर्निरन्तरैर्विपुलैर्विस्तीर्णैर्नितम्बैर्मेखलाभागैः पूरिता व्याप्ता आशा दिशो येन । फलकुसुमाचितैर्वृक्षैः रम्यं कुञ्जं गहनं यस्मिन् । वार्तेति तत्त्वार्थकथनात् । सा द्विविधा विशिष्टा निर्विशिष्टा च । तत्र या पूर्वा सा स्वभावोक्तिरुदिता । यथेयमेव । तथा चोक्तम्–'स्वभावोक्तिरलङ्कार इति केचित्प्रचक्षते । अर्थस्य तादवस्थ्ये च स्वभावोऽभिहितो यथा ॥' इति । निर्विशिष्टा वार्ता नामालङ्कारः । यथोक्तम्–'गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः । इत्येवमादिकं काव्यं वार्तामेतां प्रचक्षते॥' इति ॥ ४६ ॥

प्रेयः ।

मधुकरविरुतैः प्रियाध्वनीनां सरसिरुहैर्दयिताऽऽस्यहास्यलक्ष्म्याः ।
स्फुटमनुहरमाणमादधानं पुरुषपतेः सहसा परं प्रमोदम् ॥ ४७ ॥

मधुकरविरुतैरित्यादि–प्रियाध्वनीनां सीतासंबन्धिनां जल्पितानां मधुकरविरुतैः स्फुटं स्पष्टमनुहरमाणमनुकुर्वन्तं सादृश्यमित्यर्थात् । दयितायाः सीतायाः यदास्य हासश्चैतयोर्लक्ष्म्याः सरसिरुहैः सादृश्यमनुहरमाणं सन्तं महेन्द्रम् । तत्र पद्मैरास्यलक्ष्म्याः कुमुदैर्हासलक्ष्म्याः । अत्र । 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् २।३।७२।' इति षष्ठी । अनुहरमाणत्वमस्य तुल्यार्थत्वात् । सदृशीभवन्तमित्यर्थः । पुरुषपतेः रामस्य सहसा तत्क्षणम् आत्मानमित्यर्थेऽर्थः । परमुत्कृष्टं प्रमोदमादधानं जनयन्तं समैयुः । प्रेय इति प्रियतरत्त्वाभिधानात् ॥ ४७ ॥

रसवत् ।

ग्रहमणिरशनं दिवो नितम्बं विपुलमनुत्तमलब्धकान्तियोगम् ।
च्युतघनवसनं मनोऽभिरामं शिखरकरैर्मदनादिव स्पृशन्तम् ॥४८॥

---

१ अत्र 'पुष्पिताग्रा' छन्दः । वार्ता तु व्याख्याकारैर्लक्षिता बोध्या । अन्ये तु प्राय आलङ्कारिका गुणीभूतव्यङ्ग्यमेवेत्याहुः । २ अत्रापि 'पुष्पिताग्रा' छन्दः । प्रेयःप्रभृतयस्तु भावालङ्कारा इति प्रकाशे स्थितम् ।

ग्रहेत्यादि--दिवो नितम्बं मध्यभागं ग्रहा मणिरशनेव यस्य । विपुलं विस्तीर्णम् । न विद्यते उत्तमोऽस्मादित्यनुत्तमः अतिशयवान् । लब्धः कान्त्या योगो येन । च्युतो घनो वसनमिव यस्मात् । शिखरैः करैरिव मदनादिव स्पृशन्तं महेन्द्रम् । रसवदिति दिवो गिरेश्च स्त्रीपुंसयोरिव शृङ्गाररसाभिधानात् । तथा चोक्तम्—'रसवद्दर्शितं स्पष्टं शृङ्गारादिरसं यथा।' इति ॥ ४८ ॥

## ऊर्जस्वी ।

प्रचपलमगुरुं भराऽसहिष्णुं जनमसमानमनूर्जितं विवर्ज्य ।
कृतवसतिमिवाऽर्णवोपकण्ठे स्थिरमतुलोन्नतिमूढतुङ्गमेघम् ॥४९॥

प्रचपलमित्यादि--जनं लोकं प्रचपलम् अस्थिरम् अगुरुं लघुम् अत एव भरासहिष्णुम् । अनूर्जितम् अनहंकारं विवर्ज्यैवासमानत्वात् अर्णवस्य समुद्रस्योपकण्ठे समीपे कृतवसतिं कृतावस्थानं समीयुः । तदेवासमानत्वं दर्शयन्नाह— स्थिरम् अचलम् अतुलोन्नतिम् असाधारणमहत्त्वमूढतुङ्गमेघं तद्भूतमहामेघम् आश्रयणीयत्वात् । ऊर्जस्वीति साहङ्कारवस्त्वभिधानात् ॥ ४९ ॥

## पर्यायोक्तिः ।

स्फटिकमणिगृहैः सरत्नदीपैः प्रतरुणकिन्नरगीतनिस्वनैश्च ।
अमरपुरमतिं सुराऽङ्गनानां दधतमदुःखमनल्पकल्पवृक्षम् ॥ ५० ॥

स्फटिकमणिगृहैरित्यादि—स्फटिकमणिगृहैः रत्नदीपयुक्तैः प्रतरुणानां किन्नराणां गीतनिस्वनैश्च हेतुभूतैः अमरपुरमतिं स्वर्गबुद्धिं सुराङ्गनानां दधतं जनयन्तम् । अदुःखं न विद्यते दुःखमस्मिन्निति, सुखहेतुमित्यर्थः । बहुकल्पवृक्षं समीयुः । पर्यायोक्तिरिति अमरपुरमतिं दधतमित्यनेन पर्यायेण वचनगत्या तदेवामरपुरमिति प्रतिपादनात् । तथा चोक्तम्—'पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते।' इति ॥ ५० ॥

## समाहितम् ।

अथ ददृशुरुदीर्णधूमधूम्रां दिशमुदधिव्यवधिं समेतसीताम् ।
सहरघुतनयाः प्लवङ्गसेनाः पवनसुताऽङ्गुलिदर्शितामुदक्षाः ॥ ५१॥

अथेत्यादि–अथ प्राप्त्यनन्तरं प्लवङ्गसेनाः सहरघुतनया दिशं ददृशुः । उदधिव्यवधिं सजलधिव्यवधानां दक्षिणामित्यर्थः । 'उपसर्गे घोः किः ।

३ । ३ । ९२ ।' इति किः । उदीर्णेन महता धूमेन धूम्रामस्पष्टाम् । समं सीतां संगता सीतानयेति तृतीयार्थे बहुव्रीहिः । पवनसुतस्याङ्गुल्या दर्शिताम् । उदक्षाः ऊर्ध्वीकृताक्षाः । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् । ५ । ४ । ११३ ।' इति षच् । षित्लक्षणो ङीष् न भवति, तस्यानित्यत्वात् । तेन दंष्ट्रेत्युपपन्नं भवति । समाहितमिति[1] अनन्यमनस्कतया दिशोऽवलोकनात् ॥ ५१ ॥

अथ चतुर्भिः कलापकम् ।

उदारम्[2] ।

जलनिधिमगमन्महेन्द्रकुञ्जात् प्रचयतिरोहिततिग्मरश्मिभासः ।
सलिलसमुदयैर्महातरङ्गैर्भुवनभरक्षमम्प्यभिन्नवेलम् ॥ ५२ ॥

जलनिधिमित्यादि—महेन्द्रकुञ्जात् जलनिधिमगमन् गतवत्यः प्लवङ्गसेनाः । लृदित्त्वाच्च्लेरङ् । प्रचयेन उच्चतया तिरोहितास्तिग्मरश्मिभासो येन निकुञ्जेन तस्मान्निकुञ्जात् । सलिलसमुदयैर्महातरङ्गैर्महोर्मिभिः भुवनस्य भरणे क्षममपि शक्तमपि । 'भृ भरणे' इति क्रैयादिकः । तस्य 'ऋदोरप् ।३।३।५७।' इत्यपि रूपम् । अभिन्नवेलम् अनतिक्रान्तमर्यादं जलनिधिम् । उदारमिति उदात्तमित्यर्थः । महानुभावताप्रतिपादनात् । यतो महातरङ्गैर्जलसमूहैर्भुवनभरक्षममपि अभिन्नवेलमिति । द्विविधमुदारं महानुभावतया वित्तवस्तुयोगाच्चेति । इयं महानुभावता दर्शिता ॥ ५२ ॥

द्वितीयमाह—

उदारमेव ।

पृथुगुरुमणिशुक्तिगर्भभासा ग्लपितरसातलसम्भृतान्धकारम् ।
उपहतरविरश्मिवृत्तिमुच्चैः प्रलघुपरिप्लवमानवज्रजालैः ॥ ५३ ॥

पृथ्वित्यादि—पृथवो महान्तः गुरवस्तु न परिच्छेद्या मणयो मौक्तिका यासां शुक्तीनां तथाविधानां गर्भस्य भासा दीप्त्या ग्लपितं क्षयितं रसातले संभृतमुपचितमन्धकारं येन तम् । उच्चैरुपरि प्रलघूनामल्पानां परिप्लवमानानां वज्राणां यानि जालानि समूहाः तैरुपहता रविरश्मिवृत्तयो

---

१ समाहितमेव समाधिः । 'समाधिः सुकरं कार्यं कारणान्तरयोगतः ।' इति ।
२ उदारमित्यत्रोदात्तमिति पठनीयम् । 'उदात्तं वस्तुनः सम्पन्महतां चोपलक्षणम् ।' इति तल्लक्षणं च । एवं परत्रापि सर्वत्रोदारपदमुदात्तालङ्कारपरमेव ।

यस्मिन् सः । तं जलनिधिमगमन् । यद्वत्रं वारिणि तरति तत्प्रशस्तमित्युक्तम् । 'एतदेवापरेऽन्येन वाक्यार्थेनान्यथा विदुः । नानारत्नवियुक्तं यत्तत्किलोदारमुच्यते ॥' इति ॥ ५३ ॥

## उदारमेव ।

समुपचितजलं विवर्धमानैरमलसरित्सलिलैर्विभावरीषु ।
स्फुटमवगमयन्तमूढवारीन् शशधररत्नमयान्महेन्द्रसानून् ॥ ५४ ॥

समुपचितजलमित्यादि—विभावरीषु विवर्धमानैरमलैः सरित्सलिलैः समुपचितजलम् उदधिं स्फुटं स्पष्टमवगमयन्तं बोधयन्तम् । किमित्याह—महेन्द्रसानून् शशधररत्नमयान् चन्द्रकान्तस्वभावान् ऊढवारीन् । अन्यथा कथं धीयते जलं यदि चन्द्रकान्तसानवो न स्युः । उदारमेवेति रत्नयोगात् ॥ ५४ ॥

## श्लिष्टम्[1] ।

भुवनभरसहानलङ्घ्यधाम्नः पुरुरुचिरत्नभृतो गुरूरुदेहान् ।
श्रमविधुरविलीनकूर्मनक्रान् दधतमुदूढभुवो गिरीनहींश्च ॥ ५५ ॥

भुवनभरसहानित्यादि—गिरीन् भुवनभरसहान् अहींश्च तादृशानेव दधतं जलनिधिमगमन् । गिरीनलङ्घ्यधाम्नः अहींश्चानभिभवनीयतेजसः । गिरीन् पुरुरुचिरत्नभृतः अहींश्च महारुचिरत्नभृतः । गिरीन् गुरुदेहान् अहींश्च महाकायान् । श्रमविधुराः श्रमपीडिताः विलीनाः कूर्मा नक्राश्च येषु तान् गिरीनहींश्चोदूढभुवो धृतवसुधान् । गिरीनहींश्च 'नश्छव्यप्रशान् । ७ । ३ । ७ ।' इति रुत्वं पूर्वस्यानुनासिकः । श्लिष्टमिति उपमानेनोपमेयत्वस्य साधनात् । तथा चोक्तं विशेषणेन श्लिष्टम्—'उपमानेन यत्तत्त्वमुपमेयस्य साध्यते । क्रियागुणाभ्यां नाम्ना च श्लिष्टं तदभिधीयते ॥' इति । अत्रोपमानभूतैरहिभिरुपमेयभूतानां गिरीणां तत्त्वस्य ताद्रूप्यस्य भुवनभरादिताद्रूप्यक्रियया तद्गुणेन च साधनेन गिरिभिराहिभिश्च नाम्ना च शब्देन भुवनभरसहानित्यादिना साध्यमानत्वात् । रूपकमपीदृशमेव । किंतु श्लिष्टस्य भेदेनोपमानोपमेययोर्युगपत्प्रयोगात् । रूपके पुनरेकस्यैवोपमेयपुरुषस्य व्याघ्र उपमानम् । तथा चोक्तम्—'लक्षणं रूपकेऽपीदं विद्यते काममत्र तु । दृष्टः प्रयोगो युगपदुपमानोपमेययोः ॥' इति ।

---

१ श्लिष्टमेव श्लेषः । अत्र 'नपुंसके भावे क्तः ३ । ३ । ११४ ।' इति भावे क्तः । अत्र नार्थः श्लेषः, किंतु शाब्द एवेति बोध्यम् । एवं प्रायः परत्रापि ।

यदुक्तलक्षणं श्लिष्टं सहोक्त्युपमाहेतुनिर्देशात्त्रिविधम् । यथोक्तम्—'श्लेषादेवार्थवचसोर्यस्य च क्रियते भिदा । तत्सहोक्त्युपमाहेतुनिर्देशात्त्रिविधं यथा ॥' इति । तत्रेदं सहोक्तिश्लिष्टमुक्तं गिरीनद्रींश्चेति सहोक्त्या निर्देशात् ॥ ५५ ॥

## श्लिष्टमेव ।

प्रददृशुरुरुमुक्तशीकरौघान् विमलमणिद्युतिसम्भृतेन्द्रचापान् ।
जलमुच इव धीरमन्द्रघोषान् क्षितिपरितापहृतो महातरङ्गान् ॥ ५६ ॥

प्रददृशुरित्यादि—महातरङ्गान् जलमुच इव मेघानिव प्रददृशुः प्रदृष्टवन्तः । उरवो महान्तो मुक्ताः प्रकीर्णाः शीकरौघा येषु । विमलमणिद्युतय एव सन्ततानि इन्द्रचापानि येषु । धीरमन्द्रघोषान् मधुरगम्भीरध्वनीन् । क्षितिपरितापहृतः पृथिवीसंतापहारिणः । इदमपि यथानिर्दिष्टविशेषणात् । श्लिष्टं जलमुच इवेत्युपमाननिर्देशात् ॥ ५६ ॥

अथ पञ्चभिः कुलकम् ।

## हेतुश्लिष्टम् ।

विद्रुममणिकृतभूषा मुक्ताफलनिकरराञ्जिताऽऽत्मानः ।
बभुरुदकनागभग्ना वेलातटशिखरिणो यत्र ॥ ५७ ॥

विद्रुमेत्यादि—वेलातटशिखरिणो यत्र जलनिधौ बभुः शोभन्ते । ते तमीयुरिति वक्ष्यमाणेन संबन्धः । वेलातटाः शिखरिणश्चेति द्वन्द्वः । शेषाणि विशेषणान्युभयत्र तुल्यानि । इदमपि यथानिर्दिष्टमेव । किंतु हेतुश्लिष्टं हेतुद्वारेण विशेषणानां निर्देशात् । विद्रुममणिकृतभूषत्वात् जलहस्तिभग्नत्वाच्च बभुरिति[1] ॥ ५७ ॥

## अपह्नुतिः ।

भृतनिखिलरसातलः सरत्नः शिखरिसमोर्मितिरोहितान्तरिक्षः ।
कुत इह परमाऽर्थतो जलौघो जलनिधिमीयुरतः समेत्य मायाम् ॥ ५८ ॥

भृतनिखिलरसातल इत्यादि—एवं गुणविशिष्टो जलौघः कुत इह प्रदेशे परमार्थतः परमार्थेन विद्यते । किं तर्हि माया । यतः पूरिताशेषपातालत्वात् सरत्नत्वात् । शिखरिसमैरूर्मिभिः पिहितान्तरिक्षत्वाच्च । सराघवाः प्लवङ्गसेनाः

---

[1] अत्र द्वयोर्हेत्वोर्वचनं श्लिष्टम् ।

समेत्य मायामिव जलनिधिमीयुः ज्ञातवत्यः । सर्वे गत्यर्था ज्ञानार्था इति । 'भृञ भरणे' इति भौवादिकः । अपह्नुतिरिति मायामित्यन्तर्गतोपमारूपतया निर्देशात् । विद्यमानार्थस्य चापह्नवात् । तथा चोक्तम्—'अपह्नुतिरिष्टात्र किंचिदन्तर्गतोपमा । भूतार्थापह्नवादेषा क्रियतेऽस्याभिधा यथा ॥' इति ॥ ५८ ॥

## विशेषोक्तिः ।

शशिरहितमपिप्रभूतकान्तिं विबुधहृतश्रियमप्यनष्टशोभम् ।
मथितमपि सुरैर्दिवं जलौघैः समभिभवन्तमविक्षतप्रभावम् ॥५९॥

शशिरहितमित्यादि—शशिरहितमपि चन्द्ररहितमपि प्रभूतकान्तिम् । पद्मरागादिरत्नावभासितत्वात् । विबुधहृतश्रियमपि अनष्टशोभं सर्वदा शोभास्पदत्वात् । सुरैर्मथितमपि दिवमाकाशं जलौघैः समभिभवन्तम् अत्युच्छ्रितत्वात् । तदेवमविक्षतप्रभावम् अखण्डिताभिमानमीयुः ज्ञातवत्यः । विशेषोक्तिरिति शश्यादेरेकदेशस्य विगमेऽपि प्रभूतकान्त्या गुणान्तरेण स्तुतिविशेषस्य प्रतिपादनात् । यथोक्तम्—'एकदेशस्य विगमे या गुणान्तरसंस्तुतिः । विशेषप्रथनायासौ विशेषोक्तिर्मता यथा ॥' इति ॥ ५९ ॥

## व्याजस्तुतिः ।

क्षितिकुलगिरिशेषदिग्गजेन्द्रान् सलिलगतामिव नावमुद्वहन्तम् ।
धृतविधुरधरं महावराहं गिरिगुरुपोत्रमपीहितैर्जयन्तम् ॥ ६०

क्षितीत्यादि—क्षितिं पृथिवीं, कुलगिरीन् कुलपर्वतान्, शेषं नागराजं, दिग्गजेन्द्रानैरावतादीन् । सलिलगतामिव नावमुद्वहन्तं जलनिधिं महावराहं धृतविधुरधरं धृता उद्धृता विधुरा विह्वला धरा मही येनेति । गिरिगुरुपोत्रं गिरिवत् गुरु पोत्रं यस्य तमपीहितैश्चेष्टितैर्जयन्तं जलनिधिमीयुः । व्याजस्तुतिरिति क्षित्यादिधारणादधिकगुणस्य जलनिधः स्तोत्रव्यपदेशेन वराहेण तुल्यत्वात् । तमपि महावराहं जयन्तमिति किंचिद्विधातुमिच्छया निन्दनात् । तथा चोक्तम्—'दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यता । किंचिद्विधित्सया निन्दा व्याजस्तुतिरसौ यथा ॥' इति ॥ ६० ॥

## उपमारूपकम् ।

गिरिपरिगतचञ्चलाऽऽपगान्तं जलनिवहं दधतं मनोऽभिरामम् ।
गलितमिव भुवो विलोक्य रामं धरणिधरस्तनशुक्रचीनपट्टम् ॥६१॥

गिरीत्यादि—गिरिभिः परिगताः संसृष्टाः चञ्चला विलोला आपगान्ता नद्यन्ता यस्मिन् जलनिवहे तं जलनिवहं दधतं धारयन्तं समुद्रमीयुः । कीदृशमिव जलनिवहम् । रामं भर्तारं विलोक्य हृष्टाया इत्यर्थप्राप्तम् । तवश्च पूर्वकाले क्त्वा । भुवः पृथिव्या इव धरणिधरस्तनयोः शुक्लचीनपट्टमिव गलितम् । उपमारूपकमिति[1] । तथोक्तम्—'उपमानस्य तद्भावमुपमेयस्य रूपयन् । यो वदत्युपमाभेदमुपमारूपकं यथा ॥' इति ॥६१॥

## तुल्ययोगिता ।

अपरिमितमहाऽद्भुतैर्विचित्रश्च्युतमलिनः शुचिभिर्महानलङ्घ्यैः ।
तरुमृगपतिलक्ष्मणक्षितीन्द्रैः समधिगतो जलधिः परं बभासे ॥६२॥

अपरिमितमहाद्भुतैरित्यादि—तरुमृगपतिलक्ष्मणक्षितीन्द्रैः सुग्रीवलक्ष्मणरामैः समधिगतः प्राप्तो जलधिः परं सुष्ठु बभासे शोभते स्म । कीदृशैः कीदृश इत्याह—अपरिमितमहाद्भुतैर्विचित्रः नानाद्भुतः । शुचिभिर्विमलैः च्युतमलिनो निर्मलोऽलङ्घ्यैरनभिभवनीयैः महान् अनभिभवनीयः । एवं च कृत्वा तेनापि ते समधिगताः परं बभासिर इति । तुल्ययोगितेति न्यूनानामपि तेषां सुग्रीवादीनां विशिष्टेन जलनिधिना महाद्भुतत्वादिगुणसाम्यविवक्षया तुल्यस्य कार्यस्य भासनलक्षणस्यानुष्ठानेन तुल्ययोगात् । तथा चोक्तम्—'न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया ॥ तुल्यकार्यक्रियायोगादित्युक्ता तुल्ययोगिता ॥' इति ॥ ६२ ॥

## निदर्शना ।

न भवति महिमा विना विपत्तेरवगमयन्निव पश्यतः पयोधिः ।
अविरतमभवत्क्षणे क्षणेऽसौ शिखरिपृथुप्रथितप्रशान्तवीचिः ॥ ६३ ॥

न भवतीत्यादि—महिमा महत्त्वं विना विपत्तेः विनाशं विना न भवति । 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् । २ । ३ । ३२ ।' इति पञ्चमी । नास्त्येव तन्महत्त्वं यस्य विनाशो नास्तीत्येवमवगमयन् बोधयन्निव पयोधिस्तान् पश्यतो रामादीन् अविरतमविच्छेदेन शिखरिवत् पृथवः प्रथिताः प्रशान्ताश्च वीचयो यस्य स एवं क्षणे क्षणे अभवत्

---

१ उपमारूपकयोस्सङ्करः । उपमारूपकमिति विशेषव्यपदेशस्तु नास्त्यलङ्कारः प्रकाशकारादिमते ।

भूतवान् । निदर्शनेति प्रतिक्षणं वीचीनां पृथुत्वप्रशान्तत्वभवनक्रिययैव महिमभवनस्य तदर्थस्य विपत्तिफलस्य उपादानात्, न यथेववतिशब्दानां प्रयोगात् । तथा चोक्तम्—'क्रिययैव तदर्थस्य विशिष्टस्योपदर्शनात् । इष्टा निदर्शना नाम यथेववतिभिर्विना ॥' इति ॥ ६३ ॥

## विरोधः ।

समुद्रोपकण्ठे रामस्य मदनावस्थामाह—

मृदुभिरपि बिभेद पुष्पबाणैर्जलशिशिरैरपि मारुतैर्ददाह ।
रघुतनयमनर्थपण्डितोऽसौ न च मदनः क्षतमाततान नार्चिः ॥ ६४ ॥

मृदुभिरित्यादि—मदनोऽनर्थपण्डितः निष्प्रयोजनकुशलः पुष्पबाणैरपि मृदुभिः रघुतनयं बिभेद । न चासौ क्षतं खण्डनमाततान जनितवान् । जलशिशिरैर्मारुतैस्तमेव रघुतनयं ददाह न चासावर्चिर्ज्वालामाततान । विरोध इति पुष्पबाणानां यन्मार्दवं मरुतां च जलसंसर्गाद्यच्छैत्यं तयोर्भेददाहलक्षणे क्रिये विरुद्धे तयोरभिधानात् । तयोश्च क्रिययोर्वा विरोधिनी क्रिया क्षतार्चिषोरनातानलक्षणा तस्याः कामोद्रेकप्रतिपादनाभिधानात् । तथा चोक्तम्—'गुणस्य च क्रियाया वा विरुद्धान्यक्रियाभिधा । या विशेषाभिधानाय विरोधं तं विदुर्यथा ॥' इति ॥ ६४ ॥

## उपमेयोपमा ।

अथ मृदुमलिनप्रभौ दिनाऽन्ते जलधिसमीपगतावतीतलोकौ ।
अनुकृतिमितरेतरस्य मूर्त्योर्दिनकरराघवनन्दनावकार्ष्टाम् ॥ ६५ ॥

अथेत्यादि—अथ यथोक्तवस्त्वनन्तरं मृदुमलिनप्रभौ मृदुरप्रचण्डा मलिना प्रभा ययोः तौ दिनकरराघवनन्दनौ । रघोरपत्यं राघवः दशरथस्तन्नन्दनो रामः । दिनान्ते अन्योन्यस्य दिवाकरो रामस्य रामोऽपि दिवाकरस्येति मूर्त्योर्देहयोरनुकृतिमिवानुकारमिव यथोक्तधर्मतुल्यतया अकार्ष्टां कृतवन्तौ । अतीतलोकौ त्यक्तलोकौ । उपमेयोपमेति तयोः पर्यायेण उपमानोपमेयत्वात् । तथा चोक्तम्— 'उपमानोपमेयत्वं यत्र पर्यायतो भवेत् । उपमेयोपमां धीरा ब्रुवते तां यथोदिताम् ॥' इति ॥ ६५ ॥

## सहोक्तिः ।

अपहरदिव सर्वतो विनोदान् दयितगतं दधदेकधा समाधिम् ।
घनरुचि ववृधे ततोऽन्धकारं सह रघुनन्दनमन्मथोदयेन ॥ ६६ ॥

---

१ विरोधो विरोधाभासः । २ अत्र 'पुष्पिताग्रा' वृत्तम् ।

अपहरदित्यादि—ततस्तूत्तरकालं दिवसे ये विनोदाः चेतसः संस्थापकाः तान् सर्वतः सर्वान् सर्वेण वा प्रकारेण । आद्यादित्वात्तसिः । अपहरदिव अपनयदिवान्धकारं दयितगतं प्रियागतं च । समाधिं चित्तैकाग्रताम् एकधा एकप्रकारं दधत् धारयत् । घनरुचि बहुलच्छायं ववृधे वर्धते स्म । सह रघुनन्दनमन्मथोदयेन तदानीं तस्य कामोदयोऽपि ववृधे । सहोक्तिरिति अन्धकारमन्मथाश्रितयोर्वर्धनक्रिययोस्तुल्यकालयोः 'ववृधे' इत्यनेन पदेन कथनात् । तथा चोक्तम्—'तुल्यकालक्रिये यत्र व तुद्वयसमाश्रिते । वाक्येनैकेन कथ्येते सहोक्तिः सा मता यथा ॥' इति ॥ ६६ ॥

## परिवृत्तिः ।

अधिजलधि तमः क्षिपन् हिमांशुः परिददृशेऽथ दृशां कृताऽवकाशः ।
विदधदिव जगत् पुनः प्रलीनं भवति महान् हि पराऽर्थ एव सर्वः॥६७॥[1]

अधिजलधीत्यादि—अथ हिमांशुरन्धकारवर्धनानन्तरम् । अधिजलधि जलधेरुपरि । विभक्त्यर्थेऽव्ययीभावः । तमः क्षिपन् अपनयन् । परिददृशे दृष्टः । दृशां चक्षुषां कृतावकाशः दत्तावसरः । जगल्लोकं प्रलीनं तिरोभूतं पुनर्विदधदिव सृजन्निव । कस्मात्तेनैवं कृतमित्याह—यस्माद्यो महान् स सर्वः परार्थ एव परप्रयोजन एव भवति । परिवृत्तिरिति दृशां कृतावकाश इत्यनेन विशिष्टस्य वस्तुन आदानात् । तमः क्षिपन्नित्यनेनास्य वस्तुनः अपोहात्, भवतीत्यादिना अर्थान्तरन्यासात् । तथा चोक्तम्—'विशिष्टस्य यदादानमन्यापोहेन वस्तुनः ॥ अर्थान्तरन्यासवती परिवृत्तिरसौ यथा ॥ इति' ॥ ६७ ॥

## ससन्देहः ।

अशनिरयमसौ कुतो निरभ्रे शितशरवर्षमसत्तदप्यशार्ङ्गम् ।
इति मदनवशो मुहुः शशाऽङ्के रघुतनयो न च निश्चिकाय चन्द्रम्६८

अशनिरित्यादि—असौ यश्चन्द्रः किमयमशनिर्वज्रम् असौ कुतो निरभ्रे नभसि कुतः, यतोऽसौ मेघादुत्पद्यत इति । उत निशितानां शराणां वर्षं तदप्यशार्ङ्गमविद्यमानधनुः असदविद्यमानमित्ययं मदनवशः कामाभिभूतो मुहुः

---

1 अत्र सहोक्त्युत्प्रेक्षासङ्कीर्णा । 'परिवृत्तिर्विनिमयो योऽर्थाना स्यात् समासमैः ।' इति प्रकाशकारोक्ता तु न संगच्छते ।

क्षणं शशाङ्के शशाङ्कविषये रघुतनयोऽभूदित्यर्थात् द्रष्टव्यम् । न च चन्द्रं निश्चिकाय निश्चिनोति स्म ।'विभाषा चेः।७।३।५८।'इति कुत्वम् । ससन्देह इति अशनिशरवर्षाभ्याम् उपमेयस्य चन्द्रस्य तत्त्वम् अशनिशरवर्षमिति प्रयोक्तु-रभिधानात् । कुतो निरभ्रे तदप्यशार्ङ्गमिति पुनरुपमानोपमेययोर्भेदाभि-धानात् न निश्चिकाय चन्द्रमिति स्तुत्यर्थं सन्देहवचोऽभिधानाच्च । तथा चोक्तम्–'उपमानोपमेयस्य तत्त्वं च वदतः पुनः। ससन्देहवचः स्तुत्यै ससन्देहं विदुर्यथा ॥' इति ॥ ६८ ॥

## अनन्वयः[1] ।

कुमुदवनचयेषु कीर्णरश्मिः क्षततिमिरेषु च दिग्वधूमुखेषु ।
वियति च विललास तद्वदिन्दुर्विलसति चन्द्रमसो न यद्वदन्यः ॥६९॥

कुमुदवनचयेष्वित्यादि—कुमुदवनानां चयेषु समूहेषु, दिग्वधूमुखेषु वियति च, क्षततिमिरेषु खण्डिततमःसु यतस्तेषु विकीर्णरश्मिः क्षिप्तमयूखः विललास तद्वदिन्दुः शोभते स्म। चन्द्रमसः सकाशात् अन्यो यद्वद्यथा न विल-सति तथा विललास । इदमुक्तं भवति । इन्दुर्विललास चन्द्र इवेति । अन-न्वय इति सत्सदृशस्य साम्यस्याविवक्षातश्चन्द्रस्योपमानोपमेयत्वात् । तथा चोक्तम्–'यत्र तेनैव तस्य स्यादुपमानोपमेयता । सादृश्यस्याविवक्षातस्तमि-त्याहुरनन्वयम् ॥' इति ॥ ६९ ॥

## उत्प्रेक्षाऽवयवः ।

शरणमिव गतं तमो निकुञ्जे विटपिनिराकृतचन्द्ररश्म्यरातौ ।
पृथुविषमशिलाऽन्तरालसंस्थं सजलघनद्युति भीतवत्ससाद ॥ ७० ॥

शरणमित्यादि—पृथुविषमशिलानां यान्यन्तरालानि तेषु संस्थं संतिष्ठ-मानं सत्तमः निकुञ्जे गहने विटपिभिर्निराकृताश्चन्द्रस्य रश्मय एवारातयो यस्मान्निकुञ्जात् तस्मिन् ससाद विलीनं शरणमिव । यथा कश्चित् भीतो दुर्गं निलीयते । सजलस्य घनस्येव द्युतिर्यस्य तमसः तत् । उत्प्रेक्षावयव इति । भीतवत्ससादेति उपमाश्लेषलक्षणस्य श्लिष्टस्यार्थेन योगात् शरण-

१ उत्प्रेक्षैवैकदेशवर्तिनी चेत्तदोत्प्रेक्षावयव इति ।

मिव गतमित्युत्प्रेक्षायोगात्, 'विटपिनिराकृतचन्द्ररश्म्यरातौ' इति रूपकार्थेन योगात् । तथा चोक्तम्--'श्लिष्टस्यार्थेन संयुक्तः किंचिच्चोत्प्रेक्षयान्वितः । रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथा ॥' इति ।'विटपितिरस्कृतचन्द्ररश्मियोगः' इति पाठान्तरम् । तत्र रूपकार्थो नास्तीति असंपूर्णलक्षणता ॥७०॥

## संसृष्टिः ।

अथ नयनमनोहरोऽभिरामः स्मर इव चित्तभवोऽप्यवामशीलः ।
रघुसुतमनुजो जगाद वाचं सजलघनस्तनयित्नुतुल्यघोषः ॥ ७१ ॥

अथेत्यादि—अथ चन्द्रदर्शनानन्तरं रघुसुतं राममभिरामः कामाभिभूतत्वादाभिमुख्येन रम्यत इति । अनुजः कनीयान् भ्राता वाचं वक्ष्यमाणां जगाद गदितवान् । नयनमनोहरः प्रेक्षणीय इत्यर्थः । अत्र नयने मन आवर्जयन् नयनमनोहर इति तुल्ययोगिता । न्यूनस्य लक्ष्मणस्याधिकेन सहाभिरमणीयगुणसाम्याविवक्षया अभिरमणतुल्यक्रियायोगात् । स्मर इव चित्तभवोऽपि तस्य चेतसि सदा भवतीति श्लिष्टम् । तथाप्यवामशीलोऽप्रातिकूल इति विरोधः । स्मरस्तु वामशीलः । सजलघनस्तनयित्नुनः शब्देन तुल्यो घोषो यस्य । संसृष्टिरिति बह्वलंकारयोगात् । तथा चोक्तम्--'पराभिभूता संसृष्टिर्बह्वलंकारयोगतः । रचिता रत्नमालेव सा चैवं कथ्यते यथा ॥' इति ॥ ७१ ॥

## आशीः ।

पतिवधपरिलुप्तलोलकेशीर्नयनजलाऽपहृताऽञ्जनौष्ठरागाः ।
कुरु रिपुवनिता जहीहि शोकं क च शरणं जगतां भवान् क मोहः ७२

पतीत्यादि--पतिवधेन परिलुप्ता भ्रष्टा लोलाः केशा यासां रिपुवनितानाम् । नयनजलेनाश्रुणा अपहृतमञ्जनमोष्ठरागश्च यासां ताः मन्दोदरीप्रभृतीः कुरु । शोकं जहीहीत्याशंसे । किं क भवान् जगतां शरणमाश्रयः क च मोह इति । आशीरिति इष्टस्याशंसनात् । तथा चोक्तम्--'आशीरिति च केषांचिदलंकारतया मता । सौहृदस्याविरोधोक्तौ प्रयोगोऽस्याश्च तद्यथा ॥' इति ॥ ७२ ॥

१ 'सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ।' २ नैतस्यालङ्कारत्वं प्रकाशकारादयोऽभिप्रयन्ति ।

हेतुः ।

अधिगतमहिमा मनुष्यलोके बत सुतरामवसीदति प्रमादी ।
गजपतिरुरुशैलशृङ्गवर्ष्मा गुरुरवमज्जति पङ्कभाङ् न दारु ॥ ७३ ॥

अधिगतमहिमेत्यादि---मनुष्यलोके योऽधिगतमहिमा प्राप्ताधिपत्यः स प्रमादी शोकादिषु प्रमादवान् बत कष्टमवसीदति न कार्यसमर्थो भवति । कुत एतदित्याह---गजपतिः उरुशैलशृङ्गवर्ष्मा महाशैलशृङ्गप्रमाणं वर्ष्म वपुर्यस्य सः । पङ्कभाक् पङ्कं भजतीति । 'भजो ण्विः ।३।२।६२।' इति ण्विः । पङ्कमवतीर्णः सन् अवमज्जति अवसीदति । यस्मादसो गुरुः, न पुनर्दारु काष्ठं, तस्मान्मुञ्च शोकम् । हेतुरिति गजपतेर्हेतुद्वारेण निर्देशात् । अयमर्थान्तरो द्रष्टव्यः ॥ ७३ ॥

निपुणम् ।

बोद्धव्यं किमिव हि यत्त्वया न बुद्धं
किं वा ते निमिषितमप्यबुद्धिपूर्वम् ।
लब्धात्मा तव सुकृतैरनिष्टशङ्की
स्नेहौघो घटयति मां तथापि वक्तुम् ॥ ७४ ॥

बोद्धव्यमित्यादि---किमिव तद्बोद्धव्यं ज्ञातव्यमस्ति नैवेत्यर्थः । यत्त्वया न बुद्धं बुद्धया विज्ञेयं तव किंचिच्चेष्टितमपि नोपेक्षापूर्वकं यतो निमिषितमक्ष्णोर्निमीलनमपि अबुद्धिपूर्वकं नैवेत्यर्थः । यद्येवं किमित्यस्मानुपदिशसीत्याह---लब्धात्मेति । तथापि सुकृतैर्लब्धात्मा लब्धजन्मा स्नेहौघः स्नेहसमूहः । अनिष्टशङ्की अनिष्टशङ्कनशीलः । मां वक्तुं वदेति । घटयति । निपुणमिति अर्थावगाढत्वादस्य चोदात्तेऽन्तर्भावो द्रष्टव्यः । भाविकत्वमित्यलंकार उक्तः । तद्ग्रन्थविषयत्वात्पृथक् प्रदर्शयिष्यति ॥ ७४ ॥

सौमित्रेरिति वचनं निशम्य रामो
जृम्भावान्भुजयुगलं विभज्य निद्रान् ।
अध्यष्ठाच्छिशयिषया प्रवालतल्पं
रक्षायै प्रतिदिशमादिशन्प्लवङ्गान् ॥ ७५ ॥

इति भट्टिकाव्ये दशमः सर्गः ।

---

१ अस्य प्रकाशमते काव्यलिङ्ग एवान्तर्भावः । २ नास्यालङ्कारत्वं प्रकाशकारैर्नो मन्वंते । ३ अत्र परत्र च 'प्रहर्षिणी' वृत्तम् । 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति तल्लक्षणम् ।

सौमित्रेरित्यादि—इत्येवं सौमित्रेः लक्ष्मणस्य वचनं निशम्य श्रुत्वा रामो जृम्भावान् जातजृम्भिकः । जृम्भणं जृम्भा । 'गुरोश्च हलः ।३।३।१०३।' इत्यकारः । टाप् । निद्रान् निद्रां गच्छन् । 'द्रा कुत्सायां गतौ ।' इत्यस्यादादिकस्य निपूर्वस्य शतरि रूपम् । शिशयिषया शयितुमिच्छया । भुजयुगलं विभज्य एकं शिरःस्थाने न्यस्य द्वितीयं शरीरस्योपरि प्रसार्येत्यर्थः । 'विभुज्य' इति पाठान्तरम् । तत्र क्रोडभागे वक्रीकृत्येर्थः । प्रवालतल्पं पल्लवशयनीयम् अध्यष्ठात् अधिष्ठितवान् । 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।२।४।७७।' इति सिचो लुक् । 'प्राक् सितादड्व्यवायेऽपि ।८।३।६३।' इति षत्वम् । समुद्रादिदृक्षया नियमपूर्वं सुप्तवानित्यर्थः । रक्षाय रक्षानिमित्तं प्लवङ्गानादिशन् नियोजयन् । प्रतिदिशं दिशि दिशि । 'अव्ययीभावे शरत्प्रभृतिभ्यः ।५।४।१०७।' इति टच् । तत्र दिक्शब्दस्य पठितत्वात् ॥ ७५ ॥

इति श्रीजयमङ्गलसूरिविरचितया जयमङ्गलाऽऽख्यया व्याख्याया समलंकृते श्रीभट्टिप्रणीते रामचरिते काव्ये तृतीये प्रसन्नकाण्डे लक्षणरूपे प्रथमः परिच्छेदः, तथा लक्ष्यरूपे कथानके 'सीताभिज्ञानदर्शनं' नाम दशमः सर्गः ।

---

## एकादशः सर्गः ।

माधुर्यमपि काव्यस्य गुण उक्तः । तथा चोक्तम्—'श्राव्यं नातिसमस्तार्थं काव्ये मधुरमिष्यते ।' इति । तत्प्रदर्शनार्थं लङ्कागतप्रभातवर्णनमधिकृत्याह—

अथाऽस्तमासेदुषि मन्दकान्तौ पुण्यक्षयेणेव निधौ कलानाम् ।
समाललम्बे रिपुमित्रकल्पैः पद्मैः प्रहासः कुमुदैर्विषादः ॥ १ ॥[1]

अथेत्यादि—अथानन्तरं कलानां निधौ चन्द्रमसि अस्तं पर्वतमासेदुषि गतवति । यथा कस्मिंश्चित् पुण्यक्षयेणावसानमासेदुषि । 'भाषायां सदवसश्रुवः ।३।२।१०८।' इति लिटः क्वसुरादेशः । मन्दकान्तावित्यस्तगमने पूर्वलिङ्गं दर्शयति । रिपुकल्पैः पद्मैः प्रहासः विकाशः, मित्रकल्पैः कुमुदैर्विषादः संकोचः समाललम्बे समालम्बितः ॥ १ ॥

---

१ अत्र सर्गे 'उपजातिः' छन्दः ।

दूरं समारुह्य दिवः पतन्तं भृगोरिवेन्दुं विहितोपकारम् ।
बद्धाऽनुरागोऽनु पपात तूर्णं तारागणः सम्भृतशुभ्रकीर्तिः ॥ २ ॥

दूरमित्यादि—दूरं दिव आकाशस्य भागं समारुह्य पश्चात्तत एवाकाशात् भृगोरिव प्रपातादिव पतन्तमिन्दुं तारापतिमनु पश्चात् तारागणः विहितोपकारं तदुदयेन तारागणाप्यायनात् बद्धानुरागः अस्तगमनकाले अनुगतरक्तभावः संभृता विपुलीकृता शुभ्रा निर्मला कीर्तिर्येन स तारागणः पपात । यथा कस्मिंश्चित्स्वामिनि भृगोः पतति पश्चात्स्वामिभक्त्या भृत्यलोको बद्धानुरागः संभृतशुभ्रकीर्तिः पतति तद्वदिति ॥ २ ॥

क्व ते कटाक्षाः क्व विलासवन्ति प्रोक्तानि वा तानि ममेति मत्वा ।
लङ्काऽङ्गनानामवबोधकाले तुलामनारुह्य गतोऽस्तमिन्दुः ॥ ३ ॥

क्व त इत्यादि—ये कटाक्षाः सविलासास्तिर्यग्दृष्टयः यानि च प्रोक्तानि जल्पितानि विलासवन्ति, तदुभयं क्व मम विद्यते । लङ्काङ्गनानां तु मुखेन्दवः सकटाक्षाः सविलासाः सजल्पिताश्च । अतो यावन्न विबुद्ध्यन्ते तावदपक्रमणं युक्तमिति मत्वा निरूप्य तुलामनारुह्य समानतामलब्ध्वा निःसंशयो वा भूत्वा । तत्प्रबोधकाले । लङ्काङ्गनानामेव । गतोऽस्तमिन्दुः ॥ ३ ॥

मानेन तल्पेष्वयथामुखीना मिथ्याप्रसुप्तैर्गमितत्रियामाः ।
स्त्रीभिर्निशाऽतिक्रमविह्वलाभिर्दृष्टेऽपि दोषे पतयोऽनुनीताः ॥ ४ ॥

मानेनेत्यादि—पतयस्तल्पेषु शयनीयेषु शय्यास्विति यावत् । मानेनायथामुखीनाः परावृत्तमुखाः । 'यथामुखसंमुखस्य दर्शनः खः ।५।२।६।' इति खः । परावृत्तत्वात् प्रतिबिम्बाश्रयवत्तेषु योषितां प्रतिबिम्बमिव मनो न प्रसादीभवतीत्येवं मिथ्याप्रसुप्तैरलीकनिद्राभिः गमितत्रियामाः प्रेरितप्रथमादिप्रहराः । दृष्टेऽपि दोषे गोत्रस्खलितादौ । पतयः स्त्रीभिरनुनीता यतो निशातिक्रमात्पर्यवसानात् विक्लवा विह्वलास्ताः ॥ ४ ॥

ईर्ष्याविरुग्णाः स्थिरबद्धमूला निरस्तनिःशेषशुभप्रतानाः ।
आप्यायिता नेत्रजलप्रसेकैः प्रेमद्रुमाः संरुरुहुः प्रियाणाम् ॥ ५ ॥

ईर्ष्याविरुग्णा इत्यादि—प्रियाणां प्रेमद्रुमाः प्रेमाणि द्रुमा इव । स्थिरं निश्चलं बद्धमूलम् उत्पत्तिकारणं येषां ते ईर्ष्याविरुग्णा अत एव निरस्ताः निःशेषाः शुभा एव हसितजल्पितादयः प्रताना शाखा येषां ते । प्रसादनानन्तरं नेत्रजलप्रसेकैराप्यायिताः संरुरुहुः, पुनर्नवीभूताः स्थिरबद्धमूलत्वात् ॥ ५ ॥

ततः समाशङ्कितविप्रयोगः पुनर्नवीभूतरसोऽवितृष्णः ।
स्मरस्य सन्तं पुनरुक्तभावं नाऽऽवर्तमानस्य विवेद लोकः ॥ ६ ॥

तत इत्यादि—प्रेमद्रुमरोहणानन्तरं लोकः समाशङ्कितविप्रयोगो विप्रयोगोऽस्माकमासन्नवर्तीति पुनर्नवीभूतरसः अभिनवीभूतसुरतेच्छः स्मरस्य कामस्य आवर्तमानस्य पुनः पुनः प्रवर्तनात् । अवितृष्णः साभिलाषः सन्तमपि विद्यमानमपि पुनरुक्तभावं पौनःपुन्यं न विवेद न बुबोध । आशङ्कितविप्रयोगत्वादपूर्वमिव ज्ञातवानित्यर्थः ॥ ६ ॥

वृत्तौ प्रकाशं हृदये कृतायां सुखेन सर्वेन्द्रियसम्भवेन ।
संकोचमेवाऽसहमानमस्थादशक्तवद्वञ्चितमानि चक्षुः ॥ ७ ॥

वृत्तावित्यादि—सुरतकाले श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानाम् इन्द्रियाणां शब्दस्पर्शरूपरसगन्धग्रहणात् सर्वेन्द्रियसंभवं सुखम् । अथवा सर्वमिन्द्रियं यत्रेति सर्वेन्द्रियः कायः । तत्संभवं सुखं सर्वेन्द्रियसंभवम् सुखं तथाह्यालिङ्गनचुम्बनदर्शनच्छेदनेषु, पुरुषोत्सृष्टेषु तत्र प्रयुज्यमाने काये सुखमुत्पद्यते । तेन सुखेन हृदये चेतसि प्रकाशं स्पष्टं वृत्तौ कृतायां चक्षुर्वञ्चितमिवात्मानं मन्यमानम् । आत्ममाने खश्च ।३।२।८३।' इति णिनिः । संकोचमेव निमीलनमेवास्थात् अनुष्ठितवत् । असहमानमिति सर्वेन्द्रियसंभवस्य सुखस्य हृदये वृत्तिं सोढुमपारयदित्यर्थः । अशक्तवत् यथा कश्चिदसमर्थोऽन्यसम्भवां संपदं सोढुमसहमानः संकोचमनुतिष्ठति ॥ ७ ॥

पीने भटस्योरसि वीक्ष्य भुग्नास्तनुत्वचः पाणिरुहान्सुमध्या ।
इच्छाविभङ्गाऽऽकुलमानसत्वाद्भर्त्रे नखेभ्यश्च चिरं जुजूरे ॥ ८ ॥

पीन इत्यादि—काचित् सुमध्या सुमध्यमा नखैः व्यापद्यमाना अहमप्यस्य क्षतं विधास्यामीति भटस्योरसि पीने कठिने भुग्नान् कुञ्चितान् । 'भग्नान्' इति पाठान्तरम् । पाणिरुहान्नखान् वीक्ष्य भर्त्रे नखेभ्यश्च चिरं जुजूरे क्रुध्यति स्म । कथमस्य वक्षः कठिनं मम च नखास्तनुत्वचो न कठिना इति । 'घूरी जूरी हिंसावयोहान्योः' इत्यस्यात्मनेपदिनो रूपम् । 'क्रुधद्रुहेर्ष्याऽसूयाऽर्थानां यं प्रति कोपः ।१।४।३७।' इति सम्प्रदानसंज्ञा । कस्माज्जुजूर इत्याह—इच्छाविभङ्गाकुलमानसत्वात् । चिकीर्षिताकरणेनाकुलचित्तत्वात् ॥ ८ ॥

स्रस्ताऽङ्गचेष्टो विनिमीलिताऽक्षः स्वेदाऽम्बुरोमोद्गमगम्यजीवः।
अशेषनष्टप्रतिभापटुत्वो गाढोपगूढो दयितैर्जनोऽभूत् ॥ ९ ॥

स्रस्ताङ्गचेष्ट इत्यादि—दयितैर्गाढोपगूढः आलिङ्गितः सन् स्त्रीजनः अशेषनष्टप्रतिभापटुत्वोऽभूत् । अशेषं नष्टं प्रतिभाया बुद्धेः पटुत्वं यस्येति एवं च कृत्वा स्रस्ताङ्गचेष्टोऽपगतकायव्यापारः विनिमीलिताक्षः सुखानुभवान्निमीलितलोचनः । मृतस्तर्हीत्याह—स्वेदाम्बुरोमोद्गमगम्यजीवः स्वेदाम्बुरोमोद्गमाभ्यां लिङ्गाभ्यां गम्यमानसंज्ञः ॥ ९ ॥

तमः प्रसुप्तं मरणं सुखं नु मूर्छा नु माया नु मनोभवस्य।
किं तत्कथं वेत्युपलब्धसञ्ज्ञा विकल्पयन्तोऽपि न सम्प्रतीयुः॥१०॥

तम इत्यादि—कामुका अपि परेतावस्थाया उत्तरकालमुपलब्धसंज्ञा विकल्पयन्ति । तमो नु किमन्धकारं, प्रसुप्तं न किं प्रकर्षेण सुप्तम्, मरणं नु मरणावस्था नु, सुखं नु, मूर्च्छा नु, मनोभवस्य वा मायेति किं तद्भवति । कथं वा केन प्रकारेण तत्स्यात् । इत्येवं विकल्पयन्तोऽपि न संप्रतीयुः । न परमार्थं ज्ञातवन्त इत्यर्थः ॥ १० ॥

वक्षः स्तनाभ्यां मुखमाननेन गात्राणि गात्रैर्घटयन्नमन्दम् ।
स्मराऽऽतुरो नैव तुतोष लोकः पर्याप्तता प्रेम्णि कुतो विरुद्धा ॥११॥

वक्ष इत्यादि—वक्षोमुखगात्राणि स्वानि स्तनादिभिः स्त्रीसम्बन्धिभिर्घटयन् संश्लेषयन् अमन्दं दृढम् । 'ङमो ह्रस्वादचि ङमुण्नित्यम् ।८।३।३२।' इति नुडागमः । स्मरातुरो लोको नैव तुतोष तुष्टिं न जगाम। यतः पर्याप्तता प्रेम्णि कुतो विरुद्धा । नैव तस्या विरुद्धत्वात् ॥ ११ ॥

स्रस्ताऽङ्गयष्टिः परिरभ्यमाणा संदृश्यमानाऽप्युपसंहृताऽक्षी ।
अनूढमाना शयने नवोढा परोपकारैकरसैव तस्थौ ॥ १२ ॥

स्रस्ताङ्गयष्टिरित्यादि—काचिन्नवोढा परिरभ्यमाणा पत्या आलिङ्ग्यमाना स्रस्ताङ्गयष्टिः न प्रतीपमालिङ्गति । संदृश्यमानापि मुखमुन्नमय्य उपसंहृताक्षी निमीलितलोचना न प्रतीपं पश्यति मानं नैवाचरतीति। अनूढमानापि असंहृतमानापि एवंविधापि सती परोपकारैकरसैव तस्थौ । भर्तुरुपकारैकाभिप्रायैव अवस्थिता नात्मोपकाराय ॥ १२ ॥

आलिङ्गितायाः सहसा त्रपावांस्त्रासाऽभिलाषाऽनुगतो रताऽऽदौ ।
विश्वासिताया रमणेन वध्वा विमर्दरम्यो मदनो बभूव ॥ १३ ॥

आलिङ्गिताया इत्यादि—कस्याश्चिद्वध्वा रतात्प्राक् रमणेन सहसा तत्क्षणं आलिङ्गितायास्त्रपावान्मदनो बभूव । रतादौ रतारम्भे त्रासाभिलाषाभ्यामनुगतो बभूव । विश्वासितायाः शनैर्विश्वासं कारितायाः विमर्दरम्यो बभूव, त्रासाभावात् ॥ १३ ॥

सामोन्मुखेनाऽऽच्छुरिता प्रियेण दत्तेऽथ काचित्पुलकेन भेदे ।
अन्तःप्रकोपाऽपगमाद्विलोला वशीकृता केवलविक्रमेण ॥ १४ ॥

सामोन्मुखेनेत्यादि—अथ काचित्कोपान्मानवती प्रियेण सामोन्मुखेन सामपरेण प्रसादयता आच्छुरिताख्येन नखकर्मणा संस्पृष्टा सती पुलकेन रोमाञ्चेन भेदे उद्गमे दत्ते सति अथ अन्तःप्रकोपस्यापगमात् विलोला विलोलबुद्धिः केवलविक्रमेण हठाद्ग्रहणेनैव वशीकृतोपभुक्तेत्यर्थः ॥ १४ ॥

गुरुर्दधाना परुषत्वमन्या कान्ताऽपि कान्तेन्दुकराऽभिमृष्टा ।
प्रह्लादिता चन्द्रशिलेव तूर्णं क्षोभात्स्रवत्स्वेदजला बभूव ॥ १५ ॥

गुरुरित्यादि—अन्यापि काचित् स्त्री कान्ता कमनीयरूपा[1] गुरुः धीरा । 'वोतो गुणवचनात् ।४।१।४४।' इति वा ङीष् न भवति । दधाना परुषत्वं नैष्ठुर्यम् । कान्तेन भर्त्रा इन्दुनेव कराभिमृष्टा सती प्रह्लादिता सुखिता । क्षोभात् चेतसो विकारात् तूर्णं स्रवत्स्वेदजला बभूव । चन्द्रशिलेव चन्द्रमणिरिव । सा गरीयसी कान्ता परुषत्वं काठिन्यं दधाना इन्दुना कराभिमृष्टा प्रह्लादिता सुखितेव क्षोभात्स्वप्रकृतिविकारात् स्रवज्जला भवति ॥ १५ ॥

शशाङ्कनाथाऽपगमेन धूम्रां मूर्च्छापरीतामिव निर्विवेकाम् ।
ततः सखीवं प्रथिताऽनुरागा प्राबोधयद्द्यां मधुराऽरुणश्रीः ॥१६॥

शशाङ्केत्यादि—ततोऽनन्तरं यथा काचित् स्त्री नाथस्य भर्तुरपगमेन वियोगेन धूम्रा मलिना मूर्च्छापरीता निश्चेतना अत एव निर्विवेका विवेकुमशक्ता सती सख्या प्रकाशितस्नेहया प्रबोध्यते तद्वद् द्यामाकाशं शशाङ्क-

---

१ अत्रोपमा ।

नाथस्यापगमनेन अस्तमनेन धूम्रां धूसरतां गतां निर्विवेकाम् अविद्यमानविशेषाम् अरुणश्रीः आदित्यलक्ष्मीरिति मधुराभिनवा प्रथितानुरागा प्राबोधयत्प्रकाशितवती ॥ १६ ॥

अवीततृष्णोऽथ परस्परेण क्षणादिवाऽऽयातनिशाऽवसानः ।
दुःखेन लोकः परवानिवाऽगात् समुत्सुकः स्वप्ननिकेतनेभ्यः॥ १७॥

अवीतेत्यादि----अथानन्तरं लोकः परस्परेणान्योन्येन दयितो दयितया दयितापि दयितेन अवीततृष्णः अनपगतसंभोगाभिलाषः अत एव क्षणादिव द्रुतमिवायातं निशावसानं यस्य । समुत्सुकः उत्कण्ठितः परवानिव पराधीन इव स्वप्ननिकेतनेभ्यः वासगृहेभ्यो दुःखेन अगात् निर्गतवान् ॥ १७ ॥

अर्धोत्थिताऽऽलिङ्गितसन्निमग्नो रुद्धः पुनर्यान् गमनेऽनभीप्सुः ।
व्याजेन निर्याय पुनर्निवृत्तस्त्यक्ताऽन्यकार्यः स्थित एव कश्चित् १८

अर्धोत्थितेत्यादि---शयनात् अर्धमुत्थितं यस्येत्यर्धोत्थितः । आहिताग्न्यादिषु द्रष्टव्यः । शयनस्य वा अर्धादुत्थित इति योज्यम् । स चालिङ्गितो दयितया सन्निमग्नः शयने सुप्तः । पुनर्यान्निर्गच्छन् रुद्धो विधृतः । गमने अनभीप्सुरपि निर्याय व्याजेन निमित्तेन पुनर्निवृत्तः प्रविष्टस्त्यक्तान्यकार्यः स्थित एव कश्चित्कामी ॥ १८ ॥

तालेन सम्पादितसाम्यशोभं शुभाऽवधानं स्वरबद्धरागम् ।
पदैर्गताऽर्थं नृपमन्दिरेषु प्रातर्जगुर्मङ्गलवत्तरुण्यः ॥ १९ ॥

तालेनेत्यादि---नृपमन्दिरेषु रावणादिराजवेश्मसु प्रभातकाले तरुण्यो मङ्गलवत् मङ्गलोपेतं जगुः गायन्ति स्म । तालेन क्रियाकालमानेन संपादिता साम्यशोभा यत्र गायनक्रियायाम्, शुभावधानं शोभनमवधानं चित्तैकाग्रता यत्र, स्वरबद्धरागं षड्जादिभिः स्वरैर्बद्धो ग्रामरागो यत्र, पदैः सुप्तिङन्तैर्गतार्थं परिच्छिन्नार्थं निरर्थकपदरहितमित्यर्थः । अनेन स्वरगतं पदगतं लयगतमवधानगतमिति चतुर्विधं गीतमाख्यातम् ॥ १९ ॥

दुरुत्तरे पङ्क इवान्धकारे मग्नं जगत्सन्ततरश्मिरज्जुः ।
प्रनष्टमूर्तिप्रविभागमुद्यन् प्रत्युज्जहारेव ततो विवस्वान् ॥ २० ॥

दुरुत्तर इत्यादि---अन्धकारे पङ्क इव दुरुत्तरे दुःखेनोत्तीर्यत इति मग्नं

१ अत्रोपमा । २ अनेन साम्यवचनेनान्धकारस्य निबिडत्वं व्यज्यते ।

प्रविष्टं जगत् । यतः प्रनष्टमूर्तिप्रविभागं प्रनष्टः स्थावरजङ्गममूर्तीनां प्रविभागो यस्मिन् तत् । विवस्वानुद्यन् उद्गच्छन् सन्ततरश्मिरज्जुः प्रविततवा रश्मयो मयूखा एव रज्जवो येन सः प्रत्युज्जहारेव उद्धृतवानिव । तत इत्यन्धकारात् ॥ २० ॥

पीतौष्ठरागाणि हृताऽञ्जनानि भास्वन्ति लोलैरलकैर्मुखानि ।
प्रातः कृताऽर्थानि यथा विरेजुस्तथा न पूर्वेद्युरलंकृतानि ॥ २१ ॥

पीतौष्ठरागाणीत्यादि—मुखानि वधूनामित्यर्थात् । यथा प्रातः प्रभाते विरेजुः तथा पूर्वेद्युः पूर्वस्मिन्नहनि अलंकृतानि न रेजुः । तेषामकृतार्थत्वात् । तानि पुनः कृतार्थानि कृतकार्याणि । यतो दयितैः पीतौष्ठरागाणि ओष्ठचुम्बनात् हृताञ्जनानि चक्षुषोरपि चुम्बनात् अपगतकज्जलानि लोलैराकुलैरलकैः कचग्रहाकर्पणात् । भास्वन्ति दीप्तिमन्ति ॥ २१ ॥

प्रजागराऽऽताम्रविलोचनाऽन्ता निरञ्जनाऽलक्तकपत्रलेखाः ।
तुल्या इवासन् परिखेदतन्व्यो वासच्युताः सेवितमन्मथाभिः॥२२॥

प्रजागरेत्यादि—भर्तृभिः सहैकत्र यच्छयनं स वासः तस्माच्च्युता काश्चित् तन्व्यः सेवितमन्मथाभिः अनुष्ठितसुरताभिः तुल्या इवासन् । यतः प्रजागराताम्रविलोचनान्ताः दयितागमनप्रतीक्षणात् यः प्रजागरस्तेन ताम्रनेत्रपर्यन्ताः । नायात इति गृहीतप्रसाधनतया निरञ्जनालक्तकपत्रलेखाः । यदि वा अन्यत्र शयित इति रोदनात् निरञ्जनाः चित्तोन्माथादितस्ततः पादविक्षेपात् विगतालक्तकाः शयने प्रतिक्षणमुद्वर्तनपरिवर्तनात्कपोलादिभ्यो निष्पत्रलेखा इति खेदाच्च तन्व्यः कृशाङ्ग्यः ॥ २२ ॥

आबद्धनेत्राऽञ्जनपङ्कलेशस्ताम्बूलरागं बहुलं दधानः ।
चकार कान्तोऽप्यधरोऽङ्गनानां सहोषितानां पतिभिर्लघुत्वम्॥२३॥

आबद्धेत्यादि—कासांचिदङ्गनानां पतिभिः सहोषितानामप्यधरः लघुत्वं दौर्भाग्यं चकार सूचितवानित्यर्थः । यतस्ता ईप्सितसुरताप्राप्त्या रुदितास्ततश्च बद्धो लग्नो नेत्राञ्जनपङ्कलेशो यस्य सोऽधरो दयितैरपीतत्वाच्च बहुलं ताम्बूलरागं दधानः कान्तोऽपि लघुत्वं चकार ॥ २३ ॥

चक्षूंषि कान्तान्यपि साऽञ्जनानि ताम्बूलरक्तं च सरागमोष्ठम् ।
कुर्वन्सवासं च सुगन्धि वक्त्रं चक्रे जनैः केवलपक्षपातम् ॥ २४ ॥

चक्षूंषीत्यादि—कान्तान्यपि शोभनान्यपि चक्षूंषि, विकचोत्पलद्युतित्वात् । साञ्जनानि कुर्वन् स्त्रीजनः, प्रातर्गृह्यमाणप्रसाधनत्वात् । सरागं चौष्ठं, स्वभावतो बिम्बफलाकारत्वात् । ताम्बूलरक्तं कुर्वन् । स्वभावतश्च सुगन्धि वक्त्रं मुखं सवासं वासयुक्तं कुर्वन् । केवलपक्षपातं समत्वं चक्रे, अञ्जनादीनां निरर्थकत्वात् ॥ २४ ॥

क्षतैरसंचेतितदन्तलब्धैः सम्भोगकालेऽवगतैः प्रभाते ।
अशङ्कताऽन्योन्यकृतं व्यलीकं वियोगबाह्योऽपि जनोऽतिरागात् ॥२५॥

क्षतैरित्यादि—अस्या मया दत्तम् अस्य च मयेति संभोगकाले रागान्धतया असंचेतितान्यज्ञातानि दन्तेभ्यो लब्धानि यानि क्षतानि । 'चित संचेतने' इति स्वार्थिकण्यन्तस्य रूपम् । प्रभातकाले अवगतैर्दृष्टैः वियोगबाह्योऽपि सुप्तोऽपि कामिजनः अतिरागात् अतिस्नेहात् अन्योन्यकृतम् अन्योन्येन कृतं व्यलीकम् अपराधम् अशङ्कत विकल्पितवान् । लङि रूपम् । किमस्यान्यया हताशया दत्तमिति योषिदशङ्कत, पुरुषोऽपि किमन्येन धूर्तेनास्या इति ॥ २५ ॥

नेत्रेषुभिः संयुतपक्ष्मपत्रैः कर्णाऽन्तकृष्टैरुरुकेशशूलाः ।
स्तनोरुचक्रास्ततकर्णपाशाः स्त्रीयोधमुख्या जयिनो विचेरुः ॥२६॥

नेत्रेषुभिरित्यादि—नेत्राणि इषव इव तैः संयुतानि संयुक्तानि पक्ष्माण्येव पत्राणि येषां तैः । कर्णान्तकृष्टैः कर्णान्तविश्रान्तैः उपलक्षिताः स्त्रियो योधमुख्या इव उरुकेशशूलाः उरवो महान्तः केशाः शूला इव येषाम् । स्तनोरुचक्राः स्तना ऊरूणि चक्राणीव येषाम् । ततकर्णपाशाः ततः कर्णाः पाशाः इव येषां ते जयिनो लब्धविजया विचेरुः भ्रान्ताः ॥ २६ ॥

पयोधरांश्चन्दनपङ्कदिग्धान् वासांसि चाऽमृष्टमृजानि दृष्ट्वा ।
स्त्रीणां सपत्न्यो जहृषुः प्रभाते मन्दायमानाऽनुशयैर्मनोभिः ॥२७॥

पयोधरानित्यादि—चन्दनपङ्कदिग्धान् आप्लुतचन्दनत्वात् । वस्त्राणि च अमृष्टमृजानि अनपनीतशुद्धभावानि स्त्रीणां दृष्ट्वा प्रभाते तत्सपत्न्यो मनोभिः न बाह्यं जहृषुः हृष्टाः, अप्राप्तसुरतत्वात्।मन्दायमानानुशयैः आभिः सह शयिता इति तासु ये अनुशयाः अक्षान्तयो जाताः ते मन्दायमानाः शनैः शनैस्तनूभवन्तो येषु मनःसु तैरित्यर्थः ॥ २७ ॥

स्मराऽऽतुरे चेतसि लब्धजन्मा रराज लोलोऽपि गुणाऽपहार्यः ।
कुतूहलान्नेत्रगवाक्षसंस्थः पश्यन्निवाऽन्योन्यमुखानि रागः ॥ २८ ॥

स्मरातुर इत्यादि—दम्पत्योः प्रातरन्योन्यस्य मुखं पश्यतोः चक्षुषो रागो वर्ण्यते । स्मरातुरे कामातुरे चेतसि लब्धजन्मा लब्धोदयः रागो रक्तभावः नेत्रगवाक्षसंस्थः नेत्रयोर्गवाक्षयोरिव स्थितः कुतूहलात् कौतुकात् अन्योन्यस्य मुखानि पश्यन्निव । कीदृशं कामिन्या मुखं कामुकस्य मुखं वेति गुणापहार्यः तत्प्रतिपक्षेण शुक्लगुणेन अपनेयः अत एव लोलोऽपि अचिरस्थाय्यपि रराज ॥ २८ ॥

गतेऽतिभूमिं प्रणये प्रयुक्तानबुद्धिपूर्वं परिलुप्तसंज्ञः ।
आत्माऽनुभूतानपि नोपचारान्स्मरातुरः संस्मरति स्म लोकः॥२९॥

गत इत्यादि—प्रणये विश्रम्भे अतिभूमिं गते प्रकृष्टावस्थां प्राप्ते सति ये अबुद्धिपूर्वम् अनिरूप्य स्वयं प्रयुक्ताः उपचाराः नखदन्तक्षतादयः तानात्मानुभूतानपि प्रातर्न स्मरति स्म कामिलोकः । इदमिदं मया प्रयुक्तमिति यतः सुरतावस्थायां स्मरातुरतया परिलुप्तसंज्ञो मूढ इति ॥ २९ ॥

वस्त्रैरनत्युल्बणरम्यवर्णैर्विलेपनैः सौरभलक्षणीयैः ।
आस्यैश्च लोकः परितोषकान्तैरसूचयल्लब्धपदं रहस्यम् ॥ ३० ॥

वस्त्रैरित्यादि—वस्त्रैः विलेपनैः सौरभलक्षणीयैः सुरभितया परिच्छेद्यैः आस्यैश्च व्यपगताधररागैः परितोषकान्तैर्लिङ्गभूतैः रहसि भवं सुरतं लब्धपदं प्राप्तचिह्नं लोकः प्रकाशयति स्म ॥ ३० ॥

प्रातस्तरां चन्दनलिप्तगात्राः प्रच्छाद्य हस्तैरधरान् वदन्तः ।
शाम्यन्निमेषाः सुतरां युवानः प्रकाशयन्ति स्म निगूहनीयम्॥३१॥

प्रातस्तरामित्यादि—गुरुजनो नखदशनक्षतं मा द्राक्षीदिति युवानः प्रातस्तरां प्रत्युषसि चन्दनलिप्तगात्रा हस्तैरधरान् प्रच्छाद्य वदन्तोऽपि शाम्यन्निमेषा अनिमिषितनेत्रा निगूहनीयं सुतरां प्रकाशयन्ति स्म नूनमेते सत्कृतयेन एवमाचरन्तीति ॥ ३१ ॥

साम्नैव लोके विजितेऽपि वामे ! किमुद्यतं भ्रूधनुरप्रसह्यम् ।
हन्तुं क्षमो वा वद लोचनेषुर्दिग्धो विषेणेव किमञ्जनेन ॥ ३२ ॥

साम्नेत्यादि—हे वामे प्रतिकूलवर्तिनि मधुरेणाविकृतेन साम्ना लोके अस्मद्विधे जितेऽपि वशीकृतेऽपि भ्रूधनुरप्रसह्यं प्रसोढुमशक्यम् उद्यतम्

चरितेक्षमम् । अथवा विलोचनेषुर्नेत्रशरः स्वत एव हन्तुं क्षमः ततः किमनेन च विषेण दिग्धो विषलिप्त इति वद कथय ॥ ३२ ॥

दन्तच्छदे प्रज्वलिताऽग्निकल्पे ताम्बूलरागस्तृणभारतुल्यः ।
न्यस्तः किमित्यूचुरुपेतभावा गोष्ठीषु नारीस्तरुणीर्युवानः ॥ ३३ ॥

दन्तच्छद इत्यादि---प्रज्वलिताग्निकल्पे स्वभावलोहितत्वात् दन्तच्छदे ओष्ठे ताम्बूलरागः किमिति न्यस्तः । तृणभारतुल्यः निष्प्रयोजनत्वात् । इत्येवमूचुर्युवानः प्रातरित्यर्थात् । उपेतभावाः जातानुरागाः गोष्ठीषु स्थिता नारीस्तरुणीरिति ॥ ३३ ॥

सुखाऽवगाहानि युतानि लक्ष्म्या शुचीनि संतापहराण्युरूणि ।
प्रबुद्धनारीमुखपङ्कजानि प्रातः सरांसीव गृहाणि रेजुः ॥ ३४ ॥

सुखावगाहानीत्यादि---प्रातः प्रभाते गृहाणि सरांसीव रेजुः । सुखावगाहानि निरुपद्रवत्वात् सुखेनावगाह्यन्ते । युतानि लक्ष्म्या देवतारूपया । शुचीनि पवित्राणि सन्तापहराणि घर्मादिक्लेशापहारीणि । उरूणि महान्ति प्रबुद्धानि विनिद्राणि नारीमुखान्येव पङ्कजानि यत्रेति ॥ ३४ ॥

संमृष्टसिक्तार्चितचारुपुष्पैरामोदवद्द्रव्यसुगन्धभागैः ।
लक्ष्मीर्विजिग्ये भवनैः सभृङ्गैः सेव्यस्य देवैरपि नन्दनस्य ॥ ३५ ॥

सम्मृष्टेत्यादि---देवैः सेव्यस्यापि नन्दनस्य लक्ष्मीभवनैः प्रातर्विजिग्ये विजिता । आदौ संमृष्टरजांसि अपनीतरजांसि पश्चात्सिक्तानि । पूर्वापरकालसमासः । अर्चितानि पूजितानि प्रशस्तानि चारूणि शोभनानि पुष्पाणि येषु भवनेषु संमृष्टसिक्तानि च तानि अर्चितचारुपुष्पाणि चेति विशेषणसमासः । आमोदवन्ति यानि द्रव्याणि चन्दनादीनि तैः सुगन्धो भाग एकदेशो येषां तैः । गन्धस्येत्वे तदेकान्तग्रहणादित्वं न भवति । सभृङ्गैरामोदभृतत्वात् ॥ ३५ ॥

अक्ष्णोः पतन्नीलसरोजलोभाद्भृङ्गः करेणाऽल्पधिया निरस्तः ।
ददंश ताम्राऽम्बुरुहाऽभिसन्धिस्तृष्णाऽऽतुरःपाणितलेऽपि धृष्णुः॥ ३६॥

अक्ष्णोरित्यादि---नीलसरोजलोभात् नीलकमलमेतादित्यक्ष्णोः पतन्निलीयमानो भृङ्गः अल्पधिया अल्पबुद्ध्या कयाचित् करेण निरस्तः क्षिप्तः सन् ताम्राम्बुरुहाभिसंन्धिः रक्तपद्ममेतदित्यभिसन्धिरभिप्रायो यस्य भृङ्गस्य स धृष्णुः प्रगल्भः पाणितलेऽपि ददंश दष्टवान् तृष्णातुरः । तामित्यर्थात् ॥ ३६ ॥

---

१अत्रोपमारूपकयोः सङ्करः ।

विलोलतां चक्षुषि हस्तवेपथुं भ्रुवोर्विभङ्गं स्तनयुग्मवल्गितम् ।
विभूषणानां क्वणितं च षट्पदो गुरुर्यथा नृत्यविधौ समादधे॥३७॥

विलोलतामित्यादि—यथा गुरुर्नृत्याचार्यो नृत्यकर्मणि कस्याश्चिच्चक्षुषि विलोलतां चलतां हस्तवेपथुं हस्तकम्पं भ्रुवोर्विभङ्गं नतोन्नतिं स्तनयुग्मवल्गितं प्रचलितं भूषणानां क्वणितं शिञ्जितं जनयति, तद् दृष्ट्वा षट्पदोऽपि तत्समादधे विहितवान् ॥ ३७ ॥

अथाऽनुकूलान्कुलधर्मसम्पदो विधाय वेशान्सुदिवः पुरीजनः ।
प्रबोधकाले शतमन्युविद्विषः प्रचक्रमे राजनिकेतनं प्रति ॥ ३८ ॥

अथेत्यादि—अथानन्तरं पुरीजनो लङ्कानिवासिजनः प्रतिदिनमवाप्तकल्याणत्वात् सुदिवः । 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः । ५ । ४ । १२० ।' इति समासान्तनिपातनम् । यथास्वं कुलधर्मस्य पुरस्य या संपद्विभूतिः तस्या अनुकूलान् वेशान्नेपथ्यानि विधाय कृत्वा शतमन्युविद्विषो रावणस्य प्रबोधकाले राजनिकेतनं प्रत्यभिलक्ष्य प्रचक्रमे गन्तुं प्रवृत्तः । 'प्रोपाभ्यां समर्थाभ्याम् । १ । ३ । ४२ ।' इति तङ् ॥ ३८ ॥

शैलेन्द्रशृङ्गेभ्य इवं प्रवृत्ता वेगाज्जलौघाः पुरमन्दिरेभ्यः ।
आपूर्य रथ्याः सरितो जनौघा राजाऽङ्गनाऽम्भोधिमपूरयन्त ॥३९॥

शैलेन्द्रशृङ्गेभ्य इत्यादि—यथा जलानां पूरा शैलेन्द्रशृङ्गेभ्यः प्रवर्तन्ते तद्वत्पुरमन्दिरेभ्यः प्रवृत्ता जनौघाः रथ्याः क्षुद्राः सरित इवापूर्य राजाङ्गनमम्भोधिमिवापूरयन्त पूरितवन्तः ॥ ३९ ॥

प्रबोधकालात् त्रिदशेन्द्रशत्रोः प्रागूर्ध्वशोषं परिशुष्यमाणाः ।
हीना महान्तश्च समत्वमीयुर्द्वास्स्थैरवज्ञापरुषाऽक्षिदृष्टाः ॥ ४० ॥

प्रबोधकालादित्यादि—त्रिदशेन्द्रशत्रोः रावणस्य प्रबोधकालात्प्राक् पूर्वम् ऊर्ध्वशोषं परिशुष्यमाणाः राजाङ्गने ऊर्ध्वं गता एव प्रबोधकाले शोषं नीयमाना इति अन्तर्भावितण्यर्थो द्रष्टव्यः । एवं च कृत्वा कर्मण्यात्मनेपदम् । अन्ये परिशोष्यमाणा इति णिचं पठन्ति । 'ऊर्ध्वे शुषिपूरोः ।३।४।४४।' इति णमुल् । हीनाः महान्तश्च सेवकाः समत्वं तुल्यत्वमीयुः । द्वास्स्थैर्दौवारिकैः । द्वारि तिष्ठन्तीति 'सुपि स्थः ।३।२।४।' इति कः । 'खर-

वसानयोर्विसर्जनीयः।८।३।१५।' इति विसर्जनीये 'विसर्जनीयस्य सः।८।३।३४।' इति स अवज्ञया अनादरेण परुषमस्निग्धं यदक्षि तेनाक्ष्णा दृष्टाः ॥ ४० ॥

गुरूरुचञ्चत्करकर्णजिह्वैरवज्ञयाऽग्राऽङ्गुलिसंगृहीतैः ।
रक्षांस्यनायासहृतैरुपास्थुः कपोललीनाऽलिकुलैर्गजेन्द्रैः ॥ ४१ ॥

गुरूरुचञ्चदित्यादि--गुरवोऽलघवः उरवो महान्तः, चञ्चन्तश्चलन्तः कराः कर्णा जिह्वाश्च येषां गजेन्द्राणां तैः अवज्ञया अग्राङ्गुलिसंगृहीतैः पादाङ्गुष्ठाग्रेण यत्र स्थाने परिगृहीतैः।अङ्गुलेरग्रमिति राजदन्तादित्वात् पूर्वनिपातः। अनायासहृतैः शनैः शनैः प्रचोदितैः। मत्तत्वात् कपोललीनाऽलिकुलैः। रक्षांसि उपास्थुः सेवामकार्षुः ॥ ४१ ॥

निकृत्तमत्तद्विपकुम्भमांसैः सम्पृक्तमुक्तैर्हरयोऽग्रपादैः ।
आनिन्यिरे श्रेणिकृतास्तथाऽन्यैः परस्परं वालधिसन्निबद्धाः ॥४२॥

निकृत्तेत्यादि—अन्यैः सेवार्थं हरयः सिंहाः आनिन्यिरे आनीताः। निकृत्तानि मत्तद्विपकुम्भमांसानि यैरग्रपादैः अतएव संपृक्तमुक्तैः लग्नकुम्भमुक्ताफलैः उपलक्षिताः । श्रेणिकृता अश्रेणयः श्रेणयः कृताः 'श्रेण्यादयः कृतादिभिः ।२।१।५९।' इति समासः । 'श्रेण्यादिषु च्व्यर्थवचनं कर्त्तव्यम् ।' इति च्व्यर्थवचनम् ।' परस्परं वालधिसंनिबद्धाः अन्योन्यस्य पुच्छेन संयताः ॥ ४२ ॥

उपेक्षिता देवगणैस्त्रसद्भिर्निशाचरैर्वीतभयैर्निकृत्ताः ।
तस्मिन्नदृश्यन्त सुरद्रुमाणां सजालपुष्पस्तबकाः प्रकीर्णाः ॥ ४३ ॥

उपेक्षिता इत्यादि—सुरद्रुमाणां पारिजातानां सजालाः कलिकासहिताः पुष्पस्तबकाः वीतभयैर्निशाचरैर्निकृत्ताः छिन्नाः। 'वीतदयैः' इति पाठान्तरम् । तत्र किमेतैः स्थितैरिति निर्दयैः सजाला एव छिन्नाः छिद्यमानाश्च । देवगणैस्त्रसद्भिरुपेक्षिताः 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ।३।१।७०। इति विकल्पेन श्यन् । तस्मिन् राजाङ्गने प्रकीर्णा अदृश्यन्त सेवकजनेन ॥ ४३ ॥

निराकरिष्णुर्द्विजकुञ्जराणां तृणीकृताऽशेषगुणोऽतिमोहात् ।
पापाऽशयानभ्युदयाऽर्थमार्चीत् प्राग्ब्रह्मरक्षःप्रवरान् दशाऽऽस्यः॥४४॥

---

१ एवं च 'श्रौ च ७ । ४ । २४' इति पूर्वस्य दीर्घत्वानुपपादनं युक्तमेव, अन्यथा छन्दोभङ्गापत्तेः ।

निराकरिष्णुरित्यादि—दशास्यो विबुद्धः सन् अतिमोहादत्यन्ताज्ञानात् निराकरिष्णुर्निराकरणशीलः । द्विजवरानित्यर्थात् । द्विजकुञ्जराणां प्रशस्तद्विजानामभ्युदयहेतूनां संबन्धिनोऽशेषाः गुणाः तृणीकृता येन स तृणीकृताशेषगुणः प्राक् पूर्वं सभाप्रवेशात् पापाशयान् पापचित्तवृत्तीन् ब्रह्मरक्षःप्रवरान् अभ्युदयार्थमार्चीत् ॥ ४४ ॥

मायाविभिस्त्रासकरैर्जनानामाप्तैरुपादानपरैरुपेतः ।
सतां विघातैकरसैराविक्षत्सदः परिक्षोभितभूमिभागम् ॥ ४५ ॥

मायाविभिरित्यादि—आप्तैरव्यभिचारिभिर्मायाविभिर्वञ्चकैः परेषां त्रासकरैः । जनानामतिरौद्रत्वात् । उपादानपरैः सतां सन्मार्गस्थितानां विघातैकरसैर्विनाशैकस्वभावैः उपेतो दशास्यः सदः सभामविक्षत् प्रविष्टः । 'शल इगुपधादनिटः क्सः ।३।१।४५।' इति क्सः । कीदृशम् । राक्षसैश्चरणभारेण परिक्षोभितभूमिभागम् ॥ ४५ ॥

विधृतनिशितशस्त्रैस्तद्युतं यातुधानै-
रुरुजठरमुखीभिः सङ्कुलं राक्षसीभिः ।
श्वगणिशतविकीर्णं वागुरावन्मृगीभि-
र्वनमिव सभयाभिर्देवबन्दीभिरासीत् ॥ ४६ ॥

विधृतेत्यादि—तत्सदो यातुधानैः विधृतनिशितशस्त्रैः गृहीततीक्ष्णशस्त्रैर्युतं युक्तमासीत् । तथा राक्षसीभिः उरुजठरमुखीभिः संकुलं व्याप्तं यथा वनं वागुरावत् सवागुरं श्वगणिशतविकीर्णम् आखेटकशतच्छन्नं मृगीभिः सभयाभिः श्वगणिभ्यो जातभयाभिः देवबन्दीभिः व्याप्तमासीत् । श्वगणाः विद्यन्ते येषामिति श्वगणिनः । 'अत इनिठनौ ।५।२।११५।' इतीनिः ॥ ४६ ॥[1]

जलद इव तडित्वान् प्राज्यरत्नप्रभाभिः
प्रतिककुभमुदस्यन् निस्वनं धीरमन्द्रम् ।
शिखरमिव सुमेरोरासनं हैममुच्चै-
र्विविधमणिविचित्रं प्रोन्नतं सोऽध्यतिष्ठत् ॥ ४७ ॥

इति भट्टिकाव्ये एकादशः सर्गः ।

---

१ अस्मिन्परस्मिंश्च पद्ये 'मालिनी' वृत्तम् ।

जलद इत्यादि—प्राज्यानां प्रभूतानां रत्नानां मणीनां प्रभाभिः तडित्वानिव जलदः प्रोन्नतात्मा सर्वेषामुपरि स्थितत्वात्। प्रतिककुभं दिशि दिशिधीरमन्द्रं मन्दगम्भीरं निस्वनम् उदस्यन्निक्षिपन् सुमेरोः शिखरमिव हैममासनमुच्चैरुच्चं विविधमणिविचित्रं नानारूपैर्मणिभिर्विचित्रं नानावर्णकमध्यातिष्ठत् समारोहति स्म ॥ ४७ ॥

इति श्रीजयमङ्गलसूरिविरचितया जयमङ्गलाऽऽख्यया व्याख्यया समलंकृते श्रीभट्टिप्रणीते रामचरिते काव्ये तृतीये प्रसन्नकाण्डे लक्षणरूपे द्वितीयः परिच्छेदः, लक्ष्यरूपे कथानके 'प्रभातवर्णनं' नाम एकादशः सर्गः।

---

## द्वादशः सर्गः।

भाविकत्वमलङ्कारः प्रबन्धविषय उक्तः। नैकदेशिकं तस्य चित्रादयोऽर्थाः प्रवृत्तिहेतवः। तथा चोक्तम्—'भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम्। प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः॥चित्रोदात्ताद्भुतार्थत्वं कथायाः स्वभिनीतता। शब्दानाकुलता चेति तस्य हेतुं प्रचक्षते॥' इति। तत्सर्वं मन्त्रनिर्णयप्रबन्धे द्रष्टव्यमिति दर्शयन्नाह—

ततो विनिद्रं कृतदेवतार्चं दृष्ट्यैव चित्तप्रशमं किरन्तम्।
आविष्कृताङ्गप्रतिकर्मरम्यं विभीषणं वाचमुवाच माता ॥ १ ॥

तत इत्यादि—ततः प्रभातकालानन्तरं विभीषणं विनिद्रं प्रबुद्धम्। कृतदेवतार्चं कृतेष्टदेवतापूजनम्। दृष्ट्यैव स्निग्धया कायव्यापारेण चित्तप्रशमं किरन्तं प्रकाशयन्तम्। आविष्कृतं प्रदर्शितं यदङ्गस्य प्रतिकर्म प्रसाधनं तेन रम्यं माता नैकषी नाम वाचं वक्ष्यमाणामुवाच ॥ १ ॥

प्रबाधमानस्य जगन्ति धीमंस्त्वं सोदरस्याऽतिमदोद्धतस्य।
आनन्दनो नाकसदां प्रशान्तिं तूर्णं विषस्यामृतवत्कुरुष्व ॥ २ ॥

प्रबाधमानस्येत्यादि—हे धीमन्! त्वं नाकसदां देवानाम् आनन्दनः प्रमोदयिता सन् सोदरस्य भ्रातुर्दशाननस्य। गर्भावस्थायां समानमुदरं यस्येति योगविभागात्सभावः। अतिमदोद्धतस्य महता सामर्थ्येन दृप्तस्य जगन्ति लोकं प्रबाधमानस्य पीडयतः प्रशान्तिं प्रशमनं तूर्णं कुरुष्व। अमृतवत्। यथा

---

१ उवाचेत्यनेनैव वाचमित्यर्थस्य लब्धौ वाचमिति पुनर्वचनमाधिकमेव।

अमृतं देवानामानन्दनं विषस्य कालकूटनाम्नः सोदरस्य एकस्मिन् समुद्रोदरे स्थितत्वात् जगन्ति प्रबाधमानस्य प्रशान्तिं कृतवदिति ॥ २ ॥

कुर्यास्तथा येन जहाति सीतां विषादनीहारपरीतमूर्तिम् ।
स्थितां क्षितौ शान्तशिखाप्रतानां तारामिव त्रासकरीं जनस्य॥३॥

कुर्या इत्यादि—तथा तत्प्रकारमनुतिष्ठेस्त्वं येन सीतां जहाति । विषादनीहारपरीतमूर्तिं विषादो नीहार इव तेन परिगतदेहाम् । क्षितौ स्थितां निमग्नाम् । शान्तशिखाप्रतानां अनुज्ज्वेलवेणीबन्धाम् । जनस्य त्रासकरीं भयहेतुभूताम् । हेतौ टः । तारामिव । यथा काचित्तारा क्षितौ स्थिता पतिता नीहारपरीतमूर्तिः शान्तशिखाप्रताना ध्वस्तरश्मिजाला लोकत्रासकरी तद्वत्तामिति भावः ॥ ३ ॥

यावन्न सन्त्रासितदेवसङ्घः पिण्डो विषस्येव हरेण भीष्मः ।
सङ्ग्रस्यतेऽसौ पुरुषाऽधिपेन द्रुतं कुलाऽऽनन्द यतस्व तावत् ॥४॥

यावदित्यादि—यथा सन्त्रासितदेवसङ्घः विषस्य कालकूटस्य पिण्डो भीष्मोऽतिरौद्रो हरेण संग्रस्तः पीतः तद्वद्यावदसौ रावणः पुरुषाधिपेन रामेण न संग्रस्यते न विनाश्यते, तावत् हे कुलानन्द ! कुलानि आनन्दयतीति 'कर्मण्यण् ।३।२।१।' इत्यण् । द्रुतं शीघ्रं यतस्व सीतात्याजनायां यत्नं कुरु ॥४ ॥

हता जनस्थानसदो निकायाः कृता जितोत्खातभटद्रुमा पूः ।
सदांसि दग्धानि विधेयमस्मिन् यद्बन्धुना तद्घटयस्व तस्मिन् ॥ ५ ॥

हता इत्यादि—जनस्थानसदो दण्डकारण्यवासिनः निकायाः खरदूषणादीनां संघा हताः । 'संघे चानौत्तराधर्ये । ३ । ३ । ४२ ।' इति चिनोतेः घञ् ककारश्चादेशः । पूश्च लङ्का जितभटा उत्खातद्रुमा कृता । सदांसि[1] गृहाणि दग्धानि । इति सर्वमेतत्त्वया ज्ञातमेव । अनेन प्रकारेण अस्माकमपि विनाशः स्यात् । तदेतस्मिन्वस्तुनि यद्बन्धुना विधेयम् अनुष्ठेयं तद्विधातुं घटयस्व यतस्व । तस्मिन्वस्तुनि ॥ ५ ॥

चिकीर्षिते पूर्वतरं स तस्मिन् क्षेमङ्करेऽर्थे मुहुरीर्यमाणः ।
मात्राऽतिमात्रं शुभयैव बुद्ध्या चिरं सुधीरभ्यधिकं समाधात्॥६॥

---

१ 'आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ।' इत्यमरोक्त्या विशेषवाचित्वेऽपि सामान्यवाचित्वमभिप्रेतम् ।

चिकीर्षित इत्यादि—तस्मिन् सीताप्रत्यर्पणलक्षणेऽर्थे मातुरुपदेशात् पूर्वतरं पूर्वमेव चिकीर्षिते कर्तुमीप्सिते मात्रा शुभयैव बुद्धया कल्याणया अतिमात्रमत्यर्थं मुहुः प्रतिक्षणमीर्यमाणः प्रवर्त्यमानः स विभीषणः सुधीः प्राज्ञः चिरकालमभ्यधिकं समाधात् चिन्तितवान् । इदमतिन्याय्यमिति "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । २ । ४ । ७७ ।' इति सिचो लुक् ॥ ( इयता प्रबन्धेन उदात्तार्थाभिधानादुदात्तार्थत्वमुक्तम् । इत उत्तरं प्रहस्त-रावण-विभीषण-मातामह-कुम्भकर्णादीनां वचनप्रबन्धेषु चित्राद्भुतार्थत्वं द्रष्टव्यम् । स्वविनीतता सुबोधता शब्दानाकुलता चेत्येतदुभयं कथायामेव मन्त्रनिर्णयाख्यायां द्रष्टव्यम् ) ॥ ६ ॥

दौवारिकाऽभ्याहतशक्रदूतं सोपायनोपस्थितलोकपालम् ।
साऽऽशङ्कभीष्माऽऽप्तविशन्निशाटं द्वारं ययौ रावणमन्दिरस्य ॥ ७॥

दौवारिकेत्यादि—स विभीषणः रावणमन्दिरस्य द्वारं ययौ । दौवारिकाः द्वारे नियुक्ताः । 'द्वारादीनां च । ७ । ३ । ४ ।' इत्यैच् । तैरभ्याहताः शक्रदूता यस्मिन् द्वारे । सोपायनाः गृहीतकौशलिकाः उपस्थिता उपढौकिता लोकपाला यत्र । साशङ्काः सभयाः, भीष्मा भयानकाः, आप्ता विश्वासार्हाः, विशन्तो [1]निशाटा निशाचरा यत्रेति तमिति ॥ ७ ॥

अथ त्रिभिर्विशेषकम् ।

दूरात्प्रतीहारनतः स वार्तां पृच्छन्ननावेदितसम्प्रविष्टः ।
सगौरवं दत्तपथो निशाटैरैक्षिष्ट शैलाऽग्रमिवेन्द्रशत्रुम् ॥ ८ ॥

दूरादित्यादि—स विभीषणः दूरादेव प्रतीहारेण नतः स्वामिनीव तत्र गौरवात् । वार्तां पृच्छन् कुशली महाराज इति विभीषणो द्वारि तिष्ठतीति राज्ञे अनावेदित एव संप्रविष्टो निशाटैः सगौरवं च सविनयं दत्तपथो दत्तमार्गः । इन्द्रशत्रुं रावणमैक्षिष्ट दृष्टवान् । शैलाग्रमिव सिंहासनारूढस्य तस्योच्चत्वात् ॥ ८ ॥

कृशानुवर्ष्मण्यधिरूढमुच्चैः सिंहासने संक्षयमेघभीमम् ।
निसर्गतीक्ष्णं नयनस्फुलिङ्गं युगान्तवह्नेरिव धूमराशिम् ॥ ९ ॥

---

[1] निशायामटन्तीति तादृशैः, राक्षसैरित्यर्थः ।

कृशानुवर्ष्मणीत्यादि—सिंहासने उच्चैस्तुङ्गे कृशानुवर्ष्मणि अग्नितुल्ये अधिरूढम् उपविष्टम्। संक्षयमेघवद्भीमम् अतिभयंकरम्। निसर्गतीक्ष्णं स्वभावरौद्रम्। नयनानि स्फुलिङ्गा इव यस्य तमैक्षिष्ट। युगान्तवह्नेरिव धूमराशिम्, अग्नितुल्यसिंहासने उपरि स्थितत्वात्। सोऽपि संक्षयमेघवद्भीमः, स्वभावतः कटुकत्वात्। स्वभावतीक्ष्णः। नयनानि विस्फुलिङ्गा यत्रेति ॥ ९ ॥

प्रीत्याऽपि दत्तेक्षणसन्निपातं भयं भुजङ्गाऽधिपवद्दधानम्।
तमःसमूहाऽऽकृतिमप्यशेषानूर्जा जयन्तं प्रथितप्रकाशान् ॥ १० ॥

प्रीत्येत्यादि—यथा भुजङ्गाधिपः शेषः प्रीत्या स्नेहेन दत्तेक्षणसन्निपातः समर्पितनेत्रनिवहो भयमादधाति तद्वद्भयमादधानम्। तमःसमूहस्येवाकृतिर्यस्य तमपि प्रथितप्रकाशानशेषानर्कादीन् ऊर्जा बलेन जयन्तमैक्षिष्ट। ऊर्जेति 'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।३।२।१७७।' इति क्विप् ॥ १० ॥

तं रत्नदायं जितमृत्युलोका रात्रिञ्चराः कान्तिभृतोऽन्वसर्पन्।
प्रमुक्तमुक्ताफलमम्बुवाहं संजाततृष्णा इव देवमुख्याः ॥ ११ ॥

तमित्यादि—यथा देवमुख्याः अमरत्वाज्जितमृत्युलोकाः कान्तिभृतो दीप्तिधराः संजाततृष्णाः सन्तः प्रमुक्तमुक्ताफलमम्बुवाहमुपसर्पन्ति तद्वत्तं विभीषणं रत्नदायम्, रत्नं दास्यतीति। 'अण् कर्मणि च ।३।३।१२।' इति भविष्यत्काले क्रियायां क्रियार्थायामण् तत्र 'एककर्तृके भिन्नकर्तृके वा' इति विशेषाभावात्। अथवा 'दय दानगत्योः' इत्यस्मात् 'कर्मण्यण् ।३।२।१।' इत्यण्। रत्नं दयते ददातीति कृत्वा। रात्रिंचरा भग्नयमलोका अन्वसर्पन् ॥ ११ ॥

स किङ्करैः कल्पितमिङ्गितज्ञैः संबाधकं पूर्वसमागतानाम्।
सिंहासनोपाश्रितचारुबाहुरध्यास्त पीठं विहितप्रणामः ॥ १२ ॥

स इत्यादि—स विभीषणः विहितप्रणामः कृतप्रणतिः पीठमध्यास्त निषण्णवान्। किङ्करैर्भृत्यैरिङ्गितज्ञैरभिप्रायवेदिभिः कल्पितमुपनीतम्। पूर्वसमागतानां प्रथमप्रविष्टानां संबाधकं संकटकृत् संबाधत इति 'ण्वुल्तृचौ ।३।१।१३३।' इति ण्वुल्। रावणस्य सिंहासने उपाश्रितः स्थितः चारुर्बाहुर्यस्य विभीषणस्येति सः ॥ १२ ॥

---

१ विस्फुलिङ्गा अग्निकणाः।

ततो दशाऽऽस्यः क्षुभिताऽहिकल्पं दीप्राऽङ्गुलीयोपलमूढरत्नम् ।
अनेकचञ्चन्नखकान्तिजिह्वं प्रसार्य पाणिं समितिम्बभाषे ॥ १३ ॥

तत इत्यादि—विभीषणनिवेशनादुत्तरकालं दशास्यः पाणिं क्षुभिताऽहिकल्पं क्रुद्धविस्तृतफणेन सर्पेण तुल्यम् । दीप्रो दीपनशीलोऽङ्गुलीयोपलोऽङ्गुलीयरत्नम् । यतः तत एव ऊढरत्नम् । अनेकाश्चञ्चन्त्यश्चलन्त्यो नखकान्तयो जिह्वा इव यस्य तं प्रसार्य समितिं राक्षससमूहं बभाषे ॥ १३ ॥

शक्तैः सुहृद्भिः परिदृष्टकार्यैराम्नातिभिर्नीतिषु बुद्धिमद्भिः ।
युष्माद्विधैःसार्धमुपायविद्भिःसिध्यन्ति कार्याणि सुमन्त्रितानि॥१४॥

शक्तैरित्यादि—शक्तैः समर्थैः सुहृद्भिर्मित्रैः परिदृष्टकार्यैः मा भूददृष्टकर्मणां कर्मसु विषाद इति । नीतिषु आम्नातिभिः अभ्यस्तनीतिशास्त्रैरित्यर्थः । 'इष्टादिभ्यश्च ।५।२।८८।' इति इनिः । 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' इति कर्मणि सप्तमी । बुद्धिमद्भिः ज्ञानवद्भिः । उपायविद्भिः सामादिकुशलैरित्यर्थः । युष्मद्विधैः सह कार्याणि सुमन्त्रितानि सिध्यन्ति ॥ १४ ॥

उपेक्षिते वालिखराऽऽदिनाशे दग्धे पुरेऽक्षे निहते सभृत्ये ।
सैन्ये द्विषां सागरमुत्तितीर्षावनन्तरं ब्रूत यदत्र युक्तम् ॥ १५ ॥

उपेक्षित इत्यादि—वालिखरादिनाशेषूपेक्षितेषु द्विषां च सैन्ये सागरमुत्तितीर्षावुत्तारितुमेषणशीले । अनन्तरमिदानीं ब्रूत वदत यदत्र युक्तमिति उत्तितीर्षाविति 'इकोऽचि विभक्तौ । ७ । १ । ७३ ।' इति नुम् न भवति । 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ।७।१।७४।' इति पुंवद्भावः ॥ १५ ॥

भुजांसवक्षःस्थलकार्मुकासीन् गदांश्च शूलानि च यातुधानाः ।
परामृशन्तः प्रथिताभिमानाः प्रोचुः प्रहस्तप्रमुखा दशास्यम् ॥ १६ ॥

भुजांसेत्यादि—यदि वयं शत्रून् न व्यापादयामस्तदा किमेतैर्भुजादिभिरूढैरिति प्रथिताभिमानाः प्रकाशिताहंकारा भुजादीन् परामृशन्तः प्रहस्तप्रमुखा यातुधाना दशास्यं प्रोचुर्वक्ष्यमाणम्। 'वच परिभाषणे' लिट् उस् ॥ १६ ॥

अखण्ड्यमानं परिखण्ड्य शक्रं त्वं पण्डितम्मन्यमुदीर्णदण्डः ।
नराभियोगं नृभुजां प्रधान मन्त्रोन्मुखः किं नयसे गुरुत्वम् ॥१७॥

---

१ कुपितभुजगापेक्षया किञ्चिदूनत्वात्सदृशमिति भावः । २ विनाशयामः ।

अखण्ड्यमानमित्यादि—शक्रमखण्ड्यमानं अनभिभवनीयाहंकारम् अतश्च पण्डितंमन्यं पण्डितमात्मानं मन्यमानं नान्यः पण्डितोऽस्तीति तादृशं परिखण्ड्य जित्वा, त्वं नृभुजां प्रधान ! उदीर्णदण्डः अभ्यूर्जितबलः सन् किमर्थं मन्त्रोन्मुखो मन्त्रप्रवणः नराभियोगं गुरुत्वं नयसे प्रापयसि । सुमन्त्रितानि कार्याणि सिध्यन्तीति । अत्र कर्तुर्गुणाभियोगेन क्रियाफलेन योगादात्मनेपदम् ॥ १७ ॥

निर्यत्स्फुलिङ्गाऽऽकुलधूमराशिं किं ब्रूहि भूमौ पिनषाम भानुम् ।
आदन्तनिष्पीडितपीतमिन्दुं ष्ठीवाम शुष्केक्षुलताऽस्थिकल्पम् १८

निर्यदित्यादि—ब्रूहि समादिश आस्तां तावन्नराभियोगः । किं भानुं क्षितौ पिनषाम चूर्णयाम । प्रश्ने लोट् । 'रुधादिभ्यः श्नम् ।३।१।७८।' इति श्नम् । निर्यता निर्गच्छता स्फुलिङ्गेनाकुलो धूमराशिर्यस्य तं भानुम् । आ इति विकल्पे वर्तते । दन्तनिष्पीडितपीतमिन्दुं वा पूर्वं दन्तैर्निष्पीडितं पश्चात्पीतं ष्ठीवाम निरस्याम । 'र्वोरुपधाया दीर्घ इकः ।८।२।७६।' इति दीर्घः । शुष्केक्षुयष्टेरस्थीव तत्सदृशम् ॥ १८ ॥

सराघवैः किं बत वानरैस्तैर्यैः प्रातराशोऽपि न कस्यचिन्नः ।
सस्थाणुकैलासधराभिधत्स्व किं द्यौरधोऽस्तु क्षितिरन्तरिक्षे ॥१९॥

सराघवैरित्यादि—सस्थाणुर्यः कैलासः तस्य धर इति समासः । धारयतीति धरः । पचादित्वात् कर्तर्यच् । हे सस्थाणुकैलासधर ! नोऽस्माकं मध्ये कस्यचिदेकस्य यैः सराघवैः प्रातराशोऽपि प्रातर्भोजनमपि न भवति तैः सराघवैर्वानरैः किं प्रयोजनम् । बतशब्दोऽनुशोचने । अतोऽभिधत्स्व आदिश । किं द्यौराकाशमधोऽस्तु भवतु, क्षितिर्वा अन्तरिक्षे उपरिष्टाद्भवत्विति ॥ १९ ॥

चापल्ययुक्तस्य हरेः कृशानुः समेधितो बालधिभाक्त्वदीयैः ।
शस्त्रेण वध्यस्य गलन्नधाक्षीद्राजन् ! प्रमादेन निजेन लङ्काम् ॥२०॥

चापल्येत्यादि—चपलस्य भावश्चापल्यम् । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च ।५।१।१२४।' इति ब्राह्मणादित्वाद्भावे ष्यञ् । युवादिष्वपि दृश्यते । तत्र चापलमिति रूपम् । तेन युक्तस्य हरेर्मर्कटस्य हे राजन् ! शस्त्रेण वध्यस्य सतः यो बालधिः पुच्छं तद्भाक् समाश्रितः कृशानुस्त्वदीयैः भृत्यैः समेधितो वर्धितः तैलघृतादिभिर्गृहात् गृहं गच्छतो गलन् पुच्छात्पतन् लङ्का-

मधाक्षीत् दग्धवान् । 'एकाचो बशो भष् झषन्तस्य स्ध्वोः ।८।२।३७।' इति षत्वम् । हलन्तलक्षणा वृद्धिः । 'हो ढः ।८।२।३१।' । 'षढोः कः सि।८।२।४१।' इति कः निजेन आत्मीयेन प्रमादेन ज्वालादर्शितलक्षणेन तदानीं तस्य शत्रुव्यापादनमेव युक्तमिति ॥ २० ॥

अथाञ्चितोरस्कमुदीर्णदृष्टिः कृत्वा विवक्षाप्रवणं शरीरम् ।
विवृत्तपाणिर्विहितोत्तरार्थं विभीषणोऽभाषत यातुधानान् ॥ २१ ॥

अथेत्यादि—प्रहस्तादिवचनानन्तरम् अञ्चितोरस्कं विन्यस्तहारत्वात् । पूजितोरस्कम् ।'उरःप्रभृतिभ्यःकप् ।५।४।१५१।'इति कप्'अञ्चेःपूजायाम्।७।२।५३।'इतीट् ।'नाञ्चेः पूजायाम्।६।४।३०।' इत्यनुनासिकलोपप्रतिषेधः । तादृशं शरीरं विवक्षाप्रवणं वक्तुमिच्छाभिमुखं कृत्वा शरीरस्य सौष्ठवम् उत्पाद्येत्यर्थः । उदीर्णदृष्टिस्तदभिमुखदृष्टिः । विवृत्तपाणिस्तदभिमुखीकृतदक्षिणपाणिः विभीषणो यातुधानानभाषत । विहितोत्तरार्थं विहितः प्रतिषिद्धः परैरुदितस्य वचनस्यार्थो यत्र भाषण इति ॥ २१ ॥

युद्धाय राज्ञा सुभृतैर्भवद्भिः सम्भावनायाः सदृशं यदुक्तम् ।
तत्प्राणपण्यैर्वचनीयमेव, प्रज्ञा तु मन्त्रेऽधिकृता न शौर्यम् ॥ २२ ॥

युद्धायेत्यादि—युद्धार्थं राज्ञा भवन्तः सुभृताः संवर्धिताः तैः सुभृतैर्यदुक्तं 'भानुं पिनषाम' इत्यादि कीदृशम् । संभावनायाः सदृशम् । तत्प्राणपण्यैर्वचनीयमेव । मन्त्रे तु प्रज्ञाधिकृता न शौर्यम् ॥ २२ ॥

'नराभियोगं किं नयसे गुरुत्वम्' इत्यत्रोत्तरमाह—

यच्चापि यत्नाऽऽदृतमन्त्रवृत्तिर्गुरुत्वमायाति नराभियोगः ।
वशीकृतेन्द्रस्य कृतोत्तरोऽस्मिन् विध्वंसिताशेषपुरो हनूमान् ॥२३॥

यच्चेत्यादि—वशीकृतेन्द्रस्य निर्जितशक्रस्य रावणस्य नराभियोगो यत्नादृतमन्त्रवृत्तिर्यत्नेनादृता मन्त्रवृत्तिर्यस्य सः तादृशो गुरुत्वमायातीति यच्चाप्युक्तम् अस्मिन् वस्तुनि हनूमान् कृतोत्तरो दत्तोत्तरः । यतः प्रध्वंसिताशेषपुरः । पुरं लङ्का । पूःशब्दो वा कृतसमासान्तः । यत्र कपिनाप्यभृत्येन ईदृशमनुष्ठितं स कथं नराभियोगो मन्त्रोन्मुखो न निरूप्यत इति ॥ २३ ॥

प्रमादेनाग्निः लङ्कामधाक्षीदित्यत्रोत्तरमाह—

अग्निः प्रमादेन ददाह लङ्कां वदत्यस्य दोषे रूपमेवात्र बेद् ।
विमृश्य तदेवधियाऽभिधत्त अक्षोऽस्त्रबन्धोऽपि यदि प्रमादः॥२४॥

अग्निरित्यादि—वध्यस्य वधार्हस्य देहे तदेकदेशेषु पुच्छादिषु प्रमादेन स्वयं युष्माभिरग्निरेधितो दीपितः लङ्कां दादाह चेत्, तथास्तु । ब्रह्माबन्धोऽपि यदि प्रमादः तदेवधिया देवबुद्धया देवानां सात्त्विकत्वान्निर्मला बुद्धिः तया विमृश्य निरूप्याभिधत्त ब्रूत । सोऽपि प्रमाद इति यतोऽसावमोघोऽपि विश्लेषितः । अभिधत्तेति । 'दधस्तथोश्च ।८।२।३८।' इत्यभ्यासदकारस्य भष्,धातोश्च खरि चर्त्वम् ॥ २४ ॥

पराभियोगः सर्वथा निरूप्यत इति दर्शयन्नाह—

जगन्त्यमेयाऽद्भुतभावभाञ्जि जिताऽभिमानाश्च जना विचित्राः ।
कार्ये तु यत्नं कुरुत प्रकृष्टं मा नीतिगर्भान्सुधियोऽवमन्ध्वम् ॥ २५॥

जगन्तीत्यादि—असंख्यविचित्रभावभाञ्जि जगन्ति तत्रत्या अपि जनाः विचित्राः शक्तिदेशकालवशात् जिताभिमानाश्च । अन्यैरुत्कृष्टैर्जीयतेऽभिमानस्तेषाम् । तेनात्मन्यभिमानो न कर्तव्य इति दर्शयति । कार्ये तु प्रकृष्टमुत्तमं यत्नं कुरुत । येन तत्कार्यं सिध्यति । तत्र च ये युक्तिमभिदधति तान्नीतिगर्भान् नीतिरेव षाड्गुण्यादिज्ञानं गर्भे येषाम् । अत एव सुधियो मावमन्ध्वं मा परिभूत । तदयुक्तानुष्ठानात् । 'हनः सिच् । १ । २।१४ ।' इति कित्त्वविधानसामर्थ्यात् अनुनासिकलोपाभावः । 'धि च । ८ । २ । २५ ।' इति सिचो लोपः ॥ २५ ॥

यथा च विजिगीषुणा वर्तितव्यं तथोपदिशन्नाह—

वृद्धिक्षयस्थानगतामजस्रं वृत्तिं जिगीषुः प्रसमीक्षमाणः ।
घटेत सन्ध्याऽऽदिषु यो गुणेषु लक्ष्मीर्न तं मुञ्चति चञ्चलाऽपि ॥२६॥

वृद्धीत्यादि---आत्मद्रव्यप्रकृतिसंपन्नो नयस्याधिष्ठानं विजिगीषुः तस्य च वृद्धिक्षयस्थानमिति त्रीणि फलानि । गुणाश्च सन्धिविग्रहयानासनसंश्रयद्वैधीभावाः षट । तत्र यस्मिन् गुणे स्थितः पश्येदिहस्थः पश्यामीति । दुर्गसेतुवणिक्कृषिशून्यनिवेशनद्रव्यहस्तिवनकर्माण्यात्मनः प्रवर्तयितुं परस्य चैतानि हन्तुं गुणमातिष्ठेत् सा वृद्धिः । यस्मिन् गुणे स्थितः स्वकर्मणामुपघातं पश्येत् नेतरस्य तास्मिन्न तिष्ठेत् स क्षयः । स्वकर्मणां वृद्धिगुणेनाभिपश्येदेतत् स्थानमित्यनेन मार्गेण यो विजिगीषुः वृद्धिक्षयस्थानगतामात्मनः परस्य च वृत्तिमजस्रं शश्वत् प्रसमीक्षमाणो निरूपयन् सन्ध्यादिषु षड्गुणेषु घटेत यतेत । तं विजिगीषुं लक्ष्मीः राज्यश्रीः चञ्चलापि न मुञ्चति । गुणशृङ्खलाबद्धत्वात् ॥ २६ ॥

अस्ति स कालो यत्र विजिगीषुणा परवृद्धिरुपेक्षणीयेति दर्शयन्नाह—

उपेक्षणीयैव परस्य वृद्धिः प्रनष्टनीतेरजितेन्द्रियस्य ।
मदाऽऽदियुक्तस्य विरागहेतुः समूलघातं विनिहन्ति याऽन्ते ॥२७॥

उपेत्यादि—परः शत्रुः प्रनष्टनीतित्वादजितेन्द्रियः न[1] मदादिषड्वर्गं त्यजति, किंतु तेनैव युज्यते । तस्यैवंविधस्य या वृद्धिः सा सर्वस्यैव लोकस्य विरागहेतुः वैमुख्यकारणमुपेक्षणीयैव न तदभावाय । तेनेदृशी या अन्ते अवसाने समूलघातं सर्वं सर्वेण विनिहन्ति विनाशयति ॥ २७ ॥

तथास्ति स कालो यत्र विजिगीषुणाप्यात्मक्षय उपेक्षणीय इत्याह—

जनाऽनुरागेण युतोऽवसादः फलाऽनुबन्धः सुधियाऽऽत्मनोऽपि ।
उपेक्षणीयोऽभ्युपगम्य सन्धिं कामाऽऽदिषड्वर्गजिताऽधिपेन ॥ २८ ॥

जनेत्यादि—आत्मनोऽप्यवसादः क्षयः जनानुरागेण युतः संबद्धः । अनुरक्तप्रकृतिमण्डलत्वाद्विजिगीषोः फलानुबन्धः फलमनुबध्नाति । सुधिया विदुषा अधिपेन राज्ञा । कामादिषड्वर्गजिता कामक्रोधलोभमोहमदेर्ष्याणां षण्णां वर्गस्तज्जिता उपेक्षणीयः। तत्रापि परैः सन्धिमभ्युपगम्य कृत्वा । अन्यथा क्षीणोऽयमिति परोऽभियुञ्जीत ॥ २८ ॥

यदा च विजिगीषुः संधिविग्रहाभ्यां फलं न पश्येत्तदा स्ववृद्धिप्राप्त्यर्थमासनं कुर्यादित्युपदिशन्नाह—

यदा विगृह्णन्न च सन्दधानो वृद्धिं क्षयं चानुगुणं प्रपश्येत् ।
आसीत राजाऽवसरप्रतीक्षस्तदा प्रयासं वितथं न कुर्यात् ॥ २९ ॥

यदेत्यादि—यदा हि राजा विजिगीषावस्थितः विगृह्णन् विग्रहं कुर्वन् आत्मनोऽनुगुणामनुकूलां वृद्धिं न पश्येत् क्षयं वा परस्यात्मनोऽनुगुणं न पश्येत् । संदधान इति संधिं च कुर्वन्नात्मनोऽनुगुणं न पश्येत् तदा आसीत स्ववृद्ध्यर्थमासनं कुर्यात् न विग्रहं संधिं वा । अवसरः कालस्तं प्रतीक्षत इति अवसरप्रतीक्षः । 'कर्मण्यण् ।३।२।१।' इत्यण् । सन्धेर्विग्रहस्य वा स्वपरवृद्धिक्षयानुकूलं कालं प्रतीक्षमाण इत्यर्थः । न पुनः प्रयासं संधिविग्रहोद्यमं वितथं निष्प्रयोजनं कुर्यात् । यदा तु परं विग्रहीतुमशक्तः तदा श्वावराहकलहं समानमुपदेक्ष्यति ॥ २९ ॥

---

[1] अत्र परिकरः ।

सन्धिं कृतवतोऽपि विजिगीषोः परेण वा वियुज्यमानस्य विधिमुपदिशन्नाह—

सन्धौ स्थितो वा जनयेत्स्ववृद्धिं हन्यात्परं वोपनिषत्प्रयोगैः ।
आश्रावयेदस्य जनं परैर्वा विग्राह्य कुर्यादवहीनसन्धिम् ॥ ३० ॥

सन्धावित्यादि—संधौ स्थितो वर्तमानः जनयेत् स्ववृद्धिम् । यया अत्युच्छ्रितः तामभियुञ्जीत परं वा शत्रुम् उपनिषत्प्रयोगैः विषादिदानैः हन्यात् विनाशयेत् सन्धिना जातविश्वासत्वात् । आश्रावयेदस्य जनं देशादिदानेनाकर्षयेत् । बलवता अभियुज्यमानः परैः विग्राह्य कलहं कारयित्वा अवहीनसन्धिम् आक्रान्तसंधिं कुर्यात् । तस्योपतापितत्वात् ॥ ३० ॥

संधित्सोर्विजिगीषोः शत्रुमण्डलभेदं कुर्वतः सुकरः संधिरित्युपदिशन्नाह—

सन्दर्शितस्नेहगुणः स्वशत्रून्विद्वेषयन्मण्डलमस्य भिन्द्यात् ।
इत्येवमादि प्रविधाय सन्धिर्वृद्धेर्विधेयोऽधिगमाभ्युपायः ॥ ३१ ॥

सन्दर्शितेत्यादि—अस्मच्छत्रवोऽनेन सन्धानं मा कार्षुरिति तान्विद्वेषयन् विमुखानुत्पादयन् । सन्दर्शितस्नेहगुणः प्रकटीकृतानुरागगुणः । अस्य शत्रोर्मण्डलममात्यादिप्रकृतिं भिन्द्यात् । इत्येवमादि प्रविधाय सन्दर्शितेत्येवमादिवाक्यार्थं कृत्वेत्यर्थः । वृद्धेरधिगमाभ्युपायः प्राप्तिहेतुः सन्धिर्विधेयोऽनुष्ठेयः ॥ ३१ ॥

विग्रहोऽपि विशिष्टस्यैव विजिगीषोर्न यस्य कस्यचिदित्युपदिशन्नाह—

मत्वा सहिष्णूनपरोपजप्यान्स्वकानधिष्ठाय जलाऽन्तदुर्गान् ।
द्रुमाऽद्रिदुर्लङ्घ्यजलाप्रधृष्यान्वर्धेत राजा रिपुविग्रहेण ॥ ३२ ॥

मत्वेत्यादि—स्वकानात्मीयाननुजीविनः सहिष्णून् समर्थान् अपरोपजप्यान् परैरभेद्यान् जलान्ते ये दुर्गाः प्रदेशाः तानधिष्ठाय तत्र स्थापयित्वा । 'अधिशीङ्स्थाऽऽसां कर्म्म । १ । ४ । ४६ ।' इति कर्मसंज्ञा । कीदृशान् द्रुमैरद्रिभिर्दुर्लङ्घ्यजलैश्चाप्रधृष्यान् अगम्यान् । वनपर्वतजलभेदात् त्रिविधं दुर्गम् । रिपुणा सह यो विग्रहः तेन हेतुना राजा वर्धेत वृद्ध्युपचितः स्यात् ॥ ३२ ॥

यदा अरिविजिगीषू परस्परं हन्तुं न शक्तौ तदा विजिगीषोरासनमुपदिशन्नाह—

शक्नोति यो न द्विषतो निहन्तुं विहन्यते नाऽप्यबलैर्द्विषद्भिः ।
स श्वावराहं कलहं विदध्यादासीत दुर्गाऽऽदि विवर्धयंश्च ॥ ३३ ॥

शक्नोतीत्यादि—यो विजिगीषुः अबलत्वात् द्विषतः शत्रूनभिहन्तुं विग्रहीतुं न शक्नोति अबलैर्द्विषद्भिर्नापि विहन्यते स विजिगीषुः श्वावराहं कलहं विदध्यात् अनुतिष्ठेत् । श्वा च वराहश्च, श्वावराहं तदीयमिव कलहम् । 'तस्येदम् । ४ । ३ । १२० ।' इत्यण् । यथा चाण्डाला वराहं हन्तुमशक्ताः श्वानं विमुच्य योधयन्ति यद्ययं हतोऽनेन वा अयमिति तयोर्भक्ष्यत्वादुभयथा कार्यसिद्धेः । तद्वद्द्वयोर्विद्विषतोः कलहं विदध्यात् । स्वयं च दुर्गादि विवर्धयन् दुर्गसेतुवणिक्पथशून्यनिवेशनद्रव्यहस्तिवनकर्माण्युपाचिन्वन् आसीत् तिष्ठेत् ॥ ३३ ॥

यदा विजिगीषुर्यानमात्रसाध्यं शत्रुमात्मानं वा शक्तिहीनं पश्येत् तदा यायात् संश्रयेतेति गुणद्वयमुपदिशन्नाह—

प्रयाणमात्रेण परे प्रसाध्ये वर्तेत यानेन कृताऽभिरक्षः ।
अशक्नुवन्कर्तुमरेर्विघातं स्वकर्मरक्षां च परं श्रयेत ॥ ३४ ॥

प्रयाणमात्रेणेत्यादि—प्रयाणमात्रेण प्रसाध्ये परे शत्रौ नापरं विग्रहमपेक्षेत, यानेन वर्तेत, स्ववृत्तौ वर्तेत । कृताभिरक्षः अभियास्यतः कर्मणां द्विविधस्यप्रातिविधानात् । अरेर्विघातं दुर्गादिकर्मोपघातान् स्वकर्मरक्षां स्वेषां दुर्गादिकर्मणां अपरेणोपहन्यमानानां रक्षां कर्तुमशक्नुवन् शक्तिहीनत्वात् परं श्रयेत यमाश्रित्य क्षयस्थानात् ज्ञानवृद्धिमाप्नुयात् । परो द्विविधः अभियोक्ता तद्विशिष्टबलोऽपरोऽन्य इति ॥ ३४ ॥

यदा तु सहायसाध्यं कार्यं पश्येत् तदा संधिविग्रहासनद्वैधीभावं गच्छेदित्युपदिशन्नाह—

एकेन सन्धिः कलहो परेण कार्योऽभितो वा प्रसमीक्ष्य वृद्धिम् ।
एवं प्रयुञ्जीत जिगीषुरेता नीतीर्विजानन्नहितात्मसारम् ॥ ३५ ॥

एकेनेत्यादि—अभित उभयपार्श्वयोः संधिना विग्रहेण वा वृद्धिं प्रसमीक्ष्य पश्चादेकेन शत्रुणा स्वयमभियुक्तेन संधिः अपरेण सहायाभियुक्तेन विग्रहः कार्यः । एवमुक्तेन प्रकारेण अहितस्य शत्रोरात्मनश्च सारं बलाबलं विजिगीषुर्विजानन् एता नीतीः षाड्गुण्यलक्षणाः प्रयुञ्जीत ॥ ३५ ॥

त्वया पुनरेव न प्रयुक्ता इति दर्शयन्नाह—

त्वया तु लोके जनितो विरागः प्रकोपितं मण्डलमिन्द्रमुख्यम् ।
रामे तु राजन् ! विपरीतमेतत् पश्यामि तेनाऽभ्यधिकं विपक्षम् ।

त्वयेत्यादि—त्वया पुनश्चतुर्वर्णोच्छेदकारिणा लोके जनितो विरागः । इन्द्रमुख्यं च शक्रप्रधानं मण्डलं प्रकोपितम् । रामे तु सर्वमेतद्विपरीतम् अनुरागेण जनितं मण्डलं चानुरञ्जितं तेनाभ्यधिकं विपक्षं रामं पश्यामि ॥ ३६॥

न चेदानीं भवतः कार्यं विनष्टम् अपि तु प्रागेवेति दर्शयन्नाह—

एकेन वाली निहतः शरेण सुहृत्तमस्ते रचितश्च राजा ।
यदैव सुग्रीवकपिः परेण तदैव कार्यं भवतो विनष्टम् ॥ ३७ ॥

एकनेत्यादि—तव सुहृत्तमा वाली यदैव परेण रामेण कर्त्रा शरेणैकेन निहतः, सुग्रीवश्च कपिस्त्वच्छत्रू राजा रचितः स्थापितः तदैव विनष्टमिति ॥ ३७ ॥

अथ प्रतापवतो मम कथं कार्यं विनश्यति, प्रतापादेव शत्रवो नश्यन्तीति चेदाह—

प्राकारमात्राऽऽवरणः प्रभावः खराऽदिभिर्यो निहतैस्तवाऽभूत् ।
लङ्काप्रदाहाऽक्षवधद्रुभङ्गैः क्लाम्यत्यसावप्यधुनाऽतिमात्रम् ॥ ३८ ॥

प्राकारेत्यादि—तव त्रैलोक्यप्रमाथी प्रताप आसीत् । पुनः खरादिभिर्निहतैः प्राकारमात्रावरणो जातः । लङ्कायामेव समर्थत्वात् । असावप्यधुना लङ्कादाहेन, अक्षवधेन, द्रुमभङ्गेन अशोकवनिकाभङ्गेन च अतिमात्रमत्यर्थं क्लाम्यति ग्लानिमुपगच्छति ॥ ३८ ॥

अतो रामेण सह युद्धं न घटते तदेव दर्शयन्नाह—

षड्वर्गवश्यः परिमूढबन्धुरुच्छिन्नमित्रो विगुणैरुपेतः ।
मा पादयुद्धं द्विरदेन कार्षीर्नम क्षितीन्द्रं प्रणतोपभोग्यम् ॥ ३९ ॥

षड्वर्गेत्यादि—वशंगतो वश्यः कामादेर्वश्यः । परिमूढबन्धुः मूर्खामात्यादिपरिवारः । उच्छिन्नमित्रः वर्गस्यासंभवात् । अरिगणैरुपेतः । तद्विपरीतो रामः । अतो द्विरदेन पादयुद्धमिव तेन ज्यायसा मा विग्रहं कार्षीः । अपि तु क्षितीन्द्रं रामं नम[१] । प्रणतोपभोग्यम् अनेन हीनसंधिमाह । तथा चोक्तम्—'प्रवृत्तं मन्त्रिणाक्रान्तो राजा बलवताऽबलः । संधिनोपनमेत्तूर्णं दण्डकोशात्मभूमिभिः ॥' इति ॥ ३९ ॥

---

१ प्रणमेत्यर्थः ।

युवयोः संधानकारणमस्त्येवेति दर्शयन्नाह—

रामोऽपि दाराऽऽहरणेन तप्तो वयं हतैर्बन्धुभिरात्मतुल्यैः ।
तप्तस्य तप्तेन यथाऽऽयसो नः संधिः परेणाऽस्तु विमुञ्च सीताम् ॥४०॥

राम इत्यादि—यथा तप्तेनायसा तप्तस्यायसः संधिर्घटते तद्वदस्माकं तप्तानां तप्तेन रामेण सन्धिरस्तु । अतो मुञ्च सीतां सन्धिनिमित्तम् ॥ ४० ॥

यदि च तेन तप्तेनापि सता ज्यायसा न सन्धानं तदा सर्वे वयं न जीवामः तव तेजसो विनाशकत्वादिति दर्शयन्नाह—

संधुक्षितं मण्डलचण्डवातैरमर्षतीक्ष्णं क्षितिपालतेजः ।
सामाऽम्भसा शान्तिमुपैतु राजन्प्रसीद जीवाम सबन्धुभृत्याः ॥४१॥

सन्धुक्षितमित्यादि—क्षितिपालतेजः सीतावियोगजम् । इन्द्रादिमण्डलैश्चण्डवातैरिव संधुक्षितं दीपितम् । अमर्षतीक्ष्णम् असहिष्णुतयाऽसह्यम् । सामाम्भसा साम्ना सन्धिना अम्भसेव शान्तिमुपैतु । हे राजन् ! प्रसीद किं संरम्भेण । अन्यथा तमारण्योऽग्निरिव दुःखामर्षजं तेजो विक्रमयतीति ॥४१॥

समानयोरपि सन्धानमेव युज्यते न विग्रहः किं पुनर्ज्यायसीत्यत्र हेतुं दर्शयन्नाह—

अपक्वकुम्भाविव भङ्गभाजौ राजन्नियातां मरणं समानौ ।
वीर्ये स्थितः किंतु कृताऽनुरागो रामो भवांश्चोत्तमभूरिवैरी ॥ ४२ ॥

अपक्केत्यादि—हे राजन् ! यथा कुम्भावपक्वौ भङ्गभाजौ परस्पराभिहतौ विनश्यतः । तद्वत् समानौ युध्यमानौ मरणमियाताम् । सार्वधातुकयकारत्वादिणो न दीर्घत्वम् । राजन्नियातामिति 'ङमो ह्रस्वादचि ङमुण् नित्यम् ।८।३।३२।' इति नुडागमः । किंतु रामो वीर्ये स्थितः उत्साहशक्तियुक्त इत्यर्थः । विक्रमबलं चोत्साहशक्तिः । कृतानुरागश्च अनुरक्तमण्डलत्वात् । भवान् पुनः उत्तमभूरिवैरी । उत्तमा इन्द्रादयो भूरयः प्रभूता वैरिणः शत्रवो यस्य । अतस्तेन संधानमेव युक्तं न विग्रहः ॥ ४२ ॥

ननु च समज्यायोभ्यां सन्धीयेत हीनेनैव विगृह्णीयात् । मन्त्रप्रभावोत्साहशक्तिभिर्युक्तो ज्यायान् । अपचितो हीनः । तुल्यशक्तिः समः । तत्र ज्ञानबलं मन्त्रशक्तिः । कोशदण्डबलं प्रभुशक्तिः । विक्रमबलम् उत्साहशक्तिः ।

---

१ प्रपद्येतामित्यर्थः : 'इण् गतौ' ।

सत्यामुत्साहशक्तौ शेषयोरभावान्न हीनेन विग्रह एव युज्यत इत्याह—

दण्डेन कोशेन च मन्यसे चेत्प्रकृष्टमात्मानमरेस्तथापि ।
रिक्तस्य पूर्णेन वृथा विनाशः पूर्णस्य भङ्गे बहु हीयते तु ॥ ४३ ॥

दण्डेनेत्यादि—दण्डेन चतुरङ्गेन बलेन, कोशेन हेमरूप्यादिना यदि प्रकृष्टमात्मानमरेः सकाशान्मन्यसे, तथाप्येवमपि न युक्तं यतो रिक्तस्य पूर्णेन भवता विनाशो भङ्गः वृथा निष्फलः । पूर्णस्य पुनर्भवतो भङ्गे बहु हीयत इति हीनेन बलवतोऽपि संधानं युक्तम् । रिक्तस्य भङ्गो माभूत् ॥ ४३ ॥

अन्यद्विजयफलमस्तीति चेदाह—

क्लिष्टाऽऽत्मभृत्यः परिमृग्यसम्पन्मानी यतेताऽपि ससंशयेऽर्थे ।
संदेहमारोहति यः कृताऽर्थो नूनं रतिं तस्य करोति न श्रीः ॥४४॥

क्लिष्टेत्यादि—यो मानी क्लिष्टात्मभृत्यः चिरकालक्लिष्टशरीरः क्लिष्टभृत्यश्च । परिमृग्यसम्पत् प्रार्थनीया विभूतिर्येन । मृगयतेः स्वार्थिकण्यन्तादचो यत् । ससंशयेऽर्थे स्यान्न स्यादिति यतेतापि यत्नं कुर्यात् । यः कृतार्थो भवादृशः त्रैलोक्यविजयित्वात् संदेहमारोहति संदेहे प्रवर्तते, तस्य नूनमवश्यं श्रीर्विभूतिः रतिं स्थितिं न करोति ॥ ४४ ॥

कदा तर्हि विग्रह इत्याह—

शक्यान्यदोषाणि महाफलानि समारभेतोपनयन्समाप्तिम्¹ ।
कर्माणि राजा विहिताऽनुरागो विपर्यये स्याद् वितथः प्रयासः॥४५॥

शक्यानीत्यादि—शक्यानि यानि कर्तुं पार्यन्ते । अदोषाणि शुद्धानि महाफलानि कार्याणि राजा समारभेत विग्रहेणेत्यर्थात् । उपनयन् समाप्तिं नयन् । विहितानुरागोऽनुरक्तकृतिः । विपर्यये उक्तस्य । अशक्यानि दोषाधिकानि स्वल्पफलानि राजा समारभेत समाप्तिं च न नयति स वितथः प्रयासः निष्फलो विग्रहः ॥ ४५ ॥

ममापि रामविग्रहेण सर्वमस्तीति चेदाह—

जेतुं न शक्यो नृपतिः सुनीतिर्दोषः क्षयाऽऽदिः कलहे ध्रुवश्च ।
फलं न किंचिन्न शुभा समाप्तिः कृताऽनुरागं भुवि सन्त्यजारिम् ॥ ४६॥

जेतुमित्यादि—नृपती रामः जेतुं न शक्यः विग्रहेण । उत्साहशक्तियुक्तत्वात् । तेन सह कलहे दोषः क्षयादिः ध्रुवोऽवश्यंभावी । विग्रहे वा सति

---

१ पारिणामे भव्यफलानीति भावः ।

क्षयव्ययप्रवासप्रत्यवाया भवन्तीत्युक्तम् । फलं न किंचित् न शुभा समाप्तिः स्वबन्धुविनाशहेतुत्वात् । अतो योद्धुमरिं ज्यायांसं संत्यज । भुवि कृतानुरागं त्वं पुनरकृतानुराग इति ॥ ४६ ॥

अन्यच्च वालिवध एव तस्यार्थसम्पज्जयायेति दर्शयन्नाह—

त्वन्मित्रनाशो निजमित्रलाभः समेतसैन्यः स च मित्रकृच्छ्रे ।
भोग्यो वशः पश्य शरेण शत्रोः प्रसाधितो वालिवधे न कोऽर्थः ॥४७॥

त्वन्मित्रेत्यादि—वालिवधे सति शरेण रामस्य कोऽर्थो न प्रसाधितः, अपि तु सर्व एव पश्य । तथाहि । त्वन्मित्रनाशः तस्य च मित्रलाभः मित्रं च तल्लाभश्चेति । समेतसैन्यः कृच्छ्रे संकटप्राप्तौ भूतभोग्यः उपजीव्यः । वशोऽनुकूल इति ॥ ४७ ॥

तं विभिद्य साधयिष्यामीति चेदाह—

लोभाद्भयाद्वाऽभिगतः कपीन्द्रो न राघवं येन भवेद्विभेद्यः ।
स्थितः सतां वर्त्मनि लब्धराज्यः प्रतिप्रियं सोऽभ्यगमच्चिकीर्षुः ॥४८॥

लोभादित्यादि—क्रुद्धलुब्धभीतावमानिताश्चत्वारो भृत्याः परस्य भेद्याः । तत्र कपीन्द्रो राघवं लोभाद्भयाद्वा त्रासाद्वा नाभिगतः । येन हेतुनाऽयं विभेद्यः स्यात् । यस्मादसौ सतां मार्गे स्थितः सन् लब्धराज्यो लाभरतः प्रतिप्रियं चिकीर्षुः ॥ ४८ ॥

तदनुजीविनोऽपि भेद्य । इति दर्शयति—

फलाशिनो निर्झरकुञ्जभाजो दिव्याङ्गनानङ्गरसानभिज्ञाः ।
न्यग्जातयो रत्नवरैरलभ्या मुख्याः कपीनामपि नोपजप्याः ॥ ४९ ॥

फलाशिन इत्यादि—कपीनामपि मुख्या नीलकुमुदादयोऽपि नोपजप्याः नोपजपितुं शक्याः । यतः फलाशिनो मिष्टान्ननिरपेक्षाः । निर्झरकुञ्जभाजः न रम्यप्रासादवासिनः । दिव्याङ्गनानङ्गरसानभिज्ञा दिव्याङ्गनासु योऽनङ्गरसः सुरतरसः तदनभिज्ञाः न्यग्जातयः न्यञ्चन्तीति 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च । ३ ।२ । ५९ ।' इत्यानेन किन् ॥४९॥

---

१ पूरित इत्यर्थः ।

युष्मन्मित्रपुत्रोऽङ्गदोऽप्यभेद्य इति दर्शयन्नाह—

**कृताभिषेको युवराजराज्ये सुग्रीवराजेन सुताविशेषम् ।**
**ताराविधेयेन कथं विकारं तारासुतो यास्यति राक्षसाऽर्थम् ॥ ५० ॥**

कृतेत्यादि—सुग्रीवराजेन ताराविधेयेन ताराचित्तानुवर्तिना । तारासुतोऽङ्गदः यौवराज्ये कृताभिषेकः सुताविशेषमिति क्रियाविशेषणम् । सुतनिर्विशेषं ममैवायं सुतो न वालिन इति । तत्कथं राक्षसार्थं विकारं भेदं यास्यति । नैवेत्यर्थः ॥ ५० ॥

अन्यसमाश्रयादपि रामेण विग्रहो न युज्यत इति दर्शयन्नाह—

**पश्यामि रामादधिकं समं वा नान्यं विरोधे यमुपाश्रयेम ।**
**दत्त्वा वरं साऽनुशयः स्वयम्भूरिन्द्राऽऽदयः पूर्वतरं विरुद्धाः ॥ ५१॥**

पश्यामीत्यादि—रामादधिकं ज्यायांसं समानं वा न पश्यामि । यं विरोधे विग्रहनिमित्तमुपाश्रयेम आश्रयं गच्छेम । संप्रश्ने लिङ् । स्वयंभूर्ब्रह्मा तावन्नाश्रयः यतो वरं दत्त्वा सानुशयः विप्रतीसारवान्[1] जातः । किमिदमकार्यमनुष्ठितं मयेति । इन्द्रादयस्तु पूर्वतरं विरुद्धाः ॥ ५१ ॥

एवं दुर्गसमाश्रयोऽपि न युज्यत इति दर्शयन्नाह—

**दुर्गाऽऽश्रितानां बहुनाऽपि राजन् ! कालेन पार्ष्णिग्रहणाऽऽदिहेतुः ।**
**दुर्गोपरोधं न च कुर्वतोऽस्ति शत्रोश्चिरेणाऽपि दशाऽऽस्य ! हानिः ॥५२॥**

दुर्गेत्यादि—दुर्गाश्रितानामस्माकं दुर्गोपरोधं कुर्वतः शत्रोर्बहुनापि कालेन हे राजन् ! पार्ष्णिग्रहणादेः । आदिशब्दादाटविकान्तपालादिप्रकोपस्य हेतुर्नास्ति यद्वशादुपरोधो न भविष्यति । अत्र स्थितानां क्षय एव केवलं न च शत्रोरुपरोधं कुर्वतः चिरेणापि हानिः । युद्धशरीरोपयोगिनां सर्वदा सम्भवात् ॥ ५२ ॥

**शस्त्रं तरूर्वीधरमम्बु पानं वृत्तिः फलैर्नो गजवाजिनार्यः ।**
**राष्ट्रं न पश्चान्न जनोऽभिरक्ष्यः किं दुःस्थमाचक्ष्व भवेत्परेषाम् ॥५३॥**

शस्त्रमित्यादि—तरवश्च उर्वीधराश्चेति 'जातिरप्राणिनाम् ।२।४।६।' इति एकवद्भावः । तच्छस्त्रं न शूलखड्गादि । पानमम्बु न मैरेयादि[2] । फलैर्वृत्तिर्नौदनादिभिः । नो गजवाजिनार्यः शरीरमात्रत्वान्निश्चिन्ताः । राष्ट्रं देशो न पश्चात्,

---

१ पश्चातापवान् इत्यर्थः । २ मैरेयं मद्यविशेषः ।

अत एव तत्स्थो जनो नाभिरक्ष्यः । एवं च सति परेषां किं दुःस्थम् इत्याचक्ष्व कथय । अतो रामेण ज्यायसा सन्धिरेवास्तु न विग्रह इति ॥ ५३ ॥

तदेव दर्शयन्नाह—

सन्धानमेवाऽस्तु परेण तस्मान्नाऽन्योऽभ्युपायोऽस्ति निरूप्यमाणः ।
नूनं विसन्धौ त्वयि सर्वमेतन्नेष्यन्ति नाशं कपयोऽचिरेण ॥ ५४ ॥

सन्धानमित्यादि—तस्मात्परेण शत्रुणा सह सन्धानं संधिरेवास्तु । अन्योऽभ्युपायो निरूप्यमाणो नास्ति। नूनं निश्चितं विसन्धौ तेन समं सन्धिमकृतवति त्वयि सति कपयः सर्वमेतत् दृश्यमानं रक्षोबलादि अचिरेण शीघ्रं नाशं नेष्यन्ति इति भावः ॥ ५४ ॥

विभीषणोक्तं बहु मन्यमानः प्रोन्नम्य देहं परिणामनम्रम् ।
स्खलद्वलिर्वार्धककम्प्रमूर्धा मातामहो रावणमित्युवाच ॥ ५५ ॥

विभीषणोक्तमित्यादि—बहु मन्यमानः श्लाघमानो मातामहो मातुः पिता माल्यवान्नाम । देहं परिणामनम्रं वयसः परिणामान्नमनशीलं प्रोन्नम्योत्क्षिप्य । अत एव स्खलद्वलिः । वार्धकेन वृद्धभावेन । मनोज्ञादित्वात् वुञ् । कम्प्रः कम्पनशीलो मूर्धा यस्य सः । रावणमिति वक्ष्यमाणमुवाच ॥ ५५ ॥

एकः पदातिः पुरुषो धनुष्मान् योऽनेकमायानि वियद्गतानि ।
रक्षःसहस्राणि चतुर्दशाऽऽर्दीत् का तत्र वो मानुषमात्रशङ्का ॥ ५६ ॥

एक इत्यादि—एकः असहायः । पदातिः न हस्त्याद्यारूढः। पुरुषो मनुष्यः। धनुष्मान् धनुर्मात्रायुधः । चतुर्दश रक्षःसहस्राणि अनेकमायानि विविधमायाजालवितानदक्षाणि वियद्गतानि आकाशे स्थितानि । अत एव प्रयातुमशक्यानि । परेषामित्यर्थात् । आर्दीत् हिंसितवान् । का तत्र वः युष्माकं मानुषमात्रशङ्का, नैवेत्यर्थः ॥ ५६ ॥

किंतु दिव्योऽसाविति तदेव दर्शयन्नाह—

ब्रह्मर्षिभिर्नूनमयं सदेवैः संतापितै रात्रिचरक्षयाय ।
नराऽऽकृतिर्वानरसैन्यशाली जगत्यजय्यो विहितोऽभ्युपायः ॥५७॥

---

१ अत्र परिकरः । विशेषणानां साभिप्रायत्वात् ।

ब्रह्मेत्यादि—सदेवैर्ब्रह्मादिभिः संतापितैः रात्रिचरक्षयाय नूनमयं राम उपायो विहितः उत्पादितः। नराकृतिः आकृत्यैव केवलं नरः। वानरसैन्यशाली आढ्यः। अजय्यो जेतुमशक्यः ॥ ५७ ॥

दृष्टश्चैवं प्रकारो देवानां मयेति दर्शयन्नाह—

वज्राऽभिघातैरविरुग्णमूर्तेः फेनैर्जलानामसुरस्य मूर्ध्नः ।
चकार भेदं मृदुभिर्महेन्द्रो यथा तथैतत्किमपीति बोध्यम् ॥५८॥

वज्राभिघातैरित्यादि—वज्राभिघातैरपि अविरुग्णमूर्तेः अचूर्णितशरीरस्य असुरस्य नमुचेः संबन्धिनो मूर्ध्नो जलफेनैर्मृदुभिः भेदं चकार यथा तथैतदपि शमे स्थितानामपि देवानां नराकृति वस्तु किमपीति बोद्धव्यम् ॥ ५८ ॥

अन्यथा कथं फेनपिण्डैर्विनाश इत्याह—

क स्त्रीविषह्याः करजाः क्व वक्षो दैत्यस्य शैलेन्द्रशिलाविशालम् ।
संपश्यतैतद् द्युषदां सुनीतं बिभेद तैस्तन्नरसिंहमूर्तिः ॥ ५९ ॥

केत्यादि—स्त्रीविषह्याः स्त्रीभिः विषोढुं शक्याः करजा नखाः क। दैत्यस्य हिरण्यकशिपोः शैलेन्द्रशिलावत् विशालं वक्षः क च। वक्षःकरजयोरपि दूरमन्तरं[1] तथापि द्युषदां देवानाम् एतत्सुनीतं सुनयं संपश्यत। यत् तैर्नखैर्नरसिंहमूर्तिः तद्वक्षो बिभेद ॥ ५९ ॥

यत्रैवमुपायेन देवैर्निहन्यते तत्र त्वं कथं प्रमादी मुह्यसीत्याह—

प्रमादवांस्त्वं क्षतधर्मवर्त्मा गतो मुनीनामपि शत्रुभावम् ।
कुलस्य शान्तिं बहु मन्यसे चेत्कुरुष्व राजेन्द्र विभीषणोक्तम् ॥ ६०॥

प्रमादवानित्यादि—त्वं यतः प्रमादी अजितेन्द्रियत्वात् । क्षतधर्मवर्त्मा त्यक्ताचारः । अतो मुनीनामपि शमे स्थितानामपि शत्रुत्वं गतः। ईदृशोऽपि कुलस्य शान्तिं बहु[2] मन्यसे चेत् श्लाघसे यदि । हे राजेन्द्र! विभीषणोक्तम् कुरुष्व ॥ ६० ॥

घोषेण तेन प्रतिलब्धसञ्ज्ञो निद्राऽऽविलाऽक्षः श्रुतकार्यसारः ।
स्फुरन्घनः साऽम्बुरिवाऽन्तरिक्षे वाक्यं ततोऽभाषत कुम्भकर्णः ॥६१॥

---

१ उरसो नखस्य च। २ अत्यन्तम्।

घोषेणेत्यादि—प्रहस्तविभीषणमातामहानां वदतां यो घोषः तेन प्रतिलब्धसंज्ञो विबुद्धः कुम्भकर्णो निद्रयाऽऽविले अक्षिणी यस्येति सः । निद्रायाः सामस्त्येनानपगमात् कषायितचक्षुः श्रुतकार्यसारः श्रुतकार्यतत्त्वः । ततः कार्यसारश्रवणानन्तरं वाक्यमभाषत । यथा घनः साम्बुः सजलोऽन्तरिक्षे वियति स्फूर्जति तद्वत् स्फूर्जन्निति ॥ ६१ ॥

कार्यं निश्चित्य सदसि भाषणानि न पञ्चाङ्गमन्त्रं विनेति साङ्गं तं तावदुपदर्शयन्नाह—

क्रियासमारम्भगतोऽभ्युपायो नृद्रव्यसम्पत्सहदेशकाला ।
विपत्प्रतीकारयुतार्थसिद्धिर्मन्त्राङ्गमेतानि वदन्ति पञ्च ॥ ६२ ॥

क्रियेत्यादि—क्रियाणां दुर्गादिकर्मणां यः समारम्भस्तं गतः प्राप्तो योऽभ्युपायः कर्मणामारम्भोपाय इत्यर्थः । इदमेकमङ्गम् । नृद्रव्यसम्पत् पुरुषाणां द्रव्याणां च सम्पदिति द्वितीयम् । द्वयोस्सहवचनं योगवाहित्वज्ञापनार्थम् । सहदेशकालेति । यस्मिन् देशे काले च कार्यसिद्धिस्ताभ्यां सह वर्तत इति तृतीयम् । अत्रापि सहवचनं योगादेव । कर्मणामनुष्ठीयमानानां या विपत्तस्याः प्रतीकारस्तेन युक्तेति चतुर्थम् । अर्थसिद्धिः कार्यसिद्धिरिति पञ्चमम् । एतानि पञ्च मन्त्रस्याङ्गानि वदन्ति नीतिज्ञाः॥६२॥

न निश्चितार्थं समयं न देशं क्रियाभ्युपायाऽऽदिषु योऽतियायात् ।
स प्राप्नुयान्मन्त्रफलं न मानी काले विपन्ने क्षणदाचरेन्द्र ॥ ६३ ॥

नेत्यादि—विनिश्चितार्थोऽवश्यं सिध्यतीति यस्मिन् समये काले देशे च कार्यसिद्धिः तादृशं समयं देशं च यो विजिगीषुर्नातियायात् नातिक्रामेत् । प्रतिषेध्यस्य द्वित्वात् प्रतिषेधद्वयं योज्यम् । समयं च देशमिति पाठान्तरे समुच्चयेनैक एव योज्यः । क्रियाभ्युपायादिषु सत्सु, आदिशब्दात् पुरुषद्रव्यसंपद्विपत्प्रतीकारे च स प्राप्नुयान्मन्त्रफलम् । हे क्षणदाचरेन्द्र ! न पुनर्मानी भवादृशः काले विपन्ने प्राप्नोति । स हि देशकालौ हापयति ॥ ६६ ॥

औष्ण्यं त्यजेन्मध्यगतोऽपि भानुः शैत्यं निशायामथवा हिमांशुः ।
अनर्थमूलं भुवनाऽवमानी मन्ये न मानं पिशिताशिनाथ ॥ ६४ ॥

औष्ण्यमित्यादि—हे पिशिताशिनाथ[1] ! भानुर्मध्यगतोऽपि मध्याह्नेऽपि

1 मांसभक्षकाधीश राक्षसेश्वर, इत्यर्थः ।

औष्ण्यमुष्णतां त्यजेत् । संभावने लिङ । अथवा हिमांशुर्निशायामपि शैत्यं त्यजेत् । भुवनावमानी पुनर्भुवनमवमन्तुं शीलमस्येति । नास्ति मत्सम इति स भवादृशो मानं न त्यजेत् । अनर्थमूलम् अनर्थस्य कारणम् । एवं मन्ये जानामि ॥ ६४ ॥

तथाऽपि वक्तुं प्रसभं यतन्ते यन्मद्विधाः सिद्धिमभीप्सवस्त्वाम् ।
विलोमचेष्टं विहिताऽवहासाः परैर्हि तत्स्नेहमयैस्तमोभिः ॥ ६५ ॥

तथापीत्यादि—तथापि एवमपि सति मद्विधाः सिद्धिं कार्यनिष्पत्तिमभीप्सवः आप्तुमेषणशीलाः । यत्त्वां विलोमचेष्टं प्रतिकूलचेष्टितम् । प्रसभमाहत्य वक्तुं यतन्ते । परैः दूतजनैः शत्रुजनैर्वा विहितावहासा एवंविधा अप्युपदिशन्तीति । हिशब्दः पादपूरणे । तत्स्नेहमयैः स्नेहस्वभावैस्तमोभिरज्ञानैः । स्नेहतमसावृता ब्रुवन्तीत्यर्थः ॥ ६५ ॥

क्रूराः क्रिया ग्राम्यसुखेषु सङ्गः पुण्यस्य यः संक्षयहेतुरुक्तः ।
निषेवितोऽसौ भवताऽतिमात्रं फलत्यवल्गु ध्रुवमेव राजन् ॥ ६६ ॥

क्रूरा इत्यादि—क्रूराः क्रियाः परहिंसादयः, ग्राम्यसुखेषु परदारोपभोगादिषु सङ्गः प्रसक्तिः, यः पुण्यस्यार्जितस्य संक्षयहेतुरुक्तः विद्यावृद्धैः । असौ भवतातिमात्रं सुष्ठु निषेवितः सन् हे राजन्निदानीं फलति फलं ददाति । अवल्गु असारम् । ध्रुवमविनाशम् ॥ ६६ ॥

तस्माद्विलोमचेष्टस्य भवतो हितोपदेशे मम न किंचित् प्रयोजनं, तावत्तु स्यात् त्वदर्थं मत्प्राणत्याग इति दर्शयन्नाह—

दत्तं न किं के विषया न भुक्ताः स्थितोऽस्मि वा कं परिभूय नोच्चैः ।
इत्थं कृतार्थस्य मम ध्रुवं स्यान्मृत्युस्त्वदर्थे यदि किं न लब्धम् ॥ ६७ ॥

दत्तमित्यादि—तव प्रसादादर्थिभ्यः किं न दत्तम्, के विषया न भुक्ताः, सर्व एवानुभूताः । कं वा परिभूय तिरस्कृत्य उच्चैर्महति पदे न स्थितोऽस्मि । इत्थमनेन प्रकारेण कृतार्थस्य लब्धजन्मफलस्य मम यदि त्वदर्थे मृत्युरवश्यं स्यात्, तदा किं न लब्धम् । सर्वमेव जन्मफलं लब्धमित्यर्थः ॥ ६७ ॥

तव पुनरद्यापि विभीषणोक्तं युक्तं, न प्रहस्तमुखोक्तमिति दर्शयन्नाह—

किं दुर्नयैस्त्वय्युदितैर्मृषाऽर्थैर्वीर्येण वक्ताऽस्मि रणे समाधिम् ।
तस्मिन् प्रसुप्ते पुनरित्थमुक्त्वा विभीषणोऽभाषत राक्षसेन्द्रम् ॥ ६८ ॥

किं दुर्नयैरित्यादि—त्वय्यपि स्थिते 'किं धौरधोऽस्तु' इत्यादिना यान्युदितान्ययुक्तानि अलीकार्थानि तैर्दुर्नयैः किम् । न किंचित् फलम्। कस्मादिति चेत् यस्मात्तेषां समाधिं प्रतीकारं संग्रामे रामसम्बन्धिना वीर्येण वक्ताऽस्मि वदिताहम् । रामवीर्यप्रतीकाराद्धीत्यर्थः । इत्थमेवं तस्मिन् कुम्भकर्णे उक्त्वा पुनः भूयः प्रसुप्ते सति विभीषणो राक्षसेन्द्रमभाषत ॥ ६८ ॥

निमित्तशून्यैः स्थगिता रजोभिर्दिशो मरुद्भिर्विकृतैर्विलोलैः ।
स्वभावहीनैर्मृगपक्षिघोषैः क्रन्दन्ति भर्तारमिवाभिपन्नम् ॥ ६९ ॥

निमित्तशून्यैरित्यादि—रजोभिर्निमित्तशून्यैः निर्निमित्तैः दिशः स्थगिताः संछादिताः । 'स्थग संवरणे' मरुद्भिश्च विकृतैः परुषैर्विलोलैरनियतादिग्वार्तिभिः स्थगिताः । मृगपक्षिणां च घोषैः स्वभावहीनैर्भ्रष्टैर्भर्तारमिवाभिपन्नं मृतं शोकात् क्रन्दन्ति ॥ ६९ ॥

उत्पातजं छिद्रमसौ विवस्वान् व्यादाय वक्त्राकृति लोकभीष्मम् ।
अत्तुं जनान्धूसररश्मिराशिः सिंहो यथा कीर्णसटोऽभ्युदेति॥ ७०॥

उत्पातजमित्यादि—असौ विवस्वान् छिद्रम् उत्पातजं वक्त्राकृति लोकभीष्मं लोकस्य भयानकं व्यादाय प्रसार्य । व्याङ्पूर्वस्य ददातेः क्त्वो ल्यपि रूपम् । जनानत्तुं भक्षयितुं धूसररश्मिराशिः सन् अभ्युदेति उद्गच्छति । यथा सिंहः कीर्णसटः विक्षिप्तकेसरकलापः मुखं व्यादायात्तुमुत्तिष्ठति तद्वदिति भावः ॥ ७० ॥

मार्गं गतो गोत्रगुरुर्भृगूणामगस्तिनाध्यासितविन्ध्यशृङ्गम् ।
सन्दृश्यते शक्रपुरोहितोऽह्निक्ष्मां कम्पयन्त्यो निपतन्ति चोल्काः ॥७१॥

मार्गमित्यादि—अगस्तिना यदध्यासितं विन्ध्यशृङ्गं तन्मार्गं भृगूणां गोत्रगुरुः शुक्रो गतः । दक्षिणमार्गचारी शुक्र इत्यर्थः । विन्ध्यगिरिर्हि दाक्षिणादिशि । शक्रपुरोहितोऽपि बृहस्पतिः अह्नि दिवसे संदृश्यते । उल्काश्च क्ष्मां पृथिवीं कम्पयन्त्यः निपतन्ति ॥ ७१ ॥

मांसं हतानामिव राक्षसानामाशंसवः क्रूरगिरोरुवन्तः ।
क्रव्याशिनो दीप्तकृशानुवक्त्रा भ्राम्यन्त्यभीताः परितः पुरं नः ॥७२॥

मांसमित्यादि—राक्षसानां हतानामिव मांसमाशंसवः आशंसनशीलाः 'सनाशंसभिक्ष उः । ३।२।१६८।' मांसभुजः शृगालादयः क्रूरगिरः परुषस्वनाः कृशानुवक्त्राः ज्वलनसदृशवदनाः निर्भयाः परितो भ्रमन्ति ॥ ७२ ॥

पयो घटोध्नीरपि गा दुहन्ति मन्दं विवर्णं विरसं च गोपाः ।
हव्येषु कीटोपजनः सकेशो न दीप्यतेऽग्निः सुसमिन्धनोऽपि ॥७३॥

पय इत्यादि—गोपाः पयः क्षीरं विवर्णं दुर्वर्णं विरसम् अस्वादु मन्दम् अल्पं पयस्विनीरपि दुहन्ति । 'अकथितं च ।१।४।५१।' इति द्विकर्मकता । तथा शोभनेन्धनोऽप्यग्निर्न दीप्यते, हव्येषु हवनीयेषु घृतादिषु सत्सु । 'अचो यत् ।३।१।९७।' उपजननमुपजनः । 'भावे ।३।३।१८ ।' इति घञ् । 'जनिवध्योश्च ।७।३।३५।' इति न वृद्धिः । कीटानामुपजनोऽस्येति कीटोपजनः, सहकेशैः सकेशः दह्यमानकीटकेश इत्यर्थः ॥ ७३ ॥

तस्मात् कुरु त्वं प्रतिकारमस्मिन्स्नेहान् मया रावण भाष्यमाणः ।
वदन्ति दुःखं ह्यनुजीविवृत्ते स्थिताः पदस्थं परिणामपथ्यम्॥ ७४॥

तस्मादित्यादि—यस्मादेवं विनाशसूचकानि निमित्तानि दृश्यन्ते, तस्मात् हे रावण ! स्नेहान्मया त्वं भाष्यमाणःअस्मिन् वस्तुनि प्रतिकारं सीताप्रत्यर्पणेनैव सन्धानं कुरु । 'उपसर्गस्य घञ्यमनुष्ये बहुलम् ।६।३।१२२।'इति बहुलग्रहणान्न दीर्घः । कस्मादेवं भाष्यत इति चेत् यस्मादनुजीविवृत्तेऽवस्थिताः यद्वचनं दुःखं दुःखहेतुस्तदा कटुकत्वात् । परिणामपथ्यम् आयत्यां हितं तत्पदस्थं स्वामिपदे स्थितं वदन्ति ॥ ७४ ॥

विरुग्णसङ्कीर्णविपन्नभिन्नैः प्रक्षुण्णसंहीणाशिताऽस्त्रवृक्णैः ।
यावन्नराशैर्न रिपुः शवाशान् सन्तर्पयत्यानम तावदस्मै ॥ ७५ ॥

विरुग्णेत्यादि—यावद्रिपुः नराशैः नरानश्नन्ति भुञ्जत इति तैः राक्षसैः शवाशान् गृध्रशृगालादीन् । शवं मृतशरीरमश्नन्ति इति 'कर्मण्यण् ।३।२।१।' इत्युभयत्राण् । न संतर्पयति न प्रीणयति तावदस्य रिपोः आनम चरणावित्यर्थात् । कीदृशैः । विरुग्णैर्भिन्नाङ्गैः । 'ओदितश्च ।८।२।४५।' इति

---

१ उत्तरस्मिन् काले ।

निष्ठानत्वम् । संकीर्णैः इतस्ततो विक्षिप्तैः, विपन्नैर्मृतैर्भिन्नैर्विदारितदेहैः, प्रक्षुण्णैः । एभ्यो 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।८।२।४२।' इति नत्वम् । संह्रीणैर्लज्जितैः वयमेवमवस्थां नीता इति । शितेन तीक्ष्णेन असेण वृक्णैः छिन्नैः । 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ।६।१।१६।' इति सम्प्रसारणम् । संयोगादिलोपः । कुत्वं च । ओदित्त्वान्नत्वम् ॥ ७५ ॥

भ्रूभङ्गमाधाय विहाय धैर्यं विभीषणं भीषणरूक्षचक्षुः ।
गिरं जगादोग्रपदामुदग्रः स्वं स्फावयन् शक्ररिपुः प्रभावम् ॥७६॥

भ्रूभङ्गमित्यादि—शक्ररिपुर्दशाननः विभीषणवचनात् क्रुद्धः । भ्रूभङ्ग भ्रूकुटिमाधाय आबद्धय धैर्यं विहाय त्यक्त्वा भीषणरूक्षचक्षुः भयानकपरुष-चक्षुः । उदग्रः उन्नामितदेहः स्वं प्रभावं विक्रमं स्फावयन् वर्धयन् । 'स्फायो वः ।७।३।४१।' इति णौ वत्वम् । विभीषणं जगाद गिरं वाचम् । उग्रपदां सुप्तिङन्तानां स्वरूपतोऽर्थतश्च परुषत्वात् ॥ ७६ ॥

शिला तरिष्यत्युदके न पर्णं ध्वान्तं रवेः स्यन्त्स्यति वह्निरिन्दोः ।
जेता परोऽहं युधि जेष्यमाणस्तुल्यानि मन्यस्व पुलस्त्यनप्तः॥७७॥

शिलेत्यादि—उदके शिला तरिष्यति न पुनः पर्णम् । रवेः सूर्यात् ध्वान्तमन्धकारं स्यन्त्स्यति स्रविष्यति। 'स्यन्दू प्रस्रवणे' इत्यस्मात् 'न वृद्भ्यश्चतुर्भ्यः ।७।२।५९।' इतीट् न भवति । 'खरि च ।८।४।५५।' इति चर्त्वम् । तथा वह्निरिन्दोः स्यन्त्स्यति । अहमप्येष पर उत्कृष्टः जेता युधि सङ्ग्रामे जेष्यमाण इत्येतानि चत्वारि हे पुलस्त्यनप्तः विभीषण ! तुल्यानि मन्यस्व अवगच्छ । 'मन ज्ञाने' लोटि रूपम् । यदि जेताऽप्यहं परेण जीये शिलातरणा-दीन्यपि भविष्यन्ति ॥ ७७ ॥

अनिर्वृतं भूतिषु गूढवैरं सत्कारकालेऽपि कृताऽभ्यसूयम् ।
विभिन्नकर्माऽऽशयवाक् कुले नो मा ज्ञातिचेलं भुवि कस्यचिद् भूत्७८

अनिर्वृतमित्यादि—भूतिषु ज्ञातिसंबन्धिनीषु अनिर्वृतमसुखिनम् । गूढवैरं काले हनिष्यामीति संभृतापकाराशयम् । सत्कारकालेऽपि पूजाकाले-ऽपि कृतामर्षम् । विभिन्नाः कर्माशयवाचो यस्य तद्विभिन्नकर्माशयवाक् ।

१ इदमाधिकम्, जगादेत्यनेनैव गतार्थत्वात् ।

आशयोऽन्यो वाक्कर्मणी चान्ये यस्येति । ईदृशं ज्ञातिचेलं गर्हितज्ञातिरस्माकं कुले मा भूत् कस्यचिदन्यस्य वा मा भूत् । चेलशब्दो गर्हिते वर्तते ॥ ७८ ॥

इच्छन्त्यभीक्ष्णं क्षयमात्मनोऽपि न ज्ञातयस्तुल्यकुलस्य लक्ष्मीम् ।
नमन्ति शत्रून्न च बन्धुवृद्धिं सन्तप्यमानैर्हृदयैः सहन्ते ॥७९॥

इच्छन्तीत्यादि—ज्ञातयः आत्मनः सुष्ठु क्षयं विनाशमिच्छन्ति, न पुनस्तुल्यकुलस्य एकहेतुगोत्रस्य लक्ष्मीं श्रियम् । तथा शत्रुं कामं नमन्ति, न पुनर्बन्धुवृद्धिं बन्धुसन्ततिं सहन्ते । संतप्यमानैर्हृदयैः ईर्ष्यया दह्यमानैः ॥ ७९ ॥

किं मया कृतं येनैवमुच्यत इति चेदाह—

त्वयाऽद्य लङ्काऽभिभवेऽतिहर्षाद्दुष्टोऽतिमात्रं विवृतोऽन्तरात्मा ।
धिक् त्वां मृषा ते मयि दुस्थबुद्धिर्वदन्निदं तस्य ददौ स पार्ष्णिम्॥८०॥

त्वयेत्यादि—लङ्काऽभिभवे लङ्कोपरोधे अतिहर्षात् हर्षेण दुष्टोऽन्तरात्मा अतिमात्रं सुष्ठु त्वयाऽद्य विवृतः प्रकाशितः । मयि दुस्थबुद्धिः अस्मद्विषये दुस्थोऽभियुक्तोऽयमिति बुद्धिः ते मृषा मिथ्या । अतस्त्वां धिगिति वदन् स दशाननः तस्य विभीषणस्य सिंहासनोपाश्रितबाहोः पार्ष्णिं पादप्रहारं शिरसि ददौ ॥ ८० ॥

ततः स कोपं क्षमया निगृह्णन् धैर्येण मन्युं विनयेन गर्वम् ।
मोहं धियोत्साहवशादशक्तिं समं चतुर्भिः सचिवैरुदस्थात् ॥ ८१ ॥

तत इत्यादि—ततः पार्ष्णिप्रहारादनन्तरं स विभीषणः कोपं क्षमया क्षान्त्या निगृह्णन् अभिभवन्, तथा धैर्येण मन्युं शोकं, विनयेन गर्वं, मोहं वैचित्त्यं धिया प्रज्ञया, उत्साहवशादशक्तिमसामर्थ्यं निगृह्णन् अपमानेन कोपादीनां संभवात् । चतुर्भिः सचिवैरमात्यैः समं सार्धमुदस्थात् आसनादुत्थितः ॥ ८१ ॥

उवाच चैनं क्षणदाचरेन्द्रं सुखं महाराज विना मयाऽऽस्स्व ।
मूर्खाऽऽतुरः पथ्यकटून्नन्नन्यत्साऽऽमयोऽसौ भिषजां न दोषः ॥८२॥

उवाचेत्यादि—उत्थितश्चानन्तरं रावणमुवाच—हे महाराज ! मया विना सुखमास्स्व तिष्ठ । आस्तेर्लोट् । तवात्र दोषो न ममोपदेष्टुः । यस्मान्मूर्खातुरः

मूर्खो य आतुरः पथ्यकटूननश्नन् अभक्षयन् यत् आमयेन रोगेण सह वर्त्तेत इति सामयो रोगवान् असौ भिषजां वैद्यानां न दोषः, किंतु तस्यैव ॥ ८२ ॥

करोति वैरं स्फुटमुच्यमानः प्रतुष्यति श्रोत्रसुखैरपथ्यैः ।
विवेकशून्यः प्रभुरात्ममानी, महाननर्थः सुहृदां बताऽयम् ॥ ८३ ॥

करोतीत्यादि—प्रभुर्विवेकशून्यो निर्विवेकः । आत्ममानी मत्समोऽन्यो नास्तीति आत्मानं श्लाघमानः । आत्ममाने इनिः । स्फुटमुच्यमानो वैरं करोति स्नेहं न करोति पथ्यमनेनोक्तमिति । श्रोत्रसुखैः तदर्थमनोहारिभिः अपथ्यैस्तुष्यति । तस्मादयं प्रभुः सुहृदामाश्रितानां महान् अनर्थः । अनर्थहेतुत्वात् । बतशब्दः खेदे ॥ ८३ ॥

क्रीडन्भुजङ्गेन गृहाऽनुपातं कश्चिद्यथा जीवति संशयस्थः ।
संसेवमानो नृपतिं प्रमूढं तथैव यज्जीवति सोऽस्य लाभः ॥ ८४ ॥

क्रीडन्नित्यादि—यथा कश्चित् सर्पग्राही गृहानुपातं गृहं गृहमनुपत्य ।'विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः । ३ । ४ । ५६।' इति णमुल् । भुजङ्गेन सह क्रीडन् जीवति संशयस्थः संदेहे वर्तमानः किमयं खादिष्यति न वेति । तथैव प्रमूढं मूर्खमधिपतिं संसेवमानो यज्जीवति सोऽस्य लाभः । आस्तामन्यो लाभः इति ॥ ८४ ॥

दत्तः स्वदोषैर्भवता प्रहारः पादेन धर्म्ये पथि मे स्थितस्य ।
स चिन्तनीयः सह मन्त्रिमुख्यैः कस्याऽऽवयोर्लाघवमादधातु ॥८५॥

दत्त इत्यादि—स्वदोषैरविवेकित्वादिभिर्भवता पादप्रहारः यो मम धर्म्ये धर्मादनपेते मार्गे स्थितस्य दत्तः, स मन्त्रिमुख्यैरेतैः सह चिन्तनीयः । आवयोर्मध्ये कस्य लाघवमादधातु करोतिवति । यावन्निरूप्यमाणस्तवैवेति भावः ॥ ८५ ॥

इति वचनमसौ रजनिचरपतिं [illegible] कृत्प्रसभमभिदधत् ।
निरगमदभयः पुरुषरिपुपुरान्नरपतिचरणौ नवितुमरिनुतौ ॥८६॥

---

१ कर्तव्याकर्तव्यविवेचनतः पराङ्मुखः । २ यावज्जीवति । ३ तावज्जीवनरूपः ।

इतीत्यादि---इत्येवं वचनं बहुगुणम् अर्थावगाढत्वात् असकृत् बहुत्वात्, प्रसभम् आहृत्य रजनिचरपतिमभिदधत् ब्रुवन् । 'नाभ्यस्ताच्छतुः ।७।१।७८।' इति नुम्प्रतिषेधः । रजनिचर इति 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् ।६।३।६३।' इति संज्ञायां ह्रस्वत्वम् । पुरुषरिपुपुराङ्कातः निरगमत् निष्क्रान्तः । अभयः सन् नरपतिचरणौ रामस्य पादौ अरिभिरपि नुतौ शूरत्वात् 'श्र्युकः किति ।७।२।११।' इतीट्प्रतिषेधः । नवितुं प्रणामपूर्वकं स्तोतुम् । अनेकार्थत्वाद्धातूनां नन्तुमित्यर्थः ॥ ८६ ॥

अथ तमुपगतं विदितसुचरितं पवनसुतागिरा गिरिगुरुहृदयः ।
नृपतिरमदयन्मुदितपरिजनं स्वपुरपतिकरैः सलिलसमुदयैः ॥८७॥

इति महावैय्याकरणभट्टीप्रणीते रामचरिते काव्ये
प्रसन्नकाण्डे भाविकत्वप्रदर्शनस्तृतीयः ।
समाप्तो द्वादशः सर्गः ॥

अथेत्यादि---अथ अनन्तरं विभीषणमुपेतं सेतुबन्धचिन्ताकाले राममुपगतवानिति द्रष्टव्यम् । अन्यथा वक्ष्यमाणप्रभातकथनं विरुध्येत । पवनसुतागिरा हनूमद्वचनेन सच्चरितोऽयमिति विदितं सुचरितं येन । नृपतिः रामः गिरिगुरुहृदयः गिरिवत् गुरु अप्रकम्पं हृदयं यस्य । सलिलसमुदयैः जलपूर्णघटे स्थितैः स्वपुरपतिकरैः । लङ्काधिपतिं कुर्वन्तीति हेतौ टः । अमदयत् हर्षितवान् । 'मदी हर्षे' इत्यस्य हेतुमण्ण्यन्तस्य घटादित्वान्मित्त्वे ह्रस्वत्वम् । मुदितपरिजनं स्वामी लङ्काधिपत्येऽभिषिच्यत इति तस्य हृष्टा अनुजीविन इत्यर्थः ॥ ८७ ॥

इति श्रीजयमङ्गलाऽऽख्यया व्याख्यया समलंकृते श्री भाट्टिप्रणीते रामचरिते काव्ये--तृतीये प्रसन्नकाण्डे लक्षणरूपे तृतीयः परिच्छेदः, लक्ष्यरूपे कथानके 'विभीषणाऽऽगमनो' नाम
द्वादशः सर्गः ।

---

१ अस्मिन् परस्मिंश्च पद्ये 'ननभनलगिति प्रहरणकलिता ।' इति वृत्तरत्नाकरोक्त्या 'प्रहरणकलिता' नाम च्छन्दः ।

## त्रयोदशः सर्गः ।

### अथ संकीर्णकाः श्लोकाः ।

काव्यं संस्कृतप्राकृतापभ्रंशभेदात्त्रिविधम् । तत्र शब्दभवदेशीयपदयोः प्राकृतभाषयोरपभ्रंशस्य च संस्कृतभाषायां समावेशासम्भवात् शब्दसमायाः प्राकृतभाषायाः समावेशः । तमार्यागीत्यां स्कन्धकलक्षणया दर्शयितुं विभीषणागमनात्प्राक् यद्वृत्तं रामस्य तदाह—

अथ सप्तभिः कुलकम् ।

चारुसमीरणरमणे हरिणकलङ्ककिरणाऽऽवलीसविलासा ।
आबद्धराममोहा वेलामूले विभावरी परिहीणा ॥ १ ॥

चार्वित्यादि—रामो रात्रौ निद्रावान् पल्लवशयनमध्यष्ठादित्युक्तम् । तस्य नियमपूर्वं सुप्तवतः प्रभातमभूदिति कथयति । वेलामूले पारसमीपे । प्राकृते पुंलिङ्गनपुंसकयोराकारान्तस्य पदस्य सप्तम्या एकवचने मित्वमेत्वं वा रूपम् । चारुसमीरणरमणे रमयतीति रमणम् । 'नन्दिग्राहिपचादिभ्यो ल्युणिन्यचः । ३ । १ । १३४ ।' इति नन्द्यादित्वात् ल्युः । समीरणेन रमणम् । चारु च तत्समीरणरमणं चेति । तत्र विभावरी रात्रिः परिहीणा क्षीणा । हरिणकलङ्कस्य याः किरणावल्यः ताभिः सविलासा सविभ्रमा । अतश्चाबद्धो रामस्य मोहो मूर्च्छा ययेति । 'कृदिकारादक्तिनः' इत्यनेन आवलिरावलीत्युभयमपि संस्कृतप्राकृतयोः प्रयुज्यते ॥ १ ॥

बद्धो वासरसङ्गे भीमो रामेण लवणसलिलाऽऽवासे ।
सहसा संरम्भरसो दूराऽऽरूढरविमण्डलसमो लोले ॥ २ ॥

बद्ध इत्यादि—नियमस्थितेऽपिमयि नासौ समुद्र उत्थित इति वासरसङ्गे प्रभातकाले रामेण लवणसलिलावासे समुद्रे इति विषयसप्तमी । सहसा तत्क्षणं संरम्भरसःउत्साहरसो वीराख्यः भीमो दुष्प्रेक्ष्यः बद्धो जनितः । दूरारूढरविमण्डलसमो लोक इति दूरमारूढो मध्याह्नस्थो यो रविः तस्य मण्डलं तेन समस्तुल्योऽतितीक्ष्णत्वात् । लोले चञ्चले समुद्रे प्रभातवातेन क्षोभ्यमाणत्वात् ॥ २ ॥

---

१ अत्र 'आर्यापूर्वार्द्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् । इतरत्तद्वन्निखिलं दलं यदीयमुदितैवमार्यागीतिः ॥' इति लक्षणम् । एवं परत्रापि ।

गाढगुरुपुङ्खपीडासधूमसलिलाऽरिसंम्भवमहाबाणे ।
आरूढा सन्देहं रामे समहीधरा मही सफणिसभा ॥ ३ ॥

गाढेत्यादि—गाढं सुष्ठु गुरोः पुङ्खस्य या पीडा पीडनम् अङ्गुष्ठाभ्यां तया हेतुभूतया सधूमसलिलारेः अग्नेः संभवो यत्र स महाबाणो यस्य रामस्य तस्मिन् सति । महासंदेहमारूढा संशयं प्राप्ता समहीधरा मही सफणिसभा सह भुजङ्गसमूहेन । धारयन्तीति धराः । अत्र धकारस्य पदमुखे वर्तमानस्य हकारो न भवति, प्राकृते पदमध्यान्तयोर्विधीयमानत्वात् । महीधर इति समस्तपदेऽपि न प्रवर्तते । अत्र पूर्वपदमुत्तरं पदमिति व्यपदेशात् । एवं च सति गोधर-वज्रधर-चक्रधर-शङ्खधरादिषु न प्रवर्तते । महीधरो महिधर इत्युभयमपि प्राकृते प्रयुज्यते, अमहानां विकल्पेन ह्रस्वदर्शनात् ॥३॥

घोरचलदन्तिसंकुलमट्टमहापङ्काहलजलाऽऽवासम् ।
आरीणं लवणजलं समिद्धफलबाणविद्धघोरफणिवरम् ॥ ४ ॥

[illegible]—रामेणाग्नेये शरे क्षिप्ते सति लवणजलमारीणं समन्तात् शुष्कम् । 'रीङ् स्रवणे' इत्यस्मात् निष्ठातकारस्य 'स्वादय ओदितः' इति ओदित्त्वे 'ओदितश्च ।८।२।४५।' इति नत्वम् । 'अट्कुप्वाङ्नुम्व्यवायेऽपि।८।४।२।' इति णत्वम् । रीणमित्यप्रयोगः, प्राकृते महाराष्ट्रे तस्याप्रयोगात् । घोरैः रौद्रैर्जलदन्तिभिः संकुलं व्याप्तम् । अट्टः शुष्को यो महापङ्कः तेन काहला विह्वला जलावासा मत्स्यादयो यत्र । 'अट्ट अतिक्रमहिंसनयोः' इत्यस्य रूपम् । समिद्धफलेन दीप्तफलेन बाणेन विद्धाः घोराः फणिवरा महासर्पा यत्रेति ॥ ४ ॥

सभयं परिहरमाणो महाऽहिसंचारभासुरं सलिलगणम् ।
आरूढो लवणजलो जलतीरं हरिबलाऽऽगमविलोलगुहम् ॥ ५ ॥

सभयमित्यादि—सलिलगणं सलिलसमूहं सभयम् । महाहीनां संचारेण भासुरं भासनशीलम्, तच्छिरोमणिद्योतितत्वात् । परिहरमाणः परित्यजन् । कर्त्रभिप्राये तङ् । लवणजलः समुद्रः लवणं जलमस्येति । जलतीरं तटं यत्र रामस्तिष्ठति तदारूढः संप्राप्तो मूर्तिमान् । हरिबलागमेन वानरसैन्यागमेन विलोला व्याकुला गुहा यत्रेति ॥ ५ ॥

चञ्चलतरुहरिणगणं बहुकुसुमाऽऽबन्धबद्धरामाऽऽवासम् ।
रिपल्लवतरुजालं हुङ्गोरुसमिद्धतरुवरहिमच्छायम् ॥ ६ ॥

चञ्चलेत्यादि—चञ्चलश्चपलः तरुचहरिणानां वानराणां गणो यत्र जलतीरे। च...नां वृक्षाणामाबन्धेन परस्परसंश्लेषेण बद्धो घटितो रामावासो यत्र। हरिपल्लवानि तरुजालानि यत्र। तुङ्गा उरवः परिमण्डलाः समिद्धा उज्ज्वला ये तरुवरास्तैर्हिमा शीतला छाया यत्र तज्जलतीरम् ॥ ६ ॥

वरवारणं सलिलभरेण गिरिमहीमण्डलसंवरवारणम्।
वसुधारयं तुङ्गतरङ्गसङ्गपरिहीणलोलवसुधारयम् ॥ ७ ॥

( एते सप्त संकीर्णाः श्लोकाः )

वरेत्यादि—वरा उत्कृष्टा वारणा यत्र। सलिलभरेण सलिलसमूहेन यो गिरीणां महीमण्डलस्य च संवरः संवरणमावरणम्। 'ग्रहवृदृनिश्चिगमश्च ।३।३।५८।' इत्यप्। तस्य वारणं निषेधकम्। समुद्रस्य वेलातिक्रमात्। वसु द्रव्यं तस्य धारयं धारकम्। 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजि-...हिभ्यश्च ।३।१।१३८।' इति णिजन्ताच्छः। तुङ्गाः अभ्रंलिहा ये तरङ्गास्तैः सह यः संगः संश्लेषः तस्मात् परिहीणो नष्टो लोलो वसुधायां तत्संबन्धिन्यां रयो वेगो यत्र तज्जलतीरमारूढः। गणितक्रममेतत्। एते सप्त संकीर्णाः श्लोकाः। संस्कृतप्राकृतयोरविशिष्टत्वात् ॥ ७ ॥

प्रणिपत्य ततो वचनं जगाद हितमायतौ पतिर्वारीणाम्।
गङ्गाऽवलम्बिबाहूरामं बहलोरुहरितमालच्छायम् ॥ ८ ॥

प्रणिपत्येत्यादि—ततस्तीरप्राप्तेरनन्तरं वारीणां पतिः समुद्रः रामं प्रणिपत्य वचनं जगाद। हितमात्मनो रामस्य पथ्यमायतावागामिनि काले। गङ्गावलम्बी गङ्गावलम्बनशीलः संपूर्णत्वाद्बाहुर्यस्य स गङ्गावलम्बिबाहुः। संस्कृते 'ढ्रलोपे पूर्वस्य दीर्घोऽणः ।६।३।१११।' प्राकृते तु पुंलिङ्गे उकारस्य दीर्घत्वम्। विभक्तिसकारस्य च लोपः। उरुर्महान् हारिः हरितो यस्तमालः। बहुला घना तस्यैव छाया यस्य तमिति। पूर्वार्धे निरवद्यमिति। पूर्वस्मिन्नर्धे प्राकृतस्याभावात् निरवद्यं पश्चादर्धे तु संकीर्णमेव ॥ ८ ॥

तुङ्गा गिरिवरदेहा अगमं सलिलं समीरणो रसहारी।
अहिमो रविकिरणगणो माया संसारकारणं ते परमा ॥ ९ ॥

तुङ्गा इत्यादि—गिरिवरदेहाः कुलपर्वतकायाः तुङ्गाः प्रांशवः, अगमं सलिलम् अगम्यम्। 'ग्रहवृदृनिश्चिगमश्च ।३।३।५८।' इत्यप्। समीरणो रसहारी

अपामुच्छोषकः, अहिम उष्णः रवेः किरणगणः । एतत्सर्वं तव माया परमा महती संसारस्य कारणम् । सर्वथा त्वं विष्णुः त्वत्कृतेषु को रोष इति ॥ ९ ॥

अथ षट् सङ्कीर्णाः ।

आयाससम्भवारुण ! संहर संहारहिमहरसमच्छायः ।
वाणं वारिसमूहं संगच्छ पुराणचारुदेहाऽऽवासम् ॥ १० ॥

आयासेत्यादि–यस्मात्संसारकारणं यदगम्यं सलिलं कृतं, तस्मात्त्वं हे आयाससंभवारुण रोषसंभवेन रक्तीभूत ! संहारे प्रलये हिमहरा आदित्यास्तैः समा छाया यस्य बाणस्य तं संहर उपशमय । वारिसमूहं संगच्छ अङ्गीकुरु । सकर्मकत्वात् 'समो गम्यृच्छिभ्याम् ।१।३।२९।' इत्यात्मनेपदं न भवति । पुराणः शाश्वतः दर्शनीयो यो देहः तस्य आवासमवस्थानम् ॥ १० ॥

असुलभहरिसंचारं जलमूलं बहलपङ्करुद्धाऽऽयामम् ।
भण किं जलपरिहीणं सुगमं तिमिकम्बुवारिवारणभीमम् ॥ ११ ॥

असुलभेत्यादि––अन्यच्च यदेतज्जलमूलं जलस्यावस्थानम् आग्नेयशरशोषितत्वाज्जलपरिहीणं सत्, तत् किं सुखेन गम्यत इति भण ब्रूहि । यतो बहलः सान्द्रो यः पङ्कस्तेन रुद्ध आयामो दैर्घ्यं यत्र । तिमयो मत्स्याः कम्बवः शङ्खाः वारिवारणाः जलहस्तिनः तैर्भीमम् । एवं च सति असुलभो दुर्लभः हरिसंचारो वानरपर्यटनं यत्रेति ॥ ११ ॥

गमनोपायमाह–

गन्तुं लङ्कातीरं बद्ध महासलिलसंचरेण सहेलम् ।
तरुहरिणा गिरिजालं वहन्तु गिरिभारसंसहा गुरुदेहम् ॥ १२ ॥

गन्तुमित्यादि–संचरन्त्यनेनेति संचरः । 'गोचरसंचरवहव्रजव्यजापणनिगमाश्च । ३ । ३ । ११९ ।' इति घः । बद्धो घटितो महासलिले यः संचरः तेन सेतुना सहेलम् । एकप्रवृत्त्या लङ्कातीरं लङ्कोपलक्षितं तटं गन्तुं तरुहरिणा वानरा गिरिभारस्य संसहाः क्षमाः । संसहन्ते इत्यच् । गिरिजालं गिरिसमूहं वहन्तु प्रापयन्तु । गुरुर्देहः शरीरं यस्य गिरिजालस्य ॥ १२ ॥

हरहासरुद्धविगमं परकण्ठगणं महाऽऽहवसमारम्भे ।
छिन्दन्तु रामबाणा गम्भीरे मे जले महागिरिबद्धे ॥ १३ ॥

हरेत्यादि—मे मम जले गम्भीरे अगाधे महागिरिभिर्बद्धे सति यो महाहवस्य समारम्भः प्रवर्तनं तस्मिन् परस्य शत्रोः कण्ठगणं ग्रीवासमूहं हरस्य तुष्टत्वात् यो हासः तेन रुद्धो विगमश्छेदो यस्य तं रामशराश्छिन्दन्तु । आशिषि लोट् ॥ १३ ॥

गच्छन्तु चारुहासा वीररसाऽऽबन्धरुद्धभयसम्बन्धम् ।
हन्तुं बहुबाहुबलं हरिकरिणो गिरिवरोरुदेहं सहसा ॥ १४ ॥

गच्छन्त्वित्यादि—बहवो बाहव एव बलं यस्य बाहूनां तरूणामिव बहुत्वात् । तं रावणं वीररसस्य शौर्यस्य य आबन्धः सन्ततप्रवर्तनं तेन रुद्धो निवारितो भयसंबन्धस्त्राससंपर्को यस्य तं गिरिवरोरुदेहं गिरिवन्महाकायं सहसा हन्तुं तत्क्षणं हनिष्याम इति हरिकरिणः कपिहस्तिनः चारुहासाः मम जले बद्धे सति गच्छन्तु ॥ एते षट् संकीर्णाः, संस्कृतप्राकृतयोस्तुल्यत्वात् ॥ १४ ॥

पूर्वार्द्धेऽसङ्कीर्णः श्लोकः ।

जिगमिषया संयुक्ता बभूव कपिवाहिनी मते दाशरथेः ।
बुद्धजलाऽऽलयचित्ता गिरिहरणाऽऽरम्भसम्भवसमालोला ॥१५॥

जिगमिषयेत्यादि—दाशरथेर्मतेऽभिप्राये सति कपिवाहिनी कपिसेना जिगमिषया गन्तुमिच्छया संयुक्ता बभूव । बुद्धजलालयचित्ता विदितसमुद्राभिप्राया गिरिणां यद्धरणमानयनं तस्य य आरम्भसंभवः तेन समालोला आकुला इत्येतदर्धमसङ्कीर्णम् ॥ १५ ॥

अथ पञ्च संकीर्णाः श्लोकाः ।

गुरुगिरिवरहरणसहं संहारहिमारिपिङ्गलं रामबलम् ।
आरूढं सहसा खं वरुणाऽऽलयविमलसलिलगणगम्भीरम् ॥१६ ॥

गुर्वित्यादि—ततो रामबलं सहसा तत्क्षणं खमारूढम् । गुरूणां गिरिवराणां यदाहरणमानयनं तत्सहत इति मूलविभुजादित्वात् कः । तस्य वा सहं शक्तम् । सहत इत्यच् । संहारे प्रलये यो हिमारिरग्निः तद्वत्पिङ्गलम् । वरुणालयस्य समुद्रस्य यो विमलसलिलगणः निर्मलजलसमूहः तद्वद्गम्भीरं खमिति ॥ १६ ॥

अथ चतुर्भिः कलापकम् ।

अवगाढं गिरिजालं तुङ्गमहाभित्तिरुद्धसुरसंचारम् ।
अभयहरिरासभीमं करिपरिमलचारुबहलकन्दरसलिलम् ॥ १७ ॥

अवगाढमित्यादि—समारुह्य रामबलेन गिरिजालमवगाढं अवष्टब्धम् । तुङ्गाभिरुच्छ्रिताभिर्महतीभिः परिणाहवतीभिर्भित्तिभी रुद्धः सुराणां संचारो यस्मिन् तेषामुन्नतत्वात् । अभया ये हरयः सिंहास्तेषां रासेन शब्देन भीमं भयानकम् । करिणां यः परिमलः संमर्दस्तेन चारु शोभनम् । बहलं घनं कन्दरसलिलं यस्मिन् ॥ १७ ॥

अलिगणविलोलकुसुमं सकमलजलमत्तकुररकारण्डवगणम् ।
फणिसंकुलभीमगुहं करिदन्तसमूढसरसवसुधाखण्डम् ॥ १८ ॥

अलिगणेत्यादि—अलिगणैर्विलोलानि कुसुमानि यत्र । सकमलेषु जलेषु मत्ताः कुरराणां कारण्डवानां च गणा यत्र । फणिभिः संकुला व्याप्ताः सत्यो भीमा गुहा यत्र । करिदन्तैः समुत्क्षिप्तं सरसं सान्द्रं वसुधायाः खण्डं यत्र ॥ १८ ॥

अरविन्दरेणुपिञ्जरसारसरवहारिविमलबहुचारुजलम् ।
रविमणिसम्भवहिमहरसमागमाऽऽबद्धबहुलसुरतरुधूपम् ॥ १९ ॥

अरविन्देत्यादि—अरविन्दरेणुभिः पिञ्जरा पिङ्गला ये सारसास्तेषां रवेण हारि मनोहारि विमलं बहु चारु जलं यत्रेति । रविमणिसंभवः सूर्यकान्तमणिसम्भवः यो हिमहरः अग्निः तेन यः समागमः संश्लेषस्तेनाबद्धो जनितो बहुलः सुरतरुधूपो यत्र ॥ १९ ॥

हरिरवविलोलवारणगम्भीराबद्धसरसपुरुसंरावम् ।
घोणासंगमपङ्काविलसुबलभरसहोरुवराहम् ॥ २० ॥

हरिरवेत्यादि—हरीणां सिंहानां यो रवस्तेन विलोलास्त्रस्नवो ये वारणास्तैर्गम्भीरो मन्द्र आबद्धो जनितः सरसो भयानकरसयुक्तः पुरुर्महान् संरावो यत्र । घोणायाः संगमात् संपर्कात् संभवो यस्य पङ्कस्य । घोणासमुद्धृतो यः पङ्क इत्यर्थः । तेनाविलाः लिप्ताङ्गाः सुबलाः तत एव भरसहाः उरवश्च वराहा यत्र । तद्गिरिजालमालमवगाढमिति ॥ २० ॥

अथासङ्कीर्णः श्लोकः—

उच्चखनुः परिरब्धान् कपिसङ्घा बाहुभिस्ततो भूमिभृतः ।
निष्पिष्टशेषमूर्ध्नः शृङ्गविकीर्णोष्णरश्मिनक्षत्रगणान् ॥ २१ ॥

उच्चख्नुरित्यादि—ततोऽवगाहादनन्तरं बाहुभिः परिरब्धान् समाश्लिष्टान् भूमिभृतः पर्वतान् कपिसङ्घा उच्चख्नुः उत्खातवन्तः । 'गमहनजनखनघसां लोपः क्ङित्यनङि ।६।४।९८।' इत्युपधालोपः । निष्पिष्टशेषमूर्ध्नः व्याप्तपातालमूलत्वात् चूर्णितनागराजमस्तकान् शृङ्गैः शिखरैर्विकीर्ण उष्णरश्मिरादित्यो नक्षत्रगणश्च यैर्दिवं व्याप्य स्थितत्वात् । असंकीर्ण इति अत्र प्राकृतस्याप्रयुक्तत्वात् ॥ २१ ॥

अथ त्रिभिः विशेषकम् । अथ चत्वारः सङ्कीर्णाः—

तुङ्गमहागिरिसुभरा बाहुसमारुद्धभिदुरटङ्का बहुधा ।
लवणजलबन्धकामा आरूढा अम्बरं महापरिणाहम् ॥ २२ ॥

तुङ्गेत्यादि—तुङ्गा उच्चा महान्तः परिणाहवन्तो ये गिरयस्तैः सुभरा जातभराः कपयः । बाहुभिः समारुद्धा भिदुराः विदारणशीलाः टङ्का उन्नतप्रदेशा यैस्ते । बहुधा अनेकप्रकारं लवणजलबन्धकामाः एवमेवं बद्धव्यमिति जातेच्छाः आरूढाः अम्बरं व्योम महापरिणाहम् महान् परिणाहो विस्तारो यस्य तत् अप्रमेयदिग्विभागम् ॥ २२ ॥

बहुधवलवारिवाहं विमलाऽऽयसगुरुमहाऽसिदेहच्छायम् ।
बद्धविहङ्गममालं हिमगिरिमिव मत्तकुररवसम्बद्धम् ॥ २३ ॥

बह्वित्यादि—बहवो धवला वारिवाहा यत्राम्बरे । विमलायसः अयसो विकारः गुरुरलघुर्महान् योऽसिः खड्गः तस्य यो देहः तस्य छायेव छाया यस्य । बद्धा विरचिता विहङ्गानां माला पङ्क्तिर्यत्र । मत्तानां कुरराणां रवेण संबद्धं युक्तम् । अतो हिमगिरिमिवाम्बरमारूढा इति ॥ २३ ॥

चारुकलहंससंकुलमचण्डसंचारसारसाऽऽबद्धरवम् ।
सकुसुमकणगन्धवहं समयाऽऽगमवारिसङ्गविमलाऽऽयामम् ॥ २४ ॥

चारुकलहंसेत्यादि—चारुभिः कलहंसैः संकुलं व्याप्तम् । अचण्डसंचारैः शनैः संचरद्भिः सारसैराबद्धो रवो यस्मिन् । सकुसुमकणः सपुष्परेणुर्गन्धवहो वायुर्यत्रेति । वहतीति वहः कर्तर्यच् । गन्धस्य वह इति समासः। समयस्य प्रावृट्कालस्य य आगमः तेन यो वारिसङ्गः तेन प्रक्षालितत्वात् विमला आयामा यत्र तदम्बरमारूढा इति ॥ २४ ॥

सहसा ते तरुहारिणा गिरिसुभरा लवणसलिलबन्धाऽऽरम्भे ।
तीरगिरिम् आरूढा रामाऽऽगमरुद्धसभयरिपुसंचारम् ॥ २५ ॥

सहसेत्यादि—ते तरुहरिणाः शाखामृगाः गिरिभिः सुभराः सन्तः लवणसलिलबन्धारम्भे समुद्रबन्धनारम्भे सहसा तत्क्षणं तीरगिरिं तटस्थितं पर्वतमारूढाः । अत्र संस्कृतपक्षे संहितायाः अविवक्षितत्वात् तीरगिरिमारूढा इति नोक्तम् । अन्ये 'आरूढा तीरगिरिम्' इति विपर्ययमस्य पठन्ति । तदयुक्तम् । संस्कृतपक्षे असम्भावाद्यत्वं नास्ति । अतो विसर्जनीयस्य सकार एव स्यात् । रामस्य य आगमस्तेन रुद्धः सभयानां रिपूणां शत्रूणां संचारो यत्र तीरगिरौ । राम आगत इति तत्र भयात् संचारं त्यक्तवन्त इति ॥ निराख्यातोऽसङ्कीर्णः श्लोकः ॥ २५ ॥

ततः प्रणीताः कपियूथमुख्यैर्न्यस्ताः कृशानोस्तनयेन सम्यक् ।
अकम्प्रबध्नाऽग्रनितम्बभागा महाऽर्णवं भूमिभृतोऽवगाढाः ॥२६॥

तत इत्यादि—ततोऽनन्तरं भूमिभृतः पर्वताः कपियूथमुख्यैर्नीलादिभिः कृशानोस्तनयस्य नलस्य प्रणीताः अर्पिताः सन्तस्तेनैव कृशानुतनयेन सम्यक् साधु न्यस्ताः सन्तः महार्णवम् अवगाढाः अवष्टब्धवन्तः अकम्प्राः स्थिराः बध्नाग्रनितम्बानां भागा येषां ते । बध्नो मूलम् । 'इण्विञ्जिदीङुष्यविभ्यो नक्' इत्यधिकृत्य 'बन्धेर्ब्रधिबुधिबुधी च' इत्यौणादिको नक् । इदमपि निराख्यातं तिङन्तपदाभावात्, असंकीर्णं च प्राकृताभावात् ॥ २६ ॥

अथैकान्तराख्यातोऽसङ्कीर्णः ।

तेनेऽद्रिबन्धो ववृधे पयोधिस्तुतोष रामो मुमुदे कपीन्द्रः ।
तत्रास शत्रुर्ददृशे सुवेलः प्रापे जलाऽन्तो जहृषुः प्लवङ्गाः[1] ॥२७॥

तेन इत्यादि—अद्रिबन्धस्तेने शनैर्विस्तारं गतः, अत एव ववृधे पयोधिर्वृद्धिं गतः । गिरिभिः पूर्यमाणोदरत्वात् तीरं प्लावयति स्म । तुतोष रामस्तुष्टवान् । सुकरमिदानीं शत्रुव्यापादनमिति । मुमुदे कपीन्द्रः हृष्टवान् । प्राप्तो मे प्रत्युपकारकाल इति । तत्रास शत्रुः त्रासमुपगतः सेतुं बद्धवानिदानीमायातो राम इति । ददृशे सुवेलः ढौकमानैः सर्वैर्दृष्टः । जलान्तश्च प्रापे प्राप्तः । ततो जहृषुः हृष्टाः प्लवङ्गाः स्वाम्यादेशः संपादित इति । एतदेकान्तराख्यातम् सुबन्तपदैर्व्यवधानात् । असङ्कीर्णश्च प्राकृताभावात् ॥ २७ ॥

---

१ इतः प्रभृत्युपजातिश्छन्दः ।

अथ आख्यातमालाशाली ।

भ्रेमुर्ववल्गुर्ननृतुर्जजक्षुर्जगुः समुत्पुप्लुविरे निषेदुः ।
आस्फोटयांचक्रुरभिप्रणेदू रेजुर्ननन्दुर्विययुः समीयुः ॥ २८ ॥

भ्रेमुरित्यादि—ते पारं प्राप्य केचित् प्रदेशदर्शनोत्सुकाः भ्रेमुः भ्रान्ताः । अन्ये ववल्गुः तोषं गतवन्तः । 'उख उखि' इत्यत्र वल्गतिर्गतौ पठ्यते । केचिदतिहर्षात् ननृतुः । अन्ये रावणपराक्रमान् न्यक्कुर्वन्तो जजक्षुः हसितवन्तः । बुभुक्षया वा फलानि भक्षितवन्तः । 'जक्ष भक्षहसनयोः ।' केचित् जगुः गायन्ति स्म । केचित्समुत्पुप्लुविरे उत्प्लुत्योत्प्लुत्य गच्छन्ति स्म । केचित् भ्रान्ता निषेदुः निषण्णाः । केचिदास्फोटयांचक्रुर्वयं युध्याम इति आस्फोटं कुर्वन्तिस्मेति ण्यन्ताल्लिट्याम् । केचित्तोषाद्भिप्रणेदुः सुष्ठु नादितवन्तः । केचिद्रेजुः दीप्तवन्तः । केचिन्ननन्दुर्वयमीदृशं कर्म कृतवन्त इति । अन्ये विययुरितस्ततो गच्छन्ति स्म । केचित्समीयुः एकत्र संगताः । आख्यातमालेति तिङन्तमाला ॥ २८ ॥

अथ द्वाविंशतिः सङ्कीर्णाः श्लोकाः ।

गिरिपङ्कचारुदेहं कक्कोललवङ्गबद्धसुरभिपरिमलम् ।
बहुबहलोरुतरङ्गं परिसरमारूढमुद्धरं लवणजलम् ॥ २९ ॥

गिरीत्यादि—गिरीणां प्रक्षिप्यमाणानां यः पङ्कः गैरिकादिधातुकर्दमः तेन चारुदेहम् । कक्कोललवङ्गाभ्यां बद्धः सुरभिः परिमलो गन्धो यस्मिन् । बहवः प्रभूता बहलाः स्थूला उरवः उच्चास्तरङ्गा यस्य तदीदृशं लवणजलम् । उद्धरम् उद्धृतं कर्तृभूतम् । परिसरं तटमारूढं सेतुना निवारितगतित्वात् ॥ २९ ॥

लोलं कूलाऽभिगमे खे तुङ्गाऽमलनिबद्धपुरुपरिणाहम् ।
सुरगङ्गाभरणसहं गिरिबन्धवरेण लवणसलिलं रुद्धम् ॥ ३० ॥

लोलमित्यादि—कूलाभिगमे तटगमने लोलं चञ्चलम् । खे आकाशे तुङ्गं च तदमलं चेति तुङ्गामलम् । निबद्धः संयुक्तः पुरुर्महान् परिणाहो यस्य । तुङ्गामलं च तन्निरुद्धपुरुपरिणाहं चेति । वियति आरोहपरिणाहाभ्यां युक्तमित्यर्थः । सुरगङ्गायाः मन्दाकिन्याः यद्भरणं पूरणं तत्र सहं शक्तं तादृशं लवणजलं गिरिबन्धवरेण सेतुना रुद्धम् ॥ ३० ॥

---

१ इतः परं पुनरार्यागीतिश्छन्दः ।

अथ त्रयोदशभिः कुलकम् ।

**आरूढं च सुवेलं तरुमालाऽऽबन्धहारिगिरिवरजालम् ।**
**रावणचित्तभयङ्करमापिङ्गललोलकेसरं रामबलम् ॥ ३१ ॥**

आरूढमित्यादि—रामबलं तटे स्थित्वा आरूढं च सुवेलं पर्वतम् । धकारस्य प्राकृते स्वरशेषता न भवति । पदमध्यान्तयोरवर्तमानत्वात् । तरुमालाया य आबन्धः तेन हारि मनस्तुष्टिकरं तादृशं गिरिवराणां पर्यन्तगिरीणां जालं यस्य सुवेलस्य । रावणचित्तस्य भयङ्करं रामबलम् । आपिङ्गलानि लोलानि केसराणि यस्य तदिति ॥ ३१ ॥

**लङ्काऽऽलयतुमुलाऽरवसुभरगभीरोरुकुञ्जकन्दरविवरम् ।**
**वीणारवरससङ्गमसुरगणसंकुलमहातमालच्छायम् ॥ ३२ ॥**

लङ्केत्यादि—लङ्कालयानां राक्षसानां यस्तुमुलो महानारवः तेन सुभराः परिपूर्णाः गभीरोरुकुञ्जा गम्भीरमहागहनानि कन्दरविवराणि च यत्र सुवेले । वीणारवे यो रसस्तृष्णा तेन संगमः समागमो येषां सुरगणानां ते च सुरगणाश्चेति समासः । तैः संकुला व्याप्ता महातमालच्छाया यत्रेति ॥ ३२ ॥

**सरसबहुपल्लवाऽऽविलकेसरहिन्तालबद्धबहलच्छायम् ।**
**ऐरावणमदपरिमलगन्धवहाऽऽबद्धदन्तिसंरम्भरसम् ॥ ३३ ॥**

सरसेत्यादि—सरसाः सार्द्राः ये बहवः पल्लवाः तैराविला अन्धकारिता ये केसरवृक्षाः हिन्तालवृक्षाश्च तैर्बद्धा बहला घना छाया यत्र सुवेले । ऐरावणस्य ऐरावतस्य हस्तिनो मदपरिमलो यस्मिन् गन्धवहे तादृशेन गन्धवहेन आबद्धो दन्तिनां हस्तिनां संरम्भरसः क्रोधरसो यत्रेति । ऐरावण ऐरावत इत्युभयमपि प्राकृते साधु ॥ ३३ ॥

**तुङ्गतरुच्छायारुहकोमलहरिहारिलोलपल्लवजालम् ।**
**हरिणभयङ्करसकुसुमदावसमच्छविविलोलदाडिमकुञ्जम् ॥ ३४ ॥**

तुङ्गेत्यादि—तुङ्गतरूणां या छाया तस्यां रोहन्तीति 'इगुपधज्ञाप्रीकिरः कः ।३।१।३५।' इतीगुपधलक्षणः कः । तुङ्गतरुच्छायारुहाः विटपाः तेषां कोमलं हरि हरितं हारि तुष्टिकरं लोलं पल्लवजालं यत्र । हरिणानां भयङ्करा दावसदृशत्वात् सकुसुमदावसमच्छवयः दावाग्नितुल्याः लोलदाडिमकुञ्जा यत्र ॥ ३४ ॥

कलहरिकण्ठविरावं सलिलमहाबन्धसङ्कुलमहासालम् ।
चलकिसलयसम्बद्धं मणिजालं सलिलकणमयं विवहन्तम् ॥ ३५ ॥

कलेत्यादि—कलो मनोहरः हरीणां कण्ठविरावो यत्र । सलिलस्य यो महाबन्धस्तेन संकुला महान्तः सालाः सालवृक्षा यत्र । चलकिसलयेषु संबद्धं संलग्नं सलिलकणमयं सलिलकणरूपं मणिजालं मणिसमूहमिव विवहन्तं धारयन्तम् ॥ ३५ ॥

तुङ्गमणिकिरणजालं गिरिजलसंघट्टबद्धगम्भीररवम् ।
चारुगुहाविवरसभं सुरपुरसममरचारणसुसंरावम् ॥ ३६ ॥

तुङ्गेत्यादि—तुङ्गमणीनां किरणजालं यत्रेति । गिरिजलानि निर्झरजलानि तेषां यः संघट्टः परस्परसंश्लेषस्तेन बद्धो गम्भीरो रवो यत्र । चारुगुहाविवरमेव सभा शाला यत्र । अमरचारणानां गन्धर्वाणां गायतां शोभनः संरावो यत्र अत एवामरपुरसमम् ॥ ३६ ॥

विमलमहामणिटङ्कं सिन्दूरकलङ्कपिञ्जरमहाभित्तिम् ।
वीरहरिदन्तिसङ्गमभयरुद्धविभावरीविहारसमीहम् ॥ ३७ ॥

विमलेत्यादि—विमलमहामणीनां पद्मरागादीनां टङ्का छेदा यत्र । अतश्च सिन्दूरकलङ्केन लाञ्छनेन पिञ्जरा इव महाभित्तयो यस्य । वीराणां हरीणां दन्तिनां च यः सङ्गमोऽन्योन्यगमनं तस्माद्भयं तेन रुद्धा निवारिता विभावर्यां विहारसमीहा विहरणेच्छा यत्र ॥ ३७ ॥

समहाफणिभीमबिलं भूरिविहङ्गमतुमुलोरुघोरविरावम् ।
वारणवराहहरिवरगोगणसारङ्गसंकुलमहासालम् ॥ ३८ ॥

समेत्यादि—समहाफणिभ्यत एव भीमानि बिलानि विवराणि यत्र । भूरीणां विहङ्गमानां तुमुलोऽनेकप्रकार उरुर्महान् घोरो रौद्रो विरावो यत्र । वारणादिभिः स्कन्धकर्षणार्थिभिः संकुला महासाला यत्र ॥ ३८ ॥

चलकिसलयसविलासं चारुमहीकमलरेणुपिञ्जरवसुधम् ।
सकुसुमकेसरबाणं लवङ्गतरुतरुणवल्लरीवरहासम् ॥ ३९ ॥

चलेत्यादि—चलैः किसलयैः हस्तैरिव सविलासं प्रारब्धनृत्यम् । चारूणां महीकमलानां स्थलजानां रेणुभिः पिञ्जरा वसुधा यत्र । सकुसुमाः केसराः बाणाश्च यत्र । लवङ्गतरोस्तरुणा या वल्लर्यः प्ररोहास्ता एव वरो हासो विकासो यत्र ॥ ३९ ॥

अमलमणिहेमटङ्कं तुङ्गमहाभित्तिरुद्धरुरुपङ्कगमम् ।
अमराऽऽरूढपरिसरं मेरुमिवाऽविरलसरसमन्दारतरुम् ॥ ४० ॥

अमलेत्यादि—अमलमणीनां हेमादीनां टङ्काश्छेदा यत्र । तुङ्गा उच्चा महती विस्तारवती या भित्तिस्तया रुद्धो रुरूणां मृगविशेषाणाम् पङ्कगमः पङ्केन गमनं यत्र । गमेः 'ग्रहवृदृनिश्चिगमश्च ।३।३।५८।' इत्यप् । 'वङ्कगमम्' इति पाठान्तरे तु तुङ्गमहाभित्तौ रुद्धः कुटिलो गमो यत्र । 'वकि कौटिल्ये' इत्यस्य रूपम् । अमरैरारूढाः परिसरास्तटा यत्र । अविरलाः सरसा मन्दारतरवो देववृक्षा यत्र । तमित्थं मेरुमिव ॥ ४० ॥

फलभरमन्थरतरुवरमविदूरविरूढहारिकुसुमापीडम् ।
हरिणकलङ्कमणिसंभवबहुवारिसुभरगम्भीरगुहम् ॥ ४१ ॥

फलेत्यादि—फलभरेण मन्थरा ईषन्नतास्तरुवरा यत्र । अविदूरे विरूढा हारिणः कुसुमापीडा यत्र । पुष्पस्तबकानां हस्तग्राह्यत्वात् । हरिणकलङ्कमणिः महाचन्द्रकान्तः तस्मात् संभवो यस्य बहुवारिणः तेन सुभराः परिपूर्णा गम्भीरा गुहा यस्य । अत्र मणिमहत्तया वारिमहत्त्वात् गम्भीरगुहापूरणमिति ॥ ४१ ॥

जलकामदन्तिसंकुलसहेमरसचारुधवलकन्दरदेहम् ।
अङ्कुररोहसमच्छविरुरुगणसंलीढतरलहरिमणिकिरणम् ॥ ४२ ॥

जलेत्यादि—जलमेतदित्येवं कामैर्दन्तिभिः संकुलाः सहेमरसाः सह हेमरसेन वर्तमानाः चारवः शोभनाः धवलाः कन्दरदेहाः कन्दरसन्निवेशा यत्र । रोहणं रोह अङ्कुराद्रोहो यस्य शस्यस्य तेन समच्छवयस्तुल्यवर्णा रुरुगणास्तैः संलीढाः तरलाश्चञ्चलाः हरिमणिकिरणा मरकतमयूखा यत्र ॥ ४२ ॥

गाढसमीरणसुसहं भीमरवोत्तुङ्गवारिधरसङ्घट्टम् ।
धवलजलवाहमालासम्बद्धाबद्धहिमधराधरलीलम् ॥ ४३ ॥

गाढेत्यादि—गाढो महान् यः समीरणः तं सुसहत इति मूलविभुजादित्वात्कः । भीमरवास्तुङ्गा ये वारिधरास्तेषां संघट्टो यत्र । धवला ये जलवाहास्तेषां मालाया यत्सम्बद्धं सम्बन्धः ( संबन्धनं सम्बद्धं 'नपुंसके भावे क्तः ।३।३।११३।' इति भावे क्तः ) तेन करणभूतेन आबद्धा अनुकृता हिमधराधरस्य हिमवतो धराधरस्य लीला विभ्रमो येन तं सुवेलम् आरूढम् ॥ ४३ ॥

रामबलं कीदृशमित्याह—

लवणजलबन्धसरसं तरुफलसंपत्तिरुद्धदेहायासम् ।
लङ्कातोरणवारणमारूढं समरलालसं रामबलम् ॥ ४४ ॥

लवणेत्यादि—लवणजलबन्धाद्धेतोः सरसं सहर्षम् । तरुफलसंपत्त्या रुद्धोऽपनीतः देहायासः क्षुत्पीडा यस्य । लङ्कातोरणस्य वारणं निषेधकम् । आलोलं चञ्चलं समरलालसं रणसतृष्णं रामबलं तं सुवेलमारूढमिति पूर्वेण योज्यम् ॥ ४४ ॥

तस्मिन्नारूढे परबलं सन्नद्धमित्थं प्रवृत्तमित्यर्थः । इत्थं कथं तदाह गुरुपणवेत्यादिना—

अथ त्रिभिर्विशेषकम् ।

गुरुपणववेणुगुञ्जाभेरीपेलोरुझल्लरीभीमरवम् ।
ढक्काघण्टातुमुलं सन्नद्धं परबलं रणायाससहम् ॥ ४५ ॥

गुर्वित्यादि—गुरुपणवादीनां भीमो रवो यस्मिन् परबले तत्र । गुरुपणवो महान् पणवः । पणवो ढक्का पेला वाद्यविशेषः । उरुझल्लरी महती झल्लरी ( झांझ ) इति ख्यातो वाद्यविशेषः । ढक्काघण्टयोस्तुमुलः संमूर्च्छितः शब्दो यत्रेति । रणायाससहं रणक्लेशसहम् ॥ ४५ ॥

आरूढबाणघोरं विमलायसजालगूढपीवरदेहम् ।
चञ्चलतुरङ्गवारणसंघट्टाबद्धचारुपरिणाहगुणम् ॥ ४६ ॥

आरूढेत्यादि—धनुषि आरूढबाणत्वात् घोरं परबलम् । विमलेनायसजालेन वर्मणा गूढश्छन्नः पीवरः स्थूलो देहो यस्य । चञ्चलानां तुरङ्गाणां वारणानां च यः परस्परसंघट्टः श्लेषणं तेनाबद्धश्चारुः परिणाहगुणः विस्तार एव गुणो यस्य तत्परबलं संनद्धम् ॥ ४६ ॥

असितोमरकुन्तमहापाट्टिशभल्लवरबाणगुरुपुरुमुसलम् ।
वीररसालङ्कारं गुरुसञ्चारहयदन्तिसमहीकम्पम् ॥ ४७ ॥

असीत्यादि—अस्यादीनां वरबाणपर्यन्तानां द्वन्द्वः । तैरस्यादिभिः गुरु अनभिभवनीयं पुरु महन्मुसलं यत्र । अस्यादिगुरु च तत् पुरु मुसलं चेति समासः । वीररस एवालङ्कारो यस्य । गुरुः संचारो येषां हयदन्तिनां महाकायत्वात् तैः समहीकम्पं सह महीकम्पेन वर्तमानं परबलं संनद्धम् ॥ ४७ ॥

ते रामेण सरभसं परितरला हरिगणा रणसमारम्भे ।
रुद्धा लङ्कापरिसरभूधरपरिभङ्गलालसा धीररवम् ॥ ४८ ॥

ते इत्यादि——ते हरिगणाः कपिगणाः रणसमारम्भे रणप्रवर्तननिमित्तं सरभसं संभ्रमपूर्वकं परितरलाः स्थातुमशक्नुवन्तः । लङ्कापरिसरे लङ्कासमीपे ये भूधराः तरवः तेषां परिभङ्गे चूर्णने लालसाः सतृष्णाः सन्तो रामेण रुद्धाः प्रतिषिद्धाः मा भाङ्क्षुरिति । धीररवं धीरो रवो यस्यां प्रतिषेधनक्रियायामिति ॥ ४८ ॥

अथ द्वाभ्यां युग्मकम्–

जलतीरतुङ्गतरुधरकन्दरगिरिभित्तिविवराऽऽवासम् ।
भीमं तरुहरिणबलं सुसमिद्धहिमारिकिरणमालालोलम् ॥ ४९ ॥

जलेत्यादि—तरुहरिणबलं कपिबलं निषिद्धं सत् भीमं भयानकं जलतीराद्यैरावासो यस्य तत् सुसमिद्धस्य हिमारेरग्नेरादित्यस्य वा या किरणमाला तद्वल्लोलं समारूढमिति वक्ष्यमाणेन सम्बन्धः ॥ ॥ ४९ ॥

रावणबलमवगन्तुं जलभरगुरुसलिलवाहगणसमच्छायम् ।
अट्टतरुमञ्चमन्दिरतोरणमालासभासु समारूढम् ॥ ५० ॥

इति महावैयाकरणभट्टि-प्रणीते रामचरिते काव्ये प्रसन्नकाण्डे भाषासमावेशो नाम चतुर्थः परिच्छेदस्त्रयोदशः सर्गः ।

रावणेत्यादि—रावणबलमवगन्तुं कीदृशमिति जलभरेण गुरुर्यः सलिलवाहगणो जलधरसमूहः तेन समच्छायम् तुल्यच्छायम् अट्टादिषु समारूढम् ॥ ५० ॥

इति श्रीजयमङ्गलसूरिविरचितया श्रीजयमङ्गलाह्वयया व्याख्यया समलंकृते श्री भट्टिप्रणीते रामचरिते तृतीये प्रसन्न-काण्डे लक्षण-रूपे चतुर्थः परिच्छेदः तथा लक्ष्यरूपे कथानके 'सेतुबन्धनं' नाम त्रयोदशः सर्गः ।

---

१ लक्ष्योऽर्थमर्थः, तत्फलं तु तेषां भूधर सदृशोच्चताऽऽतिशय प्रत्यायनम् ।

## चतुर्दशः सर्गः ।

सुप्तिङ्व्युत्पत्तौ यत्सौष्ठवं तदपि काव्यस्याङ्गमुक्तम् । अतः प्रसन्नकाण्डानन्तरं तिङ्काण्डं शब्दलक्षणप्रयोगार्थं कथ्यते । तत्र लस्य स्थाने तिबादयः । लकाराश्च नव लेटश्छन्दोविषयत्वादिति । अत्र नव विलसितानि । विलसितं च नानारूपता । तत्र भूतार्थवतो लिटोऽधिकृत्य तद्विलसितमाह--

ततो दशाऽऽस्यः स्मरविह्वलाऽऽत्मा चारप्रकाशीकृतशत्रुशक्तिः ।
विमोह्य मायामयराममूर्ध्ना सीतामनीकं प्रजिघाय योद्धुम् ॥ १ ॥

तत इत्यादि—ततः स्वपरबलयो रणादुत्तरकालं दशास्यः स्मरविह्वलात्मा कामवशीकृतदेहः भर्तरि निराशा सती सीता ममानुकूला भविष्यतीति मायामयेन मायास्वभावेन राममूर्ध्ना छिन्नेन सीतां विमोह्य मोहयित्वा चारैः प्रणिधिभिः प्रकाशीकृता शत्रुशक्तिः वैरिसामर्थ्यं यस्मै । योद्धुमनीकं सैन्यं प्रजिघाय प्रहितवान् । 'हेरचङि ७।३।५६।' इति कुत्वम् । भूतानद्यतनपरोक्षे सर्वत्र लिट् ॥ १ ॥

कम्बूनथ समादध्मुः कोणैर्भेर्यो निजघ्निरे ।
वेणून्पुपूरिरे गुञ्जा जुगुञ्जुः करघट्टिताः ॥ २ ॥

कम्बूनित्यादि---अथ सैन्यप्रेषणानन्तरं कम्बून् समादध्मुः शब्दितवन्तः शाङ्खिकाः । कोणैर्वाद्यवादनैः काष्ठमयैः भेर्यो निजघ्निरे ताडिताः कर्मणि लिट् । वेणून् वंशान् पुपूरिरे मुखमरुता पूरितवन्तः । 'पूरी आप्यायने' इति दैवादिकोऽनुदात्तेत् । गुञ्जाः समरवादनाः करघट्टिताः अङ्गुलिघृष्टा जुगुञ्जुः शब्दितवत्यः । 'गुजि अव्यक्ते शब्दे'॥ २ ॥

वादयाञ्चक्रिरे ढक्काः पणवा दध्वनुर्हताः ।
काहलाः पूरयाञ्चक्रुः पूर्णाः पेराश्च सस्वनुः ॥ ३ ॥

वादयामित्यादि---ढक्का वादयाञ्चक्रिरे वादितवन्तः । ढक्कावादका इत्यर्थः। वदेर्हेतुमण्ण्यन्तात् आमि 'अयामन्ताल्वाय्येत्न्विष्णुषु ।६।४।५५।' इत्ययादेशः । 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य । १ । ३ । ६३ ।' इति कृञोऽनुप्रयोगस्यात्मनेपदम् । 'णिचश्च ।१।३।७४।' इति आम्प्रत्ययादात्मनेपदस्य विहितत्वात् । पणवाः वाद्यविशेषाः हताः पाणविकैस्ताडिताः दध्वनुर्ध्वनिताः । काहलाः गोशृङ्गसंस्थानाः । पूरयाञ्चक्रुः पूरितवन्तः । 'पूरी आप्यायने' इति

चौरादिकस्य रूपम् । पेराः खरमुखाकाराः पूर्णा मुखमरुता सस्वनुः । 'फणां च सप्तानाम् । ६ । ४ ।१२५।' इति लिटि एत्वविधानस्य विकल्पितत्वात् नैत्वम् ॥ ३ ॥

मृदङ्गा धीरमास्वेनुर्हतैः स्वेने च गोमुखैः ।
घण्टाः शिशिञ्जिरे दीर्घं जह्रादे पटहैर्भृशम् ॥ ४ ॥

मृदङ्गा इत्यादि—मृदङ्गा मुरजाः धीरम् आस्वेनुः गम्भीरं ध्वनिताः । एत्वपक्षे रूपम् । गोमुखैर्वाद्यविशेषैः हतैः स्वेने शब्दितम् । भावे लिट् । घण्टाः दीर्घं शिशिञ्जिरे उच्चैः शब्दितवत्यः । पटहैर्भृशमत्यर्थम् । जह्रादे शब्दितम् । भावे लिट् ॥ ४ ॥

हया जिहेषिरे हर्षाद्गम्भीरं जगजुर्गजाः ।
संत्रस्ताः करभा रेटुश्चुकुवुः पत्तिपङ्क्तयः ॥ ५ ॥

हया इत्यादि—हया अश्वाः हर्षात् जिहेषिरे हेषितवन्तः । 'हेषृ अव्यक्ते शब्दे' भौवादिकोऽनुदात्तेत् । अभ्यासस्य 'ह्रस्वः । ७ ।४।४९।' इति एत इद्भवति । गजा गम्भीरं मन्द्रं जगजुः गर्जितवन्तः । 'गज गृजी शब्दार्थौ ।' करभा उष्ट्राः संत्रस्ताः नानावादित्रश्रवणात् । रेटुः शब्दं कृतवन्तः । 'रट परिभाषणे' इति शब्दार्थः । पत्तिपङ्क्तयः पदातिसंहतयः चुकुवुः शब्दितवत्यः । गच्छत किं तिष्ठथेति । 'कु शब्दे' इत्युदात्तेत् ॥ ५ ॥

तुरङ्गाः पुस्फुटुर्भीताः पुस्फुरुर्वृषभाः परम् ।
नार्यश्चुक्षुभिरे मम्लुर्मुमुहुः शुशुचुः पतीन् ॥ ६ ॥

तुरङ्गा इत्यादि—तुरङ्गा अश्वा भीता वादित्रश्रवणात् पुस्फुटुः स्फुटिताः भयादितस्ततो गताः । 'स्फुट विशरणे' । वृषभाः परं पुस्फुरुः सुष्ठु वालिताः । 'स्फुर वलने ।' नार्यश्चुक्षुभिरे अस्माकमायातो वियोग इति क्षोभमुपगताः । व्यस्तचित्ता जाता इत्यर्थः । काश्चित् मम्लुः । 'ग्लै म्लै हर्षक्षये' । मुमुहुः काश्चिन्मोहमुपगताः । पतीन् काश्चित् शुशुचुः शोचितवत्यः । हा कष्टं नियतं विनष्टा इति ॥ ६ ॥

जगर्जुर्जहृषुः शूरा रेजुस्तुष्टुविरे परैः ।
बबन्धुरङ्गुलित्राणि सन्नेहुः परिनिर्ययुः ॥ ७ ॥

---

१ 'करभश्शिशुः' इति, 'करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः ।' इत्याद्युक्त्योष्टविशेषवाचित्वेऽपि उष्ट्रत्वमादायेति बोध्यम् ।

जगर्जुरित्यादि—शूरा जगर्जुः । अस्माभिर्वृष्टाः शराः क यास्यन्तीति शब्दितवन्तः । तथा जहृषुः तुष्टाः चिरमायातः समर इति ।'हृष तुष्टौ ।' अत एव रेजुः शोभन्ते स्म । 'फणां च सप्तानाम् । ६ । ४ । १२५ ।' इत्येत्वाभ्यासलोपौ । परैरन्यैस्तुष्टुविरे स्तुताः । भवतामग्रतः समरे के तिष्ठन्तीति । अङ्गुलित्राणि बबन्धुः बध्नन्ति स्म । 'बन्ध बन्धने ।' तथा परे सन्नेहुः कवचानि बध्नन्ति स्म । 'णह बन्धने' । परिनिर्ययुः निष्क्रान्ताः ॥ ७ ॥

धनूंष्यारोपयाञ्चक्रुरारुरुहू रथादिषु ।
असीनुद्ववृहुर्दीप्तान् गुर्वीरुच्चिक्षिपुर्गदाः ॥ ८ ॥

धनूंषीत्यादि—धनूंषि[1] आरोपयाञ्चक्रुः आरोपितगुणानि कृतवन्तः । 'रुहः पोऽन्यतरस्याम् ।७।३।४३।' इति णौ पादेशः । आरुरुहुरारोहन्ति स्म रथादिषु । द्वितीया न कृता । अधिकरणत्वेन विवक्षितत्वात् । दीप्तान्निष्कलङ्कानसीन् उद्ववृहुः कोशादाकृष्य उद्यतान् कृतवन्तः । 'वृहू उद्यमने ।' गुर्वीर्गदा उच्चिक्षिपुः उत्क्षिप्तवन्तः ॥ ८ ॥

शूलानि भ्रामयाञ्चक्रुर्बाणानाददिरे शुभान् ।
भ्रेमुश्चुकूर्दिरे रेसुर्ववल्गुश्च पदातयः ॥ ९ ॥

शूलानीत्यादि—शूलानि भ्रमयाञ्चक्रुः भ्रमयन्ति स्म । मान्तत्वान्मित्त्वे ह्रस्वत्वम् । बाणान् शुभान् युद्धयोग्यानाददिरे गृहीतवन्तः । 'आङो दोऽनास्यविहरणे ।१।३।२०।' इति तङ् । पदातयश्च भ्रेमुः इतस्ततो याताः । चुकूर्दिरे शस्त्रपाणयः क्रीडितवन्तः । 'कुर्द खुर्द गुर्द गुद क्रीडायामेव ।' 'उपधायां च । ८ । २ । ७८ ।' इति दीर्घः । रेसुः भयकृते निनादान् कृतवन्तः । 'रस शब्दे ।' ववल्गुः प्रप्लुताः । वल्गतिः 'उख उखि' इत्यादौ पठ्यते ॥ ८ ॥

समुत्पेतुः कशाघातै रश्म्याकर्षैर्ममाङ्गिरे ।
अश्वाः प्रदुद्रुवुर्मोक्षे रक्तं निजगरुः श्रमे ॥ १० ॥

समुत्पेतुरित्यादि—कशाघातैः चर्मलताप्रहारैः अश्वाः समुत्पेतुः उत्प्लुताः । रश्म्याकर्षैः प्रग्रहाकर्षणैः ममाङ्गिरे शोभन्ते स्म । सङ्कोचितघोणत्वात् । 'मगि मण्डने ।' मोक्षे रश्मीनां प्रसारणे प्रदुद्रुवुः वेगेन गताः । श्रमे सति खलीनप्रभवं रक्तं निजगरुः पातितवन्तः । 'गॄ निगरणे ।' 'ऋच्छत्यॄताम् ।७।४।११।' इति गुणः ॥ १० ॥

---

१ दुर्भरा इत्यर्थः ।

गजानां प्रददुः शारीन् कम्बलान् परितस्तरुः ।
तेनुः कक्षां ध्वजांश्चैव समुच्छिश्रियुरुच्छिखान् ॥ ११ ॥

गजानामित्यादि—गजानां शारीन् प्रददुः । पृष्ठेषु आरोपितवन्तो हस्तिपका इत्यर्थात् । तथा कम्बलान् नानावर्णविचित्रान् परितस्तरुः आस्तीर्णवन्तः । कक्षां हेमादिमयीं तेनुः विस्तारितवन्तः । उच्छिखान् उद्धृतशिखान् ध्वजान् समुच्छिश्रियुः उत्क्षिप्तवन्तः ॥ ११ ॥

विशिश्वासयिषाञ्चक्रुरालिलिङ्गुश्च योषितः ।
आजघ्नुर्मूर्ध्नि बालांश्च चुचुम्बुश्च सुतप्रियाः ॥ १२ ॥

विशिश्वासयिषाञ्चक्रुरित्यादि—योषितः आत्मीयान् विशिश्वासयिषाञ्चक्रुः विश्वासयितुमिष्टवन्तः । मय्यन्यथा न भवनीयामिति । ण्यन्तात्सन्नन्तस्य रूपम् । आलिलिङ्गुश्च श्लिष्यन्ति स्म । लिगिर्गत्यर्थः । आङ्पूर्वः परिष्वङ्गे वर्तते । बालान् शिशून् आजघ्नुः शिरासि आघ्रातवन्तः । तथा चुचुम्बुश्च चुम्बितवन्तः । सुतप्रियाः सुताः प्रियाः यासामिति ॥ १२ ॥

गम्भीरवेदिनः सञ्ज्ञा गजा जगृहुरक्षताः ।
ववृधे शुशुभे चैषां मदो हृष्टैश्च च पुप्लुवे ॥ १३ ॥

गम्भीरवेदिन इत्यादि—ये गजा मत्तत्वादङ्कुशैर्दृढमाहता गम्भीरं विन्दन्ति ते गम्भीरवेदिनः तस्मिन् काले संज्ञा युद्धौपयिकीर्जगृहुः गृहीतवन्तः । अक्षतास्तोत्राङ्कुशैरनाहताः सन्तः । हृष्टैश्च गजैः पुप्लुवे प्लुतम् । भावे लिट् । हर्षादेषां मदो ववृधे वर्धते स्म । शुशुभे च शोभते स्म ॥ १३ ॥

मृगाः प्रदक्षिणं सस्रुः शिवाः सम्यग्ववाशिरे ।
अवामैः पुस्फुरे देहैः प्रसेदे चित्तवृत्तिभिः ॥ १४ ॥

मृगा इत्यादि—एवं संनह्य चलतां मृगाः दक्षिणपार्श्वेन गताः वामपार्श्वस्थाः शिवाः सम्यग्ववाशिरे शब्दितवत्य इत्यर्थः । 'वाशृ शब्दे ।' अवामैर्दक्षिणैर्देहैर्भुजादिभिः पुस्फुरे स्फुरितम् । भावे लिट् । चित्तवृत्तिभिर्मनोवृत्तिभिः प्रसेदे प्रसन्नम् । पूर्ववत्सदेर्भावे लिट् ॥ १४ ॥

प्राच्यमाञ्जिहिषाञ्चक्रे प्रहस्तो रावणाज्ञया ।
द्वारं ररक्षतुर्याम्यं महापार्श्वमहोदरौ ॥ १५ ॥

प्राच्यमित्यादि—एवं शुभनिमित्तोत्साहितः प्रहस्तो रावणाज्ञया प्राच्यं प्राचि भवं पूर्वद्वारम् 'द्युप्रागपागुदक्प्रतीचो यत् । ४ । २ । ११० ।' इति

यत् । आञ्जिहिषाञ्चक्रे गन्तुमिष्टवान् । 'अहि गता' इत्यस्योनुदात्तेतः सनीट् । 'अजादेर्द्वितीयस्य । ६ । १ । २ ।' इति द्विर्वचनम् । 'न न्द्राः संयोगादयः । ६ । १ । ३ ।' इति नकारो न द्विरुच्यते । 'आम्प्रत्ययवत् कृञोऽनुप्रपयोगस्य । १ । ३ । ६३ । इत्यात्मनेपदम् । तथा महापार्श्वमहोदरौ राक्षसौ याम्यं द्वारं दक्षिणम् । यमो देवता अस्येति 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । ४ । १ । ८५ ।' इत्यत्र 'यमाच्चेति वक्तव्यम्' इति उक्तम् तेन प्राग्दीव्यतीयेऽर्थे ण्यप्रत्ययः । ररङ्घतुः गतौ । 'रघि गतौ' इत्यस्य रूपम् ॥ १५ ॥

प्रययाविन्द्रजित् प्रत्यगियाय स्वयमुत्तरम् ।
समध्यसिसिषाञ्चक्रे विरूपाक्षः पुरोदरम् ॥ १६ ॥

प्रययादित्यादि—प्रत्यक् पश्चिमद्वारम् इन्द्रजित् प्रययौ गतवान् । प्रत्यगिति 'दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः । । ५ । ३ । २७ ।' इति विहितस्यास्तातेः 'अञ्चेर्लुक् । ५ । ३ । ३० ।' भसंज्ञाभावात् 'अचः । । ६ । ४ । १३८ ।' इत्यकारलोपो निवर्तते । 'चौ । ६ । ३ । १३८ ।' इति दीर्घत्वं च । स्वयमिति रावण उत्तरद्वारमियाय गतः । विरूपाक्षो राक्षसः पुरोदरं पुरमध्यं समध्यासिसिषाञ्चक्रे समध्यासितुमिष्टवान् । आस्तेरनुदात्तेतः सनि इटि अजादित्वाद्द्वितीयस्य द्वित्वम् । 'पूर्ववत्सनः ।१।३।६२।' इत्यात्मनेपदम् । अनुप्रयोगस्याप्यात्मनेपदम् ॥१६॥

शुश्राव रामस्तत्सर्वं प्रतस्थे च ससैनिकः ।
विस्फारयाञ्चकारास्त्रं बबन्धाऽथ च बाणधी ॥ १७ ॥

शुश्रावेत्यादि—अथानन्तरं रामस्तत्सर्वं रावणचेष्टितं शुश्राव श्रुतवान् । प्रतस्थे च गन्तुं प्रवृत्तः । 'समवप्रविभ्यः स्थः ।१।३।२२।' इति तङ् । ससैनिकः सह योधैः । सेनायां समवेता इति 'सेनाया वा ।४।४।४५।' इति पक्षे ठक् । अस्त्रं धनुर्विस्फारयाञ्चकार आरोप्याकृष्टवान् । स्फुरतेः । 'चिस्फुरोर्णौ । ६ । १ । ५४ ।' इत्यात्वम् । बबन्ध च बाणधी तूणीरे बध्नाति स्म । बाणा धीयन्तेऽत्रेति । 'कर्मण्यधिकरणे च । ३ ।३।९३।' इति किः ॥ १७ ॥

ईक्षाञ्चक्रेऽथ सौमित्रिमनुजज्ञौ बलानि च ।
नमश्चकार देवेभ्यः पर्णतल्पं मुमोच च ॥ १८ ॥

ईक्षामित्यादि—सौमित्रिं च युद्धाय ईक्षाञ्चक्रे दृष्टवान् । ईक्षेरनुदात्तेतः । 'इजादेश्च गुरुमतोऽनृच्छः ।३।१।३६।' इत्याम् । बलानि च अनुजज्ञे अनुज्ञातवान् । अनुपूर्वो जानातिरनुज्ञाने वर्तते तस्य परस्मैपदित्वात् ।'अनुजज्ञे' इति पाठश्चिन्त्यः । न च 'अनुपसर्गाज्ज्ञः ।१।३।७६ ।' इति वचनादात्मनेपदम्, उपसर्गेण युक्तत्वात् । नमश्चकार देवेभ्यः । नमःशब्दयोगे चतुर्थी । पर्णतल्पं पर्णशयनीयं मुमोच मुक्तवान् ॥ १८ ॥

**चकासांश्चक्रुरुत्तस्थुर्नेदुरानशिरे दिशः ।**
**वानरा भूधरान् रेधुर्बभञ्जुश्च ततस्तरून् ॥ १९ ॥**

चकासाश्चक्रुरित्यादि—ततोऽनुज्ञानानन्तरं वानरा उत्तस्थुः उत्थिताः । नेदुः शब्दितवन्तः । दिश आनशिरे व्याप्ताः । 'अश्नोतेश्च ।७।४।७२।' इत्यभ्यासस्य नुट् । 'अत आदेः ।७।४।७०।' इति दीर्घत्वम् । भूधरान् पर्वतान् रेधुः उन्मूलितवन्तः । 'राधो हिंसायाम् ।६।४।१२३।' इत्येत्वाभ्यासलोपः । तरूंश्च बभञ्जुः भग्नवन्तः । एवं च ते चकासाञ्चक्रुः शोभन्ते स्म । 'कास्यनेकाज्ग्रहणकर्तव्यम्' इत्याम् ॥ १९ ॥

अथ श्लोकद्वयं राघवयोर्ब्रह्मास्त्रबन्धसूचनार्थमनिमित्तदर्शनम् ।

**ददाल भूर्नभो रक्तं गोष्पदप्रं ववर्ष च ।**
**मृगाः प्रसस्रुपुर्वामं खगाश्चुकुविरेऽशुभान् ॥ २० ॥**

ददालेत्यादि—भूर्ददाल विदीर्णा । नभश्च रक्तं रुधिरं ववर्ष वृष्टवत् । लिटः पित्त्वादकित्त्वे धातोर्गुणः । कियत्प्रमाणं गोष्पदप्रं यावता गोष्पदं पूर्यते । 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ।३।४।३२।' इति णमुल् ऊलोपश्च । मृगाः प्रसस्रुपुर्वामं वामपार्श्वेन गता इत्यर्थः । खगाः पक्षिणोऽशुभान् अनिष्टांश्चुकुविरे शब्दितवन्तः । 'कुङ् शब्दे ।' अशुभमिति पाठान्तरम् । तत्र क्रियाविशेषणं वेदितव्यम् ॥ २० ॥

**उल्का ददृशिरे दीप्ता रुरुवुश्चाशिवं शिवाः ।**
**चक्ष्माये च मही रामः शशङ्के चाशुभागमम् ॥ २१ ॥**

उल्का इत्यादि—दीप्ता उल्का ददृशिरे दृष्टाः । अशिवम् अनिष्टं शिवा गोमायवः रुरुवुः शब्दितवन्तः । मही च चक्ष्माये कम्पिता । 'क्ष्मायी विधूनने' इत्यनुदात्तेत् । रामश्चाशुभागममनिष्टप्राप्तिं शशङ्के शङ्कते स्म । चेतसः पर्याकुलत्वात् इदमप्यनिष्टमेव ॥ २१ ॥

रावणः शुश्रुवाञ्शत्रून् राक्षसानभ्युपेयुषः ।
स्वयं युयुत्सयाञ्चक्रे प्राकाराग्रे निषेदिवान् ॥ २२ ॥

रावण इत्यादि—राक्षसानभ्युपेयुषोऽभिमुखमुपगतवन्तो ये शत्रवो रामादयस्तान् रावणः शुश्रुवान् । स्वयं च प्राकाराग्रे निषेदिवान् निषण्णः सन् । 'भाषायां सदवसश्रुवः ।३।२।१०८।' इति क्वसुः । युयुत्सयाञ्चक्रे योद्धुमिच्छन्तं प्रयोजितवानित्यर्थः । सन्नन्तण्यन्तस्य रूपम् ॥ २२ ॥

निरासू राक्षसा बाणान् प्रजहुः शूलपट्टिशान् ।
असींश्च वाहयाञ्चक्रुः पाशैश्चाचकृषुस्ततैः ॥ २३ ॥

निरासुरित्यादि—रावणप्रचोदिता राक्षसा बाणान्निरासुः क्षिप्तवन्तः शूलपट्टिशान् शूलसहितान् पट्टिशान् । शाकपार्थिवादित्वात्तत्पुरुषः । द्वन्द्वे तु 'जातिरप्राणिनाम् ।२।४।६।' इत्येकवद्भावः स्यात् । तान् प्रजहुः त्यक्तवन्तः । 'ओहाक् त्यागे ।' असींश्च खड्गान् वाहयाञ्चक्रुः व्यापारितवन्तः । ण्यन्तस्य रूपम् । पाशैस्ततैर्विस्तृतैः आचकृषुः आकृष्टवन्तः । कित्त्वे गुणप्रतिषेधः ॥२३॥

भल्लैश्च बिभिदुस्तीक्ष्णैर्विविधुस्तोमरैस्तथा ।
गदाभिश्चूर्णयाञ्चक्रुः शितैश्चक्रैश्च चिच्छिदुः ॥ २४ ॥

भल्लैरित्यादि—भल्लैर्बिभिदुर्विदारितवन्तः । तीक्ष्णैस्तथा तोमरैर्विविधुस्ताडितवन्तः । व्यधेः 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ।६।१।१६।' इति सम्प्रसारणम् । गदाभिश्च चूर्णयाञ्चक्रुः चूर्णितवन्तः । 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ।३।१।२५ ।' इति णिच् । 'चूर्ण प्रेरणे' इति चौरादिकत्वाद्वा । चिच्छिदुः छिन्नवन्तः । राक्षसयुद्धमेतत् ॥ २४ ॥

वानरा मुष्टिभिर्जघ्नुर्ददंशुर्दशनैस्तथा ।
निरासुश्च गिरींस्तुङ्गान् द्रुमान् विचकरुस्तथा ॥ २५ ॥

वानरा इत्यादि—वानरा मुष्टिभिर्जघ्नुः हतवन्तः । राक्षसानित्यर्थात् । दशनैर्ददंशुः दष्टवन्तः। गिरीन्निरासुः क्षिप्तवन्तः । द्रुमान् विचकरुर्विक्षिप्तवन्तः । 'कॄ विक्षेपे ।' 'ऋच्छत्यॄताम् ।७।४।११।' इति गुणः ॥ २५ ॥

लाङ्गूलैर्लोठयाञ्चक्रुस्तलैर्निन्युश्च सङ्क्षयम् ।
नखैश्च चकृतुः क्रुद्धाः पिपिषुश्च क्षितौ बलात् ॥२६ ॥

लाङ्गूलैरित्यादि—लाङ्गूलैर्लोठयाञ्चक्रुः लाङ्गूलैर्व्यापादितवन्तः।'रुठ लुठ प्रतिघाते' परस्मैपदिनो ण्यन्तस्य रूपम् । तलैर्हस्ततलैः संक्षयं विनाशं निन्युः नीतवन्तः । नखैश्च चकृतुरुच्छिन्नवन्तः । 'कृती च्छेदने' क्रुद्धाः वानराः बलात् हठात् क्षितौ पिपिषुश्चूर्णितवन्तः ॥ २६ ॥

सम्बभूवुः कबन्धानि प्रोहुः शोणिततोयगाः ।
तेरुर्भटास्यपद्मानि ध्वजैः फेनैरिवाबभे ॥ २७ ॥

संबभूवुरित्यादि—कबन्धानि संबभूवुः संभूतानि । प्रतिसहस्रं व्यापादनात् । कबन्धस्यैकस्योत्पादनात् । शोणिततोयगाः शोणितनद्यः प्रोहुः प्रकर्षेण प्रवृत्ताः । वहेर्यजादित्वात् सम्प्रसारणम् । भटास्यपद्मानि योधमुखपद्मानि तेरुः प्लुतानि । 'तॄफलभजत्रपश्च ।६।४।१२२।' इति एत्वाभ्यासलोपौ । फेनैरिव ध्वजैः शोणितनदीषु आबभे शोभितम् । भावे लिट् ॥ २७ ॥

रक्तपङ्के गजाः सेदुर्न प्रचक्रमिरे रथाः ।
निममज्जुस्तुरङ्गाश्च गन्तुं नोत्सेहिरे भटाः ॥ २८ ॥

रक्तपङ्के इत्यादि—रक्तपङ्के गजाः सेदुः निषण्णाः[1] । रक्तपङ्कस्य बहुलत्वात् । तथा रथा न प्रचक्रमिरे न गन्तुमारब्धाः । 'प्रोपाभ्याम् ।१।३।४२।' इत्यात्मनेपदम् । तुरङ्गा निममज्जुः निमग्नाः । भटाश्च[2] गन्तुं नोत्सेहिरे नो सहन्ते स्म ॥ २८ ॥

कोट्या कोट्या पुरद्वारमेकैकं रुरुधे द्विषाम् ।
षट्त्रिंशद्धरिकोट्यश्च निवव्रुर्वानराधिपम् ॥ २९ ॥

कोट्येत्यादि—द्विषामेकैकं पुरद्वारं वानराणां कोट्या कोट्या रुरुधे रुद्धम् । कर्मणि लिट् । षट्त्रिंशद्धरिकोट्यः वानरकोट्यो वानराधिपं सुग्रीवं निवव्रुः आवृत्य स्थिताः ॥ २९ ॥

तस्तनुर्जह्वलुर्मम्लुर्जग्लुर्लुलुठिरे क्षताः ।
मुमूर्च्छुर्ववमू रक्तं ततृपुश्चोभये भटाः ॥ ३० ॥

तस्तनुरित्यादि—उभये भटा रामरावणसंबन्धिनो योधाः क्षताः सन्तस्तस्तनुः स्तानितवन्तः । जह्वलुः चलिताः । 'ह्वल ह्मल चलने' । मम्लुः

---

१ उपविष्टाः । २ योद्धारश्च ।

म्लानाः। 'ग्लै म्लै हर्षक्षये'। जग्लुः हर्षक्षयं गताः। लुलुठिरे भूमौ लुठन्ते स्म। 'रुठ लुठ प्रतिघाते' तुदादावात्मनेपदी पठ्येते। मुमूर्च्छुः मोहमुपगताः। रक्तं ववमुः गीर्णवन्तः। ततृषुः तृष्यन्ति स्म। एतत् संकुलयुद्धम् ॥ ३० ॥

सम्पातिना प्रजङ्घस्तु युयुधेऽसौ द्रुमाहतः।
चकम्पेऽतीव चुक्रोश जीवनाशं ननाश च ॥ ३१ ॥

सम्पातिनेत्यादि---प्रजङ्घो नाम राक्षसः सम्पातिनाम्ना वानरेण सह युयुधे युध्यते स्म। असौ प्रजङ्घो द्रुमाहतश्चकम्पे कम्पते स्म। अतीव अत्यर्थं चुक्रोश क्रोशति स्म। जीवनाशं ननाश जीवेन विनष्टः। 'कर्त्रोर्जीवपुरुषयोर्नशिवहोः। ३। ४। ४३।' इति णमुल् ॥ ३१ ॥

उच्चखाते नलेनाऽऽजौ स्फुरत्प्रतपनाक्षिणी।
जम्बुमाली जहौ प्राणान् ग्राव्णा मारुतिना हतः॥ ३२ ॥

उच्चख्नाते इत्यादि---स्फुरन् चलन् प्रतपनो नाम राक्षसः तस्याक्षिणी, स्फुरतीव प्रतपनस्याक्षिणी नयने नलेन वानरेण उच्चख्नाते उत्खाते। कर्माणि लिट्। 'गमहन जनखनघसां लोपः क्ङित्यनङि। ६। ४। ९८।' इत्युपधालोपः। मारुतिना हनूमता ग्राव्णा पाषाणेन हतो जम्बुमाली राक्षसः प्राणान् जहौ त्यक्तवान् ॥ ३२ ॥

मित्रघ्नस्य प्रचुक्षोद गदयाऽङ्गं विभीषणः।
सुग्रीवः प्रघसं नेभे बहून् रामस्ततर्द च ॥ ३३ ॥

मित्रघ्नस्येत्यादि---मित्रघ्नस्य राक्षसस्य अङ्गं गदया विभीषणः प्रचुक्षोद। प्रघसं नाम राक्षसं सुग्रीवो नेभे हिंसितवान्। 'णभ तुभ हिंसायाम्' इत्यनुदात्तेत्। रामश्च बहून् राक्षसान् ततर्द हिंसितवान्। 'उतृदिर् हिंसाऽनादरयोः' ॥ ३३ ॥

वज्रमुष्टेर्विशिश्लेष मैन्देनाऽभिहतं शिरः।
नीलश्चकर्त चक्रेण निकुम्भस्य शिरः स्फुरत् ॥ ३४ ॥

वज्रमुष्टेरित्यादि---वज्रमुष्टे राक्षसस्य शिरो मैन्देन वानरेण अभिहतं सत् विशिश्लेष विश्लिष्टम्। निकुम्भस्य शिरः स्फुरत् चलत्। नीलो वानरश्चक्रेण चकर्त छिन्नवान् ॥ ३४ ॥

विरूपाक्षो जहे प्राणैस्तृढः सौमित्रिपत्त्रिभिः ।
प्रमोचयाञ्चकाराऽसून् द्विविदस्त्वशनिप्रभम् ॥ ३५ ॥

विरूपाक्ष इत्यादि—विरूपाक्षो राक्षसः सौमित्रिपत्त्रिभिर्लक्ष्मणशरैः तृढः हत इत्यर्थः । 'तृहू हिंसायाम्' इति तौदादिकस्योदित्त्वान्निष्ठाया-मिट्प्रतिषेधः । प्राणैर्जहे त्यक्तः । कर्मणि लिट् । द्विविदो वानरः अशनिप्रभं राक्षसं प्राणान् प्रमोचयाञ्चकार त्याजितवान् । मुचेर्ण्यन्तस्य लिटि रूपम् ॥ ३५ ॥

गदा शक्रजिता जिघ्ये तां प्रतीयेष वालिजः ।
रथं ममन्थ सहयं शाखिनाऽस्य ततोऽङ्गदः ॥ ३६ ॥

गदेत्यादि—शक्रजिता इन्द्रजिता गदा जिघ्ये प्रहिता । हिनोतेः कर्मणि लिट् । 'हेरचङि । ७ । ३ । ५६ ।' इति कुत्वम् । तां गदां वालिजोऽङ्गदः प्रतीयेष प्रतीष्टवान् । इषेः'अभ्यासस्यासवर्णे । ६ । ४ । ७८ ।' इतीयङ् । ततो-ऽनन्तरं अस्य शक्रजितो रथं सहयं साश्वं शाखिना तरुणा ममन्थ चूर्णित-वान् । 'मथि हिंसासंक्लेशयोः ॥ ३६ ॥

तत् कर्म वालिपुत्रस्य दृष्ट्वा विश्वं विसिष्मिये ।
संत्रेसू राक्षसाः सर्वे बहु मेने च राघवः ॥ ३७ ॥

तत्कर्मेत्यादि—तत्कर्म रथस्य चूर्णनं दृष्ट्वा विश्वं त्रैलोक्यं विसिष्मिये विस्मितम् । राक्षसाः सर्वे संत्रेसुः । राघवश्च बहु मेने । अङ्गदं श्लाघितवानित्यर्थः ॥ ३७ ॥

सुग्रीवो मुमुदे देवाः साध्वित्यूचुः सविस्मयाः ।
विभीषणोऽभितुष्टाव प्रशशंसुः प्लवङ्गमाः ॥ ३८ ॥

सुग्रीव इत्यादि—सुग्रीवो मुमुदे हृष्टवान्, देवाः साध्वित्यूचुः, 'वचि-स्वपियजादीनां किति ।६।१।१५।' इति सम्प्रसारणम् । विभीषणोऽभितुष्टाव अभिष्टुतवान् । 'ष्टुञ् स्तुतौ' । 'उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभति-स्थासेनयसेधसिचसञ्जस्वञ्जाम् ।८।३।६५।' इति षत्वम् । प्लवङ्गमाः प्रशशंसुः प्रशंसां कृतवन्तः ॥ ३८ ॥

---

१ 'यस्य विभाषा ।७।२।१५।' इत्यनेनेति' बोध्यम्' । २ अयं च शब्दो यौगिको रूढश्च । तथा च वज्रसमाच्छेद्यशरीरं तत एव तन्नामानं च ।

ही चित्रं लक्ष्मणेनोदे रावणिश्च तिरोदधे ।
विचकार ततो रामः शरान् संतत्रसुर्द्विषः ॥ ३९ ॥

ही चित्रमित्यादि—हीति विस्मये । चित्रमाश्चर्यमिति लक्ष्मणेनोदे उक्तम् । वदेर्भावे लिट् । यजादित्वात्सम्प्रसारणम् । रावणिः इन्द्रजित् रावणस्यापत्यम् । 'अत इञ् ।४।१।९५।' तिरोदधे अदृश्योऽभूत् । ततः अदर्शनानन्तरं रामः शरान् विचकार विक्षिप्तवान् ।'कॄ विक्षेपे'। द्विषःसंतत्रसुः संत्रस्ताः ॥ ३९ ॥

विभिन्ना जुघुरुर्घोरं जक्षुः क्रव्याशिनो हतान् ।
चुश्च्योत व्रणिनां रक्तं छिन्नाश्चेलुः क्षणं भुजाः ॥ ४० ॥

विभिन्ना इत्यादि—शरैर्विभिन्ना जुघुरुः घोरं भीमशब्दं कृतवन्तः । 'घुर भीमार्थ-शब्दयोः ।' क्रव्याशिनः शृगालादयो हतान् विनष्टान् जक्षुः भक्षितवन्तः । 'लिट्यन्यतरस्याम् ।२।४।४०।' इत्यदेर्घस्लृ । उपधालोपः । 'खरि च ।८।४।५५।' इति चर्त्वम् । व्रणिनां शरैः कृतव्रणानां रक्तं चुश्च्योत व्रणादित्यर्थात् कर्तरि लिटः पित्त्वादकित्त्वे गुणः। भुजाश्छिन्नाः सन्तः क्षणमात्रं चेलुश्चलिताः ॥ ४० ॥

कृत्तैरपि दृढक्रोधो वीरवक्त्रैर्न तत्यज ।
पलायांचक्रिरे शेषा जिह्रियुः शूरमानिनः ॥ ४१ ॥

कृत्तैरित्यादि—वीरवक्त्रैः शूरमुखैः कृत्तैरपि छिन्नैरपि दृढो घनः क्रोधो न तत्यजे न त्यक्तः । दष्टौष्ठभ्रकुट्यादीनां तथावस्थानात् । कर्मणि लिट् पलायांचक्रिरे पलायिताः । 'दयायासश्च ।३।१।३७।' इत्याम् । 'उपसर्गस्यायतौ ।८।२।१९।' इति लत्वम् । शेषा ये न पलायिताः ते शूरमानिनः । 'मनः ।३।२।८२।' इति णिनिः । जिह्रियुः लज्जन्ते स्म ॥ ४१ ॥

राघवो न दयाञ्चक्रे दधुर्धैर्यं न केचन ।
मम्रे पतङ्गवद् वीरैर्हाहेति च विचुक्रुशे ॥ ४२ ॥

राघव इत्यादि—राघवो न दयांचक्रे न दयां कृतवान्[1] । पूर्ववदाम् । न केचन न केचित् धैर्यं दधुः धारितवन्तः । सर्वे एव अहमहमिकया प्रवृत्ताः । यदि वा न केचन केचिद्धैर्यं न दधुः अपि तु दधुरेव । पत-

१ आवेगातिशये ह्येवम्भवतीति बोध्यम् । एवं परत्राऽपि ।

ङ्गवत्पतङ्गैरिव वीरैर्मम्रे मृतम् । भावे लिट् । हाहेति च विचुक्रुशे रुदितम् ॥ ४२ ॥

**तिरोबभूवे सूर्येण प्रापे च निशयाऽऽस्पदम् ।**
**जग्रसे कालरात्रीव वानरान् राक्षसांश्च सा ॥ ४३ ॥**

तिर इत्यादि—सूर्येण तिरोबभूवे तिरोभूतम् । अस्तं गतमित्यर्थः । भावे लिट् । निशया निशा च आस्पदं प्रतिष्ठा । 'आस्पदं प्रतिष्ठायाम् ।६।१।१४६।' इति निपातनम् । प्रापे प्राप्तम् । कर्मणि लिट् । सा च निशा कालरात्रीव कालः कृतान्तस्तेन प्रयुक्ता रात्रीति शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । कृदिकारादक्तिनः । इति ङीष् । वानरान् राक्षसांश्च जग्रसे ग्रसते स्म भक्षितवतीत्यर्थः ॥ ४३ ॥

**चुकोपेन्द्राजिदत्युग्रं सर्पास्त्रं चाजुहाव सः ।**
**आजुहुवे तिरोभूतः परानीकं जहास च ॥ ४४ ॥**

चुकोपेत्यादि- —रामव्यापारं दृष्ट्वा इन्द्रजित् तिरोहितः सन् चुकोप कुपितवान्, अत्युग्रं च सर्पास्त्रं सर्पमस्त्रमिव आजुहाव आहूतवान्. आह्वयतेः शब्दे वर्तमानस्य 'अभ्यस्तस्य च ।६।।१।३३।' इति द्विर्वचनात् प्राक् सम्प्रसारणं ततो द्विर्वचनम् । परानीकं च रामबलम् आजुहुवे स्पर्धते स्म । 'स्पर्धायामाङः । १ । ३ । ३१ ।' इत्यात्मनेपदम् । पूर्ववत्सम्प्रसारणम् । यजादित्वाद्वा । तत उवङादेशः । जहास च विहसितवान् ॥ ४४ ॥

**बबाधे च बलं कृत्स्नं निजग्राह च सायकैः ।**
**उत्ससर्ज शरांस्तेऽस्य सर्पसाच्च प्रपेदिरे ॥ ४५ ॥**

बबाध इत्यादि—बबाधे च अभिभूतवान् । 'बाधृ विलोडने' निजग्राह च निगृहीतवान्, सायकैः लोहयुक्तैः सर्पाक्तैः उत्ससर्ज शरान् क्षिप्तवान्, ते उत्सृष्टाः शरा अस्य बलस्य सर्पसात् ।'विभाषा साति कार्त्स्न्ये।५।४।५२।' इति कार्त्स्न्ये सातिः । सम्प्रपेदिरे सम्प्रपद्यन्ते स्म ॥ ४५ ॥

**आचिचाय स तैः सेनामाचिकाय च राघवौ ।**
**बभाण च न मे मायां जिगायेन्द्रोऽपि किं नृभिः ॥ ४६ ॥**

आचिचायेत्यादि—स इन्द्रजित् सर्पास्त्रैर्वानराणां सेनामाचिचाय छन्नवान् । 'विभाषा चेः । ७ । ३ । ५८ ।' इति अकुत्वपक्षे रूपम् । राघवौ च

रामलक्ष्मणावाचिकाय । कुत्वपक्षे रूपम् । बभाण च भणति स्म । मम मायामिन्द्रोऽपि न जिगाय न जितवान् । 'सँल्लिटोर्जेः । ७ । ३ । ५७ ।' इति कुत्वम् । किं नृभिः न किंचित्प्रयोजनमित्यर्थः ॥ ४६ ॥

आचिक्याते च भूयोऽपि राघवौ तेन पन्नगैः ।
तौ मुमुहतुरुद्विग्नौ, वसुधायां च पेततुः ॥ ४७ ॥

आचिक्यात इत्यादि—तेनेन्द्राजिता भूयोऽपि राघवावाचिक्याते छन्नौ । कर्मणि लिट् । तौ पाशबद्धौ मुमुहतुः मोहं गतौ । उद्विग्नौ समीहितानिष्पत्तेः । वसुधायां च पेततुः पतितौ । बन्धपरवशीकृतत्वात् ॥ ४७ ॥

ततो रामेति चक्रन्दुस्त्रेसुः परिदिदेविरे ॥
निशश्वसुश्च सेनान्यः, प्रोचुर्धिगिति चात्मनः ॥ ४८ ॥

तत इत्यादि—ततः पतनादनन्तरं सेनान्यः सुग्रीवादयः । 'एरनेकाचोऽसंयोगपूर्वस्य । ६ । ४ । ८२।' इति यण् । रामेति नामग्राहं चक्रन्दुः रुदितवन्तः त्रेसुः भीताः परिदिदेविरे परिदेवनं[1] कृतवन्तः।'देवृ देवने' अनुदात्तेत् । निशश्वसुः कोष्णं[2] निश्वासानुत्ससृजुः, आत्मनश्च[3] धिगिति प्रोचुः गर्हितवन्तः । 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु' इति धिग्योगाद्द्वितीया ॥ ४८ ॥

मन्युं शेकुर्न ते रोद्धुं नास्रं संरुरुधुः पतत् ।
विविदुर्नेन्द्रजिन्मार्गं परीयुश्च प्लवङ्गमाः ॥ ४९ ॥

मन्युमित्यादि--मन्युं शोकं रोद्धुं वारितुं न शेकुः न पारितवन्तः । अस्रं[4] च लोचनेभ्यः पतत् न संरुरुधुः न संरुद्धवन्तः, इन्द्रजितो मार्गम् न विविदुः न ज्ञातवन्तः, कासौ तिष्ठति इति । प्लवङ्गमाश्च[5] परीयुः समन्ताद्गतवन्तः । कासावगमदिति ॥ ४९ ॥

दधावाद्भिस्ततश्चक्षुः सुग्रीवस्य विभीषणः ।
विदांचकार धौताऽक्षः स रिपुं खे ननर्द च ॥ ५० ॥

दधावेत्यादि—ततोऽनन्तरं विभीषणः सुग्रीवस्य मन्त्रपूताभिरद्भिश्चक्षुर्दधाव प्रक्षालितवान्, सुग्रीवः धौताक्षः प्रक्षालितचक्षुः । 'बहुव्रीहौ

---

१ विलापम् । २ ईषदुष्णं यथा तथा । ३ स्वस्वदेहान् । ४ अश्रु । ५ वानराः । प्लवेन द्रुत्या गच्छन्तीति तथोक्ताः । 'गमश्च ३ । २ । ४७ ।' इति खच् । 'कपिभेकौ प्लवङ्गमौ ।' इत्यमरः ।

सक्थ्यक्ष्णोः स्वाङ्गात्षच् ।५।४।११३।' इति षच् । रिपुमिन्द्राजितं खेस्थितं विदांचकार ज्ञातवान् । 'उपविदजागृभ्योऽन्यतरस्याम् । ३ । १।३८ ।' इत्याम् । ननर्द च शब्दितवान् । क्वेदानीं यास्यसीति ॥ ५१ ॥

उज्जुगूरे ततः शैलं हन्तुमिन्द्रजितं कपिः ।
विहाय रावणिस्तस्मादानंहे चाऽन्तिकं पितुः ॥ ५१ ॥

उज्जुगूर इत्यादि—ततोऽनन्तरं कपिः सुग्रीवः इन्द्रजितं हन्तुं शैलमुज्जुगूरे उत्क्षिप्तवान् । 'गूरी हिंसागत्योः' इति दैवादिकोऽनुदात्तेत् । तस्य गतौ वर्तमानस्य रूपम् । रावणिरिन्द्रजित् विहाय अर्थाद्युद्धं विहाय तस्मादाकाशात्पितुरन्तिकमानंहे गतः । 'अहि गतौ ।' 'तस्मान्नुड् द्विहलः ।७।४।७१ ।' इति नुट् ॥ ५१ ॥

आचचक्षे च वृत्तान्तं प्रजहर्ष च रावणः ।
गाढं चोपजुगूहैनं शिरस्युपशिशिङ्घ च ॥ ५२ ॥

आचचक्ष इत्यादि—नागपाशेन राघवौ बद्धाविति वृत्तान्तमाचचक्षे आख्यातवान्, रावणः प्रजहर्ष तुष्टवान्, एनं च रावणिं च उपजुगूह दृढमाश्लिष्टवान् । अत्र कर्तृगामि क्रियाफलस्याविवक्षितत्वात् तङ् न भवति । 'ऊदुपधाया गोहः ।६।४।८९।' इत्यूत्वम् । शिरसि उपशिशिङ्घ आघ्रातवान् । 'शिघि आघ्राणे' ॥ ५२ ॥

ध्वजानुद्दुधुवुस्तुङ्गान् मांसं चेमुर्जगुः पपुः ।
कामयाञ्चक्रिरे कान्तास्ततस्तुष्टा निशाचराः ॥ ५३ ॥

ध्वजानित्यादि--ततो निशाचरा अपि श्रुत्वा तुष्टाः सन्तः ध्वजांस्तुङ्गानुद्दुधुवुः उत्क्षिप्तवन्तः, मांसं चेमुः खादितवन्तः, 'चमु छमु अदने ।' जगुर्गीतवन्तः, पपुः मद्यं पीतवन्तः, कान्ताः कामयाञ्चक्रिरे । कमेर्णिङन्तादाम् ॥ ५३ ॥

दर्शयाञ्चक्रिरे रामं सीतां राज्ञश्च शासनात् ।
तस्या मिमीलतुर्नेत्रे लुलुठे पुष्पकोदरे ॥ ५४ ॥

दर्शयामित्यादि--तथाभूतं रामं दृष्ट्वा सीता मम विधेया[1] स्यादित्यभिप्रायवतो राज्ञो रावणस्य आज्ञया राक्षसाः अशोकवनिकातः पुष्पकमारुह्य सीतां रामं दर्शयाञ्चक्रिरे दर्शितवन्तः । 'अभिवादिदृशोरात्मनेपदं वेति वाच्यम्'

---

१ अनुकूलेत्यर्थः । 'विधेयो विनयग्राही वचने स्थित आश्रवः ।' इत्यमरः ।

इति विकल्पेन द्विकर्मकता। तस्याः सीताया नेत्रे मिमीलतुः मिमीलिते। 'मील निमेषणे।' पुष्पकोदरे पुष्पकमध्ये। मूर्छया लुलुठे लुठिता ॥५४॥

प्राणा दध्वंसिरे गात्रं तस्तम्भे च प्रिये हते।
उच्छश्वास चिराद् दीना रुरोदाऽसौ ररास च ॥ ५५ ॥

प्राणा इत्यादि—प्रिये रामे हते प्राणा वायवः दध्वंसिरे ध्वस्ताः, गात्रं च तस्तम्भे काष्ठवन् निश्चलमभूत्। 'ष्टभि स्कभि प्रतिबन्धे।' चिरादुच्छश्वास उच्छ्वसितवती, असौ लब्धसंज्ञा दीना दुःखिता रुरोद रुदितवती, ररास च वक्ष्यमाणं च विलापं कृतवती ॥ ५५ ॥

'लौहबन्धैर्बबन्धे नु किं वज्रेण विनिर्ममे।
मनो मे न विना रामाद् यत् पुस्फोट सहस्रधा ॥ ५६ ॥

लौहबन्धैरित्यादि—लोहस्येमे लौहाः तैर्बन्धैर्मनो हृदयं मम बबन्धे बद्धम्। कर्मणि लिट्। नुशब्दो वितर्के। उत वज्रेण विनिर्ममे निर्मितम्। 'माङ् माने' इत्यस्मात्कर्मणि लिट् द्विर्वचने हृस्वत्वे 'आतो लोप इटि च।६।४।६४।' इत्यालोपे च रूपम्। यद्यस्मात् विना रामात् रामेण विना। 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्।२।३।३२।' इति पञ्चमी। न पुस्फोट न स्फुटितं सहस्रधा। 'संख्याया विधार्थे धा। ५।३।४२।' इति धा ॥ ५६ ॥

उत्तेरिथ समुद्रं त्वं मदर्थेऽरीञ्जिहिंसिथ।
ममर्थ चाऽतिघोरां मां धिग् जीवितलघूकृताम् ॥ ५७ ॥

उत्तेरिथेत्यादि—मदर्थं मन्निमित्तं समुद्रमुत्तेरिथ उत्तीर्णोऽसि 'तॄफलभजत्रपश्च।६।४।१२२।' इति एत्वाभ्यासलोपौ। तथा अरीन् जिहिंसिथ निहतवानसि। थलि रूपम्। यतो मदर्थे ममर्थ मरणावस्थां गतोऽसि। अतोऽतिघोरामतिरौद्रां मां धिक् जीवितलघूकृतां जीवत्याजितमहत्त्वात् ॥ ५७ ॥

न जिजीवाऽसुखी तातः प्राणता रहितस्त्वया।
मृतेऽपि त्वयि जीवन्त्या किं मयाऽणकभार्यया ॥ ५८ ॥

न जिजीवेत्यादि—त्वया प्राणता जीवता सता। 'अन प्राणने'। रहितो

---

१ इदमपि वितर्के, 'आहो उताहो किमुत विकल्पे किं किमूत च।' इत्यमरः।

विमुक्तस्तातो दशरथो न जिजीव न जीवितः । त्वयि मृतेऽपि जीवन्त्या मया न किंचित्प्रयोजनम् । अणकभार्यया । 'पापाणके कुत्सितैः ।२।१।५४।' इति समासः ॥ ५८ ॥

**सा जुगुप्सान् प्रचक्रेऽसून् जगर्हे लक्षणानि च ।**
**देहभाञ्जि ततः केशान् लुलुञ्च लुलुठे मुहुः ॥ ५९ ॥**

सा जुगुप्सानित्यादि—सा सीता पूर्वोक्तकारणादेव असून् प्राणान् जुगुप्सान् प्रचक्रे निन्दितान् कृतवती । जुगुप्स्यन्त इति घञ् । तदन्तस्य सनि रूपम् । आमि प्रत्यये तु प्रचक्र इत्यनुप्रयोगो न घटते । देहभाञ्जि शरीरस्थानि लक्षणानि । अवैधव्यसूचकानि च जगर्हे गर्हते स्म 'गर्ह गल्भ कुत्सने ।' मुहुः केशान् लुलुञ्च अपनीतवती, तथा लुलुठे पतिता ॥ ५९ ॥

**जग्लौ दध्यौ वितस्तान क्षणं प्राण न विव्यथे ।**
**दैवं निनिन्द चक्रन्द देहे चाऽतीव मन्युना ॥ ६० ॥**

जग्लावित्यादि—शोकभारात् जग्लौ ग्लानिं गता, दध्यौ ध्यातवती, पुनः किं मया द्रष्टव्योऽसीति । वितस्तान पीडया शब्दं कृतवती । 'स्तन शब्दे' । न प्राण न मूर्च्छिता । न जिजीव निःसंज्ञत्वात् । 'अन प्राणने' । 'अत आदेः ।७।४।७०।' इति दीर्घत्वम् । विव्यथे लब्धसंज्ञा पीडिता । 'व्यथो लिटि ।७।४।६८।' इत्यभ्यासस्य सम्प्रसारणम् । दैवं निनिन्द निन्दितवती । दैव ! विरूपमाचरितं त्वयेति । चक्रन्द रुदिता । पुनर्मन्युना अतीव शोकेन देहे दग्धा । कर्मणि लिट् ॥ ६० ॥

**आश्वासयाञ्चकाराथ त्रिजटा तां निनाय च ।**
**ततः प्रजागराञ्चक्रुर्वानराः सविभीषणाः ॥ ६१ ॥**

आश्वासयामित्यादि—अथानन्तरं त्रिजटा रावणभगिनी तां सीतामाश्वासयाञ्चकार आश्वासितवती । विष्णुरसौ दाशरथिः कथमस्य विरूपं भविष्यतीति । निनाय च तस्मात्पुष्पकान्नीतवती, तत उत्तरकालं वानरा विभीषणेन सह प्रजागरांचक्रुः आलोचनां कृतवन्तः । अत्रानुप्रयोगे नात्मनेपदं पूर्वस्यानात्मनेपदित्वात् ॥ ६१ ॥

**चिचेत रामस्तत् कृच्छ्रमोषाञ्चक्रे शुचाथ सः ।**
**मन्युश्चाऽस्य समापिप्ये विरुराव च लक्ष्मणम् ॥ ६२ ॥**

चिचेतेत्यादि—तत् कृच्छ्रं शरबन्धदुःखं रामश्चिचेत ज्ञातवान् । 'चिती संज्ञाने' इत्युदात्तेत् । शुचा शोकेन ओषांचक्रे देहे । कर्मणि लिट् । 'उषविद्-जागृभ्योऽन्यतरस्याम् ।३।१।३८।' इत्याम् । स च मन्युः शोकः अस्य रामस्य समापिप्ये वृद्धिं गतः । 'ओप्यायी वृद्धौ ।' तस्य लिटि 'प्यायः पी ।६।१।२८।' इति पीभावः । 'एरनेकाचः ।६।४।८२।' इति यण् । लक्ष्मणं च विरुराव शब्दितवान् वत्स ! जीवसीति ॥ ६२ ॥

समीहे मर्तुमानर्चे तेन वाचाऽखिलं बलम् ।
आपपृच्छे च सुग्रीवं स्वं देशं विससर्ज च ॥ ६३ ॥

समीह इत्यादि—मर्तुं प्राणांस्त्यक्तुं समीहे इच्छति स्म । तेन रामेणाखिलं समस्तं बलं वाचा आनर्चे पूजितम् भवद्भिः साध्वनुष्ठितम् अस्मद्भाग्यमत्रापराध्यतीति । कर्मणि लिट् । 'तस्मान्नुड् द्विहलः ।७।४।७१।' इति नुट् । सुग्रीवं चापपृच्छे आपृच्छति स्म । आमन्त्रितवानित्यर्थः । एहि तावद्दर्शनं मे देहि परिष्वजस्वेति । 'आङि नुप्रच्छयोरुपसङ्ख्यानम्' इति तङ् । स्वं च देशं किष्किन्धां विससर्ज प्रहितवान् ॥ ६३ ॥

आदिदेश स किष्किन्धां राघवौ नेतुमङ्गदम् ।
प्रतिजज्ञे स्वयं चैव सुग्रीवो रक्षसां वधम् ॥ ६४ ॥

आदिदेशेत्यादि—सुग्रीवो राघवौ किष्किन्धां नेतुमङ्गदमादिदेश, स्वयं च रक्षसां विनाशं प्रतिजज्ञे अहमेव व्यापादयामीति । 'सम्प्रतिभ्यामनाध्याने । १।३।४६।' इति तङ् । सकर्मकार्थं वचनम् ॥ ६४ ॥

'नागास्त्रमिदमेतस्य विपक्षस्तार्क्ष्यसंस्मृतिः ।
विभीषणादिति श्रुत्वा तं निदध्यौ रघूत्तमः ॥ ६५ ॥

नागास्त्रमित्यादि—नागास्त्रमिदं न शराः, एतस्य च विपक्षः शत्रुस्तार्क्ष्यसंस्मृतिः गरुडसंस्मरणं यत्संस्मरणादेवास्य शान्तिरिति । एवं विभीषणाच्छ्रुत्वा रघूत्तमो राघवस्तार्क्ष्यं निदध्यौ ध्यातवान् ॥ ६५ ॥

ततो विजघटे शैलैरुद्वेलं पुप्लुवेऽम्बुधिः ।
वृक्षैः पश्चुच्युते पुष्पैर्विरेजुर्भासुरा दिशः ॥ ६६ ॥

---

१ नागरूपबाणकृतपाशवद्यत्स्वरूपं क्लेशम् । २ 'गरुत्मान् गरुडस्तार्क्ष्यः' इत्यमरः ।

तत इत्यादि—ततो ध्यानानन्तरं तदागमनवायुवेगाच्छैलैर्विजघटे विघटितम् । भावे लिट् । अम्बुधिरुद्वेलं वेलामतिक्रम्य पुप्लुवे गतः, वृक्षेभ्यः सकाशात् पुष्पैश्च्युच्युते च्युतम्, दिशश्च भासुराः सुपर्णपक्षप्रभाभिः प्रभासनशीलाः सत्यो विरेजुः शोभन्ते स्म । 'फणां च सप्तानाम् ।६।४।१२५।' इत्येत्वपक्षे रूपम् । तत्र वेत्यनुवर्तते ॥ ६६ ॥

जगाहिरेऽम्बुधिं नागा ववौ वायुर्मनोरमः ।
तेजांसि शंशमाञ्चक्रुः शरबन्धा विशिश्लिषुः ॥ ६७ ॥

जगाहिरे इत्यादि—नागा भयादम्बुधिं जगाहिरे प्रविष्टाः, वायुस्तत्प्रभवो ववौ वाति स्म, तेजांसि रत्नादीनां शंशमाञ्चक्रुः अत्यर्थं प्रशान्तानि । शमेर्यङ्लुगन्तस्य रूपम् । एवं च कृत्वा अनुप्रयोगे परस्मैपदम् । शरबन्धा विशिश्लिषुर्विश्लिष्टाः । दूरत एव तत्प्रभावात् ॥ ६७ ॥

भ्रेजिरेऽक्षतवद् योधा लेभे संज्ञां च लक्ष्मणः ।
विभीषणोऽपि बभ्राजे गरुत्मान् प्राप चान्तिकम् ॥ ६८ ॥

भ्रेजिर इत्यादि—अक्षतवत् अक्षता इव योधा भ्रेजिरे दीप्यन्ते स्म । 'फणां च सप्तानाम् ।६।४।१२५।' इत्येत्वपक्षे रूपम् । संज्ञां चेतनां लक्ष्मणो लेभे प्राप्तवान्, विभीषणोऽपि बभ्राजे संपन्ना मे मनोरथा इति मेन इत्यर्थः । अनेत्वपक्षे रूपम् । अन्तिकं च रामलक्ष्मणयोर्गरुत्मान् प्राप । गरुतः पक्षिणस्तेऽनुजीवितयास्य सन्तीति मतुप् । यवादेराकृतिगणत्वात् 'झयः ।८।२।१०।' इति वत्वं न भवति ॥ ६८ ॥

संपस्पर्शाऽथ काकुत्स्थौ जज्ञाते तौ गतव्यथौ ।
तयोरात्मानमाचख्यौ ययौ चाऽथ यथागतम् ॥ ६९ ॥

संपस्पर्शेत्यादि—अनन्तरं गरुत्मान् काकुत्स्थौ राघवौ संपस्पर्श स्पृष्टवान्, तौ च स्पृष्टौ गतव्यथौ जज्ञाते जातौ, तयोः काकुत्स्थयोरात्मानमाचख्यौ गरुत्मानहमिति कथितवान् । 'वा लिटि ।२।४।५५।' इति चक्षिङः ख्याञ् । ययौ चापि यथागतं यथा तेनागतं तथा गतवान् ॥ ६९ ॥

स्वेनुस्तित्विषुरुद्येमुरुच्चख्नुः पर्वतांस्तरून् ॥
वानरा दद्रमुश्चाथ सङ्ग्रामं चाशशासिरे ॥ ७० ॥

स्वेनुरित्यादि---अथानन्तरं वानराः हृष्टाः स्वेनुः शब्दितवन्तः, तित्विषुः, शोभिताः, 'त्विष दीप्तौ ।' उद्येमुः उद्योगं चक्रुः, पर्वतानुत्पप्लुः उत्क्षिप्तवन्तः, दद्रमुः इतस्ततो भ्रान्ताः । 'द्रम हम्म मीमृ गतौ ।' संग्रामं च आशशासिरे अभीष्टवन्तः । 'आङः शासु इच्छायाम्' आदादिकोऽनुदात्तेत् ॥ ७० ॥

डुढौकिरे पुनर्लङ्कां बुबुधे तान् दशाननः ।
जीवतश्च विवेदारीन् बभ्रंशेऽसौ धृतेस्ततः ॥ ७१ ॥

डुढौकिरे इत्यादि--पुनर्भूयो लङ्कां डुढौकिरे जग्मुः, तान् वानरान् ढौकितान् दशाननो बुबुधे बुद्धवान्, जीवतश्चारीन् रामादीन् विवेद ज्ञातवान् । अन्यथा कथं वानरा ढौकिता इति । ततश्च धृतेः सकाशाद्बभ्रंशे भ्रष्टः ॥ ७१ ।

सस्रंसे शरबन्धेन दिव्येनेति बुबुन्द सः ।
बभाजाऽथ परं मोहमूहाञ्चक्रे जयं न च ॥ ७२ ॥

सस्रंस इत्यादि---दिव्येन[1] शरबन्धेन सस्रंसे स्रस्तम् । भावे लिट् । इत्येवं दशाननो बुबुन्द श्रुतवान् । 'बुदि निशामने ।' अथानन्तरं महामोहं मूर्च्छाकारं महान्तमबोधम् बभाज सेवते स्म । न च जयमूहांचक्रे वितर्कितवान् ॥ ७२ ॥

धूम्राक्षोऽथ प्रतिष्ठासाञ्चक्रे रावणसम्मतः ।
सिंहास्यैर्युयुजे तस्य वृकास्यैश्च रथः खगैः ॥ ७३ ॥

धूम्राक्ष इत्यादि--अथ धूम्राक्षो रावणसंमतो रावणेनानुज्ञातः सन् । भूते निष्ठात्र द्रष्टव्या । प्रतिष्ठासांचक्रे गन्तुमिच्छां कृतवान् । प्रपूर्वात्तिष्ठतेः 'समवप्रविभ्यः स्थः । १ । ३ । २२ ।' इति तङ् । 'उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् । ८।३।६५।' इति षत्वम् । तस्य च गन्तुमिच्छतो रथः खगैः आकाशगामिभिर्यानैः सिंहमुखैर्वृकमुखैश्च युयुजे युक्तः । कर्मणि लिट् ॥ ७३ ॥

त्वक्त्रैः संविव्ययुर्देहान् वाहनान्यधिशिश्यिरे ।
आनर्जुर्नृभुजोऽस्त्राणि ववञ्चुश्चाहवक्षितिम् ॥ ७४ ॥

त्वक्त्रैरित्यादि---धूम्राक्षसम्बन्धिनो नृभुंजो[2] राक्षसाः त्वक्त्रैः सन्नाहैः । त्वचं त्रायन्त इति देहान् संविव्ययुः छादितवन्तः । 'व्येञ् संवरणे'

---

[1] अमोघेनेत्यर्थः । [2] नॄन् भुञ्जत इति अत्र क्विप् ।

इत्यस्य । 'न व्यो लिटि ।६।१।४६।' इत्यात्वप्रतिषेधः । 'लिट्यभ्यासस्योभयेषाम् ।६।१।१७।' इति सम्प्रसारणम् । वाहनान्यधिशिश्रियरे आरूढवन्तः ।'एरनेकाचोऽसंयोगपूर्वस्य।६।४।८२।'इति यण्। 'अधिशीङ्स्थासां कर्म।१।४।४६।' इति कर्मसंज्ञा । अस्त्राण्यानर्जुः गृहीतवन्तः । 'अर्ज प्रतियत्ने ।' 'अत आदेः ।७।४।७०।' इति दीर्घः । 'तस्मान्नुड् द्विहलः ।७।४।७१।'इति नुट् 'आनर्चुः' इति पाठान्तरम्। पूजितवन्तः। आहवक्षितिं च रणभूमिं ववञ्चुर्गताः । 'वञ्चु गतौ' ॥ ७४ ॥

अध्युवास रथं तेये पुराच्चुक्षाव चाशुभम् ।
संश्रावयाञ्चकाराख्यां धूम्राक्षस्तत्वरे तथा ॥ ७५ ॥

अध्युवासेत्यादि—धूम्राक्षो रथमध्युवास आरूढः । 'उपान्वध्याङ्वसः ।१।४।४८।' इति कर्मसंज्ञा । पुरात् लङ्कातः तेये निष्क्रान्तः । 'अय पय तय' इत्यादिषु तयिरनुदात्तेत् । चुक्षाव च शब्दं कृतवान्, अशुभं भयानकम्। 'क्षु शब्दे ।' आख्याम् आत्मीयं नाम संश्रावयाञ्चकार श्रावितवान्, तथा तत्वरे त्वरते स्म युद्धाय ॥ ७५ ॥

निलिल्ये मूर्ध्नि गृध्रोऽस्य क्रूरा ध्वाङ्क्षा ववाशिरे ।
शिशीके शोणितं व्योम चचाल क्ष्मातलं तथा ॥ ७६ ॥

निलिल्य इत्यादि—अस्य धूम्राक्षस्य गच्छतो मूर्ध्नि गृध्रो निलिल्ये निलीनः। 'एरनेकाचोऽसंयोग पूर्वस्य ।६।४।८२।' इति यण्। ध्वाङ्क्षाः क्रूराः अशुभशंसिनः ववाशिरे वाशन्ते स्म। व्योम कर्तृ शोणितं शिशीके क्षरितवत् । 'शीकृ सेचने' इत्यनुदात्तेत् । तथा क्ष्मातलं पृथ्वीतलं चचाल चलितम् ॥ ७६ ॥

ततः प्रजघटे युद्धं शस्त्राण्यासुः परस्परम् ।
वव्रश्चुराजुघूर्णुश्च स्येमुश्चुकूर्दिरे तथा ॥ ७७ ॥

तत इत्यादि—ततो निमित्तादनन्तरं युद्धं प्रजघटे घटितम्, ते हरिराक्षसाः वक्ष्यमाणाः शस्त्राण्यासुः क्षिप्तवन्तः, परस्परं वव्रश्चुः छिन्नवन्तः, आजुघूर्णुः चक्रवद्भ्रान्ताः । घूर्णतिरनुदात्तेत् । स्येमुः शब्दं कृतवन्तः । स्यमेः फणादित्वादेत्वम् । चुकूर्दिरे क्रीडितवन्तः ॥ ७७ ॥

रुरुजुर्भेजिरे फेणुर्बहुधा हरिराक्षसाः ।
वीरा न बिभयाञ्चक्रुर्भीषयाञ्चक्रिरे परान् ॥ ७८॥

रुरुजुरित्यादि---रुरुजुर्भग्नवन्तः, भ्रेजिरे शोभिताः, बहुधा बहुप्रकारं फेणुर्गताः 'फण गतौ ।' वीराः सात्त्विका न बिभयाञ्चक्रुः न बिभ्यति स्म 'भीह्रीभृहुवां श्लुवच्च ।३।१।३९।'इत्याम् । बिभेतेः परस्मैपदित्वात् अनुप्रयोगे परस्मैपदम् । परान् शत्रून् शौर्यगुणयुक्ताः प्रयोजकाः भीषयांचक्रिरे भीषयन्ते स्म । अत्र 'भीस्म्योर्हेतुभये ।१।३।६८।' इति तङ् अनुप्रयोगेऽपि ॥ ७८ ॥

रक्तं प्रचुश्चुतुः क्षुण्णाः शिश्वियुर्बाणविक्षताः ।
अस्यतां शुशुवुर्बाणान्भुजाः साऽङ्गुष्ठमुष्टयः ॥ ७९ ॥

रक्तमित्यादि---केचित् क्षुण्णाः खण्डिताः सन्तो रक्तं प्रचुश्चुतुः प्रक्षरिताः, केचित् शिश्वियुः । 'विभाषा श्वेः । ६ । १ । ३० ।' इत्यसम्प्रसारणपक्षे रूपम् । बाणानस्यतां क्षिप्यतां योधानां भुजाः साङ्गुष्ठमुष्टयः 'अङ्गुष्ठमुष्टिसहिताः शरविक्षताः शरभिन्नाः शुशुवुः गताः । गत्यर्थं द्रष्टव्यम् । सम्प्रसारणपक्षे रूपम् ॥ ७९ ॥

रणे चिक्रीड धूम्राक्षस्तं ततर्जानिलात्मजः ।
आददे च शिलां साऽश्वं पिपेषास्य रथं तया ॥ ८० ॥

रण इत्यादि---धूम्राक्षो रणे चिक्रीड क्रीडति स्म, तमनिलात्मजो हनूमान् ततर्ज भर्त्सितवान्, शिलामाददे च गृहीतवान्, तया शिलया अस्य धूम्राक्षस्य साश्वं रथं पिपेष चूर्णितवान् ॥ ८० ॥

पपात राक्षसो भूमौ रराट च भयङ्करम् ।
तुतोद गदया चारिं तं दुद्रावाद्रिणा कपिः ॥ ८१ ॥

पपातेत्यादि---राक्षसो धूम्राक्षो भूमौ पपात, पतितः सन् भयंकरं रराट रटितवान्, ततोऽरिं हनूमन्तं गदया तुतोद आहतवान्, तं राक्षसं स कपिः अद्रिणा दुद्राव व्यापादितवान् ॥ ८१ ॥

अकम्पनस्ततो योद्धुं चकमे रावणाज्ञया ।
स रथेनाभिदुद्राव जुघुरे चाऽतिभैरवम् ॥ ८२ ॥

अकम्पन इत्यादि---ततो धूम्राक्षविनाशानन्तरम् अकम्पनो राक्षसः रावणाज्ञया युध्यस्वेति योद्धुं चकमे इष्टवान् । 'आयादय आर्धधातुके वा । ३ । १ । ३१ ।' इति णिङभावपक्षे रूपम् । सोऽकम्पनः रथेनाभि-

दुद्राव अभिमुखं गतः, जुघुरे च शब्दं कृतवान्, अतिभैरवम् अतिभयानकम्। 'घुर भीमार्थशब्दयोः' इत्यनुदात्तेत् ॥ ८२ ॥

पस्पन्दे तस्य वामाक्षि सस्वनुश्चाशिवाः खगाः ।
तान्वव्राजावमत्यासौ बभासे च रणे शरैः ॥ ८३ ॥

पस्पन्द इत्यादि—तस्याकम्पनस्यानिमित्तत्वसूचकं वामाक्षि पस्पन्दे स्पन्दितम्, अशिवाश्च अशिवसूचकाः खगाः[1], सस्वनुः शब्दं कृतवन्तः । अनेत्वपक्षे रूपम् । तान् खगान् अवमत्यावज्ञायासौ वव्राज गतः, रणे शरैश्च बभासे शोभितम् ॥ ८३ ॥

खमूयुर्वसुधामूवुः सायका रज्जुवत्तताः ।
तस्माद्वलैरपत्रेपे पुप्रोथास्मै न कश्चन ॥ ८४ ॥

खमित्यादि—तेन सायका रज्जुवत्तता विस्तृताः सन्तः खमाकाशमूयुरावृतवन्तः । वसुधां च ऊवुश्छादितवन्तः । 'वेञ् तन्तुसन्ताने' तस्य लिटि वयिरादेशः ।' वश्चास्यान्यतरस्यां किति ।६।१।३९।' इति यकारस्य वकारादेशः । तस्मादिति तमकम्पनं वीक्ष्य । ल्यब्लोपे पञ्चमी । त्रेपे लज्जितम् । भावे लिट् । 'तृफलभजत्रपश्च ।६।४।१२२ ।' इति एत्वाभ्यासलोपौ । अस्मै अकम्पनाय न कश्चित् पुप्रोथ न प्रभवति स्म ।' प्रोथृ पर्याप्तौ' इति स्वरितेत् । अत्र कर्तुः क्रियाफलायोगान्नात्मनेपदम् । 'नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च ।२।३।१६।' इत्यत्र अलंशब्दस्य पर्याप्त्यर्थस्य ग्रहणात् तदर्थयोगे चतुर्थी ॥८४॥

स भस्मसाच्चकारारीन्दुदाव च कृतान्तवत् ।
चुक्रोध मारुतिस्तालमुच्चखने च महाशिखम् ॥ ८५ ॥

स भस्मसादित्यादि—सोऽकम्पनः अरीन् भस्मसाच्चकार कार्त्स्न्येन भस्मभूतान् कृतवान् । कृतान्तवत्[2] यम इव दुदाव सुष्ठु:पीडितवान्। 'टुदु उपतापे।' तं दृष्ट्वा मारुतिश्चुक्रोध क्रुद्धः । तालं च वृक्षं महाशिखमत्युच्छायम् उच्चखने उत्खातवान् । अत्र कर्तुः क्रियाफलयोगात् तङ् ॥ ८५ ॥

यमायाकम्पनं तेन निरुवाप महापशुम् ।
बभञ्ज निहते तस्मिञ्शोको रावणमग्निवत् ॥ ८६ ॥

यमायेत्यादि—तेन तालेन स चाकम्पनं महापशुमिव यमाय निरुवाप दत्त-

---

१ पक्षिणः काकगृध्रादयः । 'शिवा' इति पाठान्तरे शृगाला इत्यर्थः । २ 'कृतान्तो यमुनाभ्राता' इत्यमरः । 'तेन तुल्यं क्रिया चेद्वतिः ५ । १ । ११५ ।' इति वतिः । एतेनास्य दानेन यमदेवताकयागनिष्पत्तिः सूचिता ।

वान् । निष्पूर्वो वपिर्दाने वर्तते । तत्र धातोर्यजादित्वात् सम्प्रसारणं न भवति अकित्वात् । अभ्यासस्य लिटि भवत्येव । तस्मिन्निहते शोकोऽग्निरिव रावणं बभ्रज्ज दग्धवान् ॥ ८६ ॥

स विभ्रेष प्रचुक्षोद दन्तैरोष्ठं चखाद च ।
प्रगोपायांचकाराशु यत्नेन परितः पुरम् ॥ ८७ ॥

स विभ्रेषेत्यादि—स राजा विभ्रेष चलितः । 'भ्रेष चलने' स्वरितेत् । प्रचुक्षोद क्रोधाल्लोष्टादीन् चूर्णितवान् । ओष्ठ च दन्तैश्चखाद दष्टवान् । पुरं लङ्कां समन्तात् यत्नेन प्रगोपायांचकार रक्षितवान् । 'गुपू रक्षणे' इत्युदात्तेत् । आयप्रत्ययान्तत्वादाम् ॥ ८७ ॥

अथ द्वाभ्यां युग्मकम् ।

प्रहस्तमर्थयाञ्चक्रे योद्धुमद्भुतविक्रमम् ।
किं विचारेण राजेन्द्र ! युद्धार्था वयमित्यसौ ॥ ८८ ॥

प्रहस्तमित्यादि—अद्भुतविक्रमं प्रहस्तं रावणो योद्धुं 'युद्धयस्व' इत्यर्थयांचक्रे प्रार्थितवान् । 'अर्थ उपयाच्ञायाम्' इति चौरादिक आत्मनेपदी । वचनात् असौ प्रहस्तः प्रार्थितश्चकाण बभाणेति वक्ष्यमाणेन सम्बन्धः । हे राजेन्द्र ! युद्धार्था वयं युद्धप्रयोजनाः ततश्च किं विचारेणेति ॥ ८८ ॥

चक्राणाऽशङ्कितो योद्धुमुत्सेहे च महारथः ।
निर्येमिरेऽस्य योद्धारश्चक्लृपे चाऽश्वकुञ्जरम् ॥ ८९ ॥

चक्राणेत्यादि—उक्त्वा च स महारथो योद्धा अशङ्कितो निर्भयः सन् योद्धुमुत्सेहे उत्साहं कृतवान् । अस्य योद्धारो रावणेन निर्येमिरे नियमिताः । अनेन सह एतावद्भिर्योद्धव्यामिति । कर्मणि लिट् । अश्वकुञ्जरं[1] चक्लृपे सज्जीकृतम् । पशुद्वन्द्वैकवद्भावः । 'कृपो रो लः ।८।२।१८।' ॥ ८९ ॥

युयुजुः स्यन्दनानश्वैरीजुर्देवान् पुरोहिताः ।
आनर्चुर्ब्राह्मणान् सम्यगाशिषश्चाशशंसिरे ॥ ९० ॥

---

१ 'अश्वान् कुञ्जरांश्चेत्यर्थः । अश्वाश्च कुञ्जराश्चेत्येषां समाहार इति तत् । 'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् २ । ४ । १२' इति समाहारः ।

युयुजुरित्यादि—स्यन्दनान् रथान् अश्वैर्युयुजुः युञ्जन्ति स्म । पुरोहिताः देवानीजुः पूजितवन्तः । यजादित्वात्सम्प्रसारणम् । ब्राह्मणानानचुः पूजितवन्तः । ते च पूजिताः आशिषः आशशांसिरे उदितवन्तः । 'आङः शासु इच्छायाम्' अनुदात्तेत् । शास इत्वे आङ् 'आशासः क्वावुपधाया इत्वं वाच्यम्' इतीत्वे आशीः ॥ ९० ॥

ऊहिरे मूर्ध्नि सिद्धार्था गावश्चालेभिरे भटैः ।
प्रचुक्ष्णुवुर्महास्त्राणि जिज्ञासाश्चक्रिरे हयान् ॥ ९१ ॥

ऊहिर इत्यादि—भटैर्योधैः सिद्धार्थाः सर्षपाः मूर्ध्नि ऊहिरे ऊढाः । गावश्चालेभिरे स्पृष्टाः । कर्मणि लिट् । महास्त्राणि प्रचुक्ष्णुवुः तेजितवन्तः । तथा तैर्योद्धुं पार्यत इति । 'क्ष्णु तेजने।' भटाः हयान् जिज्ञासांचक्रिरे ज्ञातुमिच्छां कृतवन्तः किमेते योद्धुं क्षमा नेति । 'ज्ञाश्रुस्मृदृशां सनः ।१।३।५७।' इत्यात्मनेपदित्वादनुप्रयोगेऽपि तङ् ॥ ९१ ॥

अथ द्वाभ्यां युग्मम् ।

ललुः खड्गान् ममार्जुश्च ममृजुश्च परश्वधान् ।
अलञ्चक्रे समालेभे ववसे बुभुजे पपे ॥ ९२ ॥

ललुरित्यादि—खड्गान् ललुर्गृहीतवन्तः । 'ला आदाने ।' ममार्जुश्च विशुद्धान् कृतवन्तः तथा परश्वधान् ममृजुः परशून् शोधितवन्तः । मृजेरजादौ संक्रमे विभाषा वृद्धिः । योद्धृभिर्वक्ष्यमाणैः अलंचक्रे अलंकृतम् । समालेभे समालब्धम् । ववसे आच्छादितम् । 'वस आच्छादने ।' बुभुजे भुक्तम् । पपे पीतम् । भावे लिट् ॥ ९२ ॥

जहसे च क्षणं यानैर्निर्जग्मे योद्धृभिस्ततः ।
विप्रान् प्रहस्त आनर्च जुहाव च विभावसुम् ॥ ९३ ॥

जहस इत्यादि—क्षणं जहसे हसितम् । यानैः करणभूतैः निर्जग्मे निर्गतम् । ततः प्रहस्तः विप्रान् गोसुवर्णादिदानेन आनर्च पूजितवान् । विभावसुं चाग्निम् आज्यादिना जुहाव प्रीणितवान् ॥ ९३ ॥

संवर्गयांचकाराऽऽप्तान् चन्दनेन लिलेप च ।
चचाम मधु माद्वीकं स्वक्स्रं चाचकचे वरम् ॥ ९४ ॥

संवर्गयामित्यादि—आप्तान् विश्वासिनः संवर्गयांचकार कटकादिप्रदानेन संवर्गितवान् । संवर्गं करोतीति ण्यन्तस्य रूपम् । चन्दनेन

लिलेप समालब्धवान् । मृद्वीका द्राक्षा तस्याः विकारः मार्द्वीकं मधु चचाम । त्वक्त्रं च सन्नहनं वरं श्रेष्ठं आचकचे वद्धवान् । 'कच बन्धने' इत्यनुदात्तेत् ॥ ९४ ॥

**उष्णीषं मुमुचे चारु रथं च जुजुषे शुभम् ।**
**आललम्बे महास्त्राणि गन्तुं प्रववृते ततः ॥ ९५ ॥**

उष्णीषमित्यादि—उष्णीषं शिरस्त्राणं मुमुचे । रथं च जुजुषे । जुषिरनुदात्तेत् । महास्त्राणि आललम्बे गृहीतवान् । 'लबि अवस्रंसने' इत्यनुदात्तेत् । तत उत्तरकालं गन्तुं प्रववृते प्रवृत्तः ॥ ९५ ॥

**आजघ्नुस्तूर्यजातानि तुष्टुवुश्चानुजीविनः ।**
**रजः प्रववृधे घोरं घोषश्च व्यानशे दिशः ॥ ९६ ॥**

आजघ्नुरित्यादि—तूर्यजातानि वाद्यसमूहान् आजघ्नुः ताडितवन्तः । तन्नियुक्ता इत्यर्थात् । 'आङो यमहनः । १ । ३ । २८ ।' इति तङ् न भवति सकर्मकत्वात् । अनुजीविनश्च तुष्टुवुः । 'जय जीव' इति स्तुवन्ति स्म । पदक्षोभाद् घोरं रजः प्रववृधे वर्धते स्म । घोषश्च कलकलशब्दः दिशो व्यानशे व्याप्तवान् ॥ ९६ ॥

**तं यान्तं दुद्रुवुर्गृध्राः क्रव्यादश्च सिषेविरे ।**
**आववुर्वायवो घोराः, खादुल्काश्च प्रचक्षरुः ॥ ९७ ॥**

तं यान्तमित्यादि—तं प्रहस्तं गृध्राः यान्तम् अशुभसूचकाः दुद्रुवुर्गतवन्तः, क्रव्यादश्च शृगालाः सिषेविरे सेवितवन्तः, वायवो घोराः पांशुग्राहिणः आववुः समन्ताद्वान्ति स्म, उल्काश्च तदा तस्मिन् काले आकाशात्प्रचक्षरुः पतिताः । 'क्षर संचलने' इत्यकर्मकः ॥ ९७ ॥

**सस्यन्दे शोणितं व्योम रणाऽङ्गानि प्रजज्वलुः ।**
**रथाः प्रचस्खलुः साश्वा न ररंहाश्वकुञ्जरम् ॥ ९८ ॥**

सस्यन्द इत्यादि—व्योम कर्तृ शोणितं सस्यन्दे सिञ्चति स्म । स्यन्दिः सकर्मकः । रणाङ्गानि खड्गादीनि जज्वलुः ज्वलन्ति स्म । साश्वाः सहाश्वैः रथाः प्रचस्खलुः स्खलन्ति स्म । अश्वकुञ्जरं न ररंह न गतम् हया गजाश्च नगन्तुं प्राभवन्नित्यर्थः ॥ ९८ ॥

---

१ 'अशू व्याप्तौ संघाते च' इत्यनुदात्तेत् । लिट् ।

प्रतोदा जगलुर्वाममानञ्चुर्यज्ञिया मृगाः ।
ददाल भूः पुपूरे द्यौः कपीनामपि निःस्वनैः ॥ ९९ ॥

प्रतोदा इत्यादि—प्रतोदाः जगलुः हस्तेभ्यो गलिताः । 'गल अदने' अनेकार्थत्वात्पतनेऽपि । मृगाः यज्ञियाः यज्ञार्हाः कृष्णसाराः । 'यज्ञर्त्विग्भ्यां घखञौ ।५।१।७१।' वाममङ्गमानञ्चुः गतवन्तः । 'अत आदेः ।७।१।७०'। इति दीर्घे ।'तस्मान्नुड् द्विहलः ।७।४।७१।'इति नुट् । भूर्ददाल विदीर्णा । जज्वालेति पाठान्तरं चचालेत्यर्थः । कपिनिःस्वनैर्द्यौराकाशं पुपूरे पूर्णम् । दिवः पूरणनिमित्तं यतः कपयो हर्षोत्तद्विनाशसूचका एवमाचरन्ति ॥ ९९ ॥

मिमेह रक्तं हस्त्यश्वं राक्षसाश्च नितिष्ठिवुः ।
ततः शुशुभतुः सेने निर्दयं च प्रजह्रतुः ॥ १०० ॥

मिमेहेत्यादि—हस्त्यश्वं कर्तृ रक्तं मिमेह मूत्रितवदित्यर्थः ।' मिह सेचने ।' राक्षसाश्च स्वरक्तं नितिष्ठिवुः निरस्तवन्तः । ततो दुर्निमित्तादनन्तरं ते सेने सन्नद्धे शुशुभतुः शोभितवत्यौ । निर्दयं प्रजह्रतुः प्रहृतवत्यौ ॥ १०० ॥

दिद्विषुर्दुद्युवुश्चच्छुश्चक्लमुः सुषुपुर्हताः ।
चखादिरे चखादुश्च विलेपुश्च रणे भटाः ॥ १०१ ॥

दिद्विषुरित्यादि—रणे भटाः दिद्विषुः परस्परं द्विष्टवन्तः ।' द्विष अप्रीतौ ।' दुद्युवुः अभिमुखं गतवन्तः ।' द्यु अभिगमने ।' चच्छुः छिन्नवन्तः ।' छो छेदने ।' हताश्चक्लमुः मूर्च्छां गतवन्तः । सुषुपुः भूमौ पतिताः । वच्यादिना सम्प्रसारणम् । चखादिरे खादिताः । कर्मणि लिट् । चखादुः खादितवन्तः । विलेपुश्च विलापं कृतवन्तः । 'अत एकहल्मध्येऽनादेशादेर्लिटि ।६।४।१२०।' इत्येत्वम् ॥ १०१ ॥

प्रहस्तस्य पुरोऽमात्यान् जिहिंसुर्दधृषुस्तथा ।
वानराः कर्म सेनानी रक्षसां चक्षमे न तत् ॥ १०२ ॥

प्रहस्तस्येत्यादि—अमात्यान् सचिवान् प्रहस्तस्य पुरोऽग्रतः वानरा जिहिंसुर्हतवन्तः । तथा दधृषुः परिभूतवन्तः ।' ञिधृषा प्रागल्भ्ये' । तच्च कर्म वानरैर्यत्कृतं रक्षसां सेनानीः प्रहस्तः न चक्षमे स्म ॥ १०२ ॥

---

१ हस्तिनश्चाश्वाश्चेति यथोक्तम् । 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २ । ४ । २' इत्येकवचनम् ।

ऊर्णुनाव स शस्त्रौघैर्वानराणामनीकिनीम् ।
शशास च बहून् योधान् जीवितेन विवेच च ॥ १०३ ॥

ऊर्णुनावेत्यादि—स सेनानीर्वानराणामनीकिनीः[1] सेनाः शस्त्रैरूर्णुनाव छादितवान् । ऊर्णोतेर्णुवद्भावादिजादेरित्याम् न भवति । शशास च योधान् । 'शसु हिंसायाम् ।' जीवितेन च विवेच पृथक्कृतवान् ।'विचिर् पृथग्भावे'इति रुधादौ स्वरितेत् ॥ १०३ ॥

आससञ्ज भयं तेषां दिद्युते च यथा रविः ।
नाययास द्विषद्देहैर्जगाहे च दिशो दश ॥ १०४ ॥

आससञ्जेत्यादि—तेषां योधानां युयुत्सूनां भयमाससञ्ज आलग्नम् । 'षञ्ज सङ्गे' इत्यकर्मकः । प्रहस्तश्च रविरिव दिद्युते द्योतते स्म । 'द्युतिस्वाप्योः सम्प्रसारणम् ।७।४।६७।' इत्यभ्यासस्य सम्प्रसारणम् । नाययास युध्यमानो नायस्यति स्म । 'यसु प्रयत्ने ।' द्विषद्देहैश्च शत्रुकायैः करणभूतैः दश दिशो जगाहे अवष्टब्धवान् ॥ १०४ ॥

केचित् संचुकुटुर्भीता लेजिरेऽन्ये पराजिताः ।
संग्रामाद् बभ्रशुः केचिद् ययाचुश्चापरेऽभयम् ॥ १०५ ॥

केचिदित्यादि—केचिद्भीताः सन्तः संचुकुटुः संकुटिताः । निष्प्रयत्नाः स्थिता इत्यर्थः । 'कुट कौटिल्ये' अन्ये पराजिताः सन्तः लेजिरे भर्त्सिताः।प्रहस्तेन मृगा इव कातरा यूयमिति ।'लज-लाजि भर्त्सने !' कर्मणि लिट् । केचित् संग्रामाद्बभ्रशुः पलायिताः 'भ्रशु भ्रंशु अधःपतने ।' अपरे चाभयं ययाचुः याचितवन्तः ॥ १०५ ॥

एवं विजिग्ये तां सेनां प्रहस्तोऽतिददर्प च ।
शशाम न च संक्रुद्धो निर्जुगोप निशाचरान् ॥ १०६ ॥

एवमित्यादि—एवमुक्तेन प्रकारेण प्रहस्तस्तां सेनां विजिग्ये जितवान् । 'विपराभ्यां जेः ।१।३।१९।' इति तङ् ।' सँल्लिटोर्जेः ।७।३।५७।' इति कुत्वम् । अतिददर्प च सुष्ठु हृष्टवान् ।' दृप हर्षविमोचनयोः' । न च शशाम न च शमं गतः । निशाचरान् स्वीयानमात्यान् निर्जुगोप रक्षितवान् । आयाभावपक्षे रूपम्॥ १०६ ॥

---

१ 'पृतनानीकिनी चमूः ।' इत्यमरः ।

चुक्रुधे तत्र नीलेन तरुश्चोच्चिक्षिपे महान् ।
प्रहस्तोऽभिहतस्तेन बाणान् विससृजे बहून् ॥ १०७ ॥

चुक्रुध इत्यादि---तत्र तस्मिन् संग्रामे नीलेन चुक्रुधे क्रुद्धम् । भावे लिट् । तरुश्चोच्चिक्षिपे । उत्क्षिप्तः । कर्मणि लिट् । तेन तरुणा उन्मूलितेनाभिहतः सन् प्रहस्तो बहून्बाणान् विससृजे क्षिप्तवान् । 'सृज विसर्गे' इति दैवादिकोऽनुदात्तेत् ॥ १०७ ॥

सेहे कपी रथाश्वांश्च रिपोस्ततर्ह शाखिना ।
धरित्रीं मुसली तेये प्रहस्तश्चिखिदे न च ॥ १०८ ॥

सेहे इत्यादि—कपिर्नीलो बाणान् सेहे सोढवान् । रथानश्वांश्च रिपोः प्रहस्तस्य शाखिना तरुणा ततर्ह हतवान् । 'तृह हिंसि हिंसायाम् ।' हतरथाश्वश्च प्रहस्तो मुसली गृहीतमुसलः धरित्रीं तेये गतवान् । 'अय वय—' इत्यत्र तयिरनुदात्तेत् । न च चिखिदे न खिन्नः । 'खिद दैन्ये' इत्यनुदात्तेत् ॥ १०८ ॥

संदुधुक्षे तयोः कोपः पस्फाये शस्त्रलाघवम् ।
नुनोद शाखिनं नील आवव्रे मुसली तरुम् ॥ १०९ ॥

सन्दुधुक्ष इत्यादि–तयोर्नीलप्रहस्तयोः कोपः संदुधुक्षे वृद्धिं गतः । शस्त्रलाघवमस्त्रकौशलं पस्फाये वृद्धिं गतम् । नुनोद शाखिनं नीलः प्रेरितवान् । मुसली प्रहस्तः तरुमावव्रे मुसलेनावृतवान् ॥ १०९ ॥

वियत्यानभ्रतुर्भूमौ मण्डलानि विचेरतुः ।
प्रदुद्रुवतुरन्योन्यं वीरौ शश्रमतुर्न च ॥ ११० ॥

वियतीत्यादि—वीरौ तौ वियति आकाशे आनभ्रतुः गतौ । 'अभ्र वभ्र' इति गत्यर्थः । वियतोऽधिकरणत्वेन विवक्षितत्वात् द्वितीया न कृता । भूमौ च मण्डलानि तिर्यग्भ्रमणानि विचेरतुः आचरितवन्तौ । अन्योन्यं प्रदुद्रुवतुः उपतापितवन्तौ । न च शश्रमतुः न श्रान्तौ ॥ ११० ॥

समीरयाञ्चकाराथ राक्षसस्य कपिः शिलाम् ।
क्षतस्तया ममारासावाशिश्राय च भूतलम् ॥ १११ ॥

समीरयामित्यादि–अथानन्तरं कपिः राक्षसस्य शिलां समीरयांचकार क्षिप्तवान् ।'ईर क्षेपे' इति चौरादिक उदात्तेत् । असौ राक्षसस्तया शिलया हतः सन् ममार मृतवान् । भूतलं च आशिश्राय आश्रितवान् । तत्र पतित इत्यर्थः ॥१११॥

---

१ 'वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ।' इत्यमरः ।

तुतुषुर्वानराः सर्वे नेशुश्चित्रा निशाचराः ।
जेरुराशा दशास्यस्य सैन्यं नीलं नुनाव च ॥ ११२ ॥

तुतुषुरित्यादि--वानराः सर्वे तुतुषुः तुष्टाः । निशाचरा नेशुः पलायिताः । विचित्राः नानाप्रकाराः दशास्यस्य आशा मनोरथा जेरुः जीर्णाः। 'वा जॄभ्रमुत्रसाम् । ६ । ४ । १२४ ।' इत्येत्वम् । सैन्यं च कर्तृ नीलं नुनाव स्तौति स्म ॥ ११२ ॥

यदा न फेलुः क्षणदाचराणां मनोरथा रामबलाभियोगे ।
लङ्कां तदा भेजुरुदीर्णदैन्या व्याचख्युरुच्चैश्च हतं प्रहस्तम् ॥ ११३ ॥

यदेत्यादि--क्षणदाचराणां रामबलाभियोगे मनोरथा वाञ्छितानि यदा न फेलुः न फलिताः, प्रहस्तस्य व्यापादितत्वात् । तदा लङ्कां भेजुः सेवितवन्तः । उदीर्णदैन्याः उदीर्णं महद्दैन्यं दीनभावो येषामिति । प्रहस्तं च हतं मृतमुच्चैराचख्युः आख्यातवन्तः । रावणायेत्यर्थात् ॥ ११३ ॥

इति श्रीजयमङ्गलसूरिविरचितया जयमङ्गलाऽऽख्यया व्याख्यया
समलंकृते श्रीभट्टिप्रणीते रामचरिते काव्ये चतुर्थे तिङन्त-
काण्डे लक्षणरूपे प्रथमः परिच्छेदः, लक्ष्यरूपे
कथानके 'शरबन्धो' नाम चतुर्दशः सर्गश्च ।

## पञ्चदशः सर्गः--

इतः प्रभृति[1] लुङमधिकृत्य[2] तद्विलसितमाह । तत्र भूतसामान्ये लुङ् । ततोऽन्यत्रापि दर्शयिष्यति--

राक्षसेन्द्रस्ततोऽभैषीदैक्षिष्ट परितः पुरम् ।
प्रातिष्ठिपच्च बोधार्थं कुम्भकर्णस्य राक्षसान् ॥ १ ॥

राक्षसेत्यादि--ततः प्रहस्तवधश्रवणानन्तरं 'ईदृशोऽपि व्यापादितः' इति अभैषीत् । 'सिचि वृद्धिः परस्मैपदेषु ७।२।१।' इति वृद्धिः परितः समन्तात् पुरं लङ्कामैक्षिष्ट दृष्टवान् । 'किमत्र शक्यते स्थातुं न वा' इति । कुम्भकर्णस्य सुप्तस्य बोधार्थं राक्षसान् प्रातिष्ठिपत् प्रस्थापितवान् । तिष्ठतेश्चङ्परे णावुपधाह्रस्वस्यापवादः।'तिष्ठतेरित् । ७ । ४।५ ।' इतीत्वम् । द्विर्वचनमभ्यासकार्यम् । षत्वं ष्टुत्वं च ॥ १ ॥

---

१ प्रवृद्धमित्यर्थः । २ अत्रोपजातिश्छन्दः । ३ इदमारभ्येत्यर्थकमव्ययम् ।

तेऽभ्यगुर्भवनं तस्य सुप्तं चैक्षिषताथ तम् ।
व्याहार्षुस्तुमुलाञ्शब्दान्दण्डैश्चावधिषुर्द्रुतम् ॥ २ ॥

तेऽभ्यगुरित्यादि—ते राक्षसास्तस्य कुम्भकर्णस्य भवनं गृहम् अभ्यगुः गताः । 'इणो गा लुङि ।२।४।४५।' इति लुङि गादेशः । 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । २।४।७७।' इति सिचो लुक् । 'उस्यपदान्तात् ।६।१।९६।' इति पररूपत्वम् । ते च सुप्तमैक्षिषत दृष्टवन्तः । अथानन्तरं प्रबोधार्थं तुमुलान्महतो ध्वनीन् व्याहार्षुः व्याहृतवन्तः । दण्डैश्च द्रुतं शीघ्रमवधिषुः आहतवन्तः ॥ २ ॥

केशानलुञ्चिषुस्तस्य गजान् गात्रेष्वचिक्रमन् ।
शीतैरभ्यषिचंस्तोयैरलातैश्चाप्यदम्भिषुः ॥ ३ ॥

केशानित्यादि—तस्य केशानलुञ्चिषुः उत्पाटितवन्तः । गात्रेषु गजानचिक्रमन् क्रमयन्ति स्म । क्रमेर्मान्तत्वान्मित्संज्ञायां ह्रस्वत्वम् । चङि सन्वद्भावादभ्यासस्य 'सन्यतः ।७।४।७९।' इति इत्वम् । शीतैस्तोयैरभ्यषिचन् सिञ्चन्ति स्म । अत्र सिचिरभ्युक्षणे वर्तते । तेनोदकस्य करणत्वम् । 'लिपिसिचिह्वश्च । ३ । १ । ५३ ।' इत्यङ् । 'प्राक् सितादड्व्यवायेऽपि । ८ । ३ । ६३ ।' इति षत्वम् । अलातैरङ्गारैश्चाप्यदम्भिषुः दग्धवन्तः । अनेकार्थत्वाद्धातूनाम् ॥ ३ ॥

नखैरकर्तिषुस्तीक्ष्णैरदाङ्क्षुर्दशनैस्तथा ।
शितैरतौत्सुः शूलैश्च भेरीश्चावीवदन् शुभाः ॥ ४ ॥

नखैरित्यादि—तीक्ष्णैर्नखैरकर्तिषुश्छिन्नवन्तः । तथा दशनैस्तीक्ष्णैरदाङ्क्षुः दशन्ति स्म । दंशेरनिटो हलन्तलक्षणा वृद्धिः । 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ।८।२।३६।' इति षत्वम् । 'षढोः कः सि ।८।२।४१।' । शितैस्तीक्ष्णैः शूलैरतौत्सुः व्यथयन्ति स्म । तुदेरनिटो हलन्तलक्षणा वृद्धिः । भेरीश्च शुभाः उच्चैःशब्दा अवीवदन् वादितवन्तः । 'सन्वल्लघुनि चङ्परेऽनग्लोपे ।७।४।९३।' इति सन्वद्भावादभ्यासस्येत्वं 'दीर्घो लघोः ।७।४।९४।' इति दीर्घत्वम् ॥ ४ ॥

स तान् नाजीगणत् सर्वानिच्छयाबुद्ध च स्वयम् ।
अबूबुधत कस्मान् मामप्राक्षीच्च निशाचरान् ॥ ५ ॥

---

१ दन्तैरित्यर्थः ।

स तानित्यादि—स कुम्भकर्णः तान् सर्वान् उपद्रवान् नाजीगणत् न गणयति स्म न वेदितवानित्यर्थः । गणेः स्वार्थिकण्यन्तस्यादन्तस्याभ्यासस्य 'ई च गणः । ७ । ४ । ९७ ।' इतीत्वम् । स्वयं चात्मन इच्छयाबुद्ध बुध्यते स्म । 'झलो झलि । ८ । २ । २६ ।' इति सिचो लोपः । निशाचरांश्चाप्राक्षीत् पृष्टवान् । हलन्तलक्षणा वृद्धिः । 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः । ८ । २ । ३६ ।' इति षत्वम् । 'षढोः कः सि ।८।२।४१।' कस्मान्मामबूबुधत यूयं प्रबोधितवन्तः । बुधेर्ण्यन्तस्य मध्यमपुरुषबहुवचने 'णौ चङ्युपधाया ह्रस्वः ।७।४ । १ ।'इति ह्रस्वत्वम् । अभ्यासस्य 'दीर्घो लघोः ।७।४।९४।' इति दीर्घत्वम् ॥ ५ ॥

तेऽभाषिषत राजा त्वां दिदृक्षुः क्षणदाचर ।
सोऽस्नासीद् व्यलिपन्मांसमप्सासीद्वारुणीमपात् ॥ ६ ॥

त इत्यादि—ते राक्षसास्तथोक्ताः सन्तः अभाषिषत भाषितवन्तः । हे क्षणदाचर ! राजा रावणस्त्वां दिदृक्षुः द्रष्टुमेषणशील इति । 'न लोकाव्ययनिष्ठाखलर्थतृनाम् । २ । ३ । ६९ ।' इति षष्ठीप्रतिषेधः । स कुम्भकर्णः श्रुत्वा अस्नासीत् स्नातवान् । 'यमरमनमातां सक् च ।७।२।७३।' इति सगिटौ । व्यलिपत् समालिप्तवान् । 'लिपिसिचिह्वश्च ।३।१।५३।' इत्यङ् । मांसमप्सासीत् 'प्सा भक्षणे ।' वारुणीमपात् पीतवान् । 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।२।४।७७।' इति सिचो लुक् ॥ ६ ॥

न्यवसिष्ट ततो द्रष्टुं रावणं प्रावृतद् गृहाद् ।
राजा यान्तं तमद्राक्षीदुदस्थाच्चेषदासनात् ॥ ७ ॥

न्यवसिष्टेत्यादि—ततो रावणं द्रष्टुं न्यवसिष्ट पूर्वनिवसितं वसनं त्यक्त्वा अन्यद्वस्त्रं परिदधाति स्म।गृहात् स्वस्मात्प्रावृतत् प्रवृत्तः।'द्युद्भ्यो लुङि।१।३।९१।' इति परस्मैपदम् । 'पुषादिद्युताद्यॢदितः परस्मैपदेषु । ३ । १ । ५५ ।' इति अङ् । तमायान्तं राजाद्राक्षीत् दृष्टवान् । 'सृजिदृशोर्झल्यमकिति ।६।१।५८।' इत्यम् । हलन्तलक्षणा वृद्धिः । आसनाच्च ईषदुदस्थात् उत्थितः ऊर्ध्वकर्मकत्वादात्मनेपदं न भवति ॥ ७ ॥

अतुषत् पीठमासन्ने निरदिक्षच्च काञ्चनम् ।
अस्मेष्ट कुम्भकर्णोऽल्पमुपाविक्षदथान्तिके ॥ ८ ॥

अतुषदित्यादि—दृष्ट्वा चातुषत् तुष्टः । पुषादित्वादङ् । आसन्ने चात्मनः काञ्चनं पीठं निरदिक्षत् आदिष्टवान् । 'दिशेः' 'शल इगुपधादनिटः क्सः ।३।१।४५।' इति क्सः । अथानन्तरं कुम्भकर्णः अस्मेष्ट ईषद्धसितवान् । स चार्थो येनायमादर इति । अन्तिके चास्य काञ्चनं पीठमध्यास्य पीठे उपाविक्षत् उपविष्टः । पूर्ववत् क्सः ॥ ८ ॥

अवादीन्मां किमित्याह्वो राज्ञा च प्रत्यवादि सः ।
माज्ञासीस्त्वं सुखी रामो यदकार्षीत् स रक्षसाम् ॥ ९ ॥

अवादीदित्यादि—तत उपविश्य तमवादीदुक्तवान् । 'वदव्रजहलन्तस्याचः । ७ । २ । ३ ।' इति वृद्धिः । किमिति कस्मात् कारणात् मामाह्वः आहूतवान् । 'लिपिसिचिह्वश्च ।३।१।५३।' इत्यङ् । 'आतो लोपः । ६ । ४ । ६४ ।' इति लोपे आह्वः राज्ञा च स कुम्भकर्णः प्रत्यवादि प्रत्युक्तः । कर्मणि लुङ् ।'चिण् 'भावकर्मणोः । ३ । १ । ६६ ।' इति चिण् । 'चिणो लुक् । ६ । ४ । १०४ ।' इति तलोपः । सुखी त्वं येन रामो रक्षसां यदकार्षीत् तत्त्वं मा ज्ञासीः न ज्ञातवानसि । 'यमरमनमातां सक्च । ७ । २ । ७३ ।' इति सगिटौ ॥ ९ ॥

उदतारीदुदन्वन्तं पुरं नः परितोऽरुधत् ।
व्यद्योतिष्ट रणे शस्त्रैरनैषीद्राक्षसान् क्षयम् ॥ १० ॥

उदतारीदित्यादि—स हि उदन्वन्तं[1] समुद्रमुदतारीत् उत्तीर्णः । 'सिचि वृद्धिः परस्मैपदेषु ।७।२।१।' नोऽस्माकं पुरं परितः समन्तादरुधत् आवृतवान् । 'इरितो वा ।३।१।५७।' इत्यङ् । रणे शस्त्रैर्व्यद्योतिष्ट द्योतितवान् । द्युताद्भ्यो लुङीति विकल्पेन परस्मैपदविधानादात्मनेपदम् । राक्षसान् क्षयं विनाशमनैषीत् नीतवान् ॥ १० ॥

न प्रावोचमहं किंचित् प्रियं यावदजीविषम् ।
बन्धुस्त्वमर्चितः स्नेहान्मा द्विषो न वधीर्मम ॥ ११ ॥

न प्रावोचमित्यादि—यावदजीविषं यावन्तं कालं जीवितः तावन्तं कालं कस्यचित्प्रियं किंचिन्न प्रावोचं नोक्तवानहमिति तव विदितमेव । किन्तु बन्धुस्त्वं स्नेहादर्चितः सन् मम संबन्धिनो द्विषः शत्रून् मा न वधीः मा न मारय किन्तु मारयेति।'माङि लुङ्।३।३।१७५।'इति सर्वलकारापवादः । लुङ् प्रावोचमिति 'वच उम् ।७।४।२२।' ॥ ११ ॥

---

१ उदकानि सन्त्यत्रेति तम् । 'उदन्वानुदधौ च ८ । २ । १३ ।'इति साधु ।

वीर्यं मा न दर्शस्त्वं मा न त्रास्थाः क्षतां पुरम् ।
तवाद्राक्ष्म वयं वीर्यं त्वमजैषीः पुरा सुरान् ॥ १२ ॥

वीर्यमित्यादि—त्वं वीर्यं मा न ददर्श किन्तु दर्शय । ण्यन्तस्य चङि रूपम् । क्षतां परैरवसादितां पुरं मा न त्रास्थाः किन्तु त्रायस्व । 'त्रैङ् पालने' । न च त्वमशक्तः यतस्तव वीर्यमद्राक्ष्म दृष्टवन्तो वयम् । 'न दृशः ।३।१।४७।' इति निषेधात् क्सादेशो न भवति । 'इरितो वा ।३।१।५७।' इति विकल्पेनाङ्विधानात्तदभावपक्षे रूपम् । पुरा पूर्वं त्वं सुरान् देवानजैषीः जितवानसि ॥ १२ ॥

अवोचत्कुम्भकर्णस्तं वय मन्त्रेऽभ्यधाम यत् ।
न त्वं सर्वं तदश्रौषीः फलं तस्येदमागमत् ॥ १३ ॥

अवोचदित्यादि—इत्युक्तवन्तं तं रावणं कुम्भकर्णोऽवोचत् उक्तवान् । मन्त्रे मन्त्रणसमये 'क्रियासमारम्भगतोऽभ्युपायः' इत्यादिना यद्वयमभ्यधाम अभिहितवन्तः । धाधातोः 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।२।४।७७।' इति सिचो लुक् । तत्सर्वं त्वं नाश्रौषीः न श्रुतवानसि । तस्याश्रवणस्येदं फलं विनाशरूपमागमत् आगतम् । गमेर्लृदित्त्वादङ् ॥ १३ ॥

प्राज्ञवाक्यान्यवामंस्था मूर्खवाक्येष्ववाऽस्थिथाः ।
अध्यगीष्ठाश्च शास्त्राणि प्रत्यपत्था हितं न च ॥ १४ ॥

प्राज्ञवाक्यानीत्यादि—प्राज्ञानां[1] विभीषणादीनां वाक्यान्यवामंस्थाः अवज्ञातवानसि । 'मन ज्ञाने ।' मूर्खवाक्येषु प्रहस्तादिवाक्येषु अवास्थिथाः अवास्थितोऽसि । 'समवप्रविभ्यः स्थः ।१।३।२२।' इति तङ् । स्थाघ्वोरिच्च ।१।२।१७।' त्वं च शास्त्राण्यध्यगीष्ठा अधीतवानसि । 'विभाषा लुङ्लृङोः । २ । ४ । ५० ।' इति इङो गाङादेशः । न च हितं प्रत्यपत्थाः प्रतिपन्नवानसि । 'पद गतौ' । 'झलो झलि । ८ । २ । २६ ।' इति सिचो लोपः ॥ १४ ॥

मूर्खास्त्वामववञ्चन्त ये विग्रहमचीकरन् ।
अभाणीन्माल्यवान्युक्तमक्षंस्थास्त्वं न तन्मदात् ॥ १५ ॥

---

१ प्रज्ञैषामस्तीति तथोक्तानाम् । 'प्रज्ञाश्रद्धार्चाभ्यो णः ५ । २ । १०१ ।' इति णः । बुद्धिमतामित्यर्थः ।

मूर्खा इत्यादि—मूर्खाः सर्वे एवैते त्वामववञ्चन्त विप्रलब्धवन्तः । 'वञ्चु प्रलम्भने' ण्यन्तस्य 'गृधिवञ्च्योः प्रलम्भने ।१।३।६९।' इति तङि चङि रूपम् । ये विग्रहमचीकरन् कारितवन्तो भवन्तम् । एष मातामहो माल्यवान् युक्तमभाणीत् भणितवान् । 'भण शब्दे ।' 'इट ईटि ।८।२।२८।' इति सिचो लोपः । तत् त्वं मदान्नाक्षंस्थाः न सोढवानसि । 'क्षमूष् सहने' ॥ १५ ॥

राघवस्यामुसः कान्तामाप्तैरुक्तो न चाऽर्पिपः ।
मा नानुभूः स्वकान्दोषान्मा मुहो मा रुषोऽधुना ॥ १६ ॥

राघवस्येत्यादि—प्रमादित्वमपि तेऽस्ति । यतो राघवस्य कान्ताम् अमुसः खण्डितवानसि । खण्डनं चास्या इदं यद्भर्त्रा वियोजनम् । 'मुस खण्डने ।' पुषादित्वादङ् पुषादयश्च गणान्ता गृहीताः । आप्तैर्विभीषणादिभिरुक्तो न चार्पिपः नार्पितवानसि कान्ताम् । अर्तेर्णौ 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ ।७।३।३६।' इति पुकि पुगन्तगुणः । चङि 'द्विर्वचनेऽचि ।१।१।५९' इति स्थानिवद्भावात् 'अजादेर्द्वितीयस्य ।६।१।२।' इति पिशब्दो द्विरुच्यते । रेफस्य 'न न्द्राः संयोगादयः ।६।१।३।' इति प्रतिषेधः । तदधुना स्वकानात्मीयान्दोषान् दुश्चरितानि मा नानुभूः अपि त्वनुभव । 'माङि लुङ् ।३।३।१७५।' । 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।२।४।७७।' इति सिचो लुक् । मा मुहः मोहं मा गमः । मा रुषः रोषं मा कार्षीः । मुहिरुषिभ्यां पुषादित्वादङ् ॥ १६ ॥

तस्याप्यत्यक्रमीत्कालो यत्तदाहमवादिषम् ।
अघानिषत रक्षांसि परैः कोशांस्त्वमव्ययीः ॥ १७ ॥

तस्येत्यादि—तत्तदा तस्मिन् कालेऽहमवादिषम् अभिहितवानस्मि । 'रामः सन्धीयताम्' इति तस्यापि सन्धेः कालोऽत्यक्रमीदतिक्रान्तः । 'स्नुक्रमोरनात्मनेपदनिमित्ते ।७।२।३६।' इतीट् । मान्तत्वाद्वृद्धिप्रतिषेधः । यतः परैः शत्रुभिः रक्षांस्यघानिषत हतानि । चिण्वद्भावाद्वृद्धिघत्वे । त्वं च कोशमव्ययीः त्यक्तवानसि । लङ्कादाहे तस्यारक्षिततत्वात् । 'व्यय वित्तसमुत्सर्गे' इति चुरादौ पठ्यते । यदा 'आधृषाद्वा' इति णिज् नास्ति तदा रूपम् । ह्ययन्तक्षणश्वसजागृणिश्व्येदिताम् । ७ । २ । ५ ।' इति

१ विश्वासिभिः, हितैषिभिरिति यावत् । 'आप्तः प्रत्ययितस्त्रिषु ।' इत्यमरः ।

वृद्धिप्रतिषेधः । 'व्यय गतौ' इत्यस्यापि रूपम् । अनेकार्थत्वाद्धातूनामुत्सर्जनेऽपि द्रष्टव्यम् ॥ १७ ॥

सन्धानकारणं तेजो न्यगभूत्तेऽकृथास्तथा ।
यत् त्वं वैराणि कोशं च सहृदण्डमजिग्लपः ॥ १८ ॥

सन्धानेत्यादि---तथा त्वमकृथाः कृतवानसि । 'तनादिभ्यस्तथासोः ।२।४।७९।' इति सिचो लुक् । यथा सन्धानकारणं सन्धानहेतुकं यत्तव तेजः प्रचण्डत्वं तत् न्यगभूत् न्यग्भूतम् । 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।२।४।७७। इति सिचो लुक् । कुत इत्याह । यत्त्वं वैराणि शत्रुभावान् कोशं च सहृदण्डं ससैन्यमजिग्लपः ग्लपितवानसि । ग्लायतेर्णौ पुकि 'ग्लास्नावनुवमां च' इति मित्त्वात् ह्रस्वत्वम् । ग्लपयतेश्चङि रूपम् । यदि हि तेजो भवेत् सर्वं तथावस्थितमेव स्यात् ततश्च तेजसोऽभावात् कथं सन्धानं द्वयोः परस्परानुपतापात् । यथोक्तं यावन्मात्रमुपकुर्यात् तावन्मात्रमेवास्य प्रत्युपकुर्यात् । तेजो हि सन्धानकारणं तप्तं लोहं तप्तेन लोहेन सन्धत्त इति ॥ १८ ॥

अक्रुधच्चाभ्यधाद्वाक्यं कुम्भकर्णं दशाननः ।
किं त्वं मामजुगुप्सिष्ठा नैदिधः स्वपराक्रमम् ॥ १९ ॥

अक्रुधदित्यादि---अथैवमुक्ते दशाननः अक्रुधत् क्रुद्धवान् । पुषादित्वादङ् । क्रुद्धश्च कुम्भकरणमभ्यधात् अभिहितवान् । 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।२।४।७७।' इति सिचो लुक् । किमिति त्वं माम् अजुगुप्सिष्ठाः निन्दितवानसि । स्वविक्रमं नैदिधः न वर्धितवानसि । एधधातोर्ण्यन्तस्य चङि स्थानिवद्भावात् 'अजादेर्द्वितीयस्य ।६।१।२।' इति धिशब्दो द्विरुच्यते ॥ १९ ॥

मोज्जिग्रहः सुनीतानि मा स्म क्रंस्था न संयुगे ।
मोपालब्धाः कृतैर्दोषैर्मा न वाक्षीर्हितं परम् ॥ २० ॥

मोज्जिग्रह इत्यादि---सुनीतानि सुनयान् मा उज्जिग्रहः मा उद्ग्राहय । ग्रहेर्ण्यन्तस्य चङि रूपम् । संयुगे युद्धे विषयभूते मा क्रंस्था मोत्साहं न कार्षीः अपि तूत्सहस्व । 'स्मोत्तरे लङ् च ।३।३।१७६।' । इति चकाराल्लुङ् 'वृत्तिसर्गतायनेषु क्रमः ।१।३।३८।' इति क्रमेः सर्गे उत्साहे तङ् । दोषैः अस-

१ सन्धिहेतुकम् । 'सन्धानं स्यादभिषवे तथा सङ्घटनेऽपि च ।' इति विश्वः । सम्, धाञ्, भावे ल्युट् ।

त्कृतैः मोपालब्धाः मोपालभस्व । 'झलो झलि ।८।२।२६।' इति सिचो लोपः ।'झषस्तथोर्धोऽधः। ८ । २ । ४० ।' झलां जश झशि । ८ । ४ । ५३ ।' हितं परं कार्यस्य मा न वाक्षीः मा न वह । किन्तु वह । वहेरनिटो हलन्तलक्षणा वृद्धिः, ढत्वकत्वषत्वानि ॥ २० ॥

कुम्भकर्णस्ततोऽगर्जीद्भटांश्चान्यान्न्यवीवृतत्।
उपायंस्त महास्त्राणि निरगाच्च द्रुतं पुरः ॥ २१ ॥

कुम्भकर्ण इत्यादि—ततस्तद्वचनानन्तरं कुम्भकर्णोऽगर्जीत् गर्जितवान् । अन्यांश्च भटान् पृष्ठतो गच्छतो न्यवीवृतत् । निवर्तितवान् वृतेश्चङ्परे णावुपधाया 'उर्ऋत् । ७ । ४ । ७ ।' इत्यपवाद ऋकारादेशः । महास्त्राणि उपायंस्त स्वीकृतवान् । औपचारिकमत्र स्वीकरणं तेन तङ् । यदि वा उपाङ्पूर्वाद्यमेः समुदाङ्भ्यो यमोऽग्रन्थे । १ । ३ । ७५ ।' इति तङ् । पुरश्च लङ्कातः द्रुतं निरगात् निर्गतः । इणो गादेशः । 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । २ । ४ । ७७ ।' इति सिचो लुक् ॥ २१ ॥

मूर्ध्ना दिवमिवालेखीत्खं व्यापद् वपुषोरुणा ।
पादाभ्यां क्ष्मामिवाभैत्सीत् दृष्ट्याधाक्षीदिव द्विषः ॥ २२ ॥

मूर्ध्नेत्यादि---निर्गच्छन् मूर्ध्ना दिवमलेखीदिव लिखितवानिव । उरुणा महता वपुषा खं व्यापत् व्याप्तवान् । लृदित्त्वादङ् । क्ष्मां पृथ्वीं पादाभ्यामभैत्सीदिव विदारितवानिव । द्विषः शत्रून् दृष्ट्याधाक्षीदिव भस्मसात् कृतवानिव 'दह भस्मीकरणे'॥ २२ ॥

दग्धशैल इवाभासीत् प्राक्रंस्त क्षयमेघवत् ।
प्राचकम्पदुदन्वन्तं राक्षसानप्यतित्रसत् ॥ २३ ॥

दग्धशैल इत्यादि---महत्त्वात् कृष्णत्वाच्च दग्धशैलवदभासीत् भाति स्म । 'भा दीप्तौ' 'यमरमनमातां सक् च ।७।२।७३।' इति सगिटौ । क्षयमेघवत्प्राक्रंस्त प्रस्थितः । 'प्रोपाभ्यां समर्थाभ्याम् ।१।३।४२।' इति तङ् । प्रतिष्ठमानश्च उदन्वन्तमचकम्पत् कम्पितवान् । 'कपि चलने' । इदितो ण्यन्तस्य चङि रूपम् । राक्षसानपि अतित्रसत् त्रासितवान् । त्रसेर्ण्यन्तस्य चङि रूपम् ॥ २३ ॥

---

१ अहमेव सर्वशत्रुसैन्यदलं भक्षयिष्यामि इति न मे साहाय्यापेक्षेत्यभिप्रायात् ।

सपक्षोऽद्रिरिवाचालीन्न्यश्वसीत् कल्पवायुवत् ।
अभार्षीद्ध्वनिना लोकानभ्राजिष्ट क्षयाग्निवत् ॥ २४ ॥

सपक्ष इत्यादि—सपक्ष इवाद्रिः बाह्वोः पक्षानुकारित्वात् अचालीत् चलितः । लान्तत्वात्सिचि वृद्धिः । क्रोधात्कल्पान्तवायुवन्न्यश्वसीत् निश्वसितवान् । 'ह्ययन्तक्षणश्वसजागृणिश्व्येदिताम् ।७।२।५।' इति वृद्धिप्रतिषेधः । ध्वनिना लोकानभार्षीत् पूरितवान् । 'भृञ् भरणे ।' ईडन्तस्य सिचि वृद्धिः । अभ्राजिष्ट भ्राजते स्म । क्षयाग्निवत् पिङ्गलकेशत्वात्, लोकविनाशहेतुत्वाच्च ॥ २४ ॥

अनंसीद्भूर्भरेणास्य रंहसा शाखिनोऽलुठन् ।
सिंहाः प्राद्रुद्रुवन् भीताः प्राक्षुभन् कुलपर्वताः ॥ २५ ॥

अनंसीदित्यादि—अस्य भरेण भूरनंसीत् नता । 'यमरमनमातां सक् च । ७ । २ । ७३ ।' इति सगिटौ । रंहसा वेगेन शाखिनो वृक्षा अलुठन् पतिताः । 'रुठ लुठ प्रतिघाते' । द्युतादित्वादङ् । द्युतादीनामनुदात्तेत्त्वात्तङ् । 'द्युद्भ्यो लुङि ।१।३।९१।' इति परस्मैपदविकल्पः । सिंहाः भीताः सन्तः प्राद्रुद्रुवन् पलायिताः । 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् ।३।१।४८।' इति चङ । कुलपर्वताः प्राक्षुभन् संचलिताः । पुषादिद्युताद्य्लृदितः परस्मैपदेषु । ३ । १ । ५५ ।' इति द्युतादित्वादङ । पूर्ववन्नात्मनेपदम् ॥ २५ ॥

उत्पाताः प्रावृतंस्तस्य द्यौरशीकिष्ट शोणितम् ।
वायवोऽवासिषुर्भीमाः क्रूराश्चाकुषत द्विजाः ॥ २६ ॥

उत्पाता इत्यादि—तस्य गच्छत उत्पाताः प्रावृतन् प्रवृत्ताः । 'वृतु वर्तने' द्युतादिः । द्यौः शोणितमशीकिष्ट सिञ्चति स्म । 'शीकृ सेचने' अनुदात्तेत् । वायवो भीमाः प्रचण्डा अवासिषुर्वान्ति स्म । 'यमरमनमातां सक् च । ७ । २ । ७३ ।' इति सगिटौ । क्रूराश्चाशुभसूचका द्विजाः पक्षिणोऽकुषत शब्दिताः । 'कुङ् शब्दे' इत्यनिट । कुटादित्वात् सिचः कित्वे न गुणः ॥ २६ ॥

अस्पन्दिष्टाक्षि वामं च घोराश्चाराटिषुः शिवाः ।
न्यपप्तन् मुसले गृध्रा दीप्तयापाति चोल्कया ॥ २७ ॥

अस्पन्दिष्टेत्यादि—वामं चास्याक्षि अस्पन्दिष्ट स्पन्दते स्म । घोराः अनिष्टशंसिन्यः शिवाः अराटिषू रटन्ति स्म । 'अतो हलादेर्लघोः । ७ । २ । ७।' इति वृद्धिविकल्पः । गृध्रा मुसले न्यपप्तन् उपविष्टवन्तः । 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु । ३ । १ । ५५ ।' इति लृदित्त्वादङ् । 'पतः पुम् ।७।४।१९।' इति पुमागमश्च । दीप्तया उल्कया अपाति पतितम् । भावे चिणादेशः ॥ २७ ॥

आंहिष्ट तानसम्मान्य दर्पात् स प्रधनक्षितिम् ।
ततोऽनर्दीदनन्दीच्च शत्रूनाह्वास्त चाहवे ॥ २८ ॥

आंहिष्टेत्यादि—तान् उत्पातान् कुम्भकर्णोऽसंमान्य दर्पादवज्ञाय प्रधनक्षितिं युद्धभूमिमांहिष्ट गतवान् । तत उत्तरकालं अनर्दीत् गर्जितवान् 'क यास्यथेदानीम्' इति । अनन्दीच्च जयश्रियं श्लाघितवानित्यर्थः । आहवे संग्रामे शत्रूनाह्वास्त आहूतवान् । 'आगच्छत, युध्यध्वम्' इति । 'स्पर्धायामाङः । ३ । ३ । ३१ ।' इति तङ् । 'आत्मनेपदेष्वन्यतरस्याम् । ३ । १ । ५४ ।' इत्यङभावपक्षे रूपम् ॥ २८ ॥

प्राशीन्न चातृपत् क्रूरः क्षुच्चास्यावृधदश्नतः ।
अधाद् वसामधासीच्च रुधिरं वनवासिनाम् ॥ २९ ॥

प्राशीदित्यादि—प्राशीत् भक्षितवान् । वनवासिन इत्यर्थात् । न चासौ क्रूरः दुष्टचेता अतृपत् तृप्तवान् । पुषादित्वादङ् । अश्नतोऽप्यस्य खादतोऽपि कुम्भकर्णस्य क्षुत् बुभुक्षा अवृधत् वर्धते स्म ।'वृधु वृद्धौ' द्युतादिः । वनवासिनां वानराणां वसामधात् पीतवान् । 'विभाषा घ्राधेट्शाच्छासः ।२।४।७८।' इति सिचो लुक्पक्षे रूपम् । रुधिरं चाधासीत् । 'धेट् पाने' 'विभाषा धेट्श्व्योः । ३ । १ । ४९ ।' इति चङभावपक्षे रूपम् ॥ २९ ॥

मांसेनास्याश्वतां कुक्षी जठरं चाप्यशिश्वियत् ।
बहूनामग्लुचत् प्राणानग्लोचीच्च रणे यशः ॥ ३० ॥

---

१ 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ।' इत्यमरः। २ 'अभ्यामर्दसमाघातसङ्ग्रामाभ्यागमाहवाः ॥' इत्यमरः ।

मांसेनेत्यादि—वनवासिनां मांसेनास्य कुम्भकर्णस्य कुक्षी उदरपार्श्वौ अश्वतां शूनौ । 'जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुञ्चुश्विभ्यश्च ।३।१।५८।' इति अङ् । 'श्वयतेरः ।७।४।१८।' इत्यत्वम् । जठरं चोदरमशिश्वियत् वृद्धम् । 'विभाषा धेट्श्व्योः ।३।१।४९।' इति चङ् । इयङादेशः । बहूनां वनवासिनां प्राणानग्लुचत् हृतवान् । 'ग्रुचुग्लुचुकुजुखुजुस्तेयकरणे' । 'जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुञ्चुश्विभ्यश्च । ३ । १ । ५८ ।' इत्यादिना अङ्विकल्पनादङभावपक्षे रूपम् । यशश्च बहूनां रणे अग्लोचीत् अपनीतवान् ।'वञ्चुचञ्चु' इत्यादौ ग्लुचिर्गत्यर्थः । अङभावपक्षे रूपम् ॥ ३० ॥

सामर्थ्यं चापि सोऽस्तम्भीद् विक्रमं चाऽस्य नास्तभन् ।
शाखिनः केचिदध्यष्ठुर्न्यमाङ्क्षुरपरेऽम्बुधौ ॥ ३१ ॥

सामर्थ्यमित्यादि—स कुम्भकर्णः केषांचिद्बलवतामपि वनवासिनां सामर्थ्यमस्तम्भीत् नियमितवान् । अङभावपक्षे रूपम् । विक्रमं च केचिदस्य नास्तभन् न नियमितवन्तः । अङ्पक्षे रूपम् । क्ङितीत्यनुनासिकलोपः । केचिद्भयाद् वृक्षानध्यष्ठुः अधिष्ठितवन्तः । तिष्ठतेः 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २ । ४ । ७७ ।' इति सिचो लुक् । आदेशसकारस्य षत्वं ष्टुत्वं च । अपरेऽम्बुधौ न्यमाङ्क्षुर्निमग्नाः । 'मस्जिनशोर्झलि ।७।१।६०।' इति नुम् । मस्जेरन्त्यात्पूर्वं नुममिच्छन्ति । अनुषङ्गसंयोगादिलोपार्थम् ॥ ३१ ॥

अन्ये त्वलङ्घिषुः शैलान् गुहास्वन्ये न्यलेषत ।
केचिदासिषत स्तब्धा भयात् केचिदघूर्णिषुः ॥ ३२ ॥

अन्ये त्वित्यादि—अन्ये शैलानलङ्घिषुः भयादारूढा इत्यर्थः । अन्ये गुहासु न्यलेषत । 'लीङ् श्लेषणे' । केचित् स्तब्धाः स्थाणुवदासिषत आसत । अपरे भयात् भीत्या अघूर्णिषुः घूर्णन्ते स्म ॥ ३२ ॥

उदतारिषुरम्भोधिं वानराः सेतुनापरे ।
अलज्जिष्टाङ्गदस्तत्र प्रत्यवास्थित चोर्जितम् ॥ ३३ ॥

उदतारिषुरित्यादि—अपरे वानराः सेतुना अम्भोधिमुदतारिषुः उत्तीर्णाः । तत्र तेषु तथाभूतेष्वङ्गदोऽलज्जिष्ट लज्जते स्म । ऊर्जितं च पराक्रमं प्रत्यवास्थित प्रतिपन्नवान् । 'समवप्रविभ्यः स्थः ।१।३।२२।' इति तङ् । 'ह्रस्वादङ्गात् ।८।२।२७।' इति सिचो लोपः ॥ ३३ ॥

सत्त्वं समदुधुक्षच्च वानराणामयुद्ध च ।
ततः शैलानुदक्षैप्सुरुदगूरिषत द्रुमान् ॥ ३४ ॥

सत्त्वमित्यादि—वानराणां सत्त्वं समदुधुक्षत् सन्दीपितवान् । धुक्षेः सन्दीपनार्थात् ण्यन्ताच्चलेश्चङ् । स्वयमयुद्ध च युध्यते स्म । 'झलो झलि । ७ । २ २६ ।' इति सिचो लोपः । ततः सत्त्वधुक्षणानन्तरं वानराः शैलानुदक्षैप्सुः उत्क्षिप्तवन्तः । हलन्तलक्षणा वृद्धिः । द्रुमांश्चोदगूरिषत उत्थापितवन्तः 'गूरी उद्यमने' ॥ ३४ ॥

अनर्दिषुः कपिव्याघ्राः सम्यक् चायुत्सताहवे ।
तानमर्दीदखादीच्च निरास्थच्च तलाहतान् ॥ ३५ ॥

अनर्दिषुरित्यादि—उत्क्षिप्तशैलद्रुमाः कपिव्याघ्रा अनर्दिषुः नार्दितवन्तः । 'दृष्टोऽस्माभिः क यास्यसि' इति । सम्यक् निर्भयमाहवे अयुत्सत युध्यन्ते स्म । 'हलन्ताच्च । १ । २ । १८ ।' इति सिचः कित्त्वे गुणाभावः । तान् प्लवङ्गमान् युध्यमानान् कुम्भकर्णोऽमर्दीत् मृदितवान् । मृदेर्लघूपधगुणः । अखादीच्च भक्षितवान् । हस्ततलेनाहतान् निरास्थत् इतस्ततः क्षिप्तवान् । 'अस्यतिवक्तिख्यातिभ्योऽङ् । ३ । १ । ५२ ।' इत्यङ् । 'अस्यतेस्थुक् ।७।४।१७।' ॥ ३५ ॥

प्राचुचूर्णच्च पादाभ्यामबिभीषत च द्रुतम् ।
अतर्हीच्चैव शूलेन कुम्भकर्णः प्लवङ्गमान् ॥ ३६ ॥

प्राचुचूर्णदित्यादि—पादाभ्यां प्राचुचूर्णत् पिष्टवान् । 'चूर्ण प्रेरणे' इति चुरादिः । एवं चूर्णयन् द्रुतमबिभीषत भीषयते स्म 'भियो हेतुभये षुक् । ७ । ३ । ४० ।' । 'भीस्म्योर्हेतुभये । १ । ३ । ६८ ।' इति तङ् । शूलेन प्रहरणेन अतर्हीच्च विद्धवान् । 'तृहू हिंसायाम् ।' ह्यन्तत्वान्न वृद्धिः ॥ ३६ ॥

अतौत्सीद्धृदया गाढमपिषच्चोपगूहनैः ।
जानुभ्यामदमीच्चाऽन्यान् हस्तवर्तमवीवृतत् ॥ ३१ ॥

अतौत्सीदित्यादि—कांश्चिद्धृदया गाढमतौत्सीत् व्यथितवान् । उपगूहनैरापिषत् चूर्णितवान् । लृदित्त्वादङ् । अन्यांश्च जानुभ्यां अदमीत् शासितवान् । अवष्टभ्य नियमितवानित्यर्थः । 'ह्यन्तक्षणश्वसजागृणिश्व्येदिताम्

---

१ 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ।' इत्यमरोक्त्या सत्त्वं प्राणाः ।

।१।२।५।' इति न वृद्धिः । हस्तवर्तमवीवृतत् हस्ताभ्यां वर्तितवान् पिष्टवानित्यर्थः । वृतेर्ण्यन्तात् 'हस्ते वर्तिग्रहोः । ३ । ४ । ३९ ।' इति णमुल् । 'कषादिषु यथाविध्यनुप्रयोगः । ३ । ४ । ४६ ।' इति वृतेरेवानुप्रयोगः ॥ ३७ ॥

अदालिषुः शिला देहे चूर्ण्यभूवन् महाद्रुमाः ।
क्षिप्तास्तस्य न चाचेतीत्तानसौ नापि चाक्षुभत् ॥ ३८ ॥

अदालिषुरित्यादि—वानरैस्तस्य देह क्षिप्ताः शिला अदालिषुर्विशीर्णाः । 'दल विशरणे ।' भौवादिकः । लान्तत्वाद्वृद्धिः । महाद्रुमाश्चूर्ण्यभूवन्, चूर्णीभूताः । न च तान् क्षिप्तानसौ कुम्भकर्ण अचेतीत् चेतितवान् । 'चिती संज्ञाने ।' नापि चाक्षुभत् न क्षुभितः । क्षुभ संचलने' दिवादिः ॥ ३६ ॥

अद्राष्टां तं रघुव्याघ्रौ आख्यच्चैनं विभीषणः ।
एष व्यजेष्ट देवेन्द्रं नाशङ्किष्ट विवस्वतः ॥ ३९ ॥

अद्राष्टामित्यादि—तं तादृशौ रघुव्याघ्रौ रामलक्ष्मणावद्राक्षां दृष्टवन्तौ । विभीषणश्चैनमाख्यत् कथितवान् । 'कुम्भकर्णोऽयम्' इति 'अस्यतिवक्तिख्यातिभ्योऽङ् ।३।१।५२।' इत्यङ्। प्रभावं चास्य कथयन्नाह—देवेन्द्रमेष व्यजेष्ट विजितवान् । 'विपराभ्यां जेः ।१।६।१९।' इति तङ् । विवस्वतः सूर्यात् नाशङ्किष्ट न शङ्कते स्म ॥ ३८ ॥

यक्षेन्द्रशक्तिमच्छासी—न्नाप्रोथीदस्य कश्चन ।
कुम्भकर्णान्न भैष्टं मा युवामस्मान् नृपात्मजौ ॥ ४० ॥

यक्षत्यादि—यक्षेन्द्रस्य कुवेरस्य शक्तिं प्रहरणमच्छासीत् खण्डितवान् । 'छो छेदने ।' अस्य तु कश्चन काश्चित् नाप्रोथीत् न प्रभवति स्म । शक्त्यै प्रहरणायेत्यर्थात् ।' प्रोथृ पर्याप्तौ ।' पर्याप्तियोगे चतुर्थी न भविष्यति पर्याप्तेरविवाक्षितत्वात् । अतोऽस्मादेवंविधात् कुम्भकर्णान् युवां नृपात्मजौ मा न भैष्टं, किन्तु बिभीतम् ।' माङि लुङ् ।३।३।१७५।' मध्यमपुरुषद्विवचने रूपम् । माशब्दः प्रतिषेधे ॥ ४० ॥

---

१ 'द्वितीयाटौस्स्वेनः । २ । ४ । ३४ ।' इत्येतच्छन्दस्यैनादेशः । कुम्भकर्णमित्यर्थः ।

घ्नन्तं मोपेक्षिषाथां च मा न कार्ष्टमिहादरम् ।
अमुं मा न वधिष्टेति रामोऽवादीत्ततः कपीन् ॥ ४१ ॥

घ्नन्तमित्यादि—तस्मात् घ्नन्तमेनं युवां मोपेक्षिषाथां मोपेक्षकौ भूतमित्यर्थः । इह च कुम्भकर्णे आदरं मा न कार्ष्टम्, अपि तु कुरुतम् । ततो विभीषणवचनानन्तरं रामः कपीनवादीत् उक्तवान् । अमुं कुम्भकर्णं मा न वधिष्ट इति, किन्तु हतेति ।' लुङि च ।२।४।४२।' इति हनो वधादेशः ॥ ४१ ॥

ते व्यरासिषुराह्वन्त राक्षसं चाप्यपिप्लवन् ।
अबभासन् स्वकाः शक्तीर्द्रुमशैलं व्यकारिषुः ॥ ४२ ॥

त इत्यादि—ते वानराः हर्षाद् व्यरासिषुः किलकिलाशब्दं कृतवन्तः ।, 'अतो हलादेर्लघोः ।७।२।७।' इति वृद्धिः । राक्षसं च कुम्भकर्णमाह्वन्त स्पर्धमाना आहूतवन्तः ।'आत्मनेपदेष्वन्यतरस्याम् ।३।१।५४।' इति ह्वेञः पक्षे अङ् । अपिप्लवन् प्लावितवन्तः । अपिः शब्दार्थे । तथा कृतवन्तः यथासौ प्लुतिं कर्तुमारब्धः । प्लवतेर्ण्यन्तस्य चङि सन्वत्कार्यमिति । 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ।७।४।८१।' इत्यभ्यासस्येत्वम् । स्वका आत्मीयाः शक्तीरबभासन प्रकाशयान्ति स्म । भासेर्ण्यन्तस्य चङि: 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् । ७ । ४ । ३ ।' इति उपधाह्रस्वविकल्पः। द्रुमाश्च शैलाश्चेति द्रुमशैलम् । 'जातिरप्राणिनाम् । २ । ४ । ६ ।' इत्येकवद्भावः । व्यकारिषुः तदुपरि क्षिप्तवन्तः । 'कॄ विक्षेपे' लुङ् ॥ ४२ ॥

ते तं व्याशिषताक्षौत्सुः पादैर्दन्तैस्तथाच्छिदन् ।
आर्जिजच्छरभो वृक्षं नीलस्त्वादित पर्वतम् ॥ ४३ ॥

ते तमित्यादि—ते वानरास्तं राक्षसं व्याशिषत व्याप्तवन्तः ।'अशू व्याप्तौ ।' पादैश्चाक्षौत्सुः पिष्टवन्तः । 'क्षुदिर् सम्पेषणे ।' दन्तैरच्छिदन् छिन्दन्ति स्म । 'इरितो वा । ३ । १ । ५७ ।' इत्यङ् । शरभो नाम कपिर्वृक्षमार्जिजत् ग्रहीतुं यतते स्म । 'अर्ज प्रतियत्ने' इति स्वार्थिकण्यन्ताच्चङि । 'द्विर्वचनेऽचि । १ । १ । ५९ ।' इति स्थानिवद्भावात् 'अजादेर्द्वितीयस्य । ६।१।२।' इति द्विर्वचनम् । रेफस्य' न न्द्राः संयोगादयः।६।१।३।' इति द्वित्वप्रतिषेधः । नीलः पर्वतमादित गृहीतवान् ।' स्थाघ्वोरिच्च ।१।२।१७।' ॥ ४३ ॥

---

१ 'निषेधार्थकद्वयं हि सातिशयं प्रकृतमर्थमवगमयति' इति 'मा न' इति प्रयुक्तम् ।

ऋषभोऽद्रीनुदक्षैप्सीत्ते तैररिमतार्दिषुः ।
अस्फूर्जीद् गिरिशृङ्गं च व्यस्राक्षीद् गन्धमादनः ॥ ४४ ॥

ऋषभ इत्यादि—ऋषभो नाम कपिरद्रीनुदक्षैप्सीत् उत्क्षिप्तवान् । ते शरभादयस्तैर्वृक्षादिभिररिमतार्दिषुः हतवन्तः । 'तर्द हिंसायाम् ।' गन्धमादनो नाम कपिरस्फूर्जीत् वज्रमिव गिरिशृङ्गं च व्यस्राक्षीत् विसृष्टवान् । सृजिस्तौदादिक उदात्तेत् ॥ ४४ ॥

अकूर्दिष्ट व्यकारीच्च गवाक्षो भूधरान् बहून् ।
स तान्नाजीगणद् वीरः कुम्भकर्णोऽव्यथिष्ट न ॥ ४५ ॥

अकूर्दिष्टेत्यादि—गवाक्षो नाम कपिः अकूर्दिष्ट क्रीडापूर्वकं चेष्टते स्म । भूधरान् महीधरांश्च व्यकारीत् विक्षिप्तवान् । वीरः कुम्भकर्णस्तान् शरभादीन् नाजीगणत् न गणयामास। 'अजगणत्' इति पाठान्तरम् । तत्र चकारेणात्वमप्यनुवर्तते । न चाव्यथिष्ट न व्यथितोऽभूत् ॥ ४५ ॥

अमन्थीच्च परानीकमप्लोष्ट च निरङ्कुशः ।
निहन्तुं चात्वरिष्टारीनजक्षीच्चाङ्कमागतान् ॥ ४६ ॥

अमन्थीदित्यादि—परानीकं शत्रुसैन्यममन्थीत् क्षोभितवान् 'मन्थ विलोडने ।' निरङ्कुशश्चाप्रतिहतशक्तिः अप्लोष्ट भ्रान्तवान् ।' प्लुङ् गतौ' । अरींश्च वानरान्निहन्तुमत्वरिष्ट त्वरते स्म ।' ञित्वरा संभ्रमे ।' अङ्कं च समीपमागतानजक्षीत् भक्षितवान् ।' जक्ष भक्षहसनयोः' । इति भक्षणे जक्षिः ॥ ४६ ॥

व्यक्रुक्षद्वानरानीकं संपलायिष्ट चायति ।
हस्ताभ्यां नश्यदक्राक्षीद्भीमे चोपाधितानने ॥ ४७ ॥

व्यक्रुक्षदित्यादि—तस्मिन्नायत्यागच्छति सति, आङ्पूर्वस्येणः शतरि रूपम् । वानरानीकं व्यक्रुक्षत् विक्रोशति स्म ।' शल इगुपधादनिटः क्सः । ३।१।४५।' संपलायिष्ट पलायते स्म । तच्च नश्यत्पलायमानं हस्ताभ्यामक्राक्षीत् आकृष्टवान् कुम्भकर्णः ।'कृष विलेखने' ।'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ।६।१।५९।' इत्यम् । हलन्तलक्षणा वृद्धिः । आकृष्टं चातिभीमेऽतिभयङ्करे विकृते आनने वक्त्रे उपाधित न्यस्तवान् 'धाञ्' । 'स्थाघ्वोरिच्च ।१।२।१७।' ॥ ४७ ॥

रक्तेनाचिक्लिदद् भूमिं सैन्यैश्चातस्तरद्धतैः ।
नाताप्सींद्भक्षयन् क्रूरो नाश्रमद् घ्नन् प्लवङ्गमान् ॥ ४८ ॥

रक्तेनेत्यादि—वानरानीकस्य रक्तेन भूमिमचिक्लिदत् क्लेदितवान् । 'क्लिदू आर्द्रीभावे' । तस्य ण्यन्तस्य चङि रूपम् । सैन्यैश्च हतैर्भूमिमतस्तरत् छादितवान् । स्तृणातेर्णौ चङि रूपम् । 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् । ७।४।९५ ।' इत्यत्वम् । तांश्च भक्षयन्नपि क्रूरः नाताप्सीत् न तृप्तः । 'तृप प्रीणने' पुषादिः 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः' इति वार्तिकेन पक्षे सिच् । प्लवङ्गमांश्च वानरांश्च घ्नन्[1] हिंसन् नाश्रमत् न श्रान्तवान् । 'श्रमु तपसि खेदे च' इति खेदे पुषादित्वादङ् ॥ ४८ ॥

**न योद्धुमशकन् केचिन्नाढौकिषत केचन ।**
**प्राणशन्नासिकाभ्यां च वक्त्रेण च वनौकसः ॥ ४९ ॥**

न योद्धुमित्यादि—तेषां मध्ये केचिद्वनौकसो वनवासिनो वानरा योद्धुं नाशकन् न शक्ता अभवन् 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु । ३ । १ । ५५ ।' इत्यनेन लृदित्त्वादङ् । केचिन्नाढौकिषत न ढौकन्ते स्म । ये तु तेन पदे न क्षिप्तास्ते नासिकाभ्यां नासिकाविवराभ्यां वक्त्रेण च प्राणशन् प्रनष्टाः निःसृता इत्यर्थः । नशेः पुषादित्वादङ् । 'उपसर्गादसमासेऽपि णोपदेशस्य ।८।४।१४।' इति णत्वम् ॥ ४९ ॥

**उदरे चाजरन्नन्ये तस्य पातालसन्निभे ।**
**आक्रन्दिषुः सखीनाह्वन् प्रपलायिषतास्विदन् ॥ ५० ॥**

उदरे चेत्यादि—अन्ये च तस्योदरे पातालस्य सन्निभे सदृशे अजरन् जीर्णाः । 'जॄस्तम्भम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च । ३ ।१ । ५८ ।' इत्यङ् । 'ऋदृशोऽङि गुणः । ७ । ४ । १६ ।' आक्रन्दिषुः आक्रन्दितवन्तः । सखीन् मित्राणि आह्वन् आहूतवन्तः । 'लिपिसिचिह्वश्च । ३ । १ । ५३ ।' इत्यङ् । प्रपलायिषत प्रपलायन्ते स्म । पलायमानाश्चास्विदन् प्रस्विन्नाः । पुषादित्वादङ् ॥ ५० ॥

अथ द्वाभ्यां युग्मकम् ।

**रक्तमश्च्योतिषुः क्षुण्णाः क्षताश्च कपयोऽतृषन् ।**
**उपास्थायि नृपो भग्नैरसौ सुग्रीवमैजिहत् ॥ ५१ ॥**

रक्तमित्यादि—अन्ये क्षुण्णाः सन्तः रक्तमश्च्योतिषुः श्च्योतन्ति स्म । 'इरितो वा । ३ । १ । ५७ ।' इत्यङभावपक्षे रूपम् । क्षताश्च खण्डिता

---

[1] 'हन् हिंसागत्योः' शता

अतृषन् तृषन्ति स्म। 'ञितृषा पिपासायाम् ।' पुषादित्वादङ् । नृपो रामस्तैर्मन्त्रैरुपास्थायि उपस्थापितः । अन्तर्भावितो ण्यर्थः । कर्मणि चिण् । असौ रामः सुग्रीवमैजिहत् योद्धुमीहां कारितवान् । ईहतेर्ण्यन्ताच्चङि । 'द्विर्वचनेऽचि । १ । १ । ५९ ।' इति स्थानिवद्भावात् द्वितीयस्य द्विर्वचनम् । आट् । वृद्धिः । योद्धुमिति वक्ष्यमाणेन योज्यम् ॥ ५१ ॥

योद्धुं सोऽप्यरुषच्छत्रोरैरिरच्च महाद्रुमम् ।
तं प्राप्तं प्रासहिष्टारिः शक्तिं चोदग्रहीत् ॥ ५२ ॥

योद्धुमित्यादि—सोऽपि सुग्रीवः अरुषत् क्रुध्यति स्म । 'रुष रोषे' पुषादिः । शत्रोश्च द्रुममैरिरत् क्षिप्तवान् । 'ईर क्षेपे' इति स्वार्थिकण्यन्तस्य रूपम् । तं द्रुमं प्राप्तमारिः कुम्भकर्णः प्रासहिष्ट प्रसहते स्म । शक्तिं चोग्रां प्राणहरामुदग्रहीत् उद्गृहीतवान् ॥ ५२ ॥

स तामविभ्रमद्भीमां वानरेन्द्रस्य चामुचत् ।
प्रापप्तन् मारुतिस्तत्र तां चालासीद्वियद्गताम् ॥ ५३ ॥

स तामित्यादि—तां गृहीतां शक्तिं स कुम्भकर्णः अबिभ्रमत् भ्रमयति स्म । भ्रमेर्ण्यन्ताच्चङि रूपम् । वानरेन्द्रस्य सुग्रीवस्योपरि अमुचत् मुक्तवान् । 'पुषादिद्युताद्यॢदितः । ३ । १ । ५५ ।' इति ऌदित्त्वादङ् । तत्र तस्यां मुक्तायां मारुतिर्हनूमान् प्रापप्तत् प्रत्युपास्थितः । ऌदित्त्वादङ् । 'पतः पुम् ।७।४।१९ ।' इति पुमागमः । तां च वियद्गतामलासीत् आप्तवान् । 'ला आदाने ।' 'यमरमनमातां सक् च ।७।२।७३।' इति सगिटौ ॥ ५३ ॥

अथ द्वाभ्यां युग्मकम् ।

अशोभिष्टाचखण्डच्च शक्तिं वीरो न चायसत् ।
लौहभारसहस्रेण निर्मिता निरकारि मे ॥ ५४ ॥

अशोभिष्टेत्यादि—असौ गृहीतशक्तिर्वीरः अशोभिष्ट शोभते स्म । शक्तिमचखण्डच्च भग्नवान् । 'खड खडि भेदने' चौरादिकः । तां च खण्डयन्नायसत् नायस्यति स्म । 'यसु प्रयत्ने ।' पुषादिः । लौहभारसहस्रेण निर्मिता घटिता मम शक्तिर्निरकारि भग्ना अनेनेति रक्षः कुम्भकर्णोऽकुपदिति वक्ष्यमाणेन सम्बन्धः ॥ ५४ ॥

---

१ क्षतादिना रक्ते निःसृते तृषा जायत एवेति यथोक्तम् । २ उपमं न चकार ।

**शक्तिरत्यकुपद्रक्षो गिरिं चोदखनीद्गुरुम् ।**
**व्यसृष्ट तं कपीन्द्रस्य तेनामूर्च्छीदसौ क्षतः ॥ ५५ ॥**

शक्तिरित्यादि—अकुपत् कुपितः 'कुप क्रोधे' पुषादिः । गिरिं च गुरुमुदखनीत् उत्खातवान् । 'अतो हलादेर्लघोः ।७।२।७।' इति वृद्ध्यभावपक्षे रूपम् । कपीन्द्रस्य सुग्रीवस्योपरि तं च गिरिं व्यसृष्ट विसृष्टवान् । 'सृज विसर्गे' अनुदात्तेत् । तस्माद्धलन्तादात्मनेपदे सिचः कित्त्वे गुणाभावः । असौ कपीन्द्रस्तेन क्षतः हतः सन् अमूर्च्छीत् मोहमुपगतः॥५५॥

**अलोठिष्ट च भूपृष्ठे शोणितं चाप्यसुस्रुवत् ।**
**तमादायापलायिष्ट व्यरोचिष्ट च राक्षसः ॥ ५६ ॥**

अलोठिष्टेत्यादि—मूर्च्छितश्च भूपृष्ठे अलोठिष्ट लुठते स्म । 'रुठ लुठ प्रतिघाते ।' इति द्युतादिः ।'द्युद्भ्यो लुङि ।१।३।९१।' इति परस्मैपदविकल्पेनात्मनेपदम् । अस्य शोणितं च व्यसुस्रुवत् स्रुतम् । 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ् । ३।१।४८।' इति चङ् । तं सुग्रीवमादाय राक्षसः कुम्भकर्णः अपलायिष्ट पलायते स्म । व्यरोचिष्ट रोचते स्म । 'रुच दीप्तौ' ॥ ५६ ॥

अथ द्वाभ्यां युग्मकम्—

**अभैषुः कपयोऽन्वारत्कुम्भकर्णं मरुत्सुतः ।**
**शनैरबोधि सुग्रीवः सोऽलुञ्चीत्कर्णनासिकम् ॥ ५७ ॥**

अभैषुरित्यादि—तस्मिन्नीते कपयोऽभैषुः भीताः । मरुत्सुतः कुम्भकर्णमन्वारत् अनुगतः । ऋतेः 'सर्तिशास्त्यर्तिभ्यश्च ।३।१।५६।' इत्यङ् ।'ऋदृशोऽङि गुणः।७।४।१६।' इति गुणः। सुग्रीवः शनैर्मनागबोधि लब्धसंज्ञो बभूव । 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।३।१।६१।' इति बुधेः कर्तरि चिण् । स बुद्धः कर्णनासिकम् । प्राण्यङ्गत्वादेकवद्भावः । अस्यालुञ्चीत् कृत्तवान् । राक्षसस्येति वक्ष्यमाणेन सम्बन्धः ॥ ५७ ॥

**राक्षसस्य न चात्रासीत् प्रनंष्टुमयतिष्ट च ।**
**अक्रोधि कुम्भकर्णेन पेष्टुमारम्भि च क्षितौ ॥ ५८ ॥**

राक्षसस्येत्यादि—राक्षसस्य कुम्भकर्णस्य सम्बन्धे स सुग्रीवो न चात्रासीत् न त्रस्तः । राक्षसात् प्रनंष्टुं पलायितुम् । मस्जिनशोर्झलि । ७।१।६०'

१ महान्तम् । २ 'द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम् ।२।४।२।' इति शास्त्रेणेति शेषः ।

इति नुम् । अयातिष्ट च यतते स्म । कुम्भकर्णेनात्मनोऽवस्थां दृष्ट्वा अक्रोधि क्रुद्धम् । भावे लुङ् । क्षितौ च पेष्टुं चूर्णयितुं सुग्रीव आरम्भि आरब्धः । कर्मणि लुङ् । 'रभेरशब्लिटोः ।७।१।६३।' इति नुम् ॥ ५८ ॥

सुग्रीवोऽस्याभ्रशद्धस्तात्समगाहिष्ट चाम्बरम् ।
तूर्णमन्वसृपद्राममनानन्दच्च वानरान् ॥ ५९ ॥

सुग्रीव इत्यादि—अस्य कुम्भकर्णस्य हस्तात् सुग्रीवः अभ्रशत् भ्रष्टः । 'भ्रशु भ्रंशु अधःपतने' पुषादिः । स चाम्बरमाकाशमगाहिष्ट आक्रान्तवान् । 'गाहू विलोडने' अनुदात्तेत् । तूर्णं च राममन्वसृपत् अनुगतः । ऌदित्त्वादङ् । वानरांश्च कर्णनासिककर्तनेनाननन्दत् तोषितवान् । नन्दतेर्ण्यन्तस्य रूपम् ॥ ५९ ॥

अतत्वरच्च तान्योद्धुमचिचेष्टच्च राघवौ ।
कुम्भकर्णो न्यवर्तिष्ट रणेऽयुत्सन्त वानराः ॥ ६० ॥

अतत्वरदित्यादि—तांश्च वानरान् योद्धुमतत्वरत् त्वरयति स्म । 'मा विलम्बध्वम्' इति । त्वरेर्ण्यन्ताच्चङ् । 'अत् स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् ।७।४।९५।' इति अभ्यासस्य अत्त्वम् । राघवौ च रामलक्ष्मणौ योद्धुमचचेष्टत् व्यापारयति स्म 'विभाषा वेष्टिचेष्ट्योः ।७।४।९६।' इत्यभ्यासस्यात्वपक्षे रूपम् । स कुम्भकर्णो योद्धुं न्यवर्तिष्ट निवृत्तः । वृतिर्द्युतादिः । 'द्युद्भ्यो लुङि ।१।३।९१।' इत्यात्मनेपदे नाङ् । वानराश्चायुत्सन्त युध्यन्ते स्म ॥ ६० ॥

अविवेष्टन्नृपादेशादारुक्षंश्चाशु राक्षसम् ।
तानधावीत्समारूढांस्तेऽप्यस्रंसिषताकुलाः ॥ ६१ ॥

अविवेष्टन्नित्यादि—वानरा राक्षसमविवेष्टन् वेष्टयन्ति स्म । नृपादेशादाशु राक्षसमारुक्षन् आरूढाः । रुहः 'शल इगुपधादनिटः क्सः ।३।१।४५।' इति क्सः । तांश्च वानरानारूढान् कुम्भकर्णोऽधावीत् धूतवान् । 'स्वरतिसूतिसूयतिधूञूदितो वा ।७।२।४४।' इतीट् । 'सिचि वृद्धिः परस्मैपदेषु ।७।२।१।' इति वृद्धिः । ते व्याकुलाः सन्तोऽस्रंसिषत स्रस्ताः पतिता इत्यर्थः । 'स्रंसु ध्वंसु भ्रंसु अवस्रंसने' द्युतादिः । परस्मैपदाभावान्नाङ् ॥ ६१ ॥

---

१ 'व्योम पुष्करमम्बरम्' इत्यमरः । २ 'पुषादिद्युताद्यॢदितः परस्मैपदेषु ।३।१।५५' इति शास्त्रं हि परस्मैपद एव प्रवर्तते ।

अग्रसिष्ट व्यधाविष्ट समाश्लिक्षच्च निर्दयम्।
ते चाप्यघोरिषुर्घोरं रक्तं चावमिषुर्मुखैः॥ ६२॥

अग्रसिष्टेत्यादि—कुम्भकर्णः कांश्चिदग्रसिष्ट ग्रसते स्म। कांश्चिन्निर्दयं समाश्लिक्षत्। 'श्लिष आलिङ्गने'। 'श्लिषः। ३। १। ४६।' इति क्सः। ते चाश्लिष्टाः महाघोरं श्रुतिकटुम् अघोरिषुः शब्दमुक्तवन्तः। 'घुर भीमार्थशब्दयोः' इति तुदादिरनुदात्तेत्। रक्तं चावमिषुः उद्गीर्णवन्तः॥ ६२॥

स चापि रुधिरैर्मत्तः स्वेषामप्यदयिष्ट न।
आग्रदीच्चायुरन्येषामरुद्ध च पराक्रमम्॥ ६३॥

स चेत्यादि—स चापि कुम्भकर्णः रुधिरैर्मत्तः स्वेषामपि नादयिष्ट न दयां कृतवान्, किमपरेषाम्। 'अधीगर्थदयेशां कर्मणि। २। ३। ५२।' इति षष्ठी। अन्येषां वानराणाम् आयुर्जीवितमग्रहीत् गृहीतवान् 'ह्ययन्तक्षणश्वसजागृणिश्व्येदिताम् ।७।२।५।' इति न वृद्धिः। 'अदोहीवायुः' इति पाठान्तरम्। तत्र तथाभूतं कुम्भकर्णं दृष्टवतामन्येषामायुरदोहीव स्वयं गतमिव। 'दुहश्च ।३।१।६३।' इति कर्मकर्तरि चिण्। पराक्रमं चान्येषामरुद्ध च आवृतवान्। रुधेः कर्माभिप्राये तङ्। 'झलो झलि ।८।२।२६।'। इति सिचो लोपः। 'झषस्तथोर्धोऽधः। ८। २। ४०।'। 'झलां जश् झशि ।८।४।५३।'॥ ६३॥

संत्रस्तानामपाहारि सत्त्वं च वनवासिनाम्।
अच्छेदि लक्ष्मणेनास्य किरीटं कवचं तथा॥ ६४॥

संत्रस्तानामित्यादि—तेन च वनवासिनां सत्त्वमपाहारि अपहृतम्। सर्वेषां त्रस्तत्वात्। कर्मणि लुङ्। तथा लक्ष्मणेन अस्य कुम्भकर्णस्य किरीटं मुकुटं तथा कवचमच्छेदि छिन्नम्। कर्मणि लुङ्॥ ६४॥

अथ द्वाभ्यां युग्मकम्।

अभेदि च शरैर्देहः प्राशंसीत्तं निशाचरः।
अस्पर्धिष्ट च रामेण तेनास्याक्षिप्सतेषवः॥ ६५॥

अभेदीत्यादि—देहश्चास्य लक्ष्मणस्य शरैः करणभूतैरभेदि छिन्नः। निशाचरश्च तं लक्ष्मणं प्राशंसीत् स्तुतवान्। 'साधु भवता युद्धम्' इति। रामेण

१ अत्रार्थापत्तिः।

सहास्पर्धिष्ट योद्धुं स्पर्धते स्म । तेन रामेणास्य कुम्भकर्णस्य इषवः आक्षिप्सत क्षिप्ताः कर्मणि लुङ् । हलन्तादात्मनेपदे सिचः कित्त्वाद् गुणाभावः ॥ ६५ ॥

यैरघानि खरो वाली मारीचो दूषणस्तथा ।
अवामंस्त स तान् दर्पात् प्रोदयंसीच्च मुद्गरम् ॥ ६६ ॥

यैरित्यादि—यैः शरैश्च खरोऽघानि व्यापादितः । कर्मणि लुङ् । ते आक्षिप्सतेति योज्यम् । स कुम्भकर्णस्तान् घ्नन् दर्पादवामंस्त अवमन्यते स्म । मुद्गरं प्रोदयंसीत् उद्गूर्णवान् ।'यमरमनमातां सक् च ।७।२।७३।' इति सगिटौ ॥६६॥

वायव्यास्त्रेण तं पाणिं रामोऽच्छैत्सीत्सहायुधम् ।
अदीपि तरुहस्तोऽसावधावीच्चारिसंमुखम् ॥ ६७ ॥

वायव्यास्त्रेणेत्यादि—येन पाणिना मुद्गरमुदयंसीत् पाणिं सहायुधं रामो वायव्यास्त्रेण मरुद्देवतादत्तेन अच्छैत्सीत् । छिन्नपाणिश्चासौ तरुहस्तः तरुर्हस्ते यस्येति तरोः प्रहरणत्वात् सप्तम्यन्तस्य परनिपातः । अदीपि दीप्यते स्म । 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।३।१।६१।' इति कर्तरि चिण् । अरिसंमुखं च रामाभिमुखमधावीत् वेगेन गतवान् ॥ ६७ ॥

सवृक्षमच्छिदत्तस्य शक्रास्त्रेण करं नृपः ।
जङ्घे चाशीशतद्बाणैरप्रासीदिषुभिर्मुखम् ॥ ६८ ॥

स वृक्षमित्यादि—तस्य सवृक्षमपि करं नृपो रामः शक्रास्त्रेणाच्छिदत् 'इरितो वा ।३।१।५७।' इत्यङ् । जङ्घे चान्यैर्बाणैरशीशतत् । गमनासमर्थे कृतवान् । शदेर्णौ 'शदेरगतौ तः ।७।३।४२।' इति तत्वम् । मुखं चेषुभिरप्रासीत् पूरितवान् । 'प्रा पूरणे' ॥ ६८ ॥

ऐन्द्रेण हृदयेऽव्यात्सीत् सोऽध्यवात्सीच्च गां हतः ।
अपिक्षातां सहस्रे द्वे तद्देहेन वनौकसाम् ॥ ६९ ॥

ऐन्द्रेणेत्यादि—ऐन्द्रेण इन्द्रदेवताकेन शरेण हृदयेऽव्यात्सीत् विद्धवान् । स तथा हतो गामध्यवात्सीत् भूमिमध्युषितवान् । तस्य रक्षसः पततो देहेन वनौकसां वनमोकौ निवासो येषां तेषां वानराणां द्वे सहस्रे अपिक्षातां चूर्णिते । 'पिष्लृ संचूर्णने' । कर्मणि लुङ् ॥ ६९ ॥

---

१ मरुद्देवताकेनेति वक्तव्यम्, विश्वामित्रतरप्रसादात् कस्याप्यस्त्रस्यानधिगतत्वात् । 'सास्य देवता ।४।२।२४। इत्यधिकारे 'वाय्वृतुपित्रुषसो यत् ।४।२।३१।' इतियत्प्रत्ययेन साधितेन वायव्यपदेनापि वायुदेवत ।कत्वमेव बोध्यते । २ 'ओकः सद्माश्रयश्चौकाः' इत्यमरः ।

अस्ताविषुः सुरा रामं दिशः प्रापन् निशाचराः ।
भूरकम्पिष्ट साद्रीन्द्रा व्यचालीदम्भसां पतिः ॥ ७० ॥

अस्ताविषुरित्यादि—तस्मिन् हते सुरा देवा राममस्ताविषुः स्तुवान्ति स्म । 'स्तुसुधूञ्भ्यः परस्मैपदेषु । ७ । २ । ७२ ।' इतीट् । निशाचरास्तद्भयाद्दिशः प्रापन् प्राप्तवन्तः । 'आप्लृ व्याप्तौ ।' साद्रीन्द्रा सकुलपर्वता भूमिरकम्पिष्ट चलति स्म । महाकायस्य निपतनात् अम्भसां पतिः समुद्रो व्यचालीत् प्रक्षुभितवान् ॥ ७० ॥

हतं रक्षांसि राजानं कुम्भकर्णमाशिश्रवन् ।
अरोदीद्रावणोऽशोचीन् मोहं चाशिश्रियत् परम् ॥ ७१ ॥

हतमित्यादि—हतं व्यापादितं कुम्भकर्णं रक्षांसि राजानं रावणमाशिश्रवन् श्रावितवन्तः । शृणोतेर्ण्यन्तात् सनीव कार्यमिति 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ।७।४।८१।' इत्यभ्यासस्य विकल्पेनेत्त्वम् । एवं च कृत्वा अशुश्रुवन्निति पाठान्तरम् । द्विकर्मकता तु बुद्ध्यर्थत्वात् श्रुत्वा च रावणोऽरोदीत् अश्रूणि मुमोच । अशोचीत् शोचति स्म । 'तेनापि त्यक्तोऽस्मि' इति । परं च मोहं मूर्च्छामशिश्रियत् । 'श्रिञ् सेवायाम्' । 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् ।३।१।४८।' इति चङ् ॥ ७१ ॥

अथ द्वाभ्यांयुग्मकम् ।

अपप्रथद् गुणान् भ्रातुरचिकीर्तच्च विक्रमम् ।
क्रुद्धेन कुम्भकर्णेन येऽदर्शिषत शत्रवः ॥ ७२ ॥

अपप्रथदित्यादि—भ्रातुर्गुणान् बुद्धिमत्त्वादीनपप्रथत् प्रख्यापितवान् । 'प्रथ प्रख्याने' घटादिः । तस्मात् ण्यन्ताच्चङि 'अत् स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् । ७ । ४ । ९५ ।' इत्यत्त्वम् । विक्रमं च शौर्यमचिकीर्तत् उदीरितवान् । 'कृत संशब्दने' इति चौरादिकः 'जिघ्रतेर्वा ।७।४।६।' इत्यधिकृत्य 'उर्ऋत् ।७।४।७।' इति ऋकाराभावपक्षे रूपम् । 'उपधायाश्च ।७।१।१०१।' इतीत्त्वम् । विक्रमकीर्तनं चाह—क्रुद्धेन क्रोधकर्त्रा कुम्भकर्णेन ये शत्रवोऽदर्शिषत दृष्टाः । कर्मणि लुङ् । 'स्यसिच्सीयुट्तासिषु भावकर्म्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ।६।४।६२।' इति दृशेश्चिण्वदिट् ॥ ७२ ॥

कथं न्वजीविषुस्ते च स चामृत महाबलः ।
अयुयुत्सिषताश्वास्य कुमारा रावणं ततः ॥ ७३ ॥

कथमित्यादि—ते अल्पाः कथं नाम अजीविषुः जीविताः । स च कुम्भकर्णो महाबलः अमृत मृतः ।' म्रियतेर्लुङ्लिङोश्च ।१।३।६१।' इति तङ् । 'ह्रस्वादङ्गात् ।८।२।२७।' इति सिचो लोपः । अनन्तरं कुमाराः राक्षसराजपुत्रा देवान्तकादयो रावणं शोचन्तमाश्वास्य अपनीतशोकं कृत्वा अयुयुत्सिषत योद्धुमिष्टवन्तः ।' हलन्ताच्च ।१।२।१०।' इति सनः कित्त्वम् । 'पूर्ववत्सनः । १ । ३ । ६२ ' इति तङ् ॥ ७३ ॥

देवान्तकोऽतिकायश्च त्रिशिराः स नरान्तकः ।
ते चांहिषत संग्रामं बलिनो रावणात्मजाः ॥ ७४ ॥

देवान्तक इत्यादि—ते च बलिनो रावणात्मजाः देवान्तकोऽतिकायस्त्रिशिरा नरान्तकश्चेति चत्वारः संग्राममांहिषत गतवन्तः । ' अहि गतौ ।' ॥ ७४ ॥

युद्धोन्मत्तं च मत्तं च राजा रक्षार्थमाञ्जिहत् ।
सुतानां निरगातां तौ राक्षसौ रणपण्डितौ ॥ ७५ ॥

युद्धेत्यादि—सुतानां[1] रक्षार्थं राजा[2] युद्धोन्मत्तं मत्तं च राक्षसम् आञ्जिहत् प्रस्थापितवान् । अंहतेर्णौ चङ्परे द्वितीयाज्विशिष्टस्य हीत्यस्य द्विर्वचनम् । तौ राक्षसौ रणपण्डितौ निरगातां निर्गतौ । 'इणो गा लुङि ।२।४।४५।' ॥ ७५ ॥

तैरजेषत सैन्यानि द्विषोऽकारिषताकुलाः ।
पर्वतानिव ते भूमावचैषुर्वानरोत्तमान् ॥ ७६ ॥

तैरित्यादि—तैः राक्षसैः वानराणां सैन्यानि अजेषत जितानि । कर्मणि लुङ् । अचिण्वद्भावपक्षे रूपम् । द्विष आकुला अकारिषत । ते राक्षसा वानरोत्तमान् वानराणां प्रधानभूतान् पर्वतानिव भूमौ अचैषुः पुञ्जीकृतवन्तः । 'चिञ् चयने' ॥ ७६ ॥

अङ्गदेन समं योद्धुमघटिष्ट नरान्तकः ।
प्रैषिषद्राक्षसः प्रासं सोऽस्फोटीदङ्गदोरसि ॥ ७७ ॥

अङ्गदेनेत्यादि—नरान्तको राक्षसः रावणात्मजः अङ्गदेन सह योद्धुमघ-

---

१ देवान्तकादीनाम् । २ राक्षसराजः ।

टिष्ट घटते स्म । राक्षसो नरान्तकः । प्रासं कुन्तं प्रैषिषत् । 'इषु गतौ' इत्यस्य ण्यन्तस्य चङि रूपम् । स प्रासोऽङ्गदोरसि अस्फोटीत् विशीर्णः ॥७७॥

अश्वान् वालिसुतोऽहिंसीदतताडच्च मुष्टिना ।
रावणिश्चाव्यथो योद्धुमारब्ध च महीं गतः ॥ ७८ ॥

अश्वानित्यादि—वालिसुतोऽङ्गदोऽश्वान् रथयुक्तानहिंसीत् व्यापादितवान् । 'तृह हिसि हिंसायाम् ।'मुष्टिना पाणिना अतताडत् आहतवान् 'तड आघाते ।' ताडनं ताडः । 'भावे । ३ । ३ । १८ ।' इति घञ् । ताडं करोतीति णिच् । णाविष्ठवदिति टिलोपः। 'णौ चङ्युपधाया ह्रस्वः ।७।४।१।' इति प्राप्ते 'नाग्लोपिशास्वृदिताम् । ७ । ४ । २ ।' इति ह्रस्वप्रतिषेधः । स च रावणिरव्यथो व्यथारहितः । हताश्वाद्रथादवतीर्य महीं गतः सन् योद्धुमारब्ध आरभते स्म।'झलो झलि।८।२।२६।' इति सिचो लोपः धत्वबत्वे च रूपम्॥७८॥

तस्याहारिषत प्राणा मुष्टिना वालिसूनुना ।
प्रादुद्रुवंस्ततः क्रुद्धाः सर्वे रावणयोऽङ्गदम् ॥ ७९ ॥

तस्येत्यादि—तस्य प्राणाः वालिपुत्रेण अहारिषत हृताः । कर्मणि लुङ् । चिण्वद्भावः । ततोऽनन्तरं सर्वे रावणयः रावणस्यापत्यानि देवान्तकादयः क्रुद्धाः सन्तोऽङ्गदं प्रादुद्रुवन् । 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् । ३ । १ । ४८ ।' इति चङ् ॥ ७९ ॥

ततो नीलहनूमन्तौ रावणीनववेष्टताम् ।
अकारिष्टां गिरींस्तुङ्गानरौत्सीत् त्रिशिराः शरैः ॥ ८० ॥

तत इत्यादि—ततो रावणीनङ्गदाभिमुखमागच्छतो नीलो हनूमांश्चाववेष्टतां वेष्टितवन्तौ । 'विभाषा वेष्टिचेष्ट्योः । ७ । ४ । ९६ ।' इत्यभ्यासस्यात्त्वम् । गिरींश्चाकारिष्टां विक्षिप्तवन्तौ । 'कॄ विक्षेपे ।' सिचि वृद्धिः । तांश्च गिरीन्निक्षिप्तान् त्रिशिराः शरैस्तुङ्गानरौत्सीत् आवृतवान् । 'रुधिर् आवरणे' ॥ ८० ॥

परिघेणावधिष्टाथ रणे देवान्तको बली ।
मुष्टिनाददरत्तस्य मूर्धानं मारुतात्मजः ॥ ८१ ॥

---

१ अत्र 'अत इट् ४ । १ । ९५ ।' इतीञ् ।

परिघेणेत्यादि—अथ देवान्तको बली परिघेणावधिष्ट हतवान् । 'आङो यमहनः । १ । ३ । २८ ।' इति तङ् । अविवक्षितकर्मकत्वात् 'आत्मनेपदेष्वन्यतरस्याम् ।२।४।४४। इति हनो वधादेशः । तस्य घ्नतः प्रहरतो मूर्धानं मारुतात्मजः हनुमान मुष्टिना अददरत् दारितवान् । 'दृ विदारणे' ण्यन्तस्य चङ्परे णौ 'अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ।७।४।९५।'इत्यभ्यासस्यात्त्वम्॥८१॥

अदीदिपत् ततो वीर्यं नीलं चापीपिडच्छरैः ।
युद्धोन्मत्तस्तु नीलेन गिरिणानायि संक्षयम् ॥ ८२ ॥

अदीदिपदित्यादि—ततो देवान्तकविनाशादनन्तरं युद्धोन्मत्तो राजसुतानां रक्षार्थं यः प्रेषितः स वीर्यमदीदिपत् । 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् । ७ । ४ । ३ '। इति ह्रस्वाभावपक्षे रूपम् । नीलं च शरैरपीपिडत् पीडितवान् । ह्रस्वाभावपक्षे रूपम् । अपीपरदिति पाठान्तरम् । पूरितवानित्यर्थः । 'पृ पूरणे' इति चुरादिः । स तु नीलेन वानरेण संक्षयं गिरिणा अनायि नीतः कर्मणि लुङ् ॥ ८२ ॥

अबभ्राजत् ततः शक्तिं त्रिशिराः पवनात्मजे ।
हनूमता क्षतास्तस्य रणेऽमृषत वाजिनः ॥ ८३ ॥

अबभ्राजदित्यादि—ततोऽनन्तरं त्रिशिरा राक्षसो रावणकुमारः पवनात्मजविषये शक्तिं वीर्यमबभ्राजत् दीपयति स्म । ' भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ।७।४।३।' इति ह्रस्वाभावपक्षे रूपम् । तस्य वाजिनो रथयुक्ता रणे हनूमता हताः सन्तः अमृषत मृताः । 'म्रियतेर्लुङ्लिङोश्च । १ । ३।६१ ।' इति तङ् ॥ ८३ ॥

अस्रसच्चाहतो मूर्ध्नि खड्गं चाजीहरद् द्विषा ।
प्राणानौज्झीच्च खड्गेन छिन्नैस्तेनैव मूर्धभिः ॥ ८४ ॥

अस्रसदित्यादि—त्रिशिराश्च हनूमता मूर्ध्नि हतः सन् रथाद्भूमौ अस्रसत् रथाद्भूमौ स्रस्तः ।'द्युद्भ्यो लुङि ।१।३।९१।' इति परस्मैपदम् । द्युतादित्वादङ् । क्ङिति इत्यनुनासिकलोपः । स्रस्तश्च स खड्गं हस्तस्थं द्विषा हनूमता अजीहरत् हारितवान् । तेनैव च खड्गेन छिन्नैर्मूर्धभिर्हेतुभूतैः प्राणानौज्झीत् त्यक्तवान् । 'उज्झ उत्सर्गे' ॥ ८४ ॥

अथ द्वाभ्यां युग्मकम् ।

मत्तेनामारि सम्प्राप्य शरभास्तां महागदाम् ।
सहस्रहरिणाक्रीडीदति कायस्ततो रणे ॥ ८५ ॥

प्रत्तेनेत्यादि---शरभेण वानरेणास्तां क्षिप्तां महागदां प्राप्य मत्तेन सुतानां रक्षार्थं प्रेषितेन राक्षसेनामारि मृतम् । भावे लुङ् । ततोऽनन्तरं अतिकायो राजपुत्रो रणे अक्रीडीत् विहरति स्म । रथेनेति वक्ष्यति । सहस्रं हरयोऽश्वा यस्य रथस्य ॥ ८५ ॥

रथेनाविव्यथच्चारीन् व्यचारीच्च निरङ्कुशः ।
विभीषणेन सोऽख्यायि राघवस्य महारथः ॥ ८६ ॥

रथेनेत्यादि---अरींश्चाविव्यथत् पीडितवान् । व्यथेर्ण्यन्तस्य चङि रूपम् । निरङ्कुशश्चाप्रतिहतशक्तिर्व्यचारीत् भ्राम्यति स्म । रान्तत्वाद्वृद्धिः । स विचरन्महारथः विभीषणेन राघवस्य आख्यायि कथितः । कर्मणि लुङ् ॥ ८६ ॥

अतस्तम्भदयं वज्रं स्वयम्भुवमतूतुषत् ।
अशिक्षिष्ट महास्त्राणि रणेऽरक्षीच्च राक्षसान् ॥ ८७ ॥

अतस्तम्भदित्यादि---अयं स्वशक्त्या वज्रम् अतस्तम्भत् । स्तम्भितवान् 'स्तभि स्कभि प्रतिष्टम्भे ।' ण्यन्तस्य णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् । ३ । १ । ४८ ।' इति चङ् । स्वयम्भुवमतूतुषत् । उग्रेण तपसा आराधनात् तोषितवान् ।'तुष प्रीतौ' ण्यन्तः।महास्त्राणि दिव्यानि चाशिक्षिष्ट शिक्षते स्म । 'शिक्ष विद्योपादाने' रणे च राक्षसानरक्षीत् रक्षति स्म ॥ ८७ ॥

अध्यगीष्टार्थ शास्त्राणि यमस्याह्नोष्ट विक्रमम् ।
देवाहवेष्वदीपिष्ट नाजनिष्टास्य साध्वसम् ॥ ८८ ॥

अध्यगीष्टेत्यादि---अर्थशास्त्राणि पराभिसन्धानार्थानि अध्यगीष्ट अधीतवान् । विभाषा लुङ्लृङोः ।२।४।५०।' इति इङो गाङादेशः । यमस्याप्ययं विक्रममह्नोष्ट अपनीतवान् । 'ह्नुङ् अपनयने ।' अहलन्तत्वात्सिचो न कित्त्वम् । देवाहवेष्वदीपिष्ट शोभितः । अस्य च साध्वसं भयं नाजनिष्ट न जातम् । 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।३।१।६१।' इति चिण्वद्भावपक्षे रूपम् ॥ ८८ ॥

एष रावणिरापादि वानराणां भयङ्करः ।
आह्वताऽथ स काकुत्स्थं धनुश्चाऽपुस्फुरद् गुरु ॥ ८९ ॥

---

१ 'असु क्षेपणे' क्तः। २ 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभकेषु हरिर्ना कपिले त्रिषु ॥' इत्यमरः ।

एष इत्यादि—य एवं स रावणिः रावणात्मजः आपादि अस्माकं समीपमागतः। 'पद् गतौ'। 'चिण् ते पदः। ३। १। ६०।' इति चिण्। यतो रावणिर्वानराणां भयङ्करः। अथ सोऽतिकायः समीपमागतः काकुत्स्थमाह्वत युद्धायाहूतवान् 'आत्मनेपदेष्वन्यतरस्याम्। ३। १। ५४।' इत्यङ्। धनुश्च गुरु महदपुस्फुरत् स्फारितवान्। 'चिस्फुरोर्णौ। ६। १। ५४।' इत्यात्वम् ॥ ८९ ॥

**सौमित्रिः सर्पवत् सिंहमार्दिदत् तं महाऽऽहवे।**
**तौ प्रावीवृततां जेतुं शरजालान्यनेकशः ॥ ९० ॥**

सौमित्रिरित्यादि—यथा सर्पः सिंहं गच्छति तद्वत्तमतिकायमार्दिदत् गतवान्। 'अर्द गतौ।' अर्दनमर्दः। तत्करोतीति णिच्। तदन्ताच्चङि रूपम्। 'अर्द हिंसायाम्' इति चौरादिको वा। तौ सौमित्र्यतिकायौ जेतुं शरजालानि प्रावीवृततां बहूनि प्रवर्तितवन्तौ 'उर्ऋत्। ७। ४। ७।' इति 'णौ चङ्युपधाया' अपवाद ऋकारः ॥ ९० ॥

**अच्छैत्तां च महाऽऽत्मानौ चिरमश्रमतां न च।**
**तथा तावास्थतां बाणानतानिष्टां तमो यथा ॥ ९१ ॥**

अच्छैत्तामित्यादि—तौ च महात्मानौ परस्परस्य शरजालानि अच्छैत्तां छिन्नवन्तौ। 'इरितो वा। ३। १। ५७।' इत्यङभावपक्षे रूपम्। 'झलो झलि। ८। २। २६।' इति सिचो लोपः। चिरं चिरेणापि नाश्रमतां न श्रान्तौ। श्रमिः पुषादिः। तौ तथा बाणानास्थतां क्षिप्तवन्तौ। 'अस्यतिवक्तिख्यातिभ्योऽङ्। ३। १। ५२।' इत्यङ् 'अस्यतेस्थुक्। ७। ४। १७।' यथा अन्धकारमतानिष्टां विस्तारितवन्तौ। 'अतो हलादेर्लघोः। ७। २। ७।' इति वृद्धिविकल्पः ॥ ९१ ॥

**सौर्याग्नेये व्यकारिष्टामस्त्रे राक्षसलक्ष्मणौ।**
**ते चोपागमतां नाशं समासाद्य परस्परम् ॥ ९२ ॥**

सौर्याग्नेये इत्यादि—राक्षसः सौर्यं सूर्यदेवताकमस्त्रं व्यकारीत् विक्षिप्तवान् 'कॄ विक्षेपे।' लक्ष्मणोऽप्याग्नेयम्, इत्येवं तौ व्यकारिष्टाम्। ते चास्त्रे परस्परमासाद्य प्राप्य नाशमुपागमताम्। लृदित्त्वादङ् ॥ ९२ ॥

---

१ 'अत इञ् ४। १। ९५।' इतीञ्। २ एतादृश उपमानोपमेयभावः 'कुमारा विशिखा इव' इतिवत् न रमणीयः।

**अविभ्रजत् ततः शस्त्रमैषीकं राक्षसो रणे ।**
**तदप्यध्वसदासाद्य माहेन्द्रं लक्ष्मणेरितम् ॥ ९३ ॥**

अविभ्रजदित्यादि—ततोऽनन्तरं रावणिः ऐषीकमस्त्रम् । इषीकाया इदम् । तत्सर्वस्रोतःसु प्रविशत् जीवितमपहरति । रणे अविभ्रजत् दीपितवान् । 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् । ७ । ४ । ३ ।' इत्युपधाया ह्रस्वत्वम् । तदपि अध्वसन् ध्वस्तम् । ध्वसिर्द्युतादिः । लक्ष्मणेरितं लक्ष्मणप्रेरितं माहेन्द्रमस्त्रमासाद्य तद्गतिरोधं कृत्वा ध्वंसयति स्म ॥ ९३ ॥

**ततः सौमित्रिरस्मार्षीददेविष्ट च दुर्जयम् ।**
**ब्रह्मास्त्रं तेन मूर्धानमदध्वंसन्नराद्विषः ॥ ९४ ॥**

तत इत्यादि—अनन्तरं सौमित्रिः दुर्जयम् अनभिभवनीयं ब्रह्मास्त्रमस्मार्षीत् स्मरति स्म । 'सिचि वृद्धिः परस्मैपदेषु ।७।२।१।' तच्च स्मरणादुपस्थितम् अदेविष्ट द्योतते स्म । 'तेवृ देवृ देवने' इत्यनुदात्तेत् द्योतने द्रष्टव्यः । देवनस्यानेकार्थत्वात् । तेन च ब्रह्मास्त्रेण प्रयोजककर्त्रा नराद्विषो राक्षसस्य मूर्धानमदध्वंसत् पातितवान् सौमित्रिः । हेतुमण्ण्यन्ताच्चङि रूपम् ॥ ९४ ॥

**ततोऽक्रन्दीद्दशग्रीवस्तमाशिश्वसदिन्द्रजित् ।**
**निरयासीच्च संक्रुद्धः प्रार्चिचच्च स्वयम्भुवम् ॥ ९५ ॥**

तत इत्यादि—ततः सुतमरणानन्तरं दशग्रीवः अक्रन्दीत् रोदिति स्म । तं च क्रन्दन्तमिन्द्रजिदाशिश्वसत् आश्वासितवान् । 'मयि जीवति किं वृथा जनवद्रोदिषि' इति । हेतुमण्ण्यन्तस्य चाङि रूपम् । संक्रुद्धश्च निरयासीत् । रावणगृहान्निर्गतः । 'या प्रापणे' । निर्गत्य च स्वगृहे स्वयम्भुवं ब्रह्माणं प्रार्चिचत् पूजितवान् । 'अर्च पूजायाम्' इति चुरादेः । 'चङि ।६।१।११।' इति अजादिद्विर्वचनम् ॥ ९५ ॥

**अहौषीत्कृष्णवर्त्मानं समयष्टास्त्रमण्डलम् ।**
**सोऽलब्ध ब्रह्मणः शस्त्रं स्यन्दनं च जयावहम् ॥ ९६ ॥**

अहौषीदित्यादि—कृष्णवर्त्मानमग्निमहौषीत्[3] हव्येन प्रीणितवानित्यर्थः । अस्त्रमण्डलम् आयुधग्रामं समयष्ट पूजितवान् । स इन्द्राजित् ब्रह्मणः सकाशात्

---

१ प्रकृतानुगुण्यमपेक्ष्येदमुक्तम् । २ नरान्तकस्य । ३ 'बर्हिः शुष्मा कृष्णवर्त्मा' इत्यमरः ।

जयावहमत्र स्यन्दनं चालब्ध लब्धवान्। 'झलो झलि । ८ । २ । २६।' इति सिचो लोपः ॥ ९६ ॥

तमध्यासिष्ट दीप्ताग्रममोदिष्ट च रावणिः।
छन्नरूपस्ततोऽकर्तीद्देहान् रावणविद्विषाम् ॥ ९७ ॥

तमित्यादि---तं स्यन्दनं दीप्ताग्रम् उपरिभागस्य रत्नप्रत्युप्तत्वात्। अध्यासिष्ट अध्यासितवान्। 'अधिशीङ्स्थासां कर्म्म ।१।४।४६।' इति कर्मसंज्ञा। तत्रस्थश्च रावणिरिन्द्रजित् अमोदिष्ट हृष्टवान्। ततोऽसौ छन्नरूपः अदृश्यः सन् रावणविद्विषां वानराणां देहानकर्तीत् छिन्नवान्। 'कृती छेदने।' 'सेऽसिचि कृतचृतच्छृदतृदनृतः ।७।२।५७।' इति सिचाऽन्यत्रेड्विकल्पः। 'रावाणिविद्विषाम्' इति पाठान्तरम्। तत्र देवान्तकादिविद्विषामित्यर्थः ॥ ९७ ॥

सप्तषष्टिं प्लवङ्गानां कोटीर्बाणैरसूषुपत्।
निशान्ते रावणिः क्रुद्धो राघवौ च व्यमूमुहत् ॥ ९८ ॥

सप्तषष्टिमित्यादि---वानराणां कोटीः सप्तषष्टिं बाणैरसूषुपत् स्वापितवान् व्यापादितवानित्यर्थः। 'स्वापेश्चङि ।६।१।१८।' इति सम्प्रसारणम्। निशान्ते च निशावसाने रावणिः क्रुद्धः सन् राघवौ व्यमूमुहत् मोहितवान्। 'मुह वैचित्ये' णौ चङि रूपम् ॥ ९८ ॥

अपिस्फवत् स्वसामर्थ्यमगूहीत्सायकैर्दिशः।
अघोरीच्च महाघोरं गत्वा प्रैषीच्च रावणम् ॥ ९९ ॥

अपिस्फवदित्यादि---ता मोहयित्वा आत्मीयं सामर्थ्यमपिस्फवत् वर्धयति स्म। 'ईदृशस्तादृशोऽहम्' इति। 'स्फायो वः । ७ । ३ । ४१ ।' इति णौ वत्वम्। दिशः सायकैरगूहीत् छादितवान्। 'नेटि । ७।१।४।' इति वृद्धिप्रतिषेधः। हयन्तत्वाद्वा। महाघोरं चातिरौद्रं शब्दमघोरीत् मुक्तवान्। गत्वा च लङ्कां रावणं प्रैषीत् प्रेषितवान्। 'गच्छ तत् ममाद्भुतपराक्रमं द्रष्टुम्' इति। 'इषु गतौ' ॥ ९९ ॥

---

१ बाणैः। 'शरे खड्गे च सायकः।' इत्यमरः। 'षोऽन्तकर्मणि' 'ण्वुल्तृचौ ३।१।१३३।' इति ण्वुल्। 'शायकैः' इति पाठे तु 'शो तनूकरणे' इत्यस्य रूपम्। उभयत्र 'आतो युक् चिण्कृतोः ७। ३। ३३।' इति युक्।

अथ द्वाभ्यां युग्मकम् ।

**विभीषणस्ततोऽबोधि सस्फुरौ रामलक्ष्मणौ ।**
**अपारीत्स गृहीतोल्को हतशेषान् प्लवङ्गमान् ॥ १०० ॥**

**विभीषण** इत्यादि—ततस्तस्मिन् काले विभीषणः रामलक्ष्मणौ सस्फुरौ चलन्तौ अबोधि बुद्धवान् जीविताविति । 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।३।१।६१।' इति कर्तरि चिण् । स्फुरणं स्फुरः । घञर्थे कविधानम् । यदुक्तम्' स्थास्नापाव्यधिहनियुध्यर्थ इति तदुपलक्षणं न परिगणनम् । स विभीषणः अन्धकारात् गृहीतोल्कः सन् हतशेषान् प्लवङ्गमानपारीत् 'मा भैष्ट' इति प्रीणितवान् ॥ १०० ॥

**मा शोचिष्ट रघुव्याघ्रौ नामृषातामिति ब्रुवन् ।**
**अवाबुद्ध स नीलादीन् निहतान् कपियूथपान् ॥ १०१ ॥**

मा शोचिष्टेत्यादि—यूयं मा शोचिष्ट शोकं मा कुरुत । 'माङि लुङ् ।३।३।१७५।' यस्माद्रघुव्याघ्रौ नामृषातां न मृतौ इत्येवं ब्रुवन् अपारीदिति योज्यम् । ये च निहतास्तान्नीलादीन् कपियूथपान् स विभीषणः परिभ्रमन् अवाबुद्ध अवबुद्धवान् । एते हता इति । 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।३।१।६१।' इति चिणो विकल्पितत्वादभावपक्षे रूपम् ॥ १०१ ॥

**तत्रैषज्जाम्बवान् प्राणीदुदमीलीच्च लोचने ।**
**पौलस्त्यं चागदीत् कच्चिदजीवीन् मारुतात्मजः ॥ १०२ ॥**

तत्रेत्यादि—तत्र तेषु जाम्बवान् ईषन्मनाक्[1] प्राणीत् उच्छ्वसिति स्म । 'अन प्राणने ।' 'अनितेः ।८।४।१९।' इति णत्वम् । लोचने च उदमीलीत् उन्मीलितवान् । 'मील श्मील निमेषणे' । पौलस्त्यं विभीषणञ्चागदीत् गदितवान् । 'गद व्यक्तायां वाचि' 'अतो हलादेर्लघोः ।७।२।७।' इत्यवृद्धौ रूपम् । कच्चित् किं हनुमान् अजीवीत् जीवितवान् । न मृत इति भावः ॥ १०२ ॥

**तस्य क्षेमे महाराज ! नामृष्मह्यखिला वयम् ।**
**पौलस्त्योऽशिश्रवत्तं च जीवन्तं पवनात्मजम् ॥ १०३ ॥**

---

1 'किञ्चिदीषन्मनागल्पे' इत्यमरः ।

तस्येत्यादि---तस्य हनुमतः क्षेमे जीवितत्वे सति हे महाराज ! अखिलाः सर्वे एव वयं नामृष्महिं न मृता इति। 'आशंसायां भूतवच्च ।३।३।१३२।' इति लुङ् । एवमुक्तः पौलस्त्यो विभीषणः जीवन्तं पवनात्मजं हनुमन्तं तमशिश्रवत् श्रावितवान् श्रृणोतेर्ण्यन्ताच्चङि सन्वद्भावे अभ्यासेवर्णस्य 'स्रवतिश्रृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा । ७ । ४ । ८१ ।' इतीत्वपक्षे रूपम् ॥ १०३ ॥

अथ द्वाभ्यां युग्मकम्—

आयिष्ट मारुतिस्तत्र तौ चाप्यहृषतां ततः ।
प्राहैष्टां हिमवत्पृष्ठे सर्वौषधिगिरिं ततः ॥ १०४ ॥

आयिष्टेत्यादि---तत्र पौलस्त्येन विभीषणेन । आहूतो मारुतिरायिष्ट आगतवान् । 'अय गतौ' आङ्पूर्वः । ततोऽनन्तरं तौ जाम्बवद्विभीषणौ अहृषातां हृष्टवन्तौ । 'हृष तुष्टौ' पुषादिः । ततस्तौ हृष्टौ हनुमन्तमिति वक्ष्यमाणेन सम्बन्धः । प्राहैष्टां प्रहितवन्तौ । 'सिचि वृद्धिः परस्मैपदेषु ।७।२।१।' 'हि गतौ' । हिमवत्पृष्ठे हिमवतः पृष्ठे । सर्वौषधिगिरिम् । सर्वा ओषधयो यस्मिन्निति ॥ १०४ ॥

तौ हनूमन्तमानेतुमोषधीं मृतजीविनीम् ।
सन्धानकरणीं चान्यां विशल्यकरणीं तथा ॥ १०५ ॥

तावित्यादि—या मृतं जीवयति या च क्षतस्य सन्धानं करोति तथा विशल्यं च या करोति । 'कृत्यल्युटो बहुलम् ।३।३।११३।' तामोषधीमानेतुं प्राहैष्टामिति योज्यम् । 'ओषधेश्च विभक्तावप्रथमायाम् । ६ । ३ । १३२।' इति दीर्घत्वम् ॥ १०५ ॥

प्रोदपाति नभस्तेन स च प्रापि महागिरिः ।
यस्मिन्नज्वलिषू रात्रौ महौषध्यः सहस्रशः ॥ १०६ ॥

प्रोदपातीत्यादि---तेन हनूमता नभः प्रोदपाति उत्पतितम् । स च महागिरिस्तेन प्रापि प्राप्तः। कर्मणि लुङ् । यस्मिन् गिरौ महौषध्यः सहस्रशोऽनेकधा रात्रावज्वलिषुः दीप्यन्ते स्म। 'अतो ल्रान्तस्य । ७ । २ । २ ।' इति वृद्धिः ॥ १०६ ॥

निरचायि यदा भेदो नौषधीनां हनूमता ।
सर्व एव समाहारि तदा शैलः सहौषधिः ॥ १०७ ॥

निरचायीत्यादि—यदा हनूमता ओषधीनां भेदो न निरचायि विशेषतो न निश्चितःतदा सर्व एव शैलःसहौषधिरोषधिसहितःसमाहारि समानीतः ॥१०७॥

प्राणिषुर्निहताः केचित् केचित्तु प्रोदमीलिषुः ।
तमोऽन्येऽहासिषुर्योधा व्यजृम्भिषत चापरे ॥ १०८ ॥

प्राणिषुरित्यादि—यदा ओषधिसन्निधान् ते निहताः केचिद्योधाः प्राणिषुः उच्छ्वसितवन्तः । केचित्तु प्रोदमीलिषुः उन्मीलितलोचना बभूवुः । अन्ये तमो मोहमहासिषुः त्यक्तवन्तः । 'यमरमनमातां सक् च । ८ । २ । ७३ ।' इति सगिटौ । तथान्येऽह्रासिषुरिति पाठान्तरम् । ते तथाभूतमात्मानं दृष्ट्वा सविलासं हसितवन्तः । अपरे व्यजृम्भिषत जृम्भिकां कृतवन्तः । 'जृभि—जभी गात्रविनामे' इत्यात्मनेपदी ॥ १०८ ॥

अजिघ्रपंस्तथैवाऽन्यानोषधीरालिपंस्तथा ।
एवं तेऽचेतिषुः सर्वे वीर्यं चाधिषताधिकम् ॥ १०९ ॥

अजिघ्रपन्नित्यादि—तथान्यान् लब्धसंज्ञानोषधीरजिघ्रपन् घ्रापितवन्तः । नासिकयाभ्यवहारितवन्त इत्यर्थः । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माकर्मकाणामणि कर्ता स णौ । १ । ४ । ५२ ।' इति प्रत्यवसाने कर्मसंज्ञा । 'जिघ्रतेर्वा ।७।४।६।' इति णौ चङ्युपधाया ह्रस्वः ।७।४।१।' इत्यकारः । तथालिपन् लिप्तवन्तः अन्यानोषधीभिरित्यर्थात् । 'लिपिसिचिह्वश्च ।३।१।५३।' इत्यङ् । एवमनेन प्रकारेण सर्वेऽचेतिषु: संज्ञां लब्धवन्तः । 'चिती संज्ञाने ।' अधिकं च वीर्यमोषधिबलादधिषत दधाति स्म । 'स्थाघ्वोरिच्च ।१।४।१७।' इतीत्वम् ॥ १०९ ॥

अजिह्लदत्स काकुत्स्थौ शेषांश्चाजीजिवत् कपीन् ।
हनूमानथ ते लङ्कामग्निनादीदिपन् द्रुतम् ॥ ११० ॥

अजिह्लददित्यादि—एवं च सति हनूमान् काकुत्स्थावजिह्लदत् ह्लादितवान् । 'ह्लादी सुखे' ण्यन्तः । शेषांश्च कपीनजीजिवत् जीवयति स्म । अथ ते जीविताः सन्तः लङ्कां द्रुतमदीदिपन् दीपितवन्तः । 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ।७।४।३।' इति ह्रस्वपक्षे रूपम् ॥ ११० ॥

---

१ 'परौ भुवोऽवज्ञाने' इत्येतच्छास्त्रघटकावज्ञानपदसामर्थ्यकल्पिततेन 'धातूनामनेकार्थत्वात्' इति वचनेन प्रकृते 'घ्रा' धातोःप्रत्यवसानार्थत्वमादाय अस्य शास्त्रस्य प्रवृत्तिः ।

समनात्सीत्ततः सैन्यममार्जीद्भल्लतोमरम् ।
अमार्क्षीच्चासिपत्रादीनबभासत्परश्वधान् ॥ १११ ॥

समनात्सीदित्यादि-ततः सैन्यं समनात्सीत् सन्नद्धम् ।'नहो धः ।८।२।३४।' इति धत्वम् । हलन्तलक्षणा वृद्धिः । भल्लतोमरममार्जीत् शोधितवान् । मृजेरुदित्त्वादिट् पक्षे रूपम् । असिपत्रादीनमार्क्षीत् । इडभावे रूपम् । उभयत्रापि 'मृजेर्वृद्धिः । ७ । २ । ११४ ।' परश्वधानबभासत् दीपितवान् 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ।७।४।३।' इति ह्रस्वपक्षे रूपम् । अभासीच्चेति पाठान्तरम् । तत्रान्तर्भावितो ण्यर्थः ॥ १११ ॥

कुम्भकर्णसुतौ तत्र समनद्धां महाबलौ ।
निकुम्भश्चैव कुम्भश्च प्रापतां तौ प्लवङ्गमान् ॥ ११२ ॥

कुम्भकर्णेत्यादि-कुम्भश्चैव निकुम्भश्च कुम्भकर्णस्य सुतौ महाबलौ तत्र सैन्येसमनद्धां सन्नद्धौ । तौ च प्लवङ्गमान् प्रापतां प्राप्तवन्तौ । लृदित्त्वादङ् ॥ ११२ ॥

अगोपिष्टां पुरीं लङ्कामगौप्तां रक्षसां बलम् ।
अत्याक्तामायुधानीकमनैष्टां च क्षयं द्विषः ॥ ११३ ॥

अगोपिष्टामित्यादि-लङ्कां च पुरीम् अगोपिष्टां रक्षितवन्तौ । गुपेरूदित्त्वादिट्पक्षे रूपम् । अगौप्तामितीडभावपक्षे रूपम् । हलन्तलक्षणा वृद्धिः । 'झलो झलि । ८ । २ । २६ ।' इति सिचो लोपः । आयुधानीकम् आयुधसमूहमत्याक्तां त्यक्तवन्तौ विसृष्टवन्तौ । 'त्यज हानौ' । पूर्ववद्वृद्धिः सिचो लापः । शत्रून् क्षयमनैष्टां नीतवन्तौ । 'सिचि वृद्धिः परस्मैपदेषु ।७।२।१।' इति वृद्धिः ॥ ११३ ॥

अकोकूयिष्ट तत्सैन्यं प्रपलायिष्ट चाकुलम् ।
अच्युतच्च क्षतं रक्तं हतं चाध्यशयिष्ट गाम् ॥ ११४ ॥

अकोकूयिष्टेत्यादि—तत् सैन्यं प्लवङ्गमानां भयादकोकूयिष्ट भृशं शब्दं कृतवत् । 'कुङ् शब्दे' इत्यस्मात् यङ्यभ्यासस्य 'न कवतेर्यङि ।७।४।६३।' इति कुङश्चुत्वप्रतिषेधः । ततो यङन्ताल्लङ् । प्रपलायिष्ट पलायते स्म ।

---

१ 'अनीकोऽस्त्री रणे सैन्ये' इति मेदिन्याद्युक्त्यानीकशब्दस्य समूहावाचित्वेऽपि लक्षणया प्रकृतोऽर्थः समर्थनीयः । प्रयोजनं तु लक्षणाया भयातिशयद्योतनरूपमेव ।

अनादेरङ्गस्य । 'आडजादीनाम् ।६।४ । ७२ ।' इत्याट् प्रपरयोरनङ्गत्वाच्च । 'उपसर्गस्यायतौ ।८।२।१९।' इति लत्वम् । क्षतं च खण्डितं च सत् रक्तमच्युतत् क्षरति स्म । 'इरितो वा ।३।१।५७।' इत्यङ् । हतं च निहतं सत् गामध्यशयिष्ट भूमौ पतितम् । 'अधिशीङ्स्थासां कर्म्म । १ । ४ । ४६ ।' इति कर्मसंज्ञा ॥ ११४ ॥

अङ्गदेनाहसातां तौ युध्यकम्पनकम्पनौ ।
अभ्यार्दीद्वालिनः पुत्रं प्रजङ्घोऽपि समत्सरः ॥ ११५ ॥

अङ्गदेनेत्यादि—अकम्पनः कम्पनश्च तौ । ज्येष्ठत्वात् पूर्वनिपातः [ ]। युधि संग्रामे अङ्गदेन अहसाताम् । कर्मणि लुङ् । 'आत्मनेपदेष्वन्यतरस्याम् । २।४।४४।' इति वधादेशाभावपक्षे रूपम् । प्रजङ्घो नाम राक्षसः समत्सरः सक्रोधः वालिनः पुत्रमभ्यार्दीत् प्रहृतवान् । 'अर्द हिंसायाम्' ॥ ११५ ॥

तस्याप्यबेभिदिष्टासौ मूर्धानं मुष्टिनाङ्गदः ।
अहार्षीच्च शिरः क्षिप्रं यूपाक्षस्य निराकुलः ॥ ११६ ॥

तस्येत्यादि—तस्य प्रजङ्घस्यापि मूर्धानमसावङ्गदो मुष्टिनाबेभिदिष्ट अत्यर्थं भिन्नवान् । भिदेर्यङन्तस्य 'यस्य हलः ।६।४।४९।' 'अतो लोपः ।६।४।४८।' इति यलोपे रूपम् । निराकुलश्च नाम वानरः यूपाक्षस्य राक्षसस्य शिरः क्षिप्रमहार्षीत् छिन्नवान् ॥ ११६ ॥

शरीरं लोहिताक्षस्य न्यभाङ्क्षीद्द्विविदस्तदा ।
क्रुद्धः कुम्भस्ततोऽभैत्सीन्मैन्दं सद्विविदं शरैः ॥ ११७ ॥

शरीरमित्यादि—द्विविदो नाम वानरो लोहिताक्षस्य शरीरं न्यभाङ्क्षीत् चर्णितवान् । 'भञ्जो आमर्दने' ततोऽनन्तरं कुम्भः कुम्भकर्णसुतः मैन्दं वानरं साद्विविदं द्विविदेन सह शरैरभैत्सीत् भिन्नवान् ॥ ११७ ॥

अथ युग्मकम् ।

आघूर्णिष्टां क्षतौ, क्ष्मां च तावाशिश्रियतामुभौ ।
मातुलौ विह्वलौ दृष्ट्वा कुम्भं वालिसुतो नगैः ॥ ११८ ॥

आघूर्णिष्टामित्यादि—तावुभौ क्षतौ आघूर्णिष्टां चक्रवद् भ्रान्तौ । क्ष्मां भूतलं चाशिश्रियताम् आश्रितवन्तौ । भूमौ पतिताविस्यर्थः । 'णिश्रिद्रुस्रुभ्यः

१ शिर इत्यर्थः । 'मूर्धाना मस्तकोऽस्त्रियाम् ।' इत्यमरः ।

कर्तरि चङ् ।३।१।४८।' इति चङ्। तौ च ताराभ्रातृत्वात् मातुलौ विह्वलौ दृष्ट्वा वालिसुतो अङ्गदः नगैर्वृक्षैः कुम्भं प्रौर्णावीदिति वक्ष्यमाणेन सम्बन्धः॥११८॥

प्रौर्णावीच्छरवर्षेण तानपौहीन्निशाचरः ।
वानरानैजिहद्रामस्तूर्णं रक्षितुमङ्गदम् ॥ ११९ ॥

प्रौर्णावीदित्यादि––प्रौर्णावीत् छादितवानित्यर्थः ।'विभाषोर्णोः । १ । २ । ३ ।' इत्याङित्त्वपक्षे रूपम् । स च निशाचरस्तान्नगान् शरवर्षेणापौहीत् निरस्तवान् । 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इत्यात्मनेपदविकल्पः । रामश्च तद्धनुष्कौशलं दृष्ट्वा अङ्गदं रक्षितुं तूर्णं वानरानैजिहत् व्यापारितवान् । ईहतिर्ण्यन्तः ॥ ११९ ॥

द्रुतमत्रास्त सुग्रीवो भ्रातृव्यं शत्रुसङ्कटात् ।
मुष्टिना कौम्भकर्णिं च क्रुद्धः प्राणैरतित्यजत् ॥ १२० ॥

द्रुतमित्यादि––सुग्रीवस्तस्माच्छत्रुसङ्कटात् भ्रातृव्यं भ्रातुरपत्यम् । 'भ्रातुर्व्यच । ४ । १ । १४४ ।' द्रुतमत्रास्त रक्षितवान् । अग्रतो भूत्वा । 'त्रैङ् पालने ।' कौम्भकर्णिं कुम्भकर्णपुत्रं कुम्भं क्रुद्धः सन् मुष्टिना प्राणैरतित्यजत् त्याजितवान् । त्यजिर्ण्यन्तः ॥ १२० ॥

निकुम्भो वानरेन्द्रस्य प्राहैषीत्परिघं ततः ।
हनूमांश्चापतन्तं तमभाङ्क्षीद्भोगिभीषणम् ॥ १२१ ॥

निकुम्भ इत्यादि––ततो भ्रातृवधात् निकुम्भो वानरस्य सुग्रीवस्य परिघं प्राहैषीत् प्रहितवान् । 'हि गतौ ।' परिघमापतन्तं निकुम्भात् । भोगिभीषणम् अहिवत् भीषणम् हनूमानभाङ्क्षीत् भग्नवान् ॥ १२१ ॥

प्रौर्णुवीत्तेजसारातिमरासीच्च भयङ्करम् ।
ग्रीवां चास्य तथाक्राक्षीदजिजीवद्यथा न तम् ॥ १२२ ॥

प्रौर्णुवीदित्यादि––परिघं च हनूमान् तेजसा[1] प्रौर्णुवीत् अभिभूतवान् । ङित्त्वादवृद्धिगुणपक्षे रूपम् । भयंकरं चारासीत् शब्दितवान् । अन्य निकुम्भस्य च ग्रीवां तथाक्राक्षीत् आकृष्टवान् । अमागमपक्षे रूपम् । यथा तं नाजिजीवत् न जीवति स्म । ग्रीवामाकृष्यैव व्यापादितवानित्यर्थः । 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ।३।२।१७७।' इत्यह्रस्वपक्षः ॥ १२२ ॥

---

१ पराक्रमेणेति भावः । 'तेजः प्रभावे दीप्तौ च बले शुक्रेऽपि' इत्यमरः ।

समगत कपिसैन्यं सम्मदेनातिमात्रं
विटपहरिणनाथः सिद्धिमौहिष्ट नित्याम् ।
नृपतिमतिररंस्त प्राप्तकामेव हर्षात्
रजनिचरपतीनां सन्ततोऽतायि शोकः ॥ १२३ ॥

इति श्रीमहावैयाकरणभट्टिप्रणीते रामचरिते काव्ये
तिङ्काण्डे लुङ्विलसितो नाम
पञ्चदशः सर्गः । ॥ १५ ॥

समगतेत्यादि—प्रधानयोधा निहता इति सम्मदेन हर्षेणातिमात्रमत्यर्थं समगत संगतं कपिसैन्यम् । 'समो गम्यृच्छिभ्याम् ।१।३।२९।' इति तङ् । 'वा गमः ।१।२।१३।' इति सिचः कित्त्वेऽनुनासिकलोपः । 'ह्रस्वादङ्गात् ।८।२। २७।' इति सिचो लोपः । विटपहरिणनाथः शाखामृगाणां नाथः नित्यां सिद्धिमवश्यं भाविनीमौहिष्ट तर्कितवान् । नृपतिमतिः रामस्य बुद्धिः प्राप्तकामेव संपन्नेच्छेव रावणवधसीतालाभयोः सिद्धिरूपत्वात् । हर्षादरंस्त रमते स्म । रजनिचरपतीनां मेघनादादीनां शोकः सन्ततोऽविच्छिन्नः अतायि वर्धते स्म । 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।३।१।६१।' इति कर्तरि चिण् ॥ १२३ ॥

इति श्रीजयमङ्गलासूरिविरचितया जयमङ्गलाख्यया व्याख्यया समलंकृते
श्रीभाट्टिकाव्ये चतुर्थे तिङन्तकाण्डे लक्षणरूपे द्वितीयः परिच्छेदः,
लक्ष्यरूप कथानके 'कुम्भकर्णवधो' नाम
पञ्चदशः सर्गः ॥ १५ ॥

---

१ 'मुत्प्रीतिः प्रमदो हर्षप्रमोदामोदसम्मदाः ।' इत्यमरः । २ अत्र 'ननमयययुतेयं मालिनी भोगिलोकैः ।' इति मालिनी छन्दः । उत्प्रेक्षा समासोक्तिश्चालङ्कारौ ।

## षोडशः सर्गः ।

इतः प्रभृति लृटमधिकृत्य विलसितमाह तत्र 'लृट् शेषे च । ३ । ३ ।१३।' इति लृट् । ततोऽन्यत्रापि दर्शयिष्यति ।

ततः प्ररुदितो राजा रक्षसां हतबान्धवः ।
किंकरिष्यामि राज्येन सीतया किं करिष्यते ॥ १ ॥

तत इत्यादि—ततोऽनन्तरं रक्षसां राजा रावणः हतबान्धवः व्यापादितभ्रातृत्वात् शोकाभिभूतः सन् प्ररुदितः क्रन्दितुमारब्धः । 'किं करिष्यामि' इत्यादिना । 'आदिकर्मणि क्तः कर्तरि च ।३।४।७१।' अतिकाये वीरे हते किं करिष्यामि राज्येन, न किंचित् । 'ऋद्धनोः स्ये । ८ । २ ।७०।' इतीट् । सीतया च किं करिष्यते, न किंचित् ॥ १ ॥

अतिकाये हते वीरे प्रोत्सहिष्ये न जीवितुम् ।
ह्रेपयिष्यति कः शत्रून्, केन जायिष्यते यमः ॥ २ ॥

अतीत्यादि—वीरे अतिकाये हते जीवितुमेव नोत्सहे किमन्यत्कर्तुम् । शक्तः पलायनेन कः ह्रेपयिष्यति । 'अर्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ।७। २ । ३६ ।' इति णौ पुगन्तगुणः । केन यमः जायिष्यते । 'जि जये' । कर्मणि लृट् ।'स्यसिच्सीयुट्तासिषु भावकर्म्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च। ६ । ४ । ६२ ।' इति चिण्वदिट् च ॥ २ ॥

अतिकायाद्विना पाशं को वा छेत्स्यति वारुणम् ।
रावणं मंस्यते को वा स्वयम्भूः कस्य तोक्ष्यति ॥ ३ ॥

अतीत्यादि-'पृथग्विनानानाभिस्तृतीयान्यतरस्याम् । २ । ३ । ३२ ।' इति पञ्चमी । अतिकायाद्विना वारुणं पाशं को वा छेत्स्यति द्विधा करिष्यति । को वा रावणं मंस्यते पूजयिष्यति । स्वयंभूर्ब्रह्मा कस्य तोक्ष्यति प्रीतिं जनयिष्यति । 'तुष प्रीतौ' ।'षढोः कः सि ।८।२।४१।' ॥ ३ ॥

श्लाघिष्ये केन को बन्धून् नेष्यत्युन्नतिमुन्नतः ।
कः प्रेष्यति पितॄन् काले कृत्वा कत्थिष्यते न कः ॥ ४ ॥

श्लाघिष्य इत्यादि—केनाहं श्लाघिष्ये श्लाघां करिष्यामि 'ममेदृशः पुत्रः' इति । कः स्वगुणैरुन्नतः सन् बन्धूनुन्नतिं परां कोटिं नेष्यति । काले

पितृक्रियोचिते कः पितॄन् प्रेण्यति तर्पयिष्यति । 'प्रीञ् तर्पणे' । कृत्वा किंचित्कार्यम् । को न कत्थिष्यते कत्थनां न करिष्यति । 'अहमेवंविधः' इति । अतिकायाद्विनेति सर्वत्र योज्यम् ॥ ४ ॥

**उद्यंस्यति हरिर्वज्रं विचरिष्यति निर्भयः ।**
**भोक्ष्यते यज्ञभागांश्च शूरमानं च वक्ष्यति ॥ ५ ॥**

उद्यंस्यतीत्यादि—तथा हरिरिन्द्रः हन्तुं वज्रमुद्यंस्यति उद्धारयिष्यति । उत्पूर्वाद्यमे रूपम् । निर्भयश्चेतस्ततो विचरिष्यति । यज्ञभागांश्चात्मीयान् भोक्ष्यते भक्षयिष्यति । 'भुजोऽनवने ।१।३।६६।' इति तङ् । शूरमानं च 'शूरोऽस्मि' इति वक्ष्यति धारयिष्यति । वहेः 'हो ढः ।८।२।३१।' । 'षढोः कः सि ।८।२।४१।' इति कः ॥ ५ ॥

**रविस्तप्स्यति निःशङ्कं वास्यत्यनियतं मरुत् ।**
**निर्वर्त्स्यत्यृतुसङ्घातः स्वेच्छयेन्दुरुदेष्यति ॥ ६ ॥**

रविरित्यादि—रविः निःशङ्कं शङ्कां विना तप्स्यति द्योतिष्यते । मरुच्चानियतं स्वच्छन्दो वास्यति संचरिष्यति । 'वा गतिगन्धनयोः' । ऋतुसंघातः षडृतवः निर्वर्त्स्यति सर्वदा न भविष्यति । 'वृद्भ्यः स्यसनोः ।१।३।९२।' इति विकल्पः । 'न वृद्भ्यश्चतुर्भ्यः ।७।२।५९।' इतीट्प्रतिषेधः । स्वेच्छयेन्दुरुदेष्यति सदा पूर्णमण्डलो नोद्गमिष्यति । 'इण् गतौ' ॥ ६ ॥

**तीव्रं स्यन्दिष्यते मेघैरुग्रं वर्तिष्यते यमः ।**
**अतिकायस्य मरणे किं करिष्यन्ति नान्यथा ॥ ७ ॥**

तीव्रमित्यादि—मेघैस्तीव्रम् अतिशयेन स्यन्दिष्यते पूर्वं रजःप्रशमनमात्रं वृष्टम् । भावे लृट् । 'न वृद्भ्यश्चतुर्भ्यः ।७।२।५९।' इतीट्प्रतिषेधो न भवति, तत्र परस्मैपदग्रहणमनुवर्तते । यमः उग्रं वर्तिष्यते रौद्रं चरिष्यति । आत्मनेपदे नेट्प्रतिषेधः । अतिकायस्य मरणे सति इन्द्रादयः किमन्यथा विपर्ययं न करिष्यन्ति किन्तु करिष्यन्तीति भावः । 'किं भविष्यति नान्यथा' इति पाठान्तरम् । तत्र सर्वमेतद्भविष्यतीत्यर्थः ॥ ७ ॥

**उन्मीलिष्यति चक्षुर्मे वृथा यद् विनयागतम् ।**
**आज्ञालाभोन्मुखं नम्रं न द्रक्ष्यति नरान्तकम् ॥ ८ ॥**

उन्मीलिष्यतीत्यादि—मे मम चक्षुर्वृथा निष्फलमुन्मीलिष्यति । यद्यस्मात् विनयागतं विनीतम् । आज्ञालाभोन्मुखम् । नम्रं नमनशीलम् । नरान्तकं पुत्रं न द्रक्ष्यति ॥ ८ ॥

धिङ् मां त्रिशिरसा नाहं सन्दर्शिष्येऽद्य यत् पुनः ।
घानिष्यन्ते द्विषः केन तस्मिन्पञ्चत्वमागते ॥ ९ ॥

धिङ् मामित्यादि—हतबान्धवं मां रावणं धिक् । यत् त्रिशिरसा अद्य पुनरपि नाहं सन्दर्शिष्ये न दृष्टो भविष्यामि । कर्मणि लृट् चिण्वदिट् च । तस्मिन् त्रिशिरसि पञ्चत्वमागते मृते द्विषः शत्रवः केन घानिष्यन्ते । अत्रापि चिण्वदिट् च ॥ ९ ॥

शत्रुभिर्निहते मत्ते द्रक्ष्येऽहं संयुगे सुखम् ।
युद्धोन्मत्ताद्विना शत्रून् समास्कन्त्स्यति को रणे ॥ १० ॥

शत्रुभिरित्यादि—मत्ते मत्तनाम्नि शत्रुभिर्निहते । तैरेव शत्रुभिः संयुगे सङ्ग्रामे सुखमहं द्रक्ष्ये द्रष्टव्योऽस्मि पूर्वं भयाद्दृष्टः । अचिण्वद्भावपक्षे रूपम् । तस्य च भ्रातुर्युद्धोन्मत्ताद्विना रणे शत्रून् कः समास्कन्त्स्यति अभियास्यति । 'स्कन्दिर् गतिशोषणयोः' । 'खरि च ।८।४।५५।' इति चर्त्वम् ॥ १० ॥

आह्वास्यते विशङ्को मां योत्स्यमानः शतक्रतुः ।
प्रकल्प्स्यति च तस्यार्थो निकुम्भे दुर्हणे हते ॥ ११ ॥

आह्वस्यत इत्यादि—शतक्रतुरिन्द्रः योत्स्यमानः युद्धं करिष्यन् विशङ्को निर्भयः मां युद्धायाह्वास्यते । 'स्पर्धायामाङः ।१।३।३१।' इत्यात्मनेपदम् । निकुम्भे दुर्हणे दुःखेन हन्यत इति । 'ईषद्दुःसुषुकृच्छ्राकृच्छ्रार्थेषु खल् ।३।३।१२६।' इति खल् । तस्मिन् हते तस्य शतक्रतोरर्थः निष्कण्टकराज्यलक्षणः प्रकल्प्स्यते ॥ ११ ॥

कल्पिष्यते हरेः प्रीतिर्लङ्का चोपहनिष्यते ।
देवान्तक त्वया त्यक्तो रिपोर्यास्यामि वश्यताम् ॥ १२ ॥

कल्पिष्यत इत्यादि—शत्रुभिः कुम्भं च निपातितं श्रुत्वा हरेरिन्द्रस्य प्रीतिः कल्पिष्यते भविष्यति । 'लुटि च क्लृपः ।१।३।९३।' इति चकारात्स्य-

---

१ 'नमिकम्पिस्म्यजसकमहिंसदीपो रः ।३।२।१६७।' इति रः । २ पञ्चतां कालधर्मम् । यत्तूक्तं मेदिनीकरेण 'पञ्चता पञ्चभावे स्यान्मरणेऽपि च योषिति ।' इति, तत् पञ्चतेति निर्देशाभिप्रायेणैव, नत्वजहल्लिङ्गत्वद्योतनार्थम् ।

सनोरपि परस्मैपदविकल्पः । आत्मनेपदे च नेट्प्रतिषेधः । लङ्का च शत्रुभिरुपहनिष्यते विलोप्स्यते । कर्मणि लृट् । अचिण्वद्भावपक्षः । 'ऋद्धनोः स्ये ।७।२।७०।' इतीट् । इह सुरैरागंस्यते । भावे लृट् ॥ १२ ॥

मरिष्यामि विजेष्ये वा हताश्चेत्तनया मम ।
हनिष्यामि रिपूंस्तूर्णं न जीविष्यामि दुःखितः ॥ १३ ॥

मरिष्यामीत्यादि---यदि मम रावणस्य तनया देवान्तकादयः हताः तदा मरिष्यामि, शत्रून् वा विजेष्ये । 'म्रियतेर्लुङ्लिङोश्च ।१।३।६१' । इति नियमात्तङ् न भवति । उत्तरत्र 'विपराभ्यां जेः । १।३।१९।' इति तङ् । ततो रिपून् तूर्णं हनिष्यामि । पुनर्बन्धुं विनाकृतत्वात् दुःखितः सन् न जीविष्यामि ॥ १३ ॥

स्मेष्यन्ते मुनयो देवाः कथयिष्यन्ति चाऽनिशम् ।
दशग्रीवस्य दुर्नीतेर्विनष्टं रक्षसां कुलम् ॥ १४ ॥

स्मेष्यन्त इत्यादि—मुनयो हर्षात् स्मेष्यन्ते हसिष्यन्ति प्रमोदिष्यन्तीति भावः । 'ष्मिङ्' ईषद्धसने ङित्त्वात्तङ् । देवा अनिशं कथयिष्यन्ति । यथा दशग्रीवस्य दुर्नीतेर्दुर्नयात् रक्षसां कुलं विनष्टम् ॥ १४ ॥

केन सम्भावितं तात कुम्भकर्णस्य राघवः ।
रणे कर्त्स्यति गात्राणि मर्माणि च वितर्त्स्यति ॥ १५ ॥

केनेत्यादि—हे तातेति शोकात् बुद्धिस्थं पितरमाभिमुखीकरोति केनैतत्सम्भावितं निश्चितम् । यत् कुम्भकर्णस्य गात्राणि रणे राघवः कर्त्स्यति छेत्स्यति । 'कृती छेदने' । मर्माणि वितर्त्स्यति अपनेष्यति । 'उतृदिर् हिंसानादरयोः' 'सेऽसिचिकृतचृतच्छृदतृदनृतः । ७ । २ । ५७ ।' इतीड्विकल्पः ॥ १५ ॥

पतिष्यति क्षितौ भानुः पृथिवी तोलयिष्यते ।
नभस्वान् भङ्क्ष्यते व्योम मुष्टिभिस्ताडयिष्यते ॥ १६ ॥

पतिष्यतीत्यादि—क्षितौ भूमौ भानुरादित्यः पतिष्यति अधो गमिष्यति । पृथिवी तोलयिष्यते ऊर्ध्वं क्षेप्स्यते । 'तुल उन्माने' चुरादावदन्तेषु च पठ्यते । कर्मणि लृट् । नभस्वान् वायुः काष्ठवद्भङ्क्ष्यते कर्मणि लृट् । मुष्टिभिर्व्योम ताडयिष्यते हनिष्यते ॥ १६ ॥

---

१ निरन्तरम् । 'सततानारताश्रान्तसन्ततानिशम् ।' इत्यमरः ।

इन्दोः स्यन्दिष्यते वह्निः समुच्छोक्ष्यति सागरः ।
जलं धक्ष्यति तिग्मांशोः स्यन्त्स्यन्ति तमसां चयाः ॥ १७ ॥

इन्दोरित्यादि--इन्दोः वह्निः स्यन्दिष्यते प्रस्रविष्याति ।' वृद्भ्यः स्यसनोः ।१।३।९२।' इति परस्मैपदविकल्पः । सागरः समुच्छोक्ष्यति शोषं यास्यति । जलं धक्ष्यति भस्मसात् करिष्यति । 'दह भस्मीकरणे ' । 'हो ढः ।८।२।३१।' 'एकाचो बशो भष् झषन्तस्य स्ध्वोः ।८।२।३७।' इति भष्भावः । तिग्मांशोरादित्यात्तमसां चयाः तमःसङ्घाः स्यन्त्स्यन्ति । स्यन्देः पूर्ववत्परस्मैपदविकल्पः । 'न वृद्भ्यश्चतुर्भ्यः ।७।२।५९' । इतीट्प्रतिषेधः ॥ १७ ॥

कुम्भकर्णो रणे पुंसा क्रुद्धः परिभविष्यते ।
संभावितानि नैतानि कदाचित् केनचिज्जने ॥ १८ ॥

कुम्भकर्ण इत्यादि---कुम्भकर्णो रणे क्रुद्धः सन् पुंसा परिभविष्यते । कर्मणि लृट् । एतानि भानुपतनादीनि कुम्भकर्णपरिभवान्तानि जने लोके केनचित् न संभावितानि न चिन्तितानि ॥ १८ ॥

कुम्भकर्णे हते लङ्कामारोक्ष्यन्ति प्लवङ्गमाः ।
दङ्क्ष्यन्ति राक्षसान् दृप्ता भङ्क्ष्यन्ति च ममाश्रमान् ॥१९॥

कुम्भकर्ण इत्यादि---कुम्भकर्णे इत्थं हते सति प्लवङ्गमाः लङ्कामारोक्ष्यन्ति आक्रमिष्यन्ति । ' रुह बीजजन्मनि' । राक्षसान् दङ्क्ष्यन्ति दशनैः छेत्स्यन्ति। दृप्ताश्च ममाश्रमान् गृहान् भङ्क्ष्यन्ति चूर्णयिष्यन्ति ॥ १९ ॥

चर्त्स्यन्ति बालवृद्धांश्च नर्त्स्यन्ति च मुदा युताः ।
तेन राक्षसमुख्येन विना तान् को निरोत्स्यति ॥ २० ॥

चर्त्स्यन्तीत्यादि---बालान् वृद्धांश्च चर्त्स्यन्ति व्यापादयिष्यन्ति । 'चृती हिंसाग्रन्थनयोः' इति तौदादिकः । मुदा हर्षेण युताः सन्तः नर्त्स्यन्ति । 'नृती गात्रविक्षेपे ।' 'सेऽसिचिकृतचृतच्छृदतृदनृतः ।७।२।५७।' इति विकल्पेनेट् । तेन च राक्षसमुख्येन विना तान् को निरोत्स्याति निवारयिष्यति ॥ २० ॥

अमर्षो मे परः सीतां राघवः कामयिष्यते ।
च्युतराज्यात्सुखं तस्मात् किं कलाऽसाववाप्स्याति ॥ २१ ॥

अमर्ष इत्यादि---अमर्षः[1] क्रोधः पर उत्कृष्टः मम यद्राघवः सीतां कामयिष्यते । कर्मणिङन्तात् 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि । ३ । ३ । १४५ ।' इति अमर्षे क्रोधे लृट् अन्यत्र च्युतराज्यात्तस्मात् रामादसौ सीता किं किल नाम सुखमवाप्स्यति तन्न सम्भावयामि । 'किंकिलास्त्यर्थेषु लृट् ।३।३।१४६।' इति अनवक्लृप्तावसम्भावनायां लृट् ॥ २१ ॥

मारयिष्यामि वैदेहीं खादयिष्यामि राक्षसैः ।
भूमौ वा निखनिष्यामि विध्वंसस्यास्य कारणम् ॥ २२ ॥

मारयिष्यामीत्यादि—अथवा अस्य सर्वस्य विध्वंसस्य विनाशस्य कारणं वैदेहीं मारयिष्यामि व्यापादयिष्यामि । एतैर्वा राक्षसैः खादयिष्यामि भोजयिष्यामि । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ।१। ४ ।५२।' इति प्रत्यवसानार्थे कर्मसंज्ञायां प्राप्तायाम् 'आदिखाद्योर्न' इति प्रतिषेधात् कर्तृसंज्ञैव भवति । भूमौ वा निखनिष्यामि ॥ २२ ॥

नानुरोत्स्ये जगल्लक्ष्मीं घटिष्ये जीवितुं न वा ।
न रंस्ये विषयैः शून्ये भवने बान्धवैरहम् ॥ २३ ॥

नानुरोत्स्य इत्यादि—जगल्लक्ष्मीं नानुरोत्स्ये न कामयिष्ये । अनुपूर्वो रुधिः कामे । जीवितुं वा न घटिष्ये प्रयत्नं न करिष्यामि । तस्माद्भवने बान्धवैः शून्ये विषयैः शब्दादिभिर्न रंस्ये न क्रीडां करिष्ये ॥ २३ ॥

मोदिष्ये कस्य सौख्येऽहं को मे मोदिष्यते सुखे ।
आदेयाः किंकृते भोगाः कुम्भकर्ण त्वया विना ॥ २४ ॥

मोदिष्ये इत्यादि—हे कुम्भकर्ण ! त्वया विना कस्य सौख्ये अहं मोदिष्ये हर्षिष्ये न कस्यचित् । मम वा सुखे सति को मोदिष्यते हृष्टो भविष्यति न कश्चिदपि । किंकृते किंनिमित्तं परभोगा आदेयाः आदातव्याः ॥ २४ ॥

तदेव दर्शयन्नाह—

याः सुहृत्सु विपन्नेषु मामुपैष्यन्ति सम्पदः ।
ताः किं मन्युक्षयाभोगा न विपत्सु विपत्तयः ॥ २५ ॥

---

१ 'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ ।' इत्यमरः ।

या इत्यादि—सुहृत्सु स्निग्धेषु विपन्नेषु याः सम्पदो विभूतयः मामुपैष्यन्ति निष्पत्स्यन्ते ताः मन्युक्षयाभोगाः शोकैः खण्डिताभोगाः किं विपत्सु न विपत्तयः क्षतक्षारसंस्थानीया भवन्तीति ॥ २५ ॥

विनङ्क्ष्यति पुरी क्षिप्रं तूर्णमेष्यन्ति वानराः ।
असन्धित्सोस्तवेत्येतद्विभीषणसुभाषितम् ॥ २६ ॥

विनङ्क्ष्यतीत्यादि—असन्धित्सोः रामेण सन्धानमनिच्छोः क्षिप्रमेषा पुरी लङ्का विनङ्क्ष्यति । 'मस्जिनशोर्झलि ।७।१।६०' इति नुम् । ततः तूर्णं वानरास्तां समेष्यन्ति । उभयत्रापि 'क्षिप्रवचने लृट् । ३ । ३ । १३३ ।' । तदेतद्विभीषणभाषितं सर्वमुपपन्नम् । धर्मं निर्णीय तेनोक्तं 'सन्धानमेवास्तु परैः' इत्यादिना ॥ २६ ॥

अर्थेन सम्भृता राज्ञा न भाषिष्यामहे वयम् ।
संयोत्स्यामह इत्येत्प्रहस्तेन च भाषितम् ॥ २७ ॥

अर्थेनेत्यादि—राज्ञा वयमर्थेन भृताः ततो न भाषिष्यामहे किमत्र युक्तमिति एतत्प्रहस्तेन भाषितं तच्च तथैव सम्पादितम् । स्मशब्दोऽत्र निपातः । यद्यपीदृशं मन्त्रनिर्णये प्रहस्तेन नोक्तं 'सन्धानमेवास्तु परैः' इत्यादिना, तथापि विभीषणवचनादनुमीयते तेनाप्ययमर्थोऽभ्युपगत इति रावण एवमाह । तथा च विभीषणवचनं 'युद्धाय राज्ञा सुभृतैः' इत्यादि ॥ २७ ॥

मानुषो नाम पत्काषी राजानं पुरुषाशिनाम् ।
योधयिष्याति संग्रामे दिव्यास्त्ररथदुर्जयम् ॥ २८ ॥

मानुष इत्यादि—मामेवं दुर्जयं मानुषो नाम पत्काषी पादाभ्यां गमनशीलः पदातिः सन् ।'हिमकाषिहतिषु च । ६ । ३ । ५४ ।' इति पादस्य पदादेशः । पुरुषाशिनां रक्षसां राजानं दिव्यास्त्ररथतया दुर्जयं दुरभिभवनीयं योधयिष्याति ॥ २८ ॥

एवं बहुधा विलप्य जातामर्षः पुनराह—

सन्नत्स्याम्यथवा योद्धुं न कोष्ये सत्त्वहीनवत् ।
अद्य तप्स्यन्ति मांसादा भूः पास्यत्यरिशोणितम् ॥ २९ ॥

सन्नत्स्यामीत्यादि—सत्त्वहीनवत् सत्त्वेन हीन इव न कोष्ये न रोदिमि 'कु शब्दे' । योद्धुं सन्नत्स्यामि सन्नाहं करिष्येऽहमिति अत्र किंवृत्ते-

ऽप्यमर्षे लिङपवादो लट् । 'नहो धः । ८ । २ । ३४ ।' 'खरि च । ८।-४।५५।' इति चर्त्वम् । ततश्चाद्यास्मिन्नहानि मांसादाः क्रव्यादाः तर्प्स्यन्ति तृप्ता भविष्यन्ति । 'अदोऽनन्ने । ३ । २ । ६८ ।' इति विटि प्राप्ते वासरूपविधिना अणपि भवति । भूश्च हतानामरीणां शोणितं पास्यति । 'शेषे लट्, ।३।३।१५१' ॥ २९ ॥

आकक्ष्यामि यशः शत्रूनपनेष्यामि कर्मणा ।
अनुभाविष्यते शोको मैथिल्याद्य पतिक्षयात् ॥ ३० ॥

आकक्ष्यामीत्यादि—सर्वयोद्धॄणां यश आकक्ष्यामि आहरिष्यामि । शत्रूंश्च कर्मणा युद्धाख्येनापनेष्यामि न्यूनयिष्यामि । अद्य पतिक्षयात्पतिविनाशात् शोको मैथिल्या सीतया अनुभाविष्यते संवेदयिष्यते । कर्मणि लट्, चिण्वदिट् ॥ ३० ॥

मन्तूयिष्यति यक्षेन्द्रो वल्गूयिष्यति नो यमः ।
ग्लास्यन्त्यपतिपुत्राश्च वने वानरयोषितः ॥ ३१ ॥

मन्तूयिष्यतीत्यादि—यक्षेन्द्रो धनदः दाशरथिं राममापन्नं विपन्नं श्रुत्वा मन्तूयिष्यति दुर्मना भविष्यति । यमश्च न वल्गूयिष्यति हृष्टमना भविष्यति । मन्तुवल्गुशब्दाभ्याम् 'कण्ड्वादिभ्यो यक् । ३ । १ । २७ ।' तदन्तात् लट् । वने वानरयोषितः अपतिपुत्राः सत्यः ग्लास्यन्ति ग्लानिं यास्यन्ति ॥ ३१ ॥

सुखं स्वप्स्यन्ति रक्षांसि भ्रमिष्यन्ति च निर्भयम् ।
न विक्रोक्ष्यन्ति राक्षस्यो नराश्चात्स्यन्ति हर्षिताः ॥ ३२ ॥

सुखमित्यादि—रक्षांसि चैतानि सुखं स्वप्स्यन्ति निर्भयं च भ्रमिष्यन्ति । राक्षस्यश्च न विक्रोक्ष्यन्ति न क्रन्दिष्यन्ति । 'क्रुश आह्वाने रोदने च' । हर्षिताश्च सत्यो नरानत्स्यन्ति भक्षयिष्यन्ति ॥ ३२ ॥

अथ युग्मकम् ।

प्राङ् मुहूर्तात् प्रभातेऽहं भविष्यामि ध्रुवं सुखी ।
आगामिनि ततः काले यो द्वितीयः क्षणोऽपरः ॥ ३३ ॥

१ यद्यपि मन्तुशब्दो न शोकपरः, 'आगोऽपराधो मन्तुश्च' इत्यमरोक्त्या 'मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ ।' इति मेदिन्युक्त्या चापराधपर एव, तथाऽपि लक्षणया विभाव्यः एवं वल्गुशब्दोऽपि ।

प्रागित्यादि—योऽयमागामी प्रभातकालः मुहूर्तद्वयसम्मितः तस्मिंस्तस्येति षष्ठीसप्तम्योरभेदात् । यो द्वितीयो मुहूर्तः तस्मात् प्राक् प्रथम मुहूर्ते अहमवश्यं सुखी भविष्यामि, तदानीं हतशत्रुत्वात् । ततः प्रभातादागामी यः कालः क्षणद्वादशसंमितः तस्मिन्नागामिनि काले यो द्वितीयः तस्माद्यदपरः क्षणः पूर्वः तत्रेति वक्ष्यमाणेन सम्बन्धः ॥ ३३ ॥

**तत्र जेतुं गमिष्यामि त्रिदशेन्द्रं सहामरम् ।**
**ततः परेण भूयोऽपि लङ्कामेष्याम्यमत्सरः ॥ ३४ ॥**

तत्रेत्यादि—तत्र क्षणे त्रिदशेन्द्रं सहामरं देवैः सहितं जेतुं द्रुतं गमिष्यामि । प्राङ् मुहूर्तात् सुखीभविष्यामि । क्षणाद्यदपरं तत्र जेतुं गमिष्यामीति 'कालविभागे चानहोरात्राणाम् ।३।३।१३७।' इति अनद्यतनवत् प्रत्ययप्रतिषेधे लृट् । तत्र हि 'नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ।३।३।१३५।' इदि 'भविष्यति मर्यादावचनेऽवरस्मिन् ।३।३।१३६।' इति चानुवर्तते । तत्र जेतुं कालमर्यादाविभागे सति योऽवर आद्यप्रविभागः तत्र भविष्यति काले अनद्यतनवत्प्रत्ययविधिर्न भवति । ततो लट्प्रतिषेधाल्लृडेव भवति । ततः परेणेति यस्मिन्नागामिनि काले शक्रं जेतुं गमिष्यामि तत्र द्वितीयो यः क्षणस्तस्मात् परेणोपरिष्टात्तं शक्रं जित्वा भूयोऽपि लङ्कामेष्यामि । आङ्पूर्वस्येणो रूपम् । अमत्सरो विगतक्रोधः सन् । 'परस्मिन् विभाषा ।३।३।१३८।' इत्यनेन विभाषा लुट्प्रतिषेधाल्लृट् । तत्र हि कालविभागे सति भविष्यति काले परस्मिन् विभाषा अनद्यतनवत्प्रत्ययविधिर्न भवतीत्युक्तम् ॥ ३४ ॥

**तमेवंवादिनं मूढमिन्द्रजित् समुपागतः ।**
**युयुत्सिष्येऽहमित्येवं वदन् रिपुभयंकरः ॥ ३५ ॥**

तमित्यादि–तं रावणं मूढत्वादेवंवादिनम् एवंभाषणशीलम् इन्द्रजित् रिपूणां भयंकरः समुपागतः । युयुत्सिष्येऽहं योद्धुमिच्छां करिष्यामीति ब्रुवन् ॥३५॥

केन सह योद्धुमिच्छामीति चेदाह—

**नाभिज्ञा ते महाराज जेष्यावः शक्रपालितम् ।**
**दृप्तदेवगणाकीर्णमावां सह सुरालयम् ॥ ३६ ॥**

---

१ 'ते तु मुहूर्तो द्वादशास्त्रियाम् ।' इत्यमरः । एवं च क्षणद्वयसम्मित इति व्याख्यानान्तरं तु न साम्प्रतम् । २ देवराजम् ।

नाभिज्ञेत्यादि--हे महाराज ! ते तव नाभिज्ञा न स्मृतिः । सुरालयं शक्रेण पालितं दृप्तैश्च देवगणैराकीर्णं व्याप्तम् । आवां द्वावपि सह संभूय जेष्याव: जितवन्तौ । 'अभिज्ञावचने लृट् ।३।२।११२।' तत्र 'भूतानद्यतने' इति वर्तते ॥ ३६ ॥

नाभिज्ञा ते सयक्षेन्द्रं भङ्क्ष्यावो यद्यमं बलात् ।
रत्नानि चाहरिष्यावः प्राप्स्यावश्च पुरीमिमाम् ॥ ३७ ॥

नाभिज्ञेत्यादि--न सेत्यभिज्ञास्ति । सयक्षेन्द्रं धनदसहितं यमं बलात् सामर्थ्येन आवां भङ्क्ष्याव: भग्नवन्तौ । रत्नानि च ताभ्यां बलादाहरिष्याव: । इमां च पुरीं लङ्कां प्राप्स्याव: । 'विभाषा साकाङ्क्षे ।३।२।११४।' इति लृट् । लक्ष्यलक्षणयो: सम्बन्धे प्रयोक्तुराकाङ्क्षा । तत्र भञ्जनं लक्षणं रत्नाद्याहरणं च लक्ष्यम् ॥ ३७ ॥

एष पेक्ष्याम्यरीन् भूयो न शोचिष्यसि रावण ।
जगद्रक्ष्यसि नीराममवगाहिष्यसे दिशः ॥ ३८ ॥

एष इत्यादि--एषोऽहं भूयः पुनररीन् शत्रून् पेक्ष्यामि चूर्णयिष्यामि । 'वर्तमानसामीप्ये वर्तमानवद्वा । ३ । ३ । १३१।' इत्यनेन सामीप्ये वर्त्तमानिकप्रत्ययस्य विकल्पेन विधानाल्लृडेव भवति । येन हे रावण न शोचिष्यसि शोकं न करिष्यसि । भविष्यति लृट् । जगत् नीरामं रामरहितं द्रक्ष्यसि । दिशश्च सर्वा अवगाहिष्यसे व्याप्स्यसि ॥ ३८ ॥

सहभृत्यः सुरावासे भयं भूयो विधास्यसि ।
प्रणंस्यत्यद्य देवेन्द्रस्त्वां वक्ष्यति स सन्नतिम् ॥ ३९ ॥

सहेत्यादि--भृत्यैः सह सुरावासे स्वर्गे भूयो भयं विधास्यसि करिष्यसि । देवेन्द्रश्च त्वां प्रणंस्यति 'त्वदीयोऽहम्' इति निवेदयिष्यति । वक्ष्यति च सन्नतिं भणिष्यति च नमस्कारम् ॥ ३९ ॥

भेष्यते मुनिभिस्त्वत्तस्त्वमधिष्ठास्यसि द्विषः ।
ज्ञास्येऽहमद्य सङ्ग्रामे समस्तैः शूरमानिभिः ॥ ४० ॥

भेष्यत इत्यादि--मुनिभिस्त्वत्तो भेष्यते भीतैर्भवितव्यम् । भावे लृट् । त्वमधिष्ठास्यसि द्विषः शत्रून् परिभविष्यसि । 'अधिशीङ्स्थासां कर्म

१ सुराणां देवानाम् आवासः स्थानं तत्र । २ अतिशयितम् ।

।१।४।४६।' इति कर्मसंज्ञा'। यादृशश्चाहं तादृशः संग्रामे ज्ञास्ये ज्ञातो भविष्यामि । कर्मणि लृट् । कैः समस्तैः शूरमानिभिः वयं शूरा इत्यात्मानं मन्यमानैः । 'आत्ममाने खश्च ।३।२।८३।' ॥ ४० ॥

ज्ञायिष्यन्ते मया चाद्य वीरम्मन्या द्विषद्गणाः ।
गूहिष्यामि क्षितिं कृत्तैरद्य गात्रैर्वनौकसाम् ॥ ४१ ॥

ज्ञायिष्यन्त इत्यादि—एते च द्विषां गणाः शत्रुसङ्घा वीरंमन्याःअद्य मया ज्ञायिष्यन्ते परिच्छेत्स्यन्ते यादृशा इति । कर्मणि लृट् । चिण्वदिट् । वनौकसां वनवासिनां कपीनां गात्रैः शरीरैः कृत्तैः छिन्नैरद्य क्षितिं गूहिष्यामि ॥ ४१ ॥

आरोक्ष्यामि युगान्तवारिदघटासङ्घट्टधीरध्वनिं
निर्यास्यन् रथमुच्छ्रितध्वजधनुःखड्गप्रभाभासुरम् ।
श्रोष्यस्यद्य विकीर्णवृक्णविमुखव्यापन्नशत्रौ रणे
तृप्ताञ्छोणितशोणभीषणमुखान् क्रव्याशिनः क्रोशतः ॥ ४२ ॥

## इति भट्टिप्रणीते रामचरितकाव्ये तिङन्तकाण्डे लृड्विलसितो नाम षोडशः सर्गः ॥

आरोक्ष्यामीत्यादि—अतोऽहं रथमारोक्ष्यामि निर्यास्यन् इतो निर्गच्छन् । आरोक्ष्यामीति क्रियायां क्रियार्थायामुपपदे निर्यास्यन्निति 'लृट् शेषे च ।३।३।१३।' इति चकाराल्लृट् । कीदृशं रथम् । युगान्ते प्रलयकाले या वारिदघटास्तासां यः संघट्टः परस्परसंमर्दः तस्येव धीरो गम्भीरो ध्वनिर्यस्य रथस्य । उच्छ्रिता ध्वजाः धनूंषि च यत्र । खड्गप्रभाभिश्च भासनशीलो यः । पश्चाद्विशेषणसमासः । उच्छ्रितानां वा ध्वजादीनां प्रभाभिर्भासुर इति योज्यम् । विकीर्णा इतस्ततो विक्षिप्ताः वृक्णाः छिन्नाः छिन्नमस्तकाः विमुखाः पराङ्मुखा व्यापन्ना मृताः शत्रवो यस्मिन् रणे क्रव्याशिनः मांसभक्षिणः शृगालादीन् क्रोशतः फूत्कुर्वतः अद्य श्रोष्यसि । कीदृशान् । तृप्तान् शोणितमांसोपभोगात् । शोणितेन शोणानि रक्तवर्णानि तत

---

१ 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ।' इत्युक्तेः । अनुप्रासश्चालङ्कारः ।

एव भीषणानि भयंकराणि मुखानि येषामिति । वृश्चेरोदितो निष्ठानत्वस्यासिद्धत्वात् चोः कुत्वे वृक्णे इति ॥ ४२ ॥

इति श्रीजयमङ्गलसूरिविरचितया जयमङ्गलाख्यया व्यख्यया
समलंकृते श्रीभट्टिप्रणीते रामचरिते काव्ये चतुर्थे तिङन्त-
काण्डे लक्षणरूपे तृतीयः परिच्छेदः, लक्ष्यरूपे
कथानके ' रावण--विलापो ' नाम
षोडशः सर्गः ॥ १६ ॥

## सप्तदशः सर्गः ।

इतः प्रभृति लङमधिकृत्य विलसितमाह्--तत्र भूतानद्यतने लङ् ततोऽन्यत्र दर्शयिष्यति---

**आशासत ततः शान्तिमस्नुरग्नीनहावयन् ।**
**विप्रानवाचयन् योधाः प्राक्कुर्वन् मङ्गलानि च ॥ १ ॥**

आशासतेत्यादि—ततः प्रतिज्ञानन्तरं योधाः इन्द्रजित्सम्बन्धिन इत्यर्थात् । उपद्रवपरिहारार्थं शान्तिमाशासत अभीष्टवन्तः । 'आङः शासु इच्छायाम्' इत्यनुदात्तेत् । 'आत्मनेपदेष्वनतः । ७ । १ । ५ ।' इत्यदादेशः । शान्तिं च दर्शयन्नाह्—अस्नुः स्नाताः । 'ष्णा शौचे ।' आत इत्यधिकृत्य । 'लङः शाकटायनस्यैव । ३ । ४ । १११ ।' इति झेर्जुस् । उस्यपदान्तात् । ६ । १ । ९६ ।' इति पररूपम् । अग्नीनहावयन् अग्निकर्म कारितवन्तः । विप्रानवाचयन् स्वस्तिवाचनं कारितवन्तः । मङ्गलानि मङ्गलयुक्तानि अर्शआदित्वादच् । कर्माणि कृतवन्तः ॥१ ॥

**अपूजयन् कुलज्येष्ठानुपागूहन्त बालकान् ।**
**स्त्रीः समावर्धयन् सास्राः कार्याणि प्रादिशंस्तथा ॥ २ ॥**

अपूजयन्नित्यादि---कुलज्येष्ठान् वृद्धानपूजयन् पूजितवन्तः पादपतनादिना । बालकानुपागूहन्त आश्लिष्टवन्तः । गतानां किं भविष्यतीति सास्राः स्त्रीः योषितः । 'वाऽम्शसोः । ६ । ४ । ८० ।' इतीयङभावपक्षे रूपम् । समावर्धयन् ताम्बूलादिना संवर्धितवन्तः । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिच् । तथा कार्याणि गृहकार्याणि प्रादिशन्निर्दिष्टवन्तः । इदमिदं कार्यम् इति ॥ २ ॥

**आच्छादयन् व्यलिम्पंश्च प्राश्नन्नथ सुरामिषम् ।**
**प्रापिबन् मधु माध्वीकं भक्ष्यांश्चादन् यथेप्सितान् ॥ ३ ॥**

आच्छादयन्नित्यादि—आच्छादयन् वस्त्राणि पिनद्धवन्तः। 'छद संवरणे' चुरादिः। व्यलिम्पंश्च समालिप्तवन्तः। 'लिप उपदेहे'। 'शे मुचादीनाम् । ७ । १ । ५९ ।' इति नुम्। 'नश्छव्यप्रशान्। ८ । ३ । ७ ।' इति रुत्वम्। पूर्वस्यानुनासिकः। अथानन्तरं सुराभिषं प्राश्नन् अभ्यवहृतवन्तः। मधुमाध्वकिं मध्वासवं प्रापिबन् सुष्ठु पीतवन्तः। भक्ष्यांश्च खण्डपायसादीन् यथेप्सितानादन् भक्षितवन्तः। अडित्यनुवृत्तौ 'अदः सर्वेषाम् ।७।३।१००।'-इत्यडागमः ॥ ३ ॥

न्यश्यन् शस्त्राण्यभीष्टानि समनह्यंश्च वर्मभिः।
अध्यासत सुयानानि द्विषद्भ्यश्चाऽशपंस्तथा ॥ ४ ॥

न्यश्यन्नित्यादि—अभीष्टानि यथानुभावितानि शस्त्राणि न्यश्यन् तेजितवन्तः। 'शो तनूकरणे'। 'ओतः श्यनि । ७ । ३ । ७१ ।' इत्योकारलोपः। वर्मभिश्च कवचैः समनह्यन् संनद्धाः। शरीराण्यावृतवन्त इत्यर्थः। सुयानानि शोभनयानानि अध्यासत आरूढाः। 'अधिशीङ्स्थासां कर्म ।१।४।४६ ।' इति कर्मसंज्ञा। तथा द्विषद्भ्योऽशपन् आक्रुष्टवन्तः 'पापाः क यास्यथ' इति। 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।१।४।३४।' इति सम्प्रदानसंज्ञा॥ ४॥

अपूजयंश्चतुर्वक्त्रं विप्रानार्चंस्तथाऽस्तुवन्।
समालिपत शक्रारिर्यानं चाऽभ्यलषद्वरम् ॥ ५ ॥

अपूजयन्नित्यादि—चतुर्वक्त्रं ब्रह्माणमपूजयन् अर्चितवन्तः। विप्रानार्चन् दाननमस्कारादिना पूजितवन्तः। तथा अस्तुवन् परस्परं स्तुतवन्तः। शक्रारिश्च इन्द्रजित् समालिपत समालिप्तवान्। यानं वरमुत्कृष्टमभ्यलषत् अभीष्टवान्। 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः। ३।१।७०।' इति श्यनो विकल्पितत्वात् पक्षे शप् ॥ ५ ॥

आमुञ्चद् वर्म रत्नाढ्यमबध्नात् खड्गमुज्ज्वलम्।
अध्यास्त स्यन्दनं घोरं प्रावर्तत ततः पुरः ॥ ६ ॥

आमुञ्चदित्यादि—रत्नाढ्यं रत्नप्रत्युप्तं वर्म कवचमामुञ्चत् शरीर आमुक्तवान् पिनद्धवानित्यर्थः। खड्गं चोज्ज्वलमबध्नात् कक्षपार्श्वाश्रितं कृतवान्। घोरं भीषणं स्यन्दनमध्यास्त आरूढः। ततोऽनन्तरं पुरः पुरतः प्रावर्तत प्रवृत्तः ॥ ६ ॥

---

१ मदिरां मांसं च। २ मधुरास्वादमासवम्। आसवोऽपि मद्यविशेषः।

आघ्नन् भेरीर्महास्वानाः कम्बूंश्चाप्यधमञ् शुभान् ।
अताडयन् मृदङ्गांश्च पेराश्चापूरयन् कलाः ॥ ७ ॥

आघ्नन्नित्यादि—तस्मात् प्रवृत्ताः महास्वाना महान्तः स्वाना नादा महानादाः । 'स्वनहसोर्वा ।३।३।६२।' इत्यबभावपक्षे 'भावे ।३।३।१८' इति घञ् । भेरीः आघ्नन् ताडितवन्तः । वादका इत्यर्थात् । शुभान् सुस्वरान् कम्बून् शङ्खानधमन् शब्दितवन्तः । 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ।७।३।७८।' इति धमादेशः । मृदङ्गांश्चाताडयन् आहतवन्तः । 'तड आघाते' इति चुरादिः । पेराः खरमुखाकारान् वाद्यविशेषान् कलाः श्रुतिमधुरस्वराः अपूरयन् ॥ ७ ॥

अस्तुवन् बन्दिनः शब्दानन्योन्यं चोदभावयन् ।
अनदन् सिंहनादांश्च प्राद्रेकत हयद्विपम् ॥ ८ ॥

अस्तुवन्नित्यादि—बन्दिनः स्तुतिपाठका अस्तुवन् 'जय जीव' इत्यादिना स्तुतिं कृतवन्तः। अन्योन्यं अन्यस्य अन्यस्य च शब्दान् सांग्रामिकनामानि उद्भावयन् उद्घाटितवन्तः सैनिका इत्यर्थात् । सिंहनादांश्चानदन् शब्दितवन्तः । हयद्विपं 'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ।२।४।१२।' इति पशुद्वन्द्वस्य विभाषैकवद्भावः । प्राद्रेकत शब्दितवत् । 'द्रेकृ शब्दोत्साहे' इत्यनुदात्तेत् ॥ ८ ॥

अनिमित्तान्यथापश्यन्नस्फुटद्रविमण्डलम् ।
औक्षञ्छोणितमम्भोदा वायवोऽवान् सुदुःसहाः ॥ ९ ॥

अनिमित्तानीत्यादि—अनिमित्तानि कुत्सितनिमित्तानि । नञत्र कुत्सायाम् । गच्छन्तोऽपश्यन् दृष्टवन्तः । तानि दर्शयति—रविमण्डलमस्फुटत् स्फुटितम्, अम्भोदाः शोणितमौक्षन् वृष्टाः । 'उक्ष सेचने' । वायवः सुदुःसहाः प्रचण्डा अवान् वान्ति स्म । शाकटायनमतावन्यत्र उसादेशः ॥ ९ ॥

आर्च्छन् वामं मृगाः कृष्णाः शस्त्राणां व्यस्मरन् भटाः ।
रक्तं न्यष्ठीवदश्वाम्यदखिद्यद्वाजिकुञ्जरम् ॥ १० ॥

---

१ 'स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिःस्वनाः ।' इत्यमरः । २ 'तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता । अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः ॥' इति नञोऽप्राशस्त्यार्थकत्वात् ।

आर्च्छन्नित्यादि—निर्गच्छतां वामपार्श्वे कृष्णमृगा आर्च्छन् गताः। अर्तेः 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ।७।३।७८।' इति ऋच्छादेशः । 'ऋच्छ गतौ' इत्यस्य वा रूपम् । भटाश्च शस्त्राणां व्यस्मरन् विस्मृतवन्तः 'अधीगर्थदयेशां कर्म्मणि । २ । ३ । ५२ ।' इति कर्मणि षष्ठी । वाजिकुञ्जरमस्विन्नमश्रान्तमपि रक्तं न्यष्ठीवत् । 'ष्ठिवु निरसने' इति भौवादिकस्य ग्रहणम् 'ष्ठिवुक्लमुचमां शिति । ७ । ३।७५ ।' इति दीर्घः। अक्लाम्यत् क्लान्तम् अखिद्यत् खिन्नं च ॥१०॥

न तानगणयन् सर्वानास्कन्दंश्च रिपून् द्विषः।
अच्छिन्दन्नसिभिस्तीक्ष्णैरभिन्दंस्तोमरैस्तथा ॥ ११ ॥

न तानित्यादि—तान् सर्वानशुभान्नागणयन् नादृतवन्तः किमेतैरिति । अपि तु रिपूनास्कन्दन् अभिगतवन्तः। द्विषो राक्षसास्तीक्ष्णैरसिभिररीनच्छिन्दन् छिन्नवन्तः । तथा तोमरैस्तीक्ष्णैरभिन्दन् विदारितवन्तः ॥ ११ ॥

न्यकृन्तंश्चक्रधाराभिरतुदन् शक्तिभिर्दृढम् ।
भल्लैरविध्यन्नुग्राग्रैरतृंहंस्तोमरैरलम् ॥ १२ ॥

न्यकृन्तन्नित्यादि--चक्रधाराभिः न्यकृन्तन् छिन्नवन्तः।'शे मुचादीनाम्'। ७. । १ । ५९ । इति मुचादित्वान्नुम् । शक्तिभिश्च दृढमत्यर्थमतुदन् व्यथितवन्तः । भल्लैरविध्यन् ताडितवन्तः । 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । ६ । १ । १६ ।' इति सम्प्रसारणम् । उग्राग्रैस्तीक्ष्णाग्रैस्तोमरैरलं पर्याप्तमतृंहन् हतवन्तः । 'तृह हिंसायाम् ।' 'रुधादिभ्यः श्नम् ।३।१।७८।' इति रुधादित्वात् श्नम् । 'श्नसोरल्लोपः ६।४।२३।' इति अल्लोपे अनुस्वारः ॥ १२ ॥

आस्यन् प्लवङ्गमा वृक्षानधुन्वन् भूधरैर्भृशम् ।
अहिंसन् मुष्टिभिः क्रोधाददशन् दशनैरपि ॥ १३ ॥

आस्यन्नित्यादि—प्लवङ्गमा अपि वृक्षानास्यन् क्षिप्तवन्तः। 'असु क्षेपणे'। तथा भूधरैः पर्वतैर्भृशमधुन्वन् हतवन्तः। 'अधूर्वन्' इति पाठान्तरम् । तत्र 'उपधायां च ।८।२।७८।' इति दीर्घः। क्रोधान्मुष्टिभिरहिंसन् ताडितवन्तः। दशनैर्दन्तैरदशन् खादितवन्तः। 'दंशसञ्जस्वञ्जां शपि । ६ । ४ । २५ ।' इत्यनुनासिकलोपः ॥ १३ ॥

प्रादुन्वञ्जानुभिस्तूर्णमतुदंस्तलकूर्परैः ।
प्राहिण्वन्नरिमुक्तानि शस्त्राणि विविधानि च ॥ १४ ॥

प्रादुन्वन्नित्यादि—जानुभिस्तूर्णं प्रादुन्वन् पीडितवन्तः 'टुदु उपतापे।' स्वादिः। तलकूर्परैः[1] हस्ततलैः कफोणिभिश्चातुदन् व्यथितवन्तः। अरिभिर्मुक्तानि विविधानि यानि शस्त्राणि तानि प्राहिण्वन् प्रहितवन्तः ॥ १४ ॥

अतृणेट्छक्रजिच्छत्रूनभ्राम्यच्च समन्ततः ।
अध्वनच्च महाघोरं न च कश्चन नादुनोत् ॥ १५ ॥

अतृणेडित्यादि—ततः शक्रजिदिन्द्रजित् शत्रूनतृणेट् हिंसितवान्। तृहेः श्नम्। तस्य 'तृणह इम् ।७।३।९२।' हल्ङ्यादिलोपः। हकारस्य ढत्वजश्त्वचर्त्वानि। समन्ततश्चाभ्राम्यत् भ्रान्तवान्। महाघोरं च भीषणं स्वनम् अध्वनत् नदितवान्। न च कंचन नादुनोत् कंचिदपि न नोपतापितवान् अपि तु सर्वानपि पीडितवानित्यर्थः ॥ १५ ॥

नाजानन्सन्दधानं तं धनुर्नैक्षन्त बिभ्रतम् ।
नेषूनचेतन्नस्यन्तं हतास्तेनाविदुर्द्विषः ॥ १६ ॥

नाजानन्नित्यादि—धनुषि शरं सन्दधानमारोपयन्तमिन्द्रजितं नाजानन् न ज्ञातवन्तः। धनुर्बिभ्रतं नैक्षन्त धनुर्धारयन्तं न दृष्टवन्तः। इषून् शरानस्यन्तं क्षिप्यन्तं नाचेतन् हस्तलाघवात् न ज्ञातवन्तः। 'चिती सञ्ज्ञाने'। 'ङमो ह्रस्वादचि ङमुण् नित्यम् ।८।३।३२।' इति ङमुट्। तेन हताः सन्तो द्विषः अविदुः ज्ञातवन्तः पूर्वोक्तम्। 'सिजभ्यस्तविदिभ्यश्च ।३।४।१००।' इति झेर्जुस् ॥ १६ ॥

अशृण्वन्नन्यतः शब्दं प्रपलायन्त चान्यतः ।
आक्रन्दमन्यतोऽकुर्वंस्तेनाहन्यन्त चान्यतः ॥ १७ ॥

अशृण्वन्नित्यादि—अन्यतः अन्यस्मिन् प्रदेशे केचिद् द्विषः शब्दमशृण्वन्। 'श्रुवः शृ च ।३।१।७४।' इति शृभावः श्नुप्रत्ययश्च। अन्यत्र स्थिताः प्रपलायन्त पलायिताः। अन्यतोऽन्यत्र प्रदेशे स्थिताः आक्रन्दम् अकुर्वन् रोदनं कृतवन्तः। अन्यतोऽन्यत्र तेनेन्द्रजिता अहन्यन्त व्यापादिताः। कर्मणि लङ्। सर्वत्राद्यादित्वात्तसिः ॥ १७ ॥

प्रालोठन्त व्यभिद्यन्त परितो रक्तमस्रवन् ।
पर्यभ्राम्यन्नतृष्यंश्च क्षतास्तेनाम्रियन्त च ॥ १८ ॥

---

१ 'कफोणिः कूर्परोऽरत्नेः पृष्ठम्।' इति नाममाला। अस्य 'कूर्पो' इति भाषायां प्रसिद्धिः। २ प्रकोष्ठैरिति पाठान्तरे तु कूर्परस्ये प्रकोष्ठवाचित्वे प्रमाणं मृग्यम्।

प्रालोठन्तेत्यादि---तेन क्षताः सन्तः केचिद्भूमौ प्रालोठन्त । 'लुठ लोठने ।' भुवीतस्ततो व्यभिद्यन्त व्यनीयन्त, हताः सन्त इतस्ततो नीताः । कर्मणि लङ् । परितः समन्तादृक्तमस्रवन् मुक्तवन्तः । पर्यश्राम्यन् खिन्नाः । अतृष्यन् पिपासिताः।'दिवादिभ्यः श्यन् ।३।१।६९।'इति श्यन् । केचिदम्रियन्त। 'म्रियतेर्लुङ्लिङोश्च ।१।३।६१।' इति तङ् ॥ १८ ॥

सौमित्रिराकुलस्तस्मिन्ब्रह्मास्त्रं सर्वरक्षसाम् ।
निधनायाजुहूषत्तं व्यष्टभ्नाद्रघुनन्दनः ॥ १९ ॥

सौमित्रिरित्यादि---तस्मिन् इन्द्रजिति तथाभूते सति सौमित्रिराकुलो व्यस्तचित्तः सर्वरक्षसां निधनाय ब्रह्मास्त्रमाजुहूषत् आह्वातुमैच्छत् । 'अभ्यस्तस्य च ।६।१।३३।' इति अभ्यस्ताकारस्य ह्वयतेः प्रागेव द्विर्वचनात् सम्प्रसारणम् । तं च सौमित्रिं रघुनन्दनो रामः व्यष्टभ्नात् निवारितवान् । 'मा भूद्विभीषणस्यापि नाशः' इति । 'स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च । ३। १ ।८२।' इति श्नाप्रत्ययः । 'प्राक्सितादड्व्यवायेऽपि ।८।३ ।६७ । इति मूर्धन्यः ॥ १९ ॥

ततो मायामयीं सीतां घ्नन् खड्गेन वियद्गतः ।
अदृश्यतेन्द्रजिद्वाक्यमवदत्तं मरुत्सुतः ॥ २० ॥

तत इत्यादि----ततोऽनन्तरम् इन्द्रजित् वियद्गतः आकाशगतः सीतां मायामयीं मायानिर्मितां खड्गेन घ्नन् व्यापादयन्नदृश्यत दृष्टः । कर्मणि लङ् । तथाभूतं राक्षसं मरुत्सुतो हनूमान् वाक्यमवदत् भाषितवान् ॥ २० ॥

मापराध्नोदियं किंचिदभ्रश्यत्पत्युरन्तिकात्[1] ।
सीतां राक्षस मा स्मैनां निगृह्णाः पाप दुःखिताम् ॥ २१ ॥

मापराध्नोदित्यादि---हे पाप राक्षस ! सीता पत्युरन्तिकादभ्रश्यत् अपगता । इयं भवतो नापराध्नोत् नापराद्धा । 'राध साध संसिद्धौ ।' इति स्वादौ । तस्मादेनां दुःखितां मा स्म निगृह्णाः मा वधीः । 'स्मोत्तरे लङ् च ।३।३।१७६।' इति वर्तमाने लङ् ॥ २१ ॥

पीडाकरममित्राणां कर्तव्यमिति शक्रजित् ।
अब्रवीत्खड्गकृष्टश्च तस्या मूर्धानमच्छिनत् ॥ २२ ॥

---

[1] समीपात् ।

पीडाकरमित्यादि----इयमपराद्धा भवतु न वा सर्वथा यदमित्राणां पीडाकरं तदवश्यं कर्तव्यमिति शक्रजिदब्रवीत् उक्तवान् । खड्गकृष्टश्च कृष्टः खड्गो येन । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' । तस्या मूर्धानमच्छिनत् छिन्नवान् । तिपो हल्ङ्यादिलोपः । दकारस्य चर्त्वम् ॥ २२ ॥

यत्कृतेऽरीन्व्यगृह्णीम समुद्रमतराम च ।
सा हतेति वदन्राममुपातिष्ठन्मरुत्सुतः ॥ २३ ॥

यत्कृत इत्यादि—यस्याः कृते यन्निमित्तम् अरीन् परान् अशोकवनिकास्थितान् व्यगृह्णीम विगृहीतवन्तः । 'नित्यं ङितः ।३।४।९९' इति ल्ङि उत्तमस्य लोपः । समुद्रं चातराम तीर्णवन्तः । 'अतो दीर्घो यञि ।७।३।१०१।' इति दीर्घः । सा सीता हतेति वदन्मरुत्सुतः राममुपातिष्ठत् ढौकितवान् । अत्र यमुना गङ्गामुपतिष्ठत इत्येवं सङ्गतिकरणम् [ उपश्लेषो ] नास्तीति 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्' इति तङ् न भवति ॥ २३ ॥

ततः प्रामुह्यतां वीरौ राघवावरुतां तथा ।
उष्णं च प्राणितां दीर्घमुच्चैर्व्याक्रोशतां तथा ॥ २४ ॥

तत इत्यादि—ततो हनूमद्वचनानन्तरं राघवौ वीरौ प्रामुह्यतां प्रकर्षेण मोहं गतौ । तथाऽरुतां क्रन्दितवन्तौ । 'रु शब्दे ।' 'उतो वृद्धिर्लुकि हलि ।७ । ३ । ८९ ।' इति न भवति । पित्त्वाभावात् । तथा दीर्घमुष्णं च प्राणितां निश्वसितवन्तौ 'अन प्राणने ।' 'रुदादिभ्यः सार्वधातुके ।७।२।७६।' इतीट् । तथा उच्चैर्व्याक्रोशतां 'हा सीते' इति आहूतवन्तौ ॥ २४ ॥

तावभाषत पौलस्त्यो मा स्म प्ररुदितं युवाम् ।
ध्रुवं स मोहयित्वास्मान्पापोऽगच्छन्निकुम्भिलाम् ॥ २५ ॥

तावित्यादि—पौलस्त्यो विभीषण आगत्य तौ तथाभूतावभाषत उक्तवान् । युवां मा स्म प्ररुदितं मा रोदिष्टम् । 'स्मोत्तरे लङ् च ।३।३।१७६।' इति लङ् । यतो ध्रुवमवश्यं स इन्द्रजित् पापः पाप्मा । अर्शआदित्वादच् । अस्मान् मोहयित्वा मायया विमोह्य । मुहेरकर्मकत्वाद् 'गतिबुद्धिप्रत्यव-

१ शत्रूणाम् । २ मस्तकम् ।

सनार्थशब्दकर्म्माकर्मकाणामणि कर्त्ता स णौ । १ । ४ । ५२ ।' इति कर्मसंज्ञा। निकुम्भिलामग्निगृहमगच्छत् गतवान् । तत्र भूतानद्यतन एव लङ् ॥ २५ ॥

मा स्म तिष्ठत तत्रस्थो वध्योऽसावहुतानलः ।
अस्त्रे ब्रह्मशिरस्युग्रे स्यन्दने चानुपार्जिते ॥ २६ ॥

मा स्मेत्यादि—मा स्म तिष्ठत मा विलम्बध्वं, गच्छत । 'स्मोत्तरे लङ् च ।४। ३ । १७६ ।' यतस्तत्रस्थो निकुम्भिलास्थोऽसावहुतानलः अकृताग्निकार्यो वध्यः हन्तुं शक्यः । 'शकि लिङ् च । ३।३।१७२' इति चकारात् 'कृत्याश्च' इति वचनात् 'हनो वा यद्वधश्च वक्तव्यः' इति वार्तिकेन यत् । कथमहुतानलो वध्य इति चेत् अस्त्रे ब्रह्मशिरसि ब्रह्मशिरोनाम्नि उग्रे दुष्प्रयोगे स्यन्दने च अनुपार्जितेऽप्राप्ते सति ॥ २६ ॥

कथमुभयं तेनोपार्ज्यत इत्याह ।

ब्रह्माऽदधाद्वधं तस्य तस्मिन्कर्मण्यसंस्थिते ।
प्रायच्छदाज्ञां सौमित्रेर्यूथपानां च राघवः ॥ २७ ॥

ब्रह्मेत्यादि—यतस्तस्यां निकुम्भिलायां कर्मण्यसंस्थिते असमाप्ते ब्रह्मा वधं तस्यादधात् धारितवान् । उक्तवानित्यर्थः । श्लौ द्विर्वचनम् । एवं विभीषणवचः श्रुत्वा राघवः सौमित्रेर्यूथपानां च गन्तुमाज्ञां प्रायच्छत् दत्तवान् । 'दाण् दाने' । 'पाघ्राध्मास्थाम्नादाण्दृश्यार्तिसार्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्छधौशीयसीदाः ।७।३।७८।' इति यच्छादेशः ॥ २७ ॥

तां प्रत्यैच्छन्सुसम्प्रीतास्ततस्ते सविभीषणाः ।
निकुम्भिलां समभ्यायन्न्यरुध्यन्त च राक्षसैः ॥ २८ ॥

तामित्यादि—ततस्ते सविभीषणाः सुसंप्रीतास्तामाज्ञां प्रत्यैच्छन् प्रतीष्टवन्तः प्रतिगृहीतवन्तः ।'इषु इच्छायाम्' । 'इषुगमियमां छः ।७।३।७७।' ते च निकुम्भिलां समभ्यायन् समभिगताः । 'इण् गतौ ।' तत्र च ये दिक्पालाः राक्षसाः तैर्न्यरुध्यन्त रुद्धाः प्रवेष्टुं पन्थानं न लब्धवन्तः । कर्मणि लङ् ॥ २८ ॥

दिक्पालैः कदनं तत्र सेने प्राकुरुतां महत् ।
ऐतां रक्षांसि निर्जित्य द्रुतं पौलस्त्यलक्ष्मणौ ॥ २९ ॥

---

१ लङ्कायाःपश्चिमभागस्थायां तदाख्यायां गुहायां दुर्गायां वा । २ यद्यपि सम्पूर्वः स्यातिर्विनाशार्थोऽनुमन्यते, तथापि निष्ठायां प्रयोगोऽपि न दुष्टः, प्रयोगबाहुल्यात् ।

दिक्पालैरित्यादि––तत्र निकुम्भिलोद्देशे उभे अपि सेने महद्विपुलं कदनं विनाशनं युद्धं वा प्राकुरुतां कृतवन्तौ । तानि रक्षांसि निर्जित्य पौलस्त्य-लक्ष्मणौ विभीषणो लक्ष्मणश्च द्रुतं शीघ्रमैतां गतवन्तौ ।'इण् गतौ ।' आट् वृद्धिः ॥ २९ ॥

तत्रेन्द्रजितमैक्षेतां कृतधिष्ण्यं समाहितम् ।
सोऽजुहोत्कृष्णवर्त्मानमामनन्मन्त्रमुत्तमम् ॥ ३० ॥

तत्रेत्यादि-तत्र निकुम्भिलायां तावैक्षेतां दृष्टवन्तौ । इन्द्रजितं कृतधिष्ण्यं कृताग्न्यगारम् । समाहितं एकाग्रमानसम् । स इन्द्रजित् कृष्णवर्त्मानमजुहोत् हुतवान् । मन्त्रमुत्तममामनन् आवर्तयन् ।'म्ना अभ्यासे ।' शतरि 'पाघ्रा-ध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिब-।७। ३ । ७८ ।' इत्यादिना मना-देशः ॥ ३० ॥

अध्यायच्छक्रजिद्ब्रह्म समाधेरचलन्न च ।
तमाह्वयत सौमित्रिरगर्जच्च भयङ्करम् ॥ ३१ ॥

अध्यायदित्यादि–शक्रजिदिन्द्रजित्परं ब्रह्माध्यायत् चिन्तितवान् ।'ध्यै चिन्तायाम्' आत्वं शिति । न च समाधेश्चित्तवृत्तिनिरोधादचलत् चलितवान् तं तथाभूतमिन्द्रजितं सौमित्रिर्युद्धायाह्वयत आहूतवान् । भयंकरं चागर्जत् शब्दितवान् ॥ ३१ ॥

अकुप्यदिन्द्रजित्तत्र पितृव्यं चागदद्वचः ।
त्वमत्राजायथा देह इहापुष्यत्सुरामिषैः ॥ ३२ ॥

अकुप्यदित्यादि–तत्र तस्मिन्नाह्वानं गर्जितं च कृतवति सति अकुप्यत् क्रुद्धः । 'कुप क्रोधे' दैवादिकः । पितृव्यं च पितृभ्रातरं विभीषणम् । पितृशब्दाद् भ्रातरि 'पितृव्यमातुलमातामहपितामहाः ४ । २ ।३६' इति व्यान्निपातितः । वचो वक्ष्यमाणमगदत् उक्तवान् । अत्रास्मिन् राक्षसकुले त्वमजायथाः जातोऽसि ।'जनी प्रादुर्भावे ।' दैवादिकोऽनुदात्तेत् । इह च देहः सुरामिषैर-पुष्यद् वृद्धिं गतः । पुषिर्दैवादिकः । अत एव 'दिवादिभ्यः श्यन् । ३ । १ । ६९ ।' इति श्यन् । देहमपुष्य इति पाठान्तरम् । तत्र देहं पोषितवानसि अन्तर्भावितण्यर्थो द्रष्टव्यः ॥ ३२ ॥

---

१ अग्निमित्यर्थः । 'बर्हिः शुष्मा कृष्णवर्त्मा' इत्यमरः ।

इहाजीव इहैव त्वं क्रूरमारभथाः कथम् ।
नापश्यः पाणिमार्द्रं त्वं बन्धुत्वं नाप्यपेक्षथाः ॥ ३३ ॥

इहेत्यादि---इहाजीव: जीवितोऽसि कथमिहैव त्वं क्रूरं कर्म आरभथा: आरब्धवानसि । आर्द्रं पाणिं च नापश्यस्त्वं न दृष्टवानसि । यावता कालेन भुक्त्वा पाणिः शुष्यति तावन्तमपि कालं नापेक्षितवानसीत्यर्थः । आस्तां तावदेतत् । बन्धुत्वमपि एकगोत्रत्वमपि नापेक्षथाः ॥३३॥

अधर्मान्नात्रसः पाप लोकवादान्न चाबिभेः ।
धर्मदूषण नूनं त्वं नाजाना नाशृणोरिदम् ॥ ३४ ॥

अधर्मादित्यादि---हे पाप ! अधर्मादपि नात्रसः न त्रस्तोऽसि । 'त्रसी उद्वेगे' दिवादौ । 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । ३ । १ । ७० ।' इति पक्षे शप् । लोकवादात् जनापवादात् न चाबिभेः न भीतोऽसि । श्लौ द्विर्वचनम् । धातोर्गुणः । 'भीत्रार्थानां भयहेतुः । १ । ४ । २५ ।' इत्यपादानसंज्ञा । हे धर्मदूषण ! धर्मस्य दूषण धर्मोच्छेदक ! अतिविपरीते स्थितत्वात् । 'दुष वैकृत्ये' । 'दोषो णौ ।६।४।९०।' इत्युपधाया ऊत्वम् । दूषयतीति दूषणः । 'कृत्यल्युटो बहुलम् ।३।३।११३।' इति कर्तरि ल्युट् । न तु नन्द्यादिपाठे ल्युः । तत्र हि 'नदिवाशिमदिदूषिसाधिपचिशोधिरोचिभ्यो ण्यन्तेभ्यः पूजायाम्' इत्युक्तम् । न चात्र पूजा गम्यत इति । नूनम् अवश्यं त्वं नाजानाः स्वयमिदं न ज्ञातवानसि । 'ज्ञा अवबोधने ।' इत्यादावुदात्तेत् । 'ज्ञाजनोर्जा । ७ । ३ । ७९ ।' 'इदमन्यताऽपि नाशृणोः द्विषद्भ्यो न श्रुतवानसि । 'श्रुवः शृ च । ३ । १ । १७४ ।' इति शृ, इत्यादेशः, ततः श्नुः ॥ ३४ ॥

किं तदित्याह--

निराकृत्य यथा बन्धूँल्लघुत्वं यात्यसंशयम् ।
पितृव्येण ततो वाक्यमभ्यधीयत शक्रजित् ॥ ३५ ॥

निराकृत्येत्यादि---यथा बन्धून् निराकृत्य परित्यज्य लघुत्वम् लघुतां यात्यसंशयमसन्देहम् । ततः पुत्रोक्तेरनन्तरं पितृव्येण विभीषणेन शक्रजिद्वाक्यमभ्यधीयत अभिहितः । कर्मणि लङ् । 'घुमास्थागापाजहातिसां हलि । ६ । ४ । ६६ ।' इतीत्वम् ॥ ३५ ॥

---

१ अत्र 'अर्शआदिभ्योऽच् ५ । २ । १२७' इत्यच् । २ धर्मं दूषयतीति व्युत्पत्तिभ्रमनिरासार्थमिदं पृथक् निर्दिष्टं,न ह्यत्र नन्द्यादित्वाल्ल्युः, तत्रास्याग्रहणात् ।

मिथ्या मा स्म व्यतिक्रामो मच्छीलं मा न बुध्यथाः ।
सत्यं समभवं वंशे पापानां रक्षसामहम् ॥ ३६ ॥

मिथ्येत्यादि—मिथ्या मृषा मा स्म व्यतिक्रामः मा परिभूः । 'क्रमः परस्मैपदेषु ।७ । ३ । ७६ ।' इति दीर्घः । मच्छीलं मत्स्वभावं मा न बुध्यथाः' मा न बुद्धास्त्वम् अपि तु ज्ञातवानसि । 'स्मोत्तरे लङ् च । ३ । ३ । १७६ । पापानां रक्षसां वंशेऽहं सत्यं समभवं सम्भूत इति ॥ ३६ ॥

न त्वजायत मे शीलं तादृग्यादृक्पितुस्तव ।
क्षयावहेषु दोषेषु वार्यमाणो मयारमत ॥ ३७ ॥

न त्वित्यादि—यद्यप्यहं राक्षसकुले जातस्तथापि तव पितुर्यादृक् शीलं स्वभावस्तादृक् मे न त्वजायत नैवाभूत् । यतोऽसौ क्षयमावहन्तीति क्षयावहाः । पचादित्वादच् । तेषु दोषेषु परस्त्रीहरणादिषु मया वार्यमाणोऽपि । दशग्रीव इति संबन्धः । आरमत् रतिं कृतवान् । 'व्याङ्परिभ्यो रमः । १ । ३ । ८३ ।' इति परस्मैपदम् ॥ ३७ ॥

दशग्रीवोऽहमेतस्मादत्यजं न तु विद्विषन् ।
परस्वान्यार्जयन्नारीरन्यदीयाः परामृशत् ॥ ३८ ॥

दशग्रीव इत्यादि—एतस्मात्कारणादहं रावणमत्यजं त्यक्तवानस्मि न पुनर्द्विषन् अमित्रीभवन् दशग्रीवो रावणः । 'द्विषोऽमित्रे ।३।२।१३१।' इति शतृप्रत्ययः । तान् दोषानाह—परस्वानि परवित्तानि आर्जयत् अन्यैर्ग्राहितवान् । 'अर्ज सर्ज अर्जने' इति भ्वादौ हेतुमण्णिच् । 'अर्ज प्रतियत्ने' इति चौरादिकस्य वा रूपम् । अन्यदीयाः नारीश्च परामृशत् स्पृष्टवान् । 'मृश आमर्शने' इति तुदादावुदात्तेत् ॥ ३८ ॥

व्यजिघृक्षत्सुरान्नित्यं प्रामाद्यद्गुणिनां हिते ।
आशङ्कत सुहृद्बन्धूनवृद्धान्बह्वमन्यत ॥ ३९ ॥

व्यजिघृक्षदित्यादि—सुरान् नित्यं व्यजिघृक्षत् विग्रहीतुमैच्छत् तैः साकं वृथैवं कलहं युद्धं वा कर्त्तुम् आवर्त्ततेति भावः । गुणिनां माल्यवत्प्रभृतीनां यदुक्तं हितं तस्मिन् विषये प्रामाद्यत् प्रमादं गतः । 'मदी हर्षे' ।

---

१ यद्यपि धनदस्य यो वंशः स एव रावणादीनामपीति न तथात्वे वंशदोषः सुवचः, किंतु मातापितृदोष एव, प्रकृते च मातृदोष एवापराधहेतुः, अन्यथा कुबेरस्यापि तथात्वापत्तेः । इति सम्भाव्येदं समर्थनीयम् ।

'शमामष्टानां दीर्घः श्यनि ।७।३।७४।' इति दीर्घः । सुहृदो बन्धूंश्च सुहृद्बन्धून् आशङ्कत विकल्पितवान् । अवृद्धान् अविदुषो मूढान् प्रहस्तादीन् बहुमन्यत श्लाघितवान् ॥ ३९ ॥

दोषैररमतैभिस्ते पितात्यज्यत यैर्मया ।
ततोऽरुष्यदनर्दच्च द्विविंशतिभिरेव च ॥ ४० ॥

दोषैरित्यादि--एभिर्दोषैस्तव पिता रावणः अरमत क्रीडितवान् । यैर्दोषैर्मया अत्यज्यत । कर्मणि लङ् । ततः पितुर्दोषप्रकाशनवचनादनन्तरम् । रावणिरिति वक्ष्यमाणेन संबन्धः । अरुष्यत् रुष्टः । 'रुष रुष्टौ' अनर्दच्च विस्फूर्जितवांश्च ॥ ४० ॥

शरैरताडयद्बन्धुं पञ्चविंशतिभिर्नृपम् ।
रावणिस्तस्य सौमित्रिरमथ्नाच्चतुरो हयान् ॥ ४१ ॥

शरैरित्यादि--बन्धुं विभीषणं द्विविंशतिभिः शरैरताडयत् । चत्वारिंशतेत्यर्थः । द्वे विंशती येषां शराणामिति बहुव्रीहिः । एवं च 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ।६।३।४७।' इत्यात्वं न । तथा पञ्चविंशतिभिः शरैर्नृपं लक्ष्मणम् अताडयत् । शतेनेत्यर्थः । द्वौ च विंशतिश्च पञ्चविंशतिश्चेत्यस्मिन् व्याख्याने द्वाविंशत्या पञ्चविंशत्येति च प्राप्नोति । सौमित्रिस्तु लक्ष्मणः पुनः तस्य रावणे रावणपुत्रस्येन्द्राजितश्चतुरो हयान् बाणैरमथ्नात् । 'मथे विलोडने' इति क्र्यादौ ॥ ४१ ॥

सारथिं चाऽलुनाद्बाणैरभनक्स्यन्दनं तथा ।
सौमित्रिमकिरद्बाणैः परितो रावणिस्ततः ॥ ४२ ॥

सारथिमित्यादि--तस्य रावणेः सारथिं चालुनात् छिन्नवान् । 'प्वादीनां ह्रस्वः।७।३।८०।'तथा स्यन्दनं रथम् अभनक् भग्नवान् । 'भञ्जो आमर्दने' इति रुधादिः। ततोऽनन्तरं रावणिः इन्द्राजित् सौमित्रिं सुमित्रानन्दनं लक्ष्मणं परितः समन्तात् बाणैरकिरत् छादितवान् ॥ ४२ ॥

तावस्फावयतां शक्तीर्बाणांश्चाकिरतां मुहुः ।
वारुणं लक्ष्मणोऽक्षिप्यदक्षिपद्रौद्रमिन्द्रजित् ॥ ४३ ॥

तावित्यादि--ताविन्द्राजिल्लक्ष्मणौ । शक्तिं सामर्थ्यमस्फावयतां वर्धितवन्तौ स्वस्वपराक्रममतिशयेन दर्शितवन्तावित्यर्थः । 'स्फायो वः ।७।३।४१।' बाणांश्च

मुहुराकिरतां विक्षिप्तवन्तौ । स्वस्वपराक्रममतिशयेनदर्शितवन्तावित्यर्थः । वारुणमस्त्रं लक्ष्मणोऽक्षिप्यत् । दैवादिकस्य रूपम् । इन्द्रजिद्रौद्रं पाशुमतमाक्षिपत् क्षिप्तवान् । तौदादिकस्य रूपम् ॥ ४३ ॥

ते परस्परमासाद्य शस्त्रे नाशमगच्छताम् ।
आसुरं राक्षसः शस्त्रं ततो घोरं व्यसर्जयत् ॥ ४४ ॥

ते परस्परमित्यादि—ते शस्त्रे परस्परमासाद्य प्राप्य नाशमगच्छतां नाशं गते । ततस्तन्नाशादनन्तरं राक्षसो रावणिरिन्द्रजित् आसुरम् असुरदैवतं शस्त्रं घोरं भीषणं व्यसर्जयत् क्षिप्तवान् ॥ ४४ ॥

तस्मान्निरपतद्भूरि शिलाशूलेष्टिमुद्गरम् ।
माहेश्वरेण सौमित्रिरस्तभ्नात्तत्सुदुर्जयम् ॥ ४५ ॥

तस्मादित्यादि—तस्मात् क्षिप्तादासुरादस्त्रात् शिलाशूलेष्टिमुद्गरं निरपतत् । इष्टिः प्रहरणविशेषः । तच्चासुरं सुदुर्जयं सौमित्रिर्लक्ष्मणो माहेश्वरेण अस्तभ्नात् स्तम्भितवान् । 'स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ।३।१।८२।' इति चकारात् श्ना ॥ ४५ ॥

ततो रौद्रसमायुक्तं माहेन्द्रं लक्ष्मणोऽस्मरत् ।
तेनागम्यत घोरेण शिरश्चाह्रियत द्विषः ॥ ४६ ॥

तत इत्यादि—ततोऽनन्तरं रौद्रसमायुक्तं रौद्रास्त्रेण सहितं माहेन्द्रमस्त्रं रौद्रं माहेन्द्रं चास्त्रमित्यर्थः लक्ष्मणोऽस्मरत् चिन्तितवान् । तेन स्मरणादेव आगम्यत आगतम् । भावे लङ् । तस्य द्विषः शत्रोः शिरश्चाह्रियत छिन्नम् । कर्मणि लङ् ॥ ४६ ॥

अतुष्यन्नमराः सर्वे प्राहृष्यन्कपियूथपाः ।
पर्यष्वजत सौमित्रिं मूर्ध्न्यजिघ्रच्च राघवः ॥ ४७ ॥

अतुष्यन्नित्यादि—तस्मिन् मृते अमरा देवाः अतुष्यन् तुष्टाः । कपियूथपाः कपिवर्याः प्राहृष्यन् प्रहृष्टाः । राघवश्च सौमित्रिं पर्यष्वजत आश्लिष्टवान् । 'दंशसञ्जस्वञ्जां शपि ।६।४।२५।' इत्यनुनासिकलोपः । 'प्राक् सितादड्व्यवायेऽपि । ८ । ३ । ६३ ।' इति वचनात् परिनिविभ्यः सेवासितसयसिवुसहसुट्स्तुस्वञ्जाम् ८ । ३ । ७० ।' इति षत्वम् । मूर्ध्न्य-जिघ्रच्च आघ्रातवान् ॥ ४७ ॥

अरोदीद्राक्षसानीकमरोदन्नृभुजां पतिः ।
मैथिल्यै चाशपद्धन्तुं तां प्राक्रमत चातुरः ॥ ४८ ॥

अरोदीदित्यादि—राक्षसानीकं राक्षससैन्यमरोदीत् रुदितम् । 'रुदश्च पञ्चभ्यः । ७ । ३ । ९८।' इतीट् । नृभुजां पतिः रावणः अरोदीत् रुदितः । 'अड् गार्ग्यगालवयोः । ७ । ३ । ९९ ।' इत्यडागमः । मैथिल्यै सीतायै चाशपत् आक्रुष्टवान् । सर्वदोषस्य मूलमिति । 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।१।४।३४।' इति कर्मणि सम्प्रदानसंज्ञा । तां च हन्तुम् आतुरो मन्युक्षतः शोकपीडित इति यावत् प्राक्रमत प्रारब्धवान् । 'प्रोपाभ्यां समर्थाभ्याम् । १ । ३ । ४२ ।' इति तङ् ॥ ४८ ॥

अयुक्तमिदमित्यन्ये तमाप्ताः प्रत्यवारयन् ।
न्यरुन्धंश्चास्य पन्थानं बन्धुता शुचमारुणत् ॥ ४९ ॥

अयुक्तमित्यादि—अन्ये आप्ताः राक्षसाः अयुक्तमेतदिति मन्यमानाः तं तथाविधं प्रत्यवारयन् आवार्य स्थिताः । 'वृञ् आवरणे' चुरादिः । पन्थानं मार्गं न्यरुन्धंश्च हस्तपादादिग्रहणेन रुद्धवन्तः । बन्धुता[1] बन्धुसमूहः । अस्य रावणस्येन्द्रजिन्मरणजन्यं शुचं शोकमारुणत् अपनीतवती । हलङ्यादिलोपः' धकारस्य जश्त्वम् ॥ ४९ ॥

आस्फायतास्य वीरत्वममर्षश्चाप्यतायत ।
रावणस्य ततः सैन्यं समस्तमयुयुत्सयत् ॥ ५० ॥

आस्फायतेत्यादि—अथ निरुद्धशोकस्य रावणस्य वीरत्वं शौर्यम् आस्फायत वृद्धिं गतम् । अमर्षश्च क्रोधः अतायत विस्तारं गतः । ततः स रावणः समस्तं सैन्यम् अयुयुत्सयत् युयुत्समानं प्रयोजितवान् ॥ ५० ॥

अग्नीनवरिवस्यंश्च तेऽनमस्यंश्च शङ्करम् ।
द्विजानप्रीणयञ्छान्त्यै यातुधाना भवद्भियः ॥ ५१ ॥

अग्नीनित्यादि—ते यातुधानाः भवद्भियः भवन्ति उत्पद्यमाना भियो भीतयो येषां ते । अग्नीनवरिवस्यन् परिचारितवन्तः । 'नमोवरिवश्चित्रङः क्यच् । ३ । १ । १९ ।' इति वरिवसः परिचर्यायामिति क्यच् । तदन्ताल्लङ् । शङ्करं च महादेवं च अनमस्यन् पूजितवन्तः । अत्र नमसः पूजायां पूर्ववत् क्यच् । द्विजांश्च शान्त्यै शान्त्यर्थमप्रीणयन् प्रीणितवन्तः । 'धूञ्प्रीञोर्नुग्वक्तव्यः' इति प्रीञो नुक् ॥ ५१ ॥

---

१ बन्धूनां समूह इति बन्धुता, 'ग्रामजनबन्धुभ्यस्तल् ४ । २ । ४३ ।' इति । तल् । 'ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः ।' इत्यमरः ।

परितः पर्यवाद्वायुराज्यगन्धिर्मनोरमः ।
अश्रूयत सपुण्याहः स्वस्तिघोषः समुच्चरन् ॥ ५२ ॥

परित इत्यादि—अग्निसन्तर्पणादाज्यगन्धिः आज्यस्य गन्धो यस्मिन्वायौ स वायुर्मनोरमः सर्ववेश्मसु पर्यवात् परितो वाति स्म । स्वस्तिघोषश्च सपुण्याहः पुण्याहशब्देन सह समुच्चरन्नश्रूयत श्रूयते स्म । कर्मणि लङ् ॥ ५२ ॥

योद्धारोऽबिभरुः शान्त्यै साक्षतं वारि मूर्धभिः ।
रत्नानि चाददुर्गाश्च समवाञ्छन्नथाशिषः ॥ ५३ ॥

योद्धार इत्यादि—योद्धारः शान्त्यै शान्त्यर्थं साक्षतम् अक्षततण्डुलैर्युक्तं सलाजं च वारि जलं मूर्धभिराबिभरुः दधति स्म । 'सिजभ्यस्तविदिभ्यश्च । ३ । ४ । १०९ ।' इति झेर्जुस् 'भृञामित् । ७ । ४ । ७६ ।' इतीत्त्वम् । रत्नानि गाश्चाददुः दत्तवन्तः । आशिषश्च तेभ्यः समवाञ्छन् काङ्क्षितवन्तः 'वाछि इच्छायाम्' ॥ ५३ ॥

अदिहंश्चन्दनैः शुभ्रैर्विचित्रं समवस्त्रयन् ।
अधारयन् स्रजः कान्ता वर्म चान्येऽदधुर्द्रुतम् ॥ ५४ ॥

अदिहन्नित्यादि—शुभ्रैः शुक्लवर्णैश्चन्दनैः गात्राणि अदिहन् लिप्तवन्तः । 'दिह उपचये' । विचित्रं शोभनं समवस्त्रयन् आच्छादितवन्तः । 'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् । ३ । १ । २१ ।' इति 'वस्त्रात्समाच्छादने' णिच् । कान्ताः शुभ्राः स्रजः अधारयन् धारितवन्तः । 'धृञ् धारणे' । अण्यन्तस्य प्रयोग एव नास्ति । अन्ये च वर्म्म कवचम् । जातावेकवचनम् । तेन कर्म्माणीत्यर्थः । द्रुतमदधुः धारितवन्तः ॥ ५४ ॥

समक्ष्णुवत शस्त्राणि प्रामृजन् खड्गसंहतीः ।
गजादीनि समारोहन् प्रातिष्ठन्ताथ सत्वराः ॥ ५५ ॥

समक्ष्णुवतेत्यादि—शस्त्राणि समक्ष्णुवत । 'क्ष्णु तेजने' 'समः क्ष्णुवः । १ । ३ । ६५ ।' इति तङ् । खड्गसंहतीः प्रामृजन् शोधितवन्तः । मृजेरजादौ विभाषा वृद्धिः । गजादीनि यानानि समारोहन् आरूढाः । गजादिष्विति पाठान्तरम् । तत्राधिकरणत्वं विवक्षितम् । अथानन्तरमारूढाः सत्वराः प्रातिष्ठन्त प्रस्थिताः । 'समवप्रविभ्यः स्थः ।१।३।२२।' इति तङ् ॥ ५५ ॥

---

१ घृतस्य । २ मालाः । ३ खड्गसमूहान् । ४ वाहनानि ।

अपूरयन्नभः शब्दो बलसंवर्तसम्भवः ।
अपूर्यन्त च दिग्भागास्तुमुलैस्तूर्यनिस्वनैः ॥ ५६ ॥

अपूरयदित्यादि—बलानां सेनानां संवर्तः एकीभावः तस्मात्सम्भवो यस्य स शब्दः नभ आकाशमपूरयत् पूरितवान् । तुमुलैस्तूर्यनिस्वनैः महद्भिर्वाद्यानां घोषैर्दिग्भागा अपूर्यन्त पूर्णाः कर्मणि लङ् ॥ ५६ ॥

असीद्द्वारेषु सङ्घट्टो रथाश्वद्विपरक्षसाम् ।
सुमहाननिमित्तैश्च समभूयत भीषणैः ॥ ५७ ॥

आसीदित्यादि—रथादीनां निर्गच्छतां लङ्काद्वारेषु संघट्टः सुमहानासीत् । जनभूयस्तया संघर्षोऽभूत् । 'अस्तिसिचोऽपृक्ते । ७ । ३ । ९६ ।' इतीट् । अनिमित्तैः भीषणैर्भयङ्करैर्महद्भिः समभूयत क्षयकरैर्निमित्तैर्भूतम् । भावे लङ् ॥ ५७ ॥

कपयोऽबिभयुस्तस्मिन्नभञ्जंश्च महाद्रुमान् ।
प्रोदखायन् गिरींस्तूर्णमगृह्णंश्च महाशिलाः ॥ ५८ ॥

कपय इत्यादि—तस्मिन्निर्गते कपयोऽबिभयुः भीतवन्तः । महाद्रुमांश्चोद्धुमभञ्जन् भग्नवन्तः। गिरीन् प्रोदखायन् उत्खातवन्तः'खै खदने ।' शिति आत्वं न भवति । महाशिला अगृह्णन् गृहीतवन्तः ॥ ५८ ॥

ततः समभवद्युद्धं प्राहरन्कपिराक्षसाः ।
अन्योन्येनाभ्यभूयन्त विमर्दमसहन्त च ॥ ५९ ॥

तत इत्यादि—ततोऽनन्तरं युद्धं समभवत् प्रवृत्तम् । कपिराक्षसाः प्राहरन् प्रहृतवन्तः । अन्योन्येनाभ्यभूयन्त कपयो राक्षसैः राक्षसाश्च कपिभिरिति । कर्मणि लङ् । विमर्दमसहन्त च सोढवन्तः ॥ ५९ ॥

प्रावर्धत रजो भौमं तद्व्याश्नुत दिशो दश ।
परात्मीयविवेकं च प्रामुष्णात्कपिरक्षसाम् ॥ ६० ॥

प्रावर्धतेत्यादि—बलद्वयप्रक्षोभात् भौमं[1] रजः प्रावर्धत प्रवृद्धम् । तद्रजो दश दिशो व्याश्नुत व्याप्नोत् । कपिरक्षसां मध्ये अयं परोऽयं चात्मीय इति यो विवेकस्तं च प्रामुष्णात् अपनीतवत्[2] । 'मुष स्तेये' क्र्यादिः ॥ ६० ॥

ततोऽद्विषुर्निरालोके स्वेभ्योऽन्येभ्यश्च राक्षसाः।
अद्विषन्वानराश्चैव वानरेभ्योऽपि निर्दयाः ॥ ६१ ॥

---

१ पृथिवीसम्बन्धि । २ रजसोऽस्युत्पातात् ।

तत इत्यादि---ततोऽनन्तरं निरालोके समरे राक्षसः स्वेभ्योऽन्येभ्यश्चाद्विषुः क्रुध्यन्ति स्म । वानरा अपि वानरेभ्योऽद्विषन् निर्दयाः सन्तः । अपिशब्दात् राक्षसेभ्योऽपि ।'द्विषश्च । ३ । ४ । ११२ ।' इत्यनेन शाकटायनमते झेर्जुस् ॥ ६१ ॥

अघुरंस्ते महाघोरमश्च्योतन्नथ शोणितम् ।
समपद्यत रक्तेन समन्तात्तेन कर्दमः ॥ ६२ ॥

अघुरन्नित्यादि----अथानन्तरं ते हताः राक्षसा वानरा अघुरन् घोरं रौद्रं शब्दितवन्तः । 'घुर भीमार्थशब्दयोः ।' शोणितं चाश्च्योतन् क्षरन्ति स्म । तेन च रक्तेन रक्तस्रुतेन समन्तात्सर्वतः कर्दमः समपद्यत सम्पन्नः । कर्मणि लङ् ॥ ६२ ॥

गम्भीराः प्रावहन्नद्यः समजायन्त च ह्रदाः ।
वृद्धं च तद्रजोऽशाम्यत्समवेद्यन्त च द्विषः ॥ ६३ ॥

गम्भीरा इत्यादि---तेन रक्तेन वर्धिष्णुना वधमानेन गम्भीरा अगाधाः । नद्यः प्रावहन् प्रवृत्ताः । ह्रदास्तडागाः समजायन्त संजाताः । तच्च भौमं रजः प्रवृद्धमशाम्यत् शान्तम्, उद्गमाभावात् । उत्पन्नस्य च पतनात् रजःशमनात् । द्विषश्च शत्रवः पुनः परस्परं स्वं परं च समवेद्यन्त संवेद्यन्ते स्म विज्ञातवन्त इति भावः । 'विद चेतनाख्याननिवासेषु' इति चौरादिकः । कर्मणि लङ् ॥ ६३ ॥

ततोऽचित्रीयतास्त्रौघैर्धनुश्चाधूनयन्महत् ।
रामः समीहितं तस्य नाचेतन्स्वे न चापरे ॥ ६४ ॥

तत इत्यादि---ततोऽनन्तरं रामः अस्त्रौघैरचित्रीयत आश्चर्यीभूतः । 'नमोवरिवश्चित्रङः क्यच् । ३ । १ । १९ ।' इति चित्रङः क्यच् । ङित्त्वात्तङ् । धनुश्च महदधूनयत् । 'धूञ्प्रीञोर्नुग्वक्तव्यः' । तस्य रामस्य समीहितमभिप्रेतं न स्वे आत्मीयाः वानराः न च अपरे परकीया नाचेतन् न ज्ञातवन्तः ॥ ६४ ॥

छिन्नानैक्षन्त भिन्नांश्च समन्ताद्रामसायकैः ।
क्रुष्टं हाहेति चाशृण्वन्न च रामं न्यरूपयन् ॥ ६५ ॥

---

१ रजोऽन्धकारेण च्छन्ने । २ अतलस्पर्शा इति स्पष्टोऽर्थः । इदमतिशयद्योतनार्थमात्रम् ।

छिन्नानित्यादि—रामसायकैश्छिन्नान् भिन्नांश्च समन्तादैक्षन्त । हाहेति च क्रुष्टं शब्दमन्योन्यस्य चाशृण्वम् । नच नैव रामं न्यरूपयन् राम इति च न निश्चितवन्तः । 'रूप व्याक्रियायाम्' इति चौरादिकः ॥६५॥

अभिनच्छत्रुसङ्घातानक्षुणद्वाजिकुञ्जरम् ।
अपिनट् च रथानीकं न चाज्ञायत संचरन् ॥ ६६ ॥

अभिनदित्यादि—शत्रुसङ्घातानभिनत् भिन्नवान् । वाजिकुञ्जरमक्षुणत् सम्पिष्टवान् 'क्षुदिर् सम्पेषणे।' रथानीकं रथसमूहमपिनट् पिष्टवान् 'पिष्लृ संचूर्णने।' एते सर्वेऽपि धातवो रौधादिकाः । न च संचरन् रामः अज्ञायत न ज्ञातः । स्वैः परैर्वेत्यर्थात् । कर्मणि लङ् ॥ ६६ ॥

दश दन्तिसहस्राणि रथिनां च महात्मनाम् ।
चतुर्दश सहस्राणि सारोहाणां च वाजिनाम् ॥ ६७ ॥
लक्षे च द्वे पदातीनां राघवेण धनुर्भृता ।
अनीयन्ताष्टमे भागे दिवसस्य परिक्षयम् ॥ ६८ ॥

दशेत्यादि—अनेन राघवेण धनुर्भृता दिवसस्याष्टमे भागे अर्धप्रहरे दश दन्तिनां सहस्राणि रथिनां च महात्मनां चतुर्दश सहस्राणि । सारोहाणां च वाजिनां तावन्त्येव । पदातीनाम् द्वे लक्षे परिक्षयं विनाशमनीयन्त नीताः । कर्मणि लङ् । अनीयतेति पाठान्तरं तत्र सर्वमेतदनीयतेति योज्यम् ॥ ६७ ॥ ६८ ॥

यमलोकमिवाग्रश्नाद्रुद्राक्रीडमिवाकरोत् ।
शैलैरिवाचिनोद्भूमिं बृहद्भी राक्षसैर्हतैः ॥ ६९ ॥

यमलोकमित्यादि—स राघवः तैः राक्षसैः बृहद्भिः यमलोकमिवाग्रश्नात् सन्दर्भितवान् । 'श्रन्थ ग्रन्थ सन्दर्भे' इति क्र्यादिः । रुद्राक्रीडमिव रुद्रस्य क्रीडास्थानं श्मशानमिवाकरोत् । भूमिं शैलैरिवाचिनोत् छादितवान् ॥ ६९ ॥

अस्तुवन्देवगन्धर्वा व्यस्मयन्त प्लवङ्गमाः ।
कपीन्द्रेऽतन्यत प्रीतिः पौलस्त्योऽमन्यताद्भुतम् ॥ ७० ॥

---

१ 'अनीकं सैन्यसङ्घयोः।' इति रभसः । २ महाकायानाम् । ३ चतुर्दशसहस्राण्येव ।

अस्तुवन्नित्यादि—तमद्भुतकर्मकारिणं रामं देवा अस्तुवन् स्तुवन्ति स्म । प्लवङ्गमाः हनूमत्प्रभृतयः कपयः व्यस्मयन्त विस्मिताः । ङित्त्वात्तङ् । कपीन्द्रे सुग्रीवे प्रीतिरतन्यत तन्यते स्म । कर्मकर्तरि लङ् । पौलस्त्यो विभीषणोऽद्भुतम् आश्चर्यममन्यत ज्ञातवान् ॥ ७० ॥

राक्षस्यः प्रारुदन्नुच्चैः प्राजुगुप्सन्त रावणम् ।
अमुह्यद्बालवृद्धं च समरौदितरो जनः ॥ ७१ ॥

राक्षस्य इत्यादि—राक्षस्यो भर्त्रादिवधदुःखिता उच्चैः प्रारुदन् रुदितवत्यः । 'रुदादिभ्यः सार्वधातुके।७।२।७६।'इतीट् न भवति अहलादित्वात्। रावणं प्राजुगुप्सन्त निन्दितवत्यः । एतद्दुर्नयात् सर्वमिति । बाला वृद्धाश्च तद्द्वयम् अमुह्यत् भयान्मोहं गतम् । इतरो जनः राक्षसीबालवृद्धेभ्योऽन्यः समरौत् आक्रुष्टवान् । रोदनं कृतवानित्यर्थः । 'रु शब्दे' 'उतो वृद्धिर्लुकि हलि ।७।३।८९।'॥७१ ॥

सर्वतश्चाभयं प्रापोन्नैच्छन्नृभ्यस्तु रावणः ।
फलं तस्येदमभ्यायाद्दुरुक्तस्येति चाब्रुवन् ॥ ७२ ॥

सर्वत इत्यादि—सर्वतो देवादिभ्यः अभयं रावणः प्राप्नोत् प्राप्तवान् । यतो 'ब्रह्मणि वरं दातुमुद्यते देवादीनामवध्यो भूयासम्' इत्युक्तवान् । नृभ्यस्तु सकाशादभयं नैच्छन्नेष्टवान्, 'के देवादिवीरविजेतुः मम पुरस्तात् मानुषाः' इति तस्य दुरुक्तस्य फलमभ्यायात् उपागतम् । इत्येवमपरे अब्रुवन् उक्तवन्तः ॥ ७२ ॥

ततोऽधावन् महाघोरं रथमास्थाय रावणः ।
अक्ष्मायत मही गृध्राः समारार्यन्त भीषणाः ॥ ७३ ॥

तत इत्यादि—ततोऽनन्तरं महाघोरम् अतिभयङ्करम् रथमास्थायारुह्य रावणः योद्धुं वेगेनाधावत् । तस्य च धावतो मही अक्ष्मायत कम्पिता । 'क्ष्मायी विधूनने'। गृध्राश्च भीषणाः समारार्यन्त अत्यर्थं गतवन्तः। 'सूचिसूत्रिमूत्र्यटयर्त्यशूर्णोतिभ्यो यङ् वाच्यः' इत्यट्यर्त्यशूर्णोतीनां ग्रहणं यङ्विधावनेकाजहलाद्यर्थमित्युपसंख्यानात् अर्तेर्यङ् । 'गुणोऽर्तिसंयोगाद्योः।७।४।२९ ।' इत्यधिकृत्य 'यङि च ।७।४।३०।' इति गुणः ॥ ७३ ॥

मेघाः सविद्युतोऽवर्षंश्चेलक्नोपं च शोणितम् ।
अवान् भीमा नभस्वन्तः प्रारुवन्नशिवाः शिवाः ॥ ७४ ॥

मेघा इत्यादि--सविद्युतो मेघाश्चेलक्नोपं शोणितं रक्तम् अवर्षन् वर्षितवन्तः। यावता रक्तेन चेलं वासः क्नोपयते सिच्यते तावत्प्रमाणं वृष्टवन्तः। 'क्नूयी शब्दे' इत्यस्य ण्यन्तस्य। 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ।७।३।३६।' इति पुकि यलोपः। 'चेले क्नोपेः।३।४।३३' इति णमुल्। भीमाः नभस्वन्तः वायवः अवान् वान्ति स्म।'लङः शाकटायनस्यैव। ३। ४। १११।' इति नियमादन्यमते झेर्जुस् न भवति। शिवाः शृगाल्यः अशिवाः अनिष्टशंसिन्यः प्रारुवन् शब्दितवत्यः॥ ७४॥

आटाट्यतावमत्यासौ दुर्निमित्तानि संयुगे।
अधुनोद्धनुरस्त्रौघैः प्रौर्णोनूयत विद्विषः॥ ७५॥

आटाट्यतेत्यादि—असौ रावणः दुर्निमित्तान्यवमत्य युद्धार्थमाटाट्यत अत्यर्थमाटत्। 'सूचिसूत्रिमूत्र्यटघर्त्यशूर्णोतिभ्यो यङ् वाच्यः' इति यङ्। सङ्ग्युगे युद्धे धनुरधुनोत् कम्पितवान्। अस्त्रौघैर्विद्विषः शत्रून् प्रौर्णोनूयत भृशं छादितवान्। 'ऊर्णुञ् आच्छादने'। ऊर्णोतेर्णुवद्भावात् 'सूचिसूत्रिमूत्र्यटघर्त्यशूर्णोतिभ्यो यङ् वाच्यः' इति वार्तिकेन यङ्।'अजादेर्द्वितीयस्य। ६।१।२।' इति द्विर्वचने 'न न्द्राः संयोगादयः।६।१।३।' इति रेफो न द्विरुच्यते। नुशब्दस्य द्विर्वचनम्। 'गुणो यङ्लुकोः।७।४।८२।' इति गुणः।'अकृत्सार्वधातुकयोर्दीर्घः।७।४।२५।' इति दीर्घः॥ ७५॥

अथ युग्मकम्।

व्यनाशयंस्ततः शत्रून् सुग्रीवास्ता महीभृतः।
ततो व्यरसदग्लायदध्यशेत महीतलम्॥ ७६॥

व्यनाशयन्नित्यादि—ततोऽनन्तरं सुग्रीवास्ताः सुग्रीवेण अस्ताः क्षिप्ता महीं पृथ्वीं बिभ्रति धारयन्तीति महीभृतः पर्वताः शत्रुसैन्यं व्यनाशयन् मारितवन्तः।ततो मांसादां मांसभक्षकाणां रक्षसां बलं सुग्रीवेण बाधितं पीडितमित्युत्तरश्लोकेन संबन्धः। व्यरसत् आक्रन्दितवत्। अग्लायत् ग्लानिं गतम्। युद्धोत्साहं त्यक्तवन्त इति भावः। महीतलमध्यशेत महीतले पतितम्। 'शीङः सार्वधातुके गुणः।७।४।२१।'इति गुणः॥ ७६॥

अश्च्योतद्रुधिरं तोयमलपच्चातिविह्वलम्।
अशीयत नृमांसादां बलं सुग्रीवबाधितम्॥ ७७॥

१ 'नभस्वद्वातपवनपवमानप्रभञ्जनाः' इत्यमरः। २ 'शिवा गौरीफेरवयोः' इत्यमरः। ३ सम्प्रहाराभिसम्पातकलिसंस्फोटसंयुगाः।' इत्यमरः।

अश्च्योतदित्यादि—रुधिरम् अश्च्योतत् अस्रवत्। विह्वलं च सत् तोयमलषत् अभिलषितवत्। 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रासित्रुटिलषः।३।१।७०' इति विकल्पेन शप्। अशीयत च अवसन्नम्।'शदेः शितः।१।३।६०।' इति तङ्। 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः। ७। ३ । ७८ ।' इति शीयादेशः। मांसमदन्तीति । 'अदोऽनन्ने ।३।२।६८।' इति विट् ॥ ७७ ॥

विरूपाक्षस्ततोऽक्रीडत् सङ्ग्रामे मत्तहस्तिना ।
मुष्टिनादालयत् तस्य मूर्धानं वानराधिपः ॥ ७८ ॥

विरूपाक्ष इत्यादि—ततो विरूपाक्षो नाम राक्षसः मत्तहस्तिना मत्तहस्तिसदृशेन सुग्रीवेण वानरेण सङ्ग्रामे अक्रीडत् भ्रान्तवान् । तस्य विरूपाक्षस्य मूर्धानं वानराधिपः सुग्रीवः मुष्टिना अदालयत् दलितवान्। 'दल विदारणे' चुरादिः ॥ ७८ ॥

अचूर्णयच्च यूपाक्षं शिलया तदनन्तरम् ।
संक्रुद्धो मुष्टिनातुभ्नादङ्गदोऽलं महोदरम् ॥ ७९ ॥

अचूर्णयदित्यादि—तदनन्तरं वानराधिपः सुग्रीवः यूपाक्षं नाम राक्षसं शिलया अचूर्णयत् चूर्णितवान्। 'सत्यापपासरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्।३।१।२५'इति णिच्। अङ्गदोऽपि संक्रुद्धः मुष्टिना महोदरम् अलं पर्याप्तमतुभ्नात् व्यापादितवान् । 'णभ तुभ हिंसायाम् ।' क्र्यादिः ॥ ७९ ॥

ततोऽकुष्णाद्दशग्रीवः क्रुद्धः प्राणान् वनौकसाम् ।
अगोपायच्च रक्षांसि दिशश्चारीनभाजयत् ॥ ८० ॥

तत इत्यादि—ततो दशग्रीवः क्रुद्धः वनौकसां वानराणां प्राणानकुष्णात् कुष्टवान्। 'कुष निष्कर्षे' । रक्षांसि च राक्षसांश्चागोपायत् रक्षितवान् । 'गुपूधूपविच्छिपणिपनिभ्य आयः ।३।१।२८।' इत्यायप्रत्ययः । अरींश्च शत्रूंश्च दिशोऽभाजयत् प्रहितवान् ॥ ८० ॥

आलोकयत्सकाकुत्स्थमधृष्णोद्घोरमध्वनत् ।
धनुरभ्रमयद्भीममभीषयत विद्विषः ॥ ८१ ॥

१ विनाशमगमत् ।

आलोकयदित्यादि--स दशग्रीवः काकुत्स्थमालोकयत् दृष्टवान्। घोरं घोरदर्शनमधृष्णोत् धृष्टवान् । 'ञिधृषा प्रागल्भ्ये' इति स्वादिः । ताननुसरन् घोरमध्वनत् ध्वनितवान् । रामं मारयामीति भीमं धनुरभ्रमयत् भ्रमितवान् । 'मितां ह्रस्वः ।६।४।९२।' मान्तत्वान्मित्त्वम् । ये विद्विषो वानरा न पलायिताः तानभीषयत त्रासितवान् । 'भियो हेतुभये षुक् ।७।३।४०।' 'भीस्म्योर्हेतुभये ।१।३।६८।' इति तङ् ॥ ८१ ॥

आस्कन्दल्लक्ष्मणं बाणैरत्यक्रामच्च तं द्रुतम् ।
राममभ्यद्रवज्जिष्णुरस्कुनाच्चेषुवृष्टिभिः ॥ ८२ ॥

आस्कन्ददित्यादि—जिष्णुर्जयशीलो दशग्रीवः लक्ष्मणं बाणैरास्कन्दत् बाधितवान् । 'स्कन्दिर् गतिशोषणयोः' । तं च लक्ष्मणं द्रुतमत्यक्रामत् आक्रान्तवान् । शिति दीर्घः । अतिक्रम्य च राममभ्यद्रवत् अभिमुखं गतवान् । 'द्रु गतौ' । इषुवृष्टिभिर्बाणानां सातत्येन प्रपातैः अस्कुनात् छादितवान् । 'स्कुञ् आवरणे' 'स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ।३।१।८२।' इति चकारात् श्ना ॥ ८२ ॥

अपौहद्बाणवर्षं तद्भल्लै रामो निराकुलः ।
प्रत्यस्कुनोद्दशग्रीवं शरैराशीविषोपमैः ॥ ८३ ॥

अपौहदित्यादि---तद्बाणवर्षं रामो निराकुलः सन् भल्लैरपौहत् अपनीतवान् ।'उपसर्गादस्यत्यूह्योर्वा' इति पक्षे तिप् । दशग्रीवं शरैः बाणैराशीविषोपमैः दुःसहत्वात्प्रत्यस्कुनोत् । प्रतीपं छादितवान् । अत्र श्नुप्रत्ययः ॥ ८३ ॥

मण्डलान्यटतां चित्रमच्छित्तां शस्त्रसंहतीः ।
जगद्व्यस्मापयेतां तौ न च वीरावसीदताम् ॥ ८४ ॥

मण्डलानीत्यादि—चित्रमाश्चर्यं मण्डलान्याटतां चक्रवद् भ्रान्तौ । शस्त्रसंहतीः अच्छित्तां छिन्नवन्तौ । जगत् व्यस्मापयेतां विस्मापितवन्तौ । 'नित्यं स्मयतेः । ६ । १ । ५७ ।' इत्यात्वम् । न च तौ वीरौ असीदताम् अवसन्नौ। 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । ७ । ३ । ७८ ।' इति सीदादेशः ॥ ८४ ॥

---

१ वृषभरूपधारिण इन्द्रस्य ककुदि स्थित्वा दैत्यान् शस्त्रादिर्जघानेति ककुत्स्थस्य तस्य वंशभवं राममित्यर्थः। एवमभिधानेनास्य परम्पराप्राप्तमपि प्रभूतप्रभाक्त्वं सूचितम्।

व्योम प्राचिनुतां बाणैः क्ष्मामक्ष्मापयतां गतैः ।
अभित्तां तूर्णमन्योन्यं शिक्षाश्चातनुतां मुहुः ॥ ८५ ॥

व्योमेत्यादि—बाणैर्व्योम[1] प्राचिनुतां छादितवन्तौ । क्ष्मां[2] पृथिवीं अक्ष्मापयतां कम्पितवन्तौ । 'क्ष्मायी विधूनने' । 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ।७।३।३६।' इति पुक् । अन्योन्यमभित्तां विदारितवन्तौ । 'श्नसोरल्लोपः । ६।४।१११ ।' चर्त्वेन च तकारः । तूर्णं झटिति शिक्षाः धनुषि कौशलानि मुहुर्वारंवारमतनुतां विस्तारितवन्तौ ॥ ८५ ॥

समाधत्तासुरं शस्त्रं राक्षसः क्रूरविक्रमः ।
तदक्षरन्महासर्पान्व्याघ्रसिंहांश्च भीषणान् ॥ ८६ ॥

समाधत्तेत्यादि—राक्षसः असुरं शस्त्रं समाधत्त धनुष्यारोपितवान् । श्लौ द्विर्वचनमभ्यासकार्यम् । 'श्नाभ्यस्तयोरातः। ६ । ४ । ११२ ।' इत्याकारलोपः । 'दधस्तथोश्च । ८ । २ । ३८ ।' इति भष्भावः । 'झषस्तथोर्धोऽधः ।८।२।४०।' इति प्रतिषेधात् तकारस्य धत्वं न भवति । तत्संहितं सर्पादीन् अक्षरत् मुक्तवत् ॥ ८६ ॥

न्यषेधत्पावकास्त्रेण रामस्तद्राक्षसस्ततः ।
अदीव्यद्रौद्रमस्त्युग्रं मुसलाद्यगलत्ततः ॥ ८७ ॥

न्यषेधदित्यादि—तदासुरं शस्त्रं रामः पावकास्त्रेण आग्नेयास्त्रेण न्यषेधत् निषिद्धवान् । ततो राक्षसो रौद्रमस्त्रमत्युग्रमदीव्यत् क्षिप्तवान् । अत्र 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' इति । दिविर्गतौ वर्तते । ततो रौद्रात् क्षिप्तात् मुसलादिप्रहरणमगलत् निर्गतवत् । 'गल अदने' अनेकार्थत्वाद्धातूनां गलिरत्र निर्गमे वर्तते ॥ ८७ ॥

गान्धर्वेण न्यविध्यत्तत्क्षितीन्द्रोऽथ नराशनः ।
सर्वमर्मसु काकुत्स्थमौम्भत्तीक्ष्णैः शिलीमुखैः ॥ ८८ ॥

गान्धर्वेणेत्यादि—क्षितीन्द्रो रामः तद्रौद्रमस्त्रं गान्धर्वेणास्त्रेण न्यविध्यत् ताडितवान् । अथ नराशनोनाम राक्षसः शिलीमुखैर्बाणैः सर्वमर्मसु काकुत्स्थमौम्भत् पूरितवान् । 'उम्भ पूरणे' तुदादौ ॥ ८८ ॥

---

१ 'व्योम पुष्करमम्बरम् ।' इत्यमरोक्त्याऽऽकाशमित्यर्थः । २ 'क्ष्मावनिर्मेदिनी मही' इत्यमरः ।

ततस्त्रिशिरसं तस्य प्रावृश्चल्लक्ष्मणो ध्वजम् ।
अमथ्नात्सारथिं चाशु भूरिभिश्चातुदच्छरैः ॥ ८९ ॥

तत इत्यादि—ततोऽनन्तरं लक्ष्मणस्तस्य रावणस्य ध्वजं त्रिशिरसं त्रिशूलाग्रं प्रावृश्चत् छिन्नवान् । 'ओव्रश्चू च्छेदने' तुदादौ । सारथिं चामथ्नात् ध्वस्तवान् । 'मन्थ विलोडने' क्र्यादिः । भूरिभिश्च प्रभूतैः शरैरतुदत् व्यथितवान् ॥ ८९ ॥

अश्वान्विभीषणोऽतुभ्नात्स्यन्दनं चाक्षिणोद्द्रुतम् ।
नाक्षुभ्नाद्राक्षसो भ्रातुः शक्तिं चोदवृहद्गुरुम् ॥ ९० ॥

अश्वानित्यादि—विभीषणश्चाश्वानतुभ्नात् हतवान् । 'णभ तुभ हिंसायाम्' स्यन्दनं चाक्षिणोत् भग्नवान् । 'क्षिणु हिंसायाम्' तनादौ । राक्षस रावणः नाक्षुभ्नात् न क्षोभं गतः । 'क्षुभ सञ्चलने' क्र्यादौ गृह्यते न दिवादौ । भ्रातुर्विभीषणस्य कृते गुरुं महतीं शक्तिमुदवृहत् उद्यतवान् । 'वृहू उद्यमने' तुदादौ । गुरुमिति 'वोतो गुणवचनात् । ४ । १ ।४४ ।' इति विकल्पेन ङीप् ॥ ९० ॥

तामापतन्तीं सौमित्रिस्त्रिधाऽकृन्तच्छिलीमुखैः ।
अशब्दायन्त पश्यन्तस्ततः क्रुद्धो निशाचरः ॥ ९१ ॥

तामित्यादि—तस्योपरि शक्तिमापतन्तीं सौमित्रिः शिलीमुखैस्त्रिधा त्रिप्रकारम् अकृन्तत् छिन्नवान् । 'कृती छेदने' तुदादौ । यत्र प्रेक्षकाः पश्यन्तः ते अशब्दायन्त शब्दं कृतवन्तः । 'वीर लक्ष्मण ! साधु कृतम्' इति । 'शब्दवैरकलहाभ्रकण्वमेघेभ्यःकरणे । ३ । १ । १७।' इति करोत्यर्थे क्यङ् । ततोऽनन्तरं निशाचरो रावणः क्रुद्धः क्रोधं कृतवान् ॥ ९१ ॥

क्रुद्धो निशाचरः किं कृतवानित्याह—

अष्टघण्टां महाशक्तिमुदयच्छन्महत्तराम् ।
रामानुजं तयाविध्यत्स महीं व्यसुराश्रयत् ॥ ९२ ॥

अष्टेत्यादि—अष्टौ घण्टा यस्यां महाशक्तौ तां शक्तिं प्रभावेण महत्तराम् अतिशयेन महाप्रमाणाम् उदयच्छत् उद्यतवान् । 'समुदाङ्भ्यो यमोऽग्रन्थे । १ । ३ । ७५।' इति तङ् न भवति अकर्त्रभिप्रायत्वात् । तया च करणभूतया

१ 'अलिबाणौ शिलीमुखौ ।' इत्यमरः ।

रामानुजं लक्ष्मणमविध्यत् विद्धवान् । राममनुजातवानिति । 'अनौ कर्मणि । ३ । २ । १०० ।' इति डः । स च लक्ष्मणो विद्धः व्यसुः विगतप्राण इव महीमाश्रयत् आश्रितवान् । भुवि पतित इत्यर्थः ॥ ९२ ॥

राघवस्याभृशायन्त सायकास्तैरुपद्रुतः ।
ततस्तूर्णं दशग्रीवो रणक्ष्मां पर्यशेषयत् ॥ ९३ ॥

राघवस्येत्यादि—तस्मिन् पतिते राघवस्य सम्बन्धिनो बाणाः अभृशायन्त अभृशा भृशा अभवन् शीघ्रगतयो जाता इत्यर्थः । ततस्तैरुपद्रुतो दशग्रीवः तूष्णीं भूत्वा रणक्ष्मां रणभूमिं पर्यशेषयत् त्यक्तवान् । 'शिष असर्वोपयोगे' चुरादिः ॥ ९३ ॥

सस्फुरस्योदकर्षच्च सौमित्रेः शक्तिमग्रजः ।
असिञ्चदोषधीस्ता याः समानीता हनूमता ॥ ९४ ॥

सस्फुरस्येत्यादि—अग्रजश्च ज्येष्ठो भ्राता रामः सौमित्रेः लक्ष्मणस्य सस्फुरस्य उच्छ्वसतः शक्त्याहततया मूर्च्छितत्वेऽप्यानिर्गतप्राणत्वात् हृदयलग्नां वक्षसि प्रविष्टामुदकर्षत् उत्कृष्टवान् । याश्च हनूमतौषध्यः समानीतास्ता असिञ्चत् व्रणदेशेषु क्षारितवान् ॥ ९४ ॥

उदजीवत्सुमित्राभूर्भ्राताऽऽश्लिष्यत्तमायतम् ।
सम्यङ् मूर्धन्युपाशिङ्घदपृच्छच्चानिरामयम् ॥ ९५ ॥

उदजीवदित्यादि—ततः सुमित्राभूर्लक्ष्मणः उदजीवत् प्रत्युज्जीवितवान् । त च जीवितं भ्राता रामः आयतं दीर्घकालमाश्लिष्यत् आलिङ्गितवान् । मूर्धनि च सम्यगुपाशिङ्घत् आघ्रातवान् । 'शिघि आघ्राणे' । निरामयं च कुशलमपृच्छत् पृष्टवान् । 'किं व्यपगता पीडा' इति ॥ ९५ ॥

ततः प्रोदसहन्सर्वे योद्धुमभ्यद्रवत्परान् ।
अकृच्छ्रायत च प्राप्तो रथेनान्येन रावणः ॥ ९६ ॥

तत इत्यादि—पुनः सर्व एव रामादयो योद्धुं प्रोदसहन् प्रोत्साहितवन्तः । 'सह मर्षणे' इति चौरादिकः परस्मैपदी । 'आ धृषाद्वा' इति णिज् न भवति । न तु भौवादिकः । तस्यात्मनेपदित्वात् । रावणश्चान्येन रथेन प्राप्तः

---

१ अयं लक्ष्योऽर्थः। वस्तुतो यथोक्ताया व्यसुताया आसन्नत्वात् । २ पीडितः। ३ सुमित्राया भवतीति यथोक्तः । क्विप् । ४ मस्तके । मस्तकाघ्राणं हि वात्सल्यातिशयेनेति शिष्टाचारः ।

सन् परानुत्सहतोऽभ्यद्रवत् अभिमुखं गतवान् । अकृच्छ्रायत च कृच्छ्राय पापाय कर्मणे क्रमितवान् । 'सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्' इति क्यङ् । कण्वचिकीर्षा पापचिकीर्षा ॥ ९६ ॥

भूमिष्ठस्यासमं युद्धं रथस्थेनेति मातलिः ।
आहरद्रथमत्युग्रं सशस्त्रं मघवाज्ञया ॥ ९७ ॥

भूमिष्ठस्येत्यादि—भूमिष्ठस्य रामस्य । 'अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जुपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ।८।३।९७।' इति मूर्धन्यः । रथस्थेन रावणेन सह युद्धमसममतुल्यमयुक्तमिति निरूपितवतो मघवतः इन्द्रस्य आज्ञया मातलिः सशस्त्रं रथमत्युग्रमाहरत् आनीतवान् ॥ ९७ ॥

सोऽध्यष्ठीयत रामेण शस्त्रं पाशुपतं ततः ।
निरास्यत दशास्यस्तच्छक्रास्त्रेनाजयन्नृपः ॥ ९८ ॥

सोऽध्यष्ठीयतेत्यादि—स रथो रामेणाध्यष्ठीयत अध्यासितः कर्मणि लङ् । 'घुमास्थागापाजहातिसां हलि । ६ । ४ । ६६ ।' इतीत्वम् । 'उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ।८ । ३ ।६५।' इति षत्वमड्व्यवायेऽपि । ततोऽनन्तरं दशास्यः पाशुपतमस्त्रं निरास्यत क्षिप्तवान् । 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति तङ् । तत्पाशुपतं नृपो रामः शक्रास्त्रेणाजयत् जितवान् ॥ ९८ ॥

ततः शतसहस्रेण रामः प्रौर्णोन्निशाचरम् ।
बाणानामक्षिणोद्धुर्यान् सारथिं चादुनोद् द्रुतम् ॥ ९९ ॥

तत इत्यादि—ततोऽनन्तरं रामः निशाचरं रावणं बाणानां शतसहस्रेण लक्षेण प्रौर्णोत् छादितवान् ।'गुणोऽपृक्ते । ७।३।९१।' इति गुणः । द्रुतं धुर्यानश्वान् । 'धुरो यड्ढकौ । ४।४।७७।' इति यत् । आक्षिणोत् हतवान् । सारथिं चादुनोत् उपतापितवान् ॥ ९९ ॥

---

१ 'इन्द्रो मरुत्वान् मघवा' इत्यमरः । २ 'धूर्वहे धुर्यधौरेयधुरीणाः सधुरन्धराः ।' इत्यमरः ।

अदृश्यन्तानिमित्तानि प्राह्वलत् क्षितिमण्डलम् ।
रावणः प्राहिणोच्छूलं शक्तिं चैन्द्रीं महीपतिः ॥ १०० ॥

अदृश्यन्तेत्यादि—रावणस्यानिमित्तानि अदृश्यन्त दृष्टानि । कर्मणि लङ् । क्षितिमण्डलं प्राह्वलत् । चलितम् । 'ह्वल चलने ।' रावणश्चानिमित्तानि दृष्ट्वा ब्रह्मदत्तशूलं प्राहिणोत् क्षिप्तवान् । महीपतिः स राम ऐन्द्रीं शक्तिं प्राहिणोत् । 'हि गतौ' स्वादिः ॥ १०० ॥

ताभ्यामन्योन्यमासाद्य समवाप्यत संशमः ।
लक्षेण पत्रिणां वक्षः क्रुद्धो रामस्य राक्षसः ॥ १०१ ॥

ताभ्यामित्यादि—ताभ्यां शूलशक्तिभ्यामन्योन्यमासाद्य संश्लिष्य संशमः संशमनम् । घञि 'नोदात्तोपदेशस्य मान्तस्यानाचमेः ।७।३।३४।' इति वृद्धिप्रतिषेधः । समवाप्यत प्राप्तः । कर्मणि लङ् । अनन्तरं क्रुद्धो राक्षसः पत्रिणां शराणां लक्षेण शतसहस्रेण रामस्य वक्षः अस्तृणादिति वक्ष्यमाणेन सम्बन्धः । छादितवान् । प्वादीनां ह्रस्वः । ७।३।८० ।' १०१ ॥

अस्तृणादधिकं रामस्ततोऽदेवत सायकैः ।
अक्लाम्यद्रावणस्तस्य सूतो रथमनाशयत् ॥ १०२ ॥

अस्तृणादित्यादि—ततोऽनन्तरं रामो राक्षसादधिकम् अदेवत क्रीडितवान् । 'तेवृ देवृ देवने' इति भ्वादावनुदात्तेत् । स तथा देवमानेनाहतो रावणः अक्लाम्यत् ग्लानिमुपगतः । तस्य तथाभूतस्य रावणस्य सूतः सारथिः स्वामिजीवितेच्छया रथमनाशयत् दूरम् अपनीतवान् ॥ १०२ ॥

राक्षसोऽतर्जयत् सूतं पुनश्चाढौकयद्रथम् ।
निरास्येतामुभौ बाणानुभौ धुर्यानविध्यताम् ॥ १०३ ॥

राक्षस इत्यादि—राक्षसो रावणः सूतमतर्जयत् भर्त्सितवान् । 'हा पाप ! किं शत्रुसमीपाद्रथं पराङ्मुखयसि' इति । इत्थं संतर्जितः सूतः पुनारथमढौकयत् ढौकितवान् । रामसमीपमित्यर्थात् । उभौ रामरावणौ बाणान्निरास्येतां क्षिप्तवन्तौ । 'उपसर्गादस्यत्यूह्योर्वा' इति तङ् । धुर्यानश्वानविध्यतां ताडितवन्तौ ॥ १०३ ॥

उभावकृन्ततां केतूनव्यथेतामुभौ न तौ ।
अदीप्येतामुभौ धृष्णू प्रायुञ्जातां च नैपुणम् ॥ १०४ ॥

१ दृष्टपथादिति शेषः । 'णश अदर्शने' इत्येतावन्तमर्थमपेक्ष्यास्य प्रयोगात् ।

उभावित्यादि--तावुभौ रामरावणौ केतून् ध्वजानकृन्ततां छिन्नवन्तौ। तावुभौ नाव्यथेतां न व्यथितवन्तौ। उभावदीप्येतां शोभितवन्तौ। धृष्णू च प्रगल्भौ नैपुणं कौशलं प्रायुञ्जातां प्रयुक्तवन्तौ॥ १०४॥

उभौ मायां व्यतायेतां वीरौ नाश्राम्यतामुभौ।
मण्डलानि विचित्राणि क्षिप्रमाक्रामतामुभौ॥ १०५॥

उभौ मायामित्यादि—तावुभौ मायां व्यतायेतां विस्तारितवन्तौ 'तॄ प्लवनसन्तरणयोः' भ्वादौ। उभौ वीरौ नाश्राम्यतां न श्रान्तौ। युध्यमानौ च तावुभौ मण्डलानि विचित्राणि मतिवैचित्र्यात् क्षिप्रमाक्रामतां भ्रान्तौ। 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रासित्रुटिलषः। ३।१।७०।' इति श्यन्॥ १०५॥

न चोभावप्यलक्ष्येतां यन्तारावाहतामुभौ।
स्यन्दनौ समपृच्येतामुभयोर्दीप्तवाजिनौ॥ १०६॥

न चेत्यादि--तावुभौ नाप्यलक्ष्येतां प्रेक्षकैर्न ज्ञातौ। 'अयं रामः अयं च रावणः' इति। कर्मणि लङ्। यन्तारौ सूतौ। कर्मपदमेतत्। उभौ परस्परस्याहतामाहतवन्तौ। 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति। ६। ४। ३७।' इत्यनुनासिकलोपः। स्यन्दनौ रथौ उभयोः रामरावणयोः दीप्तवाजिनौ चामरादिमण्डनात् दीप्ता उज्ज्वला वाजिनो हयाः ययोः तयोः स्यन्दनौ रथौ समपृच्येतां संपृक्तौ। 'पृची सम्पर्के।' कर्मणि लङ्॥ १०६॥

ततो मायामयान्मूर्ध्नो राक्षसोऽप्रथयद्रणे।
रामेणैकशतं तेषां प्रावृश्च्यत शिलीमुखैः॥ १०७॥

तत इत्यादि--ततोऽनन्तरं राक्षसो रावणो मायामयान् मायास्वभावान्मूर्ध्नः शिरांसि अप्रथयत् प्रदर्शितवान्। 'प्रथ प्रख्याने' इति घटादौ। तेषां च शिरसाम् एकशतम् एकाधिकं शतं रामेण शिलीमुखैः शरैः प्रावृश्च्यत छिन्नम्। कर्मणि लङ्॥ १०७॥

समक्षुभ्यन्समुद्रन्वन्तः प्राकम्पन्त महीभृतः।
सन्त्रासमविभः शक्रः मैङ्क्षुच्च क्षुभिता क्षितिः॥ १०८।

---

१ 'ग्रहभेदे ध्वजे केतुः' इत्यमरः। बहुवचनमविवक्षितम्। यद्वा वारंवारमिति द्योतयितुमिदम्। वस्तुतस्तु रामस्य केतुं ताडितवान्, रावणस्य तु केतुं वारंवारं छिन्नवानिति।

समक्षुभन्नित्यादि—छिन्नानां च पततां क्षोभादुदन्वन्तः सागराः समक्षुभन् सञ्चलिताः । 'क्षुभ सञ्चलने' इति क्र्यादिः । महीभृतः पर्वताः प्राकम्पन्त कम्पिताः । शक्र इन्द्रः संत्रासमबिभः भृतवान् । पततां शिरसां पुनः पुनरुदयात् । मायया विमोह्यायं राममजैषीदिति । बिभर्तेः श्लौ द्विर्वचनम् । भृञामित् । ७ । ४ । ७६ ।' धातोर्गुणः । लोपविसर्जनीयौ । प्रैङ्खत् क्षुभितश्च स शक्रः । 'उखउखिवखवखिमखमखि' इत्यादाविखिरिति पठ्यते । क्षितिश्च क्षुभिता चलिता ॥ १०८ ॥

ततो मातलिना शस्त्रमस्मर्यत महीपतेः ।
वधाय रावणस्योग्रं स्वयम्भूर्यदकल्पयत् ॥ १०९ ॥

तत इत्यादि—रावणस्य वधाय स्वयम्भूर्यदस्त्रमकल्पयत् कल्पितवान् । कृपेर्णौ गुणः।'कृपो रो लः ।८।२।१८।' तदस्त्रं मातलिना अस्मर्यत स्मारितम् । स्मरतेर्ण्यन्तात् कर्मणि लङ् । मित्त्वाद्ध्रस्वत्वम् । महीपतेरिति शेषे षष्ठी॥१०९॥

कीदृशं तदित्याह—

नभस्वान्यस्य वाजेषु फले तिग्मांशुपावकौ ।
गुरुत्वं मेरुसङ्काशं देहः सूक्ष्मो वियन्मयः ॥ ११० ॥

नभस्वानित्यादि—यस्य शस्त्रस्य वाजेषु पक्षेषु[1] नभस्वान् वायुः सन्निहितः। फले शल्ये तिग्मांशुरादित्यः पावकश्च । यस्य गुरुत्वं मेरुवत् मेरोरिव[2] । 'दृढत्वं मेरुसङ्काशम्' इति पाठान्तरम् । तत्र मेरुस्थगौरवसदृशमित्यर्थः । सूक्ष्मो देहो दिव्यचक्षुर्गम्यः वियन्मय आकाशस्वभावः ॥ ११० ॥

राजितं गारुडैः पक्षैर्विश्वेषां धाम तेजसाम् ।
स्मृतं तद्रावणं भित्त्वा सुघोरं भुव्यशाययत् ॥ १११ ॥

राजितमित्यादि—गारुडैः पक्षै राजितं शोभितम् । तेजसां विश्वेषाम्[3] अनेकप्रकाराणां धाम स्थानम् । तदस्त्रं रामेण स्मृतं स्मृतिमागत्य सुघोरं रावणं भित्त्वा भुवि अशाययत् शायितवत् । रावणस्योदरं भित्त्वा भूमौ पातितवदित्यर्थः ॥ १११ ॥

---

१ 'पक्षो वाजस्त्रिषूत्तरे' इत्यमरः । २ 'तत्र तस्येव ५।१।११२' इति वतिः । ३ अयं लक्ष्योऽर्थः । यद्वा विश्वशब्दः सर्वतेजस्विपरः तेन तस्य तस्य तेजस्विनो यत्तेजस्तस्य ।

आबध्नन्कपिवदनानि सम्प्रसादं
प्राशंसत्सुरसमितिर्नृपं जितारिम् ।
अन्येषां विगतपरिप्लवा दिगन्ताः
पौलस्त्योऽजुषत शुचं विपन्नबन्धुः ॥ ११२ ॥

**इति श्रीमहावैयाकरणभट्टिकविप्रणीते रामचरिते काव्ये तिङन्तकाण्डे लङ्विलसितो नाम सप्तदशः सर्गः ॥**

आबध्नन्नित्यादि—तस्मिन् हते कपिवदनानि कर्तृभूतानि प्रतोषात् सम्प्रसादमाबध्नन् सेवितवन्ति । सुरसमितिः सुराणां समितिः सभा, सङ्घो[1] वा नृपं जितारिं प्राशंसत् स्तुतवती । अन्येषाम् अन्यजनानां दिगन्ताः रावणवधाद्विगतपरिप्लवा निरुपद्रवा जाता इत्यर्थात् । पौलस्त्यो विभीषणः विपन्नबन्धुः मृतभ्रातृकः शुचं शोकमजुषत् सेवितवान् । जुषिस्तुदादावनुदात्तेत्[2] ॥ ११२ ॥

इति श्रीजयदेवापरनामधेयश्रीजयमङ्गलसूरिविरचितया जयमङ्गलाख्यया व्याख्यया समलंकृते श्रीरामचरितापरपर्याये भट्टिकाव्ये चतुर्थे तिङन्तकाण्डे लक्षणरूपे चतुर्थः परिच्छेदः, लक्ष्यरूपे कथानके 'रावणवधो' नाम सप्तदशः सर्गश्च ।

## अष्टादशः सर्गः ।

इतः प्रभृति लटमाधिकृत्य लड्विलसितमाह—तत्र वर्तमाने लट् ततोऽन्यत्रापि दर्शयिष्यति—

व्यश्नुते स्म ततः शोको नाभिसम्बन्धसम्भवः ।
विभीषणमसावुच्चै रोदिति स्म दशाननम् ॥ १ ॥

व्यश्नुत इत्यादि—ततो वधादनन्तरं शोको विभीषणं व्यश्नुते स्म व्याप्तवान् । 'लट् स्मे ।३।२।११८।' इति भूतानद्यतनपरोक्षे लट् । नाभिसम्बन्धेन एकोदरसम्बन्धेन सम्भवो यस्य शोकस्य । असौ प्रवृद्धशोको विभीषणः उच्चैर्महता शब्देन दशाननं नामग्राहं रोदिति स्म रुदितवान् ॥ १ ॥

---

१ 'सङ्घे सभायां समितिः' इत्यमरः । २ अत्र, 'प्रहर्षिणी' वृत्तं तल्लक्षणं च यथोक्तं छन्दोऽनुशासने 'म्नौ ज्रौ गः प्रहर्षिणी गैः ।' इति ।

तदेव दर्शयन्नाह—

भूमौ शेते दशग्रीवो महार्हशयनोचितः ।
नेक्षते विह्वलं मां च न मे वाचं प्रयच्छति ॥ २ ॥

भूमावित्यादि—महार्हशयने उचितो यः स भूमौ शेते । शोकाद्विह्वलं च मां नेक्षते । मे वाचं प्रतिवचनं न प्रयच्छति न ददाति । 'दाण् दाने ।' 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । ७ । ३ । ७८ ।' इति यच्छादेशः ॥ २ ॥

विपाकोऽयं दशग्रीव संदृष्टोऽनागतो मया ।
त्वं तेनाऽभिहितः पथ्यं किं कोपं न नियच्छसि ॥ ३ ॥

विपाक इत्यादि—हे दशग्रीव ! अयं विपाको मरणलक्षणं फलम् अनागतो भविष्यन्नेव मया संदृष्टः सम्यगुपलब्धः । इदानीं पश्यसि तेन कारणेन त्वमभिहितोऽसि 'सीतां मुञ्च' इति । अतः किमिति कोपं न नियच्छसि नापनयसि । नास्त्येव मम दोषः । निपूर्वो यमिरपनयने वर्तते ॥ ३ ॥

भजन्ति विपदस्तूर्णमतिक्रामन्ति सम्पदः ।
तान्मदान्नावतिष्ठन्ते ये मते न्यायवादिनाम् ॥ ४ ॥

भजन्तीत्यादि—अन्यच्च ये स्वामिनो मदादवलेपात् मदोद्रेकात् न्यायवादिनां माल्यवत्प्रभृतीनां राक्षसानां मते नावतिष्ठन्ते राज्यकार्यभारं नानुष्ठातुं प्रवर्त्तन्ते । 'समवप्रविभ्यः स्थः । १ । ३ । २२ ।' इति तङ् । ते पुरुषाः विपदस्तूर्णं भजन्ति अवसादं सेवन्ते । भजिरुभयपदी । सम्पदश्चातिक्रामन्ति त्यजन्ति ॥ ४ ॥

अपथ्यमायतौ लोभादामनन्त्यनुजीविनः ।
प्रियं शृणोति यस्तेभ्यस्तमृच्छन्ति न सम्पदः ॥ ५ ॥

अपथ्यमित्यादि—प्रायेण ह्यनुजीविनः प्रहस्तादिसदृशाः आयतावागामिनि काले वृद्धावस्थायामपथ्यमनिष्टं फलं लोभेन तृष्णया वा प्रियमामनन्ति उपदिशन्ति 'साधु इदम्' इति । तेभ्यो यः शृणोति तं सम्पदो न ऋच्छन्ति । अर्तेः । ऋच्छादेशः ॥ ५ ॥

प्राज्ञास्तेजस्विनः सम्यक् पश्यन्ति च वदन्ति च ।
तेऽवज्ञाता महाराज क्लाम्यन्ति विरमन्ति च ॥ ६ ॥

प्राज्ञा इत्यादि—ये प्राज्ञाः बुद्धिमन्तः तेजस्विनः अस्मद्विधाः सम्यगविपरीतं शास्त्रचक्षुषा शास्त्रोपदेशजन्यबोधद्वारा पश्यन्ति वदन्ति च सम्यक्। हे महाराज ! अवज्ञातास्ते तिरस्कृताः क्लाम्यन्ति स्वयं खिद्यन्ते तादृशेभ्यो विरमन्ति च विमुखा भवन्ति । 'तदवज्ञानफलमेतत्' इति भावः ।। ६

लेढि भेषजवन्नित्यं यः पथ्यानि कटून्यपि ।
तदर्थं सेवते चाप्तान् कदाचिन्न स सीदति ॥ ७ ॥

लेढीत्यादि—यस्तु स्वामी आदौ कटून्यपि पथ्यानि परिणामसुखानि भेषजवदौषधानीव नित्यं लेढि श्रोत्रेन्द्रियेण सहर्षमनुभवति तदर्थं चाप्तानविसंवादिनः सेवते स कदाचिन्नावसीदति, इह च परत्र चावसन्नो न भवति ॥७॥

सर्वस्य जायते मानः स्वहिताच्च प्रमाद्यति ।
वृद्धौ भजति चापथ्यं नरो येन विनश्यति ॥ ८ ॥

सर्वस्येत्यादि—प्रायेण वृद्धौ सत्यां सर्वो जनो मानी सञ्जायते वृद्धेश्चित्तविकारित्वात् । स्वहिताच्च प्रमाद्यति हिताद्भ्रष्टो भवति । अपथ्यमहितं च भजति सेवते । येनासेवितेन पथ्येन नरो विनश्यति ॥ ८ ॥

द्वेष्टि प्रायो गुणेभ्यो यन्न च स्निह्यति कस्यचित् ।
वैरायते महद्भिश्च शीयते वृद्धिमानपि ॥ ९ ॥

द्वेष्टीत्यादि—यद्यस्माद्वृद्धौ सत्यां प्रायेण गुणेभ्यः वृद्धसेवित्वादिभ्यः प्रभुर्द्वेष्टि । 'क्रुधद्रुहेर्ष्याऽसूयाऽर्थानां यं प्रति कोपः । १ । ४ । ३७ ।' इति सम्प्रदानसंज्ञा । न च कस्यचित् स्निह्यति प्रीयते । महद्भिश्च सह वैरायते वैरं करोति 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ।३।१। १७।'इति क्यङ्। तस्मात्कारणात् वृद्धिमानपि शीयते विनश्यति । शदेः शिति शीयादेशः । 'शदेः शितः । १ । ३ । ६० ।' इति तङ् ॥ ९ ॥

समाश्वसिमि केनाहं कथं प्राणिमि दुर्गतः ।
लोकत्रयपतिर्भ्राता यस्य मे स्वपिति क्षितौ ॥ १० ॥

समाश्वसिमीत्यादि—यस्य मम भ्राता लोकत्रयपतिः त्रिलोकीविजेतृत्वात् क्षितौ भूतले स्वपिति सोऽहं केनोपायेन समाश्वसिमि शोकं त्यजामि । 'रुदादिभ्यः सार्वधातुके।७।२।७६।' इतीट्। दुर्गतो दुःखितः कथं केन प्रकारेण प्राणिमि जीवामि ॥ १० ॥

---

१ 'अस्मायामेधास्रजो विनिः ५।२।१२१।'इति विनिः।

अहो जागर्ति कृच्छ्रेषु दैवं यद्बलभिज्जितः ।
लुठ्यन्ति भूमौ क्लिद्यन्ति बान्धवा मे स्वपन्ति च ॥ ११ ॥

अहोइत्यादि—अहो इति विस्मये । कृच्छ्रेषु दुःखेषु दैवं जागर्ति अवहितामित्यर्थः । नित्यं दुःखोत्पादनात् । यद्यस्मात्कारणादपरमपि मम बान्धवाः बलभिज्जितः बलं भिनत्तीति बलभिदिन्द्रः तं जयन्तीति क्विप् । भूमौ लुठ्यन्ति । 'रुठ लुठ लोटने' दिवादौ । तथा क्लिद्यन्ति पूयन्ति । स्वपन्ति दीर्घनिद्रां प्रवेशिताः ॥ ११ ॥

शिवाः कुष्णन्ति मांसानि भूमिः पिबति शोणितम् ।
दशग्रीवसनाभीनां समदन्त्यामिषं खगाः ॥ १२ ॥

शिवा इत्यादि---दशग्रीवसनाभीनां दशग्रीवेण तुल्यगोत्राणाम् । 'ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु । ६ । ३ । ८५।' इति समानस्य सभावः । मांसानि शिवाः शृगालाः कुष्णन्ति । 'कुष निष्कर्षे' । भूमिः शोणितं पिबति । खगाः पक्षिणः आमिषं मांसं शोणितव्यतिरिक्तं वसामज्जादिकं वा समदन्ति भक्षयन्ति ॥ १२ ॥

येन पूतक्रतोर्मूर्ध्नि स्थीयते स्म महाऽऽहवे ।
तस्यापीन्द्राजितो दैवाद्ध्वाङ्क्षैः शिरसि लीयते ॥ १३ ॥

येनेत्यादि--- येनेन्द्रजिता पूतक्रतोरिन्द्रस्य महाहवे महासमरे मूर्ध्नि अग्रतः स्थीयते स्म स्थितम् । 'अपरोक्षे च ।३।२।११९।' इति लट् । विभीषणस्य ह्यपरोक्षभूतानद्यतनत्वादर्थस्य । तस्यापीन्द्रजितः शिरसि दैवाद्रामाद्धेतुभूतात् ध्वाङ्क्षैः काकैर्लीयते । वर्तमान एव भावे लट् ॥ १३॥

स्वर्भानुर्भास्करं ग्रस्तं निष्ठीवति कृताह्निकः ।
अभ्युपैति पुनर्भूतिं रामग्रस्तो न कश्चन ॥ १४ ॥

स्वर्भानुरित्यादि----स्वर्भानुः राहुः भास्करं ग्रस्तं ग्रासीकृतं कृताह्निकः कृताहारः निष्ठीवति स्वमुखान्निरस्यति । रामग्रस्तो रामाभिभूतः कश्चन कश्चिदपि पुनर्भूतिं नाभ्युपैति न प्राप्नोति । 'एत्येधत्यूठ्सु-

१ 'सपिण्डास्तु सनाभयः ।' इत्यमरः । २ 'शिवा गौरीफेरवयोः ।' इत्यमरः ।३ 'पललं क्रव्यमामिषम् ।' इत्यमरः ।' ४ अयं तु लक्ष्योऽर्थः । ५ 'तमस्तु राहुः स्वर्भानुः ।' इत्यमरः ।' ६ पुनरभ्युदयं. पुनर्जन्मेति तु ध्वन्यते । पुनर्भवनं विजयित्वेन गर्भगतत्वेन वा रामग्रासोत्तरं सम्भवनमिति पुनः 'भूसत्तायाम्' 'स्त्रियां क्तिन् ३।३।९४।' इति क्तिन् । एवं च रामस्य परब्रह्मत्वं सूचितम् ।

६ । १ । ८९ ।' इति वृद्धिः । अभ्यमीति पाठान्तरमयुक्तं छान्दसत्वात् । यतः 'अमो बहुलं छन्दसि' हलादावनन्तरे सार्वधातुके । 'तुरुस्तुशम्यमः सार्वधातुके । ७ । ३ । ९५ ।' इतीट् ॥ १४ ॥

त्वमजानन्निदं राजन्नीडिषे स्म स्वविक्रमम् ।
दातुं नेच्छसि सीतां स्म विषयाणां च नेशिषे ॥ १५ ॥

त्वमित्यादि—हे राजन् ! त्वमिदं यथोदितमजानन् स्वविक्रममीडिषे स्म स्तुतवानासि । 'ईडजनोर्ध्वे च । ७ । २ । ७८ ।' इति चकारात् सेशब्दस्यापीट् । एवं च कृत्वा त्वं सीतां दातुं नेच्छासि स्म नेष्टवानासि, विषयाणां शब्दादीनां नेशिषे स्म विषयान्न जितवानासि । 'ईशः से । ७ । २ । ७८ ।' इतीट् । 'अधीगर्थदयेशां कर्म्मणि । २ । ३ । ५२ । ' इति कर्मणि षष्ठी । सर्वत्र 'अपरोक्षे च । ३ । २ । ११९ ।' इति लट् ॥ १५ ॥

मन्त्रे जातु वदन्त्यज्ञास्त्वं तानप्यनुमन्यसे ।
कथं नाम भवांस्तत्र नावैति हितमात्मनः ॥ १६ ॥

मन्त्र इत्यादि—मन्त्रविषये कर्त्तव्यावधारणविषये अपण्डिताः मूर्खाः सन्तः जातु कदाचिदपि वदन्ति गर्हितमेतत् । तानपि त्वमनुमन्यसे अनुमतवान् । इदमप्यतिगर्हितम् । 'गर्हायां लडपिजात्वोः । ३ । ३ । १४२ ।' इति अपिजात्वोरुपपदयोः कालसामान्ये लट् । कथमेतत् न्याय्यं यत्तत्र भगवान् रावणः विद्वानपि नात्मनो हितमवैति न विदितवान् । 'विभाषा कथमि लिङ् च । ३ । ३ । १४३ ।' इति कथं शब्द उपपदे चकारात् गर्हायां लट् तत्र भवानिति 'इतराभ्योऽपि दृश्यन्ते ।५।३।१४।' इति भवदादियोगे प्रथमान्तात् त्रल्प्रत्ययः ॥ १६ ॥

अपृष्टो नु ब्रवीति त्वां मन्त्रे मातामहो हितम् ।
न करोमीति पौलस्त्य ! तदा मोहात्त्वमुक्तवान् ॥ १७ ॥

अपृष्ट इत्यादि—किमस्मिन् काले युज्यत इति मन्त्रे मातामहो माल्यवान् अपृष्टः सन् हितं नु ब्रवीति । हे पौलस्त्य ! त्वं पुनर्हितमकार्षीरिति माल्यवता पृष्टं तदा तस्मिन् काले न करोमीति मोहादज्ञानादुक्तवान् । अत्र नुशब्दे नशब्दे चोपपदे 'ननौ पृष्टप्रतिवचने ।३।२।१२० ।' इति भूते धात्वर्थे 'नन्वोर्विभाषा ।३।२।१२१ ।' इति विभाषा लट् ॥ १७ ॥

---

१ 'कदाचिज्जातु' इत्यमरः ।

त्वं स्म वेत्थ महाराज । यत् स्माह न विभीषणः ।
पुरा त्यजति यत् क्रुद्धो मां निराकृत्य संसदि ॥ १८ ॥

त्वमित्यादि---हे महाराज ! विभीषणो यदाह स्म उक्तवान् तत्त्वं न वेत्थ स्म न विदितवानसि । किमेतेन हितमुक्तं न वेति । उभयत्र 'अपरोक्षे च ।३।२।११९।'इति लट् । तत्र पूर्वस्मिन् 'विदो लटो वा ।३।४।८३।'इति सिपस्थादेशः । अपरस्य 'ब्रुवः पञ्चानामादित आहो ब्रुवः। ३ । ४ । ८४ ।' इति तिपो णलादेशः । यद्यस्मात्त्वं क्रुद्धः सन् मां संसदि सभायां निराकृत्य पादप्रहारेण पुरा पूर्वं त्यजसि त्यक्तवानसि । 'पुरि लुङ् चास्मे ।३।२।१२२।' इति चकाराल्लट् ॥ १८ ॥

हविर्जक्षिति निःशङ्को मखेषु मघवानसौ।
प्रवाति स्वेच्छया वायुरुद्गच्छति च भास्करः ॥ १९ ॥

हविरित्यादि—असौ [१]मघवान् इन्द्रः मखेपु यज्ञेपु हविराज्यादिकमधुना जक्षिति भक्षयति। 'रुदादिभ्यः सार्वधातुके'।७।२।७६।'इतीट् । वायुश्च स्वेच्छया प्रवाति गच्छति । 'पवते' इति पाठान्तरं पवित्रीकरोतीत्यर्थः [२]। भास्करश्च यथेष्टमुद्गच्छति उदेति ॥ १९ ॥

धनानामीशते यक्षा यमो दाम्यति राक्षसान् ।
तनोति वरुणः पाशमिन्दुनोदीयतेऽधुना ॥ २० ॥

धनानामित्यादि—यक्षाः कुबेरादयः धनानामीशते प्रभवन्ते 'स्वाम्यं लभन्ते' इत्यर्थः । 'ईश ऐश्वर्ये ।' यमोऽपि राक्षसान् दाम्यति वशीकरोति । वरुणः पाशं तनोति विस्तारयति । इन्दुनोदीयतेऽधुना । भावे लट् । अधुनेति सर्वत्र योज्यम् । अणुनेति पाठान्तरं असम्पूर्णत्वात् [३] ॥ २० ॥

शाम्यत्यृतुसमाहारस्तपस्यन्ति वनौकसः ।
नो नमस्यन्ति ते बन्धून् वरिवस्यन्ति नामराः ॥ २१ ॥

शाम्यतीत्यादि—ऋतूनां समाहारः सम्भूयावस्थानं शाम्यति अपैति ।

---

१ 'इन्द्रो मरुत्वान् मघवा' इत्यमरः। २ एतेन 'रावणस्य' 'भीषाऽस्माद्वातः पवते' इत्यादिश्रुत्युक्तस्य परमात्मन इव महत्त्वं सम्भावितम् । एतस्य हि इच्छानुवर्त्तिनः सर्वेऽपीन्द्रादयः आसन्निति तथोक्तिः । ३ एवमादिवचनं 'रावणस्य' सर्वजेतृत्वं सर्वत्रासकत्वं सर्वेश्वरत्वं च सूचयत् सर्वाभिलषितं मरणं सम्भावयति ।

वनौकसो वनवासिनो मुनयः तपस्यन्ति । तपश्चरन्ति । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ।३।१।१५।' इति क्यङ् । तपसः परस्मैपदं च । ते त्वद्बन्धूनमरा नो नमस्यन्ति न प्रणमन्ति । न वरिवस्यन्ति । नाप्रतिषेधेन परिचरन्ति । 'नमो वरिवश्चित्रङः क्यच ।३।१।१९।' ॥ २१ ॥

श्रीर्निष्कुष्यति लङ्कायां विरज्यन्ति समृद्धयः ।
न वेद तन्न यस्यास्ति मृते त्वयि विपर्ययः ॥ २२ ॥

श्रीरित्यादि---लङ्कायां पुर्याम् अधुना श्रीर्निष्कुष्यति अतिक्रुद्ध्यति । 'कुष रोषे' 'कुषिरजोः प्राचां श्यन् परस्मैपदं च ।३।१।९०।' तत एव समृद्धयश्च विरज्यन्ति लङ्कातोऽपयान्ति । सर्वथा तद्वस्तु न वेद न वेद्मि । 'विदो लटो वा ।३।४।८३।' इति मिपो णल् । यस्य त्वयि मृते न विपर्ययः नान्यथाभावः किंतु सर्वमेव विपरीतमिति तत्त्वम् ॥ २२ ॥

शक्तिं संस्वजते शक्रो गोपायति हरिः श्रियम् ।
देववन्द्यः प्रमोदन्ते चित्रीयन्ते घनोदयाः ॥ २३ ॥

शक्तिमित्यादि—शक्रः शक्तिं प्रहरणमधुना संस्वजते गृह्णाति । 'दंशसञ्जस्वञ्जां शपि । ६ । ४ । २५ ।' इत्यनुनासिकलोपः । हरिर्विष्णुः श्रियं गोपायति आत्मन्येव कृत्वा रक्षति । देववन्द्यः प्रमोदन्ते हृष्यन्ति । घनोदया मेघानां गगनेऽवस्थानानि चित्रीयन्ते नानारूपेणाद्भुतायन्ते । मृते त्वयीति सर्वत्र योज्यम् ॥ २३ ॥

अथ त्रिभिर्विशेषकम्—

बिभ्रत्यस्त्राणि सामर्षा रणकाम्यन्ति चामराः ।
चकासति च मांसाऽदां तथा रन्ध्रेषु जाग्रति ॥ २४ ॥

बिभ्रतीत्यादि—अमरा देवाः सामर्षाः[1] सकोपाः अस्त्राणि बिभ्रति धारयन्ति । रणकाम्यन्ति च आत्मनो रणमिच्छन्ति । आत्मेच्छायां 'काम्यच्च । ३ । १ । ९ ।' इति काम्यच् । चकासति च दीप्यन्ते च । 'जक्षित्यादित्वादभ्यस्तसंज्ञायां झेरदादेशः । तथा मांसादां राक्षसानाम् । 'अदोऽनन्ने । ३ । २ । ६८ ।' इति विट् । रन्ध्रेषु व्यसनेषु जाग्रति सावधाना भवन्ति ॥ २४ ॥

---

१ 'कोपक्रोधामर्षरोष-'इत्यमरः ।

चञ्चूर्यन्तेऽभितो लङ्कामस्मांश्चाप्यतिशेरते ।
भूमयन्ति स्वसामर्थ्यं कीर्तिं नः कनयन्ति च ॥ २५ ॥

चञ्चूर्यन्त इत्यादि—लङ्कामभितः[1] बाह्यतोऽभ्यन्तरतश्च । 'पर्यभिभ्यां च ।५।३।९।' इति सर्वोभयार्थे तसिः । चञ्चूर्यन्ते गर्हितं चरन्ति । 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् । ।३।१।२४।' इति भावगर्हायां यङ् । 'चरफलोश्च ।७।४।८७।' इत्यभ्यासस्य नुक् । 'उत्परस्यातः ।७।४।८८।' इत्युत्वम् । अस्मांश्चापि अतिशेरते अतिशयिता भवन्ति च । स्वसामर्थ्यं भूमयन्ति वर्धयन्ति । बहूनां भाव इति 'पृथ्वादिभ्य इमनिज् वा ।५।१।१२२।' । 'बहोर्लोपो भू च बहोः ।६।४।१५८।' इति बहोर्भूरादेशः । इमनिजादिलोपश्च । भूमानं कुर्वन्तीति णिचि णाविष्ठवत्प्रातिपदिकस्येतीष्ठवद्भावात् टिलोपयणादिपरलोपः । विन्मतोर्लुगर्थमिति वचनाद्वा टिलोपः । किंच नोऽस्माकं कीर्तिं कनयन्ति अल्पां कुर्वन्ति । अमरा इति योज्यम् । अल्पां कुर्वन्तीति णिचि णाविष्ठवद्भावाद् 'युवाल्पयोः कनन्यतरस्याम् ।५।३।६४।' इति कनादेशः ॥ २५ ॥

दिशो व्यश्नुवते दृप्तास्त्वत्कृतां जहति स्थितिम् ।
क्षोदयन्ति च नः क्षुद्रा हसन्ति त्वां विपद्गतम् ॥ २६ ॥

दिश इत्यादि—दृप्ताः[2] सन्तः दिशो व्यश्नुवते व्याप्नुवन्ति । स्थितिं व्यवस्थां त्वत्कृताम् । 'प्रत्ययोत्तरपदयोश्च ।७।२।९८।' इति त्वदादेशः । जहति त्यजन्ति । 'ओहाक् त्यागे' लट् । विपद्गतं च त्वां हसन्ति । क्षुद्राः अल्पकायाः क्षोदयन्तीव क्षुद्रमिवाचक्षत इति । भुवने यो हि न्यक्कृतत्रिलोकः स कथं क्षुद्र उच्यते । 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ।६।४।१५६।' इति णौ यणादिपरलोपः पूर्वस्य च गुणः ॥ २६ ॥

शमं शमं नभस्वन्तः पुनन्ति परितो जगत् ।
उज्जिहीषे महाराज त्वं प्रशान्तो न किं पुनः ॥ २७ ॥

शममित्यादि—नभस्वन्तो वायवः शमं शमं शान्त्वा शान्त्वा । 'आभीक्ष्ण्ये णमुल् च ।३।४।२२।' इति णमुलि 'नोदात्तोपदेशस्य मान्तस्यानाचमेः ।७।३।३४।' इति वृद्धिप्रतिषेधः । आभीक्ष्ण्ये द्वे भवतः । परितः सर्वतो जगत् पुनन्ति पवित्रयन्ति । प्रशान्ता अपि पुनर्भूत्वा पुनरुद्भूय जगत्

---

१ 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इति द्वितीया । २ प्रवृद्धदर्पाः ।

पुनन्ति। हे महाराज ! त्वं पुनः प्रशान्तोऽपि किं नोज्जिहीषे नोत्तिष्ठसि। 'ओहाङ् गतौ' इत्यभ्यासस्य 'भृञामित्। ७। ४। ७६।' इति इत्त्वम्। 'ई हल्यघोः।६।४।११३।' इतीत्वम्॥ २७॥

प्रोर्णोति शोकश्चित्तं मे सत्त्वं संशाम्यतीव मे।
प्रमार्ष्टि दुःखमालोकं मुष्णाम्यूर्जं त्वया विना॥ २८॥

प्रोर्णोतीत्यादि--हे महाराज ! त्वया[1] विना शोको मम चित्तं प्रोर्णोति आच्छादयति। सत्त्वम् अवष्टम्भः संशाम्यतीव अपगच्छतीव। मां त्यजतीत्यर्थः। दुःखं च कर्तृ आलोकं प्रज्ञानं प्रमार्ष्टि अपनयति। अतस्त्वया विना ऊर्जं बलं मुष्णामि। अलसो भवामीत्यर्थः॥ २८॥

के न संविद्रते नान्यस्त्वत्तो बान्धववत्सलः।
विरौमि शून्ये प्रोर्णौमि कथं मन्युसमुद्भवम्॥ २९॥

केनेत्यादि--त्वत्तोऽन्यो बान्धववत्सलो नेति के न संविद्रते न जानते। 'समो गम्यृच्छिभ्याम्।१।३।२९।' इति तङ्। 'वेत्तेर्विभाषा।७।१।७।' इति रुट्। किंतु सर्व एव संविदत इति भावः। बन्धुरेव बान्धवः। 'प्रज्ञादिभ्यश्च। ५। ४। ३८।' इति स्वार्थेऽण्। अतोऽहं शून्ये बन्धुविरहिते समये देशे वा विरौमि फूत्करोमि। कथं केन प्रकारेण मन्युं[2]समुद्भवं शोकोत्पादं प्रोर्णौमि आच्छादयामि॥ २९॥

रोदिम्यनाथमात्मानं बन्धुना रहितस्त्वया।
प्रमाणं नोपकाराणामवगच्छामि यस्य ते॥ ३०॥

रोदिमीत्यादि--त्वया बन्धुना रहितत्वादनाथोऽस्मीति आत्मानमेव रोदिमि न त्वां कृतकार्यम्। यस्य ते उपकाराणां प्रमाणमियत्तां नावगच्छामि॥ ३०॥

नेदानीं शक्रयक्षेन्द्रौ बिभीतो न दरिद्रितः।
न गर्वं जहितो दृप्तौ न क्लिश्नीतो दशानन !॥ ३१॥

नेदानीमित्यादि—इदानीं[3] त्वय्येवंभूते शक्रयक्षेन्द्रौ इन्द्रः कुबेरश्च न बिभीतः न भयं कुरुतः। 'भियोऽन्यतरस्याम्।६।४।११५।' इति

---

१ 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम् २।३।३२' इति तृतीया। २ 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः। ३अस्मिन् काले इत्यर्थः। 'दानीं च ५।३।१८' इति साधु।

इत्वाभावपक्षे रूपम् । न दरिद्रितः दरिद्रौ न भवतः । 'इद्दरिद्रस्य । ६ । ४ । ११४ ।' इति हलादौ क्ङिति सार्वधातुक इत् । दृप्तौ न गर्वं जहितः परित्यजतः 'जहातेश्च ।६।४।११६।' इतीत्वम् । न क्लिश्नीतः क्लेशं नानुभवतः । 'ई हल्यघोः ।६।४।११३।' इतीत्वम् ।। ३१ ।।

त्वयापि नाम रहिताः कार्याणि तनुमो वयम् ।
कुर्मश्च जीविते बुद्धिं धिक् तृष्णां कृतनाशिनीम् ।। ३२ ।।

त्वयेत्यादि—यद्वयं त्वया विना कार्याणि राज्याङ्गानि तनुमः प्रसारयिष्यामः । जीविते च बुद्धिं कुर्मः । तदिमां कार्ये जीविते च तृष्णां कृतनाशिनीं परकृतोपकारादिविस्मारिकां धिक् ।'गर्हायां लडपिजात्वोः। ३ । ३ । १४२ ।' इति भविष्यति लट् ।। ३२ ।।

तृणेह्मि देहमात्मीयं त्वं वाचं न ददासि चेत् ।
द्राघयन्ति हि मे शोकं स्मर्यमाणा गुणास्तव ।। ३३ ।।

तृणेह्मीत्यादि—मम प्रतिवचनं न ददासि चेत् यदि त्वं तर्हि आत्मीयं देहं तृणेह्मि हन्मि । 'तृणह इम् ।७।३।९२।' हि यस्मात् स्मर्यमाणास्तव गुणाः मम शोकं द्राघयन्ति दीर्घं कुर्वन्ति । णाविष्ठवद्भावेन 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रद्राघिवृन्दाः ।६।४।१५७।' इति दीर्घशब्दस्य द्राघादेशः ।। ३३ ।।

उन्मुच्य स्रजमात्मीयां मां स्रजयति को हसन् ।
नेदयत्यासनं को मे को हि मे वदति प्रियम् ।। ३४ ।।

उन्मुच्येत्यादि—आत्मीयां स्रजं मालामुन्मुच्यापनीय देहात् हसन् परितोषात् को मां स्रजयति स्रग्विणं करोति । णाविष्ठवद्भावात् 'विन्मतोर्लुक् ।५।३।६५।' इति विनो लुक् । 'प्रकृत्यैकाच् ।६।४।१६३।' इति टिलोपाभावः । को वा ममासनं नेदयति अन्तिकं करोति । अत्रापि णौ इष्ठवद्भावात् 'अन्तिकबाढयोर्नेदसाधौ । ५ । ३ ।६३।' इति अन्तिकशब्दस्य नेदादेशः । कर्हि कदा को मे प्रियं वदति वदिष्यति । 'विभाषा कदाकर्ह्योः । ३ । ३ । ५।' इति भविष्यति लट् ।। ३४ ।।

न गच्छामि पुरा लङ्कामायुर्धारिद् दधाम्यहम् ।
कदा भवति मे प्रीतिस्त्वां पश्यामि न चेदहम् ।। ३५ ।।

न गच्छामीत्यादि—यावदहमायुर्दधामि धारयिष्यामि जीविष्यामीति भावः । 'यावत्पुरानिपातयोर्लट् । ३ । ३ । ४ ।' इति भविष्यति लट् । पुराशब्दोऽत्र भविष्यदासत्तिमाह । प्रीतिर्हि लङ्काप्रवेश इति दर्शयन्नाह—चेद्यद्यहं त्वां जीवन्तं न पश्यामि । वर्तमाने लट् । कदा कस्मिन् काले मे मम प्रीतिर्भवति भविष्यति । 'विभाषा कदाकर्ह्योः ।३।३।५।' इति भविष्यति लट् ॥ ३५ ॥

ऊर्ध्वं म्रिये मुहूर्ताद्धि विह्वलः क्षतबान्धवः ।
मन्त्रे स्म हितमाख्यामि न करोमि तवाप्रियम् ॥ ३६ ॥

ऊर्ध्वमित्यादि—मुहूर्तादूर्ध्वम् उपरि अहं म्रिये मरिष्यामि । क्षतबान्धवः विनष्टबन्धुजनः । अत एव विह्वलः सन् । अनेन मरणस्य निमित्तभूतं प्राप्तकालं लोडर्थं दर्शयति । तेन 'लिङ् चोर्ध्वमौहूर्तिके ।३।३।९। इति लोडर्थलक्षणे भविष्यति लट् । लोटश्च प्रैषादिकः । 'म्रियतेर्लुङ्लिङोश्च । १ । ३ । ६१ ।' इति चकारात् शितश्चात्मनेपदम् । अन्यच्च मन्त्रे मन्त्रविषये हितमाख्यामि स्म आख्यातवानहम् । 'अपरोक्षे च ।३।२।११९।' इति लट् । ममाप्रियं मा कार्षीरिति पृष्टः सन्नहं न करोमि तवाप्रियमिति न कृतवानस्मि । 'नन्वोर्विभाषा ।३।२।१२१।' इति पृष्टप्रतिवचने लट् ॥ ३६ ॥

अथ युग्मकम् ।

अन्तःपुराणि पौलस्त्यं पौराश्च भृशदुःखिताः ।
संश्रुत्य स्माभिधावन्ति हतं रामेण संयुगे ॥ ३७ ॥

अन्तःपुराणीत्यादि—अनन्तरं पौलस्त्यं रावणं रामेण हतं संश्रुत्य श्रुत्वा अन्तःपुराणि अन्तःपुरवर्त्तीनि कलत्राणि पौराश्च लङ्कापुरवास्तव्या अन्येऽवशिष्टा राक्षसाश्च । पुर्याम्भवा इति तथोक्ताः दुःखिताः अभिधावन्ति स्म ढौकन्ते स्म । 'लट् स्मे ।३ । २ । ११८ ।' इति भूतानद्यतनपरोक्षे लट् ॥ ३७ ॥

मूर्धजान् स्म विलुञ्चन्ति क्रोशन्ति स्मातिविह्वलम् ।
अधीयन्त्युपकाराणां मुहुर्भर्तुः प्रमन्यु च ॥ ३८ ॥

मूर्धजानित्यादि—मूर्धजान् केशान्विलुञ्चन्ति स्म अपनयन्ति स्म । अतिविह्वलम् अतिवैक्लव्यं गुणप्रधानो निर्देशः । क्रोशन्ति स्म फूत्कारं कुर्वन्ति स्म । अन्तःपुराणीत्यर्थः । भर्तुश्चोपकाराणां मुहुरधीयन्ति स्म । 'इक् स्मरणे ।'

'अधीगर्थदयेशां कर्म्मणि । २ । ३ । ५२ ।' इति कर्मणि षष्ठी । प्रमन्यु चेति क्रियाविशेषणं प्रकृष्टशोकमित्यर्थः । 'प्रमन्यवः' इति पाठान्तरं प्रकृष्टशोकाः इत्यर्थः ॥ ३८ ॥

रावणस्य नमन्ति स्म पौराः सास्रा रुदन्ति च ।
भाषते स्म ततो रामो वचः पौलस्त्यमाकुलम् ॥ ३९ ॥

रावणस्येत्यादि--पौराश्च रावणस्य नमन्ति स्म नमस्यन्ति स्म । पादावित्यर्थात् तत्सम्बन्धित्वात् । सास्राश्च[1] सन्तः रुदन्ति स्म । ततोऽनन्तरं रामः पौलस्त्यं विभीषणम् आकुलं वचो भाषते स्म उक्तवान् ॥ ३९ ॥

दातुः स्थातुर्द्विषां मूर्ध्नि यष्टुस्तर्पयितुः पितॄन् ।
युद्धाभग्नाविपन्नस्य किं दशास्यस्य शोचसि ॥ ४० ॥

दातुरित्यादि----दशास्यो दाता, द्विषां मूर्ध्नि स्थाता[2], यष्टा यज्ञानां पितॄन् तर्पयिता । 'तृप तृप्तौ' चुरादिः । युधि देवादीनां संग्रामेऽभग्नः अविपन्नः । तस्यैवंविधस्य किं शोचसि शोच्यमेव नास्ति । वर्तमाने लट् ॥ ४० ॥

बोभवीति न सम्मोहो व्यसने स्मः भवादृशाम् ।
किं न पश्यसि सर्वोऽयं जनस्त्वामवलम्बते ॥ ४१ ॥

बोभवीतीत्यादि--भवादृशां युष्मद्विधानां व्यसने दुःखे सम्मोहः अज्ञानं न बोभवीति अत्यर्थं न भवति । यङ्लुकि रूपम् । एवं च सति स्वार्थो न हीयते । यतः किं न पश्यसि अयं सर्वो जनः त्वामवलम्बते 'त्वमेव स्वामी' इति प्रतीक्षते ॥ ४१ ॥

त्वमर्हसि भ्रातुरनन्तराणि कर्तुं जनस्यास्य च शोकभङ्गम् ।
धुर्ये विपन्ने त्वयि राज्यभारो मज्जत्यनूढः क्षणदाचरेन्द्र, ॥ ४२ ॥

इति महावैयाकरणश्रीभट्टिप्रणीतरामचरितकाव्ये तिङन्तकाण्डे लङ्विलसितो नामाष्टादशः सर्गः ।

---

१ अस्रुपूर्णनेत्रा इति भावः । 'रोदनं चास्रमश्रु च ।' इत्यमरः । २ एवेनास्य किरीटवदुपास्यत्वं सूचितम् ।

त्वमर्हसीत्यादि--तस्मात् भ्रातुरनन्तराण्यग्निसात्कारादीनि कर्तुं त्वमर्हसि युज्यसे। अस्य च जनस्य शोकभङ्गं शोकापनयनं कर्तुं च। अन्यथा त्वयि धुर्ये धुरं वहति विपन्ने विनष्टे सति हे क्षणदाचरेन्द्र! निशाचराणामिन्द्र इवेन्द्रस्तत्सम्बुद्धौ राज्यभारः अनूढः अन्यैरनधिष्ठितः सन् मज्जति अधो याति शत्रुभिर्विनश्यति। तस्मात् त्वया समाहितेन राज्यभारो वोढव्य इति ॥ ४२ ॥

इति श्रीजिटेश्वरापरपर्यायजयमङ्गलसूरिविरचितया जयमङ्गलाख्यया व्याख्यया समलङ्कृते श्रीभाट्टप्रणीते रामचरिते काव्ये चतुर्थे तिङन्तकाण्डे लक्षणरूपे पञ्चमः परिच्छेदः, लक्ष्यरूपे कथानके 'विभीषण-प्रलापो' नाम अष्टादशः सर्गश्च।

## ऊनविंशः सर्गः।

इतः प्रभृति लिङमधिकृत्य विलसितमाह—तत्र विध्यादिषु लिङ्। ततोऽन्यत्रापि दर्शयिष्यति--

अपमन्युस्ततो वाक्यं पौलस्त्यो राममुक्तवान्।
अशोच्योऽपि व्रजन्नस्तं सनाभिर्दुनुयान्न किम् ॥ १ ॥

अपमन्युरित्यादि—ततोऽनन्तरं पौलस्त्यो विभीषणः अपमन्युः अपगतो मन्युर्यस्य शोको स गृहीतकिञ्चिद्धैर्य इति भावः। प्रादिभ्यो धातुजस्य बहुव्रीहिर्वा चोत्तरपदलोपश्च। रामं वाक्यमुक्तवान्। देव! किमेवमभिधत्से अशोच्य इति। यतः सनाभिः सगोत्रोऽस्तं व्रजन् विनाशं गच्छन्नशोच्योऽपि सन् किं न दुनुयाद्वियोगेन अवश्यतया किं नोपतापयेत्। निमन्त्रणे नियोगकरणे लिङ् ॥ १ ॥

तं नो देवा विधेयासुर्येन रावणवद् वयम्।
सपत्नांश्चाधिजीयास्म सङ्ग्रामे च मृषीमहि ॥ २ ॥

तं न इत्यादि—युष्मद्वचनादात्मा मया स्थिरीकृतः किन्त्विदमाशंसे। तमुपायं नोऽस्माकं देवा विधेयासुः। 'घुमास्थागापाजहातिसां हलि ।६।४।६६।' इत्यनुवृत्तौ 'एर्लिङि ।६।४।६७।' इत्येकारादेशः। येनोपायेन

१ अत्रेन्द्रवज्रोपेन्द्रवज्रयोर्मेलनात्तयोरुपजातिरिति च्छन्दः।

रावणवत् सपत्नान् वयमधिजीयास्म । 'उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते' इति सकर्मकता । संग्रामे च मृषीमहि । लिङश्चेति । लिङः कित्त्वान्न गुणः । आर्धधातुकत्वान्न सलोपः । सर्वत्रैवाशिषि लिङ् ॥ २ ॥

**क्रियेरंश्च दशास्येन यथान्येनापि नः कुले ।**
**देवद्र्यञ्चो नराहारा न्यञ्चश्च द्विषतां गणाः ॥ ३ ॥**

क्रियेरन्नित्यादि—यथा दशास्येन रावणेन नराहाराः राक्षसाः देवद्र्यञ्चः देवैः सहाञ्चन्तो गच्छन्तः क्रियेरन् कृताः।'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये । ६ । ३ । ९२ ।' इति टेरद्र्यादेशः । द्विषतां च गणाः न्यञ्चः नीचैरञ्चन्तः कृताः तिरस्कृताः । तथा नोऽस्माकं कुले अन्येन क्रियेरंश्च । आशंसायां कर्मणि लिङ् । कृषीरन्निति वा पाठः । आशिषि कर्मणि लिङ् ॥ ३ ॥

**स एव धारयेत् प्राणानीदृशे बन्धुविप्लवे ।**
**भवेदाश्वासको यस्य सुहृच्छक्तो भवादृशः ॥ ४ ॥**

स एवेत्यादि—ईदृशे बन्धुविप्लवे बन्धुविनाशेऽपि स एव प्राणान् धारयेत् नियोगतो बिभृयात् । निमन्त्रणे नियोगकरणे लिङ् । यस्य भवादृशः सुहृन्मित्रं शक्त आश्वासकः सान्त्वयिता भवेत् । सम्भावनायां लिङ् ॥ ४ ॥

**म्रियेयोर्ध्वं मुहूर्ताद्धि न स्यास्त्वं यदि मे गतिः ।**
**आशंसा नहि नः प्रेते जीवेम दशमूर्धनि ॥ ५ ॥**

म्रियेयेत्यादि—यदि मे मम गतिः शरणं त्वं न स्याः न भवेः । लिङ् । तदा यस्मिन्मुहूर्ते रावणोऽपि नष्टः तस्मान्मुहूर्तादूर्ध्वं म्रियेय । नियोगतः प्राप्तकालः । प्राणांस्त्यक्तवानहम् । अत्र प्राप्तकाले गम्यमाने 'लिङ् चोर्ध्वमौहूर्तिके । ३ । ३।१६४ ।' इति लिङ् । तत्र हि प्रैषादयोऽनुवर्तन्ते । 'म्रियतेर्लुङ्लिङोश्च । १ । ३ । ६१ ।' इति तङ् । ततः सार्वधातुकत्वात् शः । हि यस्मान्नोऽस्माकं नेयमाशंसा यद्दशमूर्धनि दशानने प्रेते मृते त्वयि वाऽशरणे जीवेम प्राणान् धारयिष्याम इति । अत्राशंसावचनस्योपपदत्वात् लिङ ॥ ५ ॥

**प्रकुर्याम वयं देशे गर्ह्यो तत्र कथं रतिम् ।**
**यत्र विंशतिहस्तस्य न सोदर्यस्य सम्भवः ॥ ६ ॥**

---

१ 'विप्लवो वाक्क्षौ सर्वक्षये युद्धाद्युपद्रवे' इति रभसः ।

प्रकुर्यामेत्यादि—यत्र देशे सोदर्यस्य भ्रातुर्विंशतिहस्तस्य न सम्भवोऽस्ति तत्र कथं वयं गर्ह्यां निन्द्यां रतिं प्रकुर्याम करिष्यामः। नैवेत्यर्थः। अत्र गर्हायामित्यधिकृत्य 'विभाषा कथामि लिङ् च ।३।३।१४३।' इति कथमित्युपपदे भविष्यति लिङ् ॥ ६ ॥

आमन्त्रयेत तान् प्रह्वान् मन्त्रिणोऽथ विभीषणः ।
गच्छेत त्वरितं लङ्कां राजवेश्म विशेत च ॥ ७ ॥

आमन्त्रयेतेत्यादि—अथानन्तरं विभीषणः सदसि सभायां यैर्मन्त्रिभिः सह उत्थितः तान्मन्त्रिणः प्रह्वानामन्त्रयेत कर्मसु नियोगतः संहितवानित्यर्थः। निमन्त्रणे नियोगकरणे लिङ्। तदेव दर्शयति। लङ्कां त्वरितं यूयं गच्छेत यात। गताश्च राजवेश्म विशेत अत्र विधौ प्रेषणे लिङ्। स हि सर्वलकाराणामपवादः ॥ ७ ॥

आददीध्वं महार्हाणि तत्र वासांसि सत्वराः ।
उद्धनीयात सत्केतून् निर्हरेताग्र्यचन्दनम् ॥ ८ ॥

आददीध्वमित्यादि—तत्र राजवेश्मनि वासांसि [1]महार्हाणि योग्यानि। [2]महार्घाणीति पाठे तु महामूल्यानीत्यर्थः। सत्वरा आददीध्वं गृह्णीत। 'श्नाभ्यस्तयोरातः ।६।४।११२।' इत्याकारलोपः। सत्केतून् शोभनध्वजान् उद्धनीयात ऊर्ध्वीकरिष्यथ। 'प्वादीनां ह्रस्वः ।७।३।८०।' 'ई हल्यघोः ।६।४।११३।' अग्र्यचन्दनं सच्चन्दनकाष्ठानि निर्हरेत निर्गमयत ॥ ८ ॥

मुञ्चेताकाशधूपांश्च ग्रथ्नीयात स्रजः शुभाः ।
आनयेतामितं दारु कर्पूरागुरुकङ्कुमम् ॥ ९ ॥

मुञ्चेतेत्यादि—धूपघटिकाभिराकाशधूपांश्च मुञ्चेत प्रवर्तयेत। स्रजः पुष्पमालाः शुभाः ग्रथ्नीयात गुम्फिष्यथ। 'श्रन्थ ग्रन्थ सन्दर्भे' इति क्र्यादिः। दारु काष्ठम् अमितं प्रभूतं कर्पूरागुरुकुङ्कुमं च आनयेत। सर्वत्र विधौ लिङ् ॥ ९ ॥

उद्धरेरन् यज्ञपात्राणि ह्रियेत च विभावसुः ।
भ्रियेत चाज्यमृत्विग्भिः कल्प्येत च समित्कुशम् ॥ १० ॥

---

१ 'आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः।' इत्यमरः। २ महती अर्हा पूजा, प्रशंसा येषां तानि। 'आन्महतः समानाधिकरणजातीययोः। ३ । ४ ।४६।' इति दीर्घः। ३ महान् अर्घो मूल्यं येषां तानि। 'मूल्ये पूजाविधावर्घः' इत्यमरः।—

उह्येरन्नित्यादि—यज्ञपात्राणि स्रुगादीनि उह्येरन् आनीयन्ताम् । विभावैसुश्चाग्निः ह्रियेत । ऋत्विग्भिः आज्यमपि भ्रियेत । समित्कुशं कल्प्येत च कल्प्यम् । सर्वत्र विधौ कर्मणि लिङ् ॥ १० ॥

स्नानीयैः स्नापयेताशु रम्यैर्लिम्पेत वर्णकैः ।
अलङ्कुर्यात रत्नैश्च रावणार्हैर्दशाननम् ॥ ११ ॥

स्नानीयैरित्यादि—यथा स्वविहितं च कृत्वा रम्यैः स्नानीयैर्दशाननं राक्षसाधिपं स्नापयेत स्नापयिष्यथ । 'ग्लास्नावनुवमां च' इति विकल्पेन मित्त्वम् । तत्र 'ज्वलह्वलनमामनुपसर्गाद्वा' इति वाग्रहणमनुवर्तते । वर्णकैश्चन्दनादिभिः रम्यैर्लिम्पेत विलेप्स्यथ । रत्नैश्च रावणार्हैर्नित्यनैमित्तिकैरलंकुर्यात अलंकरिष्यथ ॥ ११ ॥

वासयेत सुवासोभ्यां मेध्याभ्यां राक्षसाधिपम् ।
ऋत्विक् स्रग्विणमादध्यात् प्राङ्मूर्धानं मृगाजिने ॥ १२ ॥

वासयेतेत्यादि—सुवासोभ्यां मेध्याभ्यां पूताभ्यां वासयेत च आच्छादयिष्यथ । ऋत्विक् यज्वा स्रग्विणं कृत्वा मालाभूषितं कृत्वा मृगाजिने प्राङ्मूर्धानं प्राच्यां मूर्धा यस्य पूर्वशिरसमादध्यात् स्थापयेत् ॥ १२ ॥

यज्ञपात्राणि गात्रेषु चिनुयाच्च यथाविधि ।
जुहुयाच्च हविर्वह्नौ गायेयुः साम सामगाः ॥ १३ ॥

यज्ञपात्राणीत्यादि—स एव यथाविधि यथाक्रमं यथाशास्त्रं वा यज्ञस्य पात्राणि स्रुगादीनि गात्रेषु चिनुयात् । हविराज्यं वह्नौ जुहुयात् । निक्षिपेत् । सामगाः छन्दोगाः साम तदाख्यं वेदं गायेयुश्च । 'आतोऽनुपसर्गे कः ।३।२।३।' इति कः । सर्वत्र विधौ लिङ् ॥ १३ ॥

गत्वाथ ते पुरीं लङ्कां कृत्वा सर्वं यथोदितम्[1] ।
समीपेऽन्त्याहुतेः सास्राः प्रोक्तवन्तो विभीषणम् ॥ १४ ॥

गत्वेत्यादि—अथानन्तरं ते मन्त्रिणः लङ्कापुरीं गत्वा यथोदितं यथाशास्त्रम् सर्वकर्म्म च कृत्वा । अन्त्याहुतेर्मृताहुतेः अनन्तरं तस्य समीपे सास्राः सबाष्पाः विभीषणं प्रोक्तवन्तः ऊचुः ॥ १४ ॥

---

१ यथाकथितम् । उद्यते स्मेत्युदितम् । 'वद व्यक्तायां वाचि' क्तः, सम्प्रसारणम् । उदितमनतिक्रम्येति यथोदितम् । 'यथाऽसादृश्ये २।१।७' इति समासः ।

कृतं सर्वं यथोद्दिष्टं कर्तुं वह्निजलक्रियाम्।
प्रयतेथा महाराज सह सर्वैः स्वबन्धुभिः ॥ १५ ॥

कृतमित्यादि—यथोद्दिष्टं यथाविहितं सर्वमस्माभिः कृतम् । त्वमिदानीं भ्रातुर्वह्निक्रियां जलक्रियां च कर्तुं स्वबन्धुभिः सर्वैः सह प्रयतेथाः । प्रार्थनायां लिङ् ॥ १४ ॥

अज्ञवन्नोत्सहेथास्त्वं धेया धीरत्वमच्युतम् ।
स्थेयाः कार्येषु बन्धूनां हेयाः शोकोद्भवं तमः ॥ १६ ॥

अज्ञवदित्यादि—शोकादप्रवर्तमानं पुनराहुः । अज्ञवत् किं नोत्सहेथाः किमवसीदसि गर्हितमेतत् । 'किंवृत्ते लिङ्लृटौ । ३।३।१४४।' इति गर्हायां लिङ् । इयं चास्माकमाशंसा । यत्तु धीरत्वं धैर्यम् अच्युतम् अक्षतञ्ज्ञानम् । धेयाः धास्यसि । बन्धूनां च कार्येषु स्थेयाः स्थास्यसि । शोकोद्भवं च तमोऽज्ञानं हेयास्त्यक्ष्यसि । सर्वत्राशिषि लिङ् । आर्धधातुकत्वात् । 'एर्लिङि।६ । ४ ६७' इत्यसंयोगादेरेत्वम् ॥ १६ ॥

नावकल्प्यमिदं ग्लायेद्यत्कृच्छ्रेषु भवानपि ।
न पृथग्जनवज्जातु प्रमुह्येत् पण्डितो जनः ॥ १७ ॥

नावकल्प्यमित्यादि—अन्यच्च नावकल्प्यमिदं न सम्भाव्यमेतत् येन कृच्छ्रेषु दुःखेषु भवानपि ग्लायेत् ग्लानिं यानि । अनवक्लृप्तौ असम्भावनायां 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि । ३ । ३ । १ ४५ ।' इति लिङ् । सार्वधातुकत्वात् 'वान्यस्य संयोगादेः ।६।४।६८।' इत्येत्वं न विकल्प्यते । यस्मात् पण्डितो जनः पृथग्जनवत् अपण्डितवत् जातु कदाचिदपि न प्रमुह्येत् न मोहं यातीति सम्भावयामः । 'जातुयदोर्लिङ् ।३। ३ । १४७ ।' इत्यनवक्लृप्तौ लिङ् ॥ १७ ॥

यच्च यत्र भवांस्तिष्ठेत्तत्रान्यो रावणस्य नः ।
यच्च यत्र भवान् सीदेन्महाद्रिस्तद्विगर्हितम् ॥ १८ ॥

यच्चेत्यादि—यत्र देशे काले वा भवांस्तिष्ठेत् तत्र यच्च अन्यो रावणस्य कश्चित्तिष्ठेत् अवस्थानं कः करिष्यति । नैतत्सम्भावयामः तस्य तत्र न्यूनत्वात् । अन्यस्मिन्नवक्लृप्तिः यच्छब्देनोपपदेन योगात् ' यच्चयत्रयोः । ३ । ३ १४८।'

---

१ 'कदाचिज्जातु' इत्यमरः । जायति क्षीयते इति । जै क्षये। 'उणादयो बहुलम् ३।३।१' इति बहुलग्रहणात्तुन् ।

इत्यनवक्लृप्तौ भविष्यति लिङ । यच्चेति निपातसमुदायो यच्छब्दस्यार्थे वर्तते । किंच यत्र देशे काले वा यच्च भवान् सीदेत् अवसादं करोतीति महद्भिः पण्डितैः विगर्हितं निन्दितम् । 'गर्हायां च ।३।३।१४९' इति सवलकाराणामपवादो लिङ् । 'यच्चयत्रयोः' इत्यनुवर्तते । अनवक्लृप्ताविति निवृत्तम् ॥ १८ ॥

आश्चर्यं यच्च यत्र त्वां प्रब्रूयाम वयं हितम् ।
अपि साक्षात् प्रशिष्यास्त्वं कृच्छ्रेष्विन्द्रपुरोहितम् ॥ १९ ॥

आश्चर्यमित्यादि—यत्र देशे काले वा यच्च यद्वयमपि त्वां हितं प्रब्रूयाम तदाश्चर्यं बिचित्रमेतत् । 'चित्रीकरणे च । ३ । ३ । १५० ।' इति लिङ् । 'यच्चयत्रयोः । ३ । ३ । १४८ ।' इति वर्तते । त्वामित्यकथितं कर्म । अतस्त्वं कृच्छ्रेषु व्यसनेषु साक्षादिन्द्रपुरोहितं बृहस्पतिं प्रशिष्याः बाढं शिक्षयसि । 'उताप्योः समर्थयोर्लिङ् । ३ । ३ । १५२ ।' अपिशब्दस्योपपदत्वात् समर्थत्वं चानयोर्बाढमित्येतस्मिन् अर्थे । 'शास इदङ्हलोः । ६ । ४ । ३४ ।' 'शासिवसिघसीनां च । ८ । ३ । ६० ।' इति षत्वम् ॥ १९ ॥

कामो जनस्य जह्यास्त्वं प्रमादं नैर्ऋताऽधिप ।
उत द्विषोऽनुशोचेयुर्विप्लवे किमु बान्धवाः ॥ २० ॥

काम इत्यादि—हे नैर्ऋताधिप रक्षसां नाथ ! त्वं प्रमादं जह्याः त्यज । अस्य जनस्य पौरस्य काम इच्छा । 'कामप्रवेदनेऽकच्चिति । ३ । ३ । १५३ ।' इति लिङ् । कच्चिच्छब्दस्याप्रयोगात् । कामप्रवेदने च जनाभिप्रायप्रकाशनम् । अन्यच्च अस्मिन् विप्लवे विनाशे द्विषः शत्रवोऽपि उत अनुशोचेयुः अनुशोचान्ति किमु बान्धवाः । 'उताप्योः समर्थयोर्लिङ् । ३ । ३ । १५२ ।' ॥ २० ॥

स भवान् भ्रातृवद्रक्षेद्यथावदखिलं जनम् ।
न भवान् सम्प्रमुह्येच्चेदाश्वस्युश्च निशाचराः ॥ २१ ॥

स इत्यादि—चेद्यदि भवान्न सम्प्रमुह्येत मोहं न गच्छेत् तदा स भवान् भ्रातृवत् यथा भ्रात्रा जनो रक्ष्यते तद्वत् अखिलं जनं यथावत् सम्यक् रक्षेत् । एते च निशाचरा आश्वस्युराश्वासं गच्छेयुः । 'हेतुहेतुमतोर्लिङ् ।३।३।१५६।' अत्र प्रमोहो हेतुः जनरक्षणं निशाचराश्वासनं च हेतुमत् । श्वसेरदादित्वाच्छपो लुक् । आश्वसेयुरिति पाठान्तरम् ॥२१॥

ततः स गतवान् कर्तुं भ्रातुरग्निजलक्रियाम् ।
प्रोक्तवान् कृतकर्तव्यं वचो रामोऽथ राक्षसम् ॥ २२ ॥

तत इत्यादि—ततो वचनानन्तरं भ्रातुरग्निक्रियां जलक्रियां च कर्तुं गतवान् । अथ कृतकर्तव्यं राक्षसं रामः वचः प्रोक्तवान् ॥ २२ ॥

अम्भांसि रुक्मकुम्भेन सिञ्चन् मूर्ध्नि समाधिमान् ।
त्वं राजा रक्षसां लङ्कामवेक्षेथा विभीषण ॥ २३ ॥

अम्भांसीत्यादि—रुक्म[1]कुम्भे स्वर्णकलशेनाम्भांसि[2] जलानि मूर्ध्नि सिञ्चन् पातयन् । रामः प्रोक्तवानिति पूर्वेणान्वयः । हे विभीषण ! समाधिमान् ध्यानवान् त्वमद्यप्रभृति रक्षसां राजा लङ्कामवेक्षेथाः कार्याकार्यनिरूपणेन द्रक्ष्यसि ॥ २३ ॥

क्रुद्धाननुनयेः सम्यग्धनैर्लुब्धानुपार्जयेः ।
मानिनो मानयेः काले त्रस्तान् पौलस्त्य सान्त्वयेः ॥ २४ ॥

क्रुद्धानित्यादि—हे पौलस्त्य ! क्रुद्धाननुनयेः प्रसादयिष्यासि । ये लुब्धास्तान् धनेनोपार्जयेः दानेन ग्रहीष्यसि । मानिनः सत्कारोचिते काले मानयेः पूजयिष्यसि । त्रस्तान् भीतान् सान्त्वयेः समाश्वासयिष्यसि । सर्वत्र निमन्त्रणे नियोगकरणे प्रार्थनायां वा लिङ् ॥ २४ ॥

इच्छा मे परमानन्देः कथं त्वं वृत्रशत्रुवत् ।
इच्छेद्धि सुहृदं सर्वो वृद्धिसंस्थं यतः सुहृत् ॥ २५ ॥

इच्छेत्यादि—इयं च मे इच्छा महती । यत्त्वं वृत्रशत्रुवदिन्द्र इव कथमानन्देः मुदितो भविष्यसि । 'इच्छार्थेषु लिङ्लोटौ ।३।३।१५७।' इति लिङ् । इच्छार्थस्य धातोरुपपदत्वात् । यतः सर्व एव सुहृत् सुहृदं वृद्धिसंस्थम् उदयस्थमिच्छेत् इच्छति । 'इच्छार्थेभ्यो विभाषा वर्तमाने ।३।३।१६०।' इति लिङ् ॥ २५ ॥

वर्धिषीष्ठाः स्वजातेषु वध्यास्त्वं रिपुसंहतीः ।
भूयास्त्वं गुणिनां मान्यस्तेषां स्थेया व्यवस्थितौ ॥ २६ ॥

वर्धिषीष्ठा इत्यादि—स्वजातेषु स्वजातिषु राक्षसेषु मध्ये त्वं वर्धिषीष्ठाः वृद्धिमान् भविष्यसि । आशिषि लिङ् । एवं वक्ष्यमाणेष्वपि सर्वत्र । रिपुसं-

१ 'रुक्मं कार्तस्वरं जाम्बूनदमष्टापदो स्त्रियाम्' इत्यमरः । २ अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ।' इत्यमरः ।

हतीः शत्रुसमूहान् वध्याः विनाशयिष्यसि । 'हनो वध लिङि ।२।४।४२' भूयाश्च गुणिनां मान्यः । श्रुतशीलवतां मानार्हश्च भविष्यसि । तेषां च गुणिनां व्यवस्थितौ चिरकालं स्थेयाः स्थास्यसि ॥ २६ ॥

धेयास्त्वं सुहृदां प्रीतिं वन्दिषीष्ठा दिवौकसः ।
सोमं पेयश्च हेयाश्च हिंस्रा हानिकरीः क्रियाः ॥ २७ ॥

धेया इत्यादि—त्वं सुहृदां मित्राणाम् 'सुहृद्दुर्हृदौ मित्रामित्रयोः ।५।४।१५१' इति साधुः । प्रीतिं धेयाः जनयिष्यसि । दिवौकसो द्यौरोको येषां तान् देवान्वन्दिषीष्ठाः प्रणंस्यासि । सोमं सुधारसं पेयाः पास्यसि । तथा हिंस्राः परोपघातिकाः हानिकरीः अपचयहेतुकाः क्रियाः हेयाः त्यक्ष्यसि ॥ २७ ॥

अवसेयाश्च कार्याणि धर्मेण पुरवासिनाम् ।
अनुरागं क्रिया राजन् सदा सर्वगतं जने ॥ २८ ॥

अवसेया इत्यादि----पुनः पुरवासिनां लङ्कापुरीनिवासिनां कार्याणि धर्मेणावसेयाः समाप्स्यसि । 'षोऽन्तकर्मणि' । हे राजन् ! अत्र जने अनुरागं सर्वगतं सर्वव्यापिनं क्रियाः करिष्यसि ॥ २८ ॥

घानिषीष्ट त्वया मन्युर्ग्राहिषीष्ट समुन्नतिः ।
रक्षोभिर्दर्शिषीष्ठास्त्वं द्रक्षीरन् भवता च ते ॥ २९ ॥

घानिषीष्टेत्यादि—मन्युः क्रोधः त्वया घानिषीष्ट हनिष्यते । चिण्वद्भावो वृद्धिर्घत्वं च । समुन्नतिरभ्युच्चयः ग्राहिषीष्ट ग्रहीष्यते । रक्षोभिर्दर्शनपरैर्दर्शिषीष्ठाः द्रक्ष्यसे । ते च राक्षसाः भवता दर्शनपरेण च द्रक्षीरन् । अचिण्वद्भावपक्षः ॥ २९ ॥

मन्युं वध्या भटवधकृतं बालवृद्धस्य राजन् !
शास्त्राभिज्ञाः सदसि सुधियः सन्निधिं ते क्रियासुः ।
संरंसीष्ठाः सुरमुनिगते वर्त्मनि प्राज्यधर्मे
सम्भुत्सीष्ठाः सुनयनयनैर्विद्विषामीहितानि ॥ ३० ॥

**इति महावैयाकरण-श्रीभट्टिप्रणीते रामचरिते काव्ये तिङन्तकाण्डे लिङ्-विलसितो नामैकोनविंशतितमः सर्गः ॥**

---

१ यद्यपि विपूर्वस्यैव दधातेः प्रकृतोऽर्थः, तथाऽपि धातूनामनेकार्थत्वादिदं समाधेयम् ।

मन्युमित्यादि—अन्यच्च हे राजन् ! बालानां वृद्धानां च। 'सर्वो द्वन्द्वो द्विभाषैकवद्भवति' इति बालाश्च वृद्धाश्चेति बालवृद्धम् । तस्य मन्युं शोकम् । भटवधकृतं भटानां पितृपुत्रादीनां च यो वधः तत्कृतम् । तज्जनितम् । वध्याः प्रियवचनार्थप्रदानादिभिरपनेष्यासि । शास्त्राभिज्ञाः शास्त्रार्थकुशलाः ते तव सदसि सभायां सन्निधिं क्रियासुः सन्निहिता भवन्त्वित्यर्थः । सुरैर्मुनिभिश्च गते सेविते वर्त्मनि मार्गे प्राज्यधर्मे भूरिपुण्ये संरंसीष्ठाः रंस्यसे । द्विषां शत्रूणाम् ईहितानि चेष्टितानि सुनयनयनैः शोभना ये नयाः तैरेव नयनैश्चक्षुर्भिरिवावस्थितैः सम्भुत्सीष्ठाः जानीथाः ज्ञास्यसि । 'बुध अवगमने' एकाचो बशो भष् ॥ ३० ॥

इति जयदेवाद्यपरपर्य्याय-श्रीजयमङ्गलसूरिविरचितया श्रीजयमङ्गलाख्यया व्याख्यया समलङ्कृते श्रीभट्टिप्रणीते रामचरिते काव्ये चतुर्थे तिङन्तकाण्डे लक्षणरूपे षष्ठः परिच्छेदः, लक्ष्यरूपे कथानके 'विभीषणाभिषेको' नाम एकोनविंशतितमः सर्गः ॥ १९ ॥

---

## विंशः सर्गः ।

इतः प्रभृति लोटमधिकृत्य तद्विलसितमाह—तत्र 'लोट् च' इति वचनाद्विध्यादिष्वर्थेषु लोट् । ततोऽन्यत्रापि दर्शयिष्यति—

**समुपेत्य ततः सीतामुक्तवान् पवनात्मजः ।**
**दिष्ट्या वर्धस्व वैदेहि हतस्त्रैलोक्यकण्टकः ॥ १ ॥**

समुपेत्येत्यादि—ततोऽनन्तरं पवनात्मजः रामाज्ञया सीतां समुपेत्य समुपागम्योक्तवान् । हे वैदेहि ! रावणस्त्रैलोक्यस्य प्रतोदकत्वात् कण्टको हतस्तेन दिष्ट्या प्रियवचनेन वर्धस्व वियोगतो वर्त्स्यसीति । निमन्त्रणे लोट् ॥ १ ॥

**अनुजानीहि हन्यन्तां मयैताः क्षुद्रमानसाः ।**
**रक्षिकास्तव राक्षस्यो गृहाणैतासु मत्सरम् ॥ २ ॥**

---

१ अत्र मन्दाक्रान्ता छन्दः 'मो भ्नौ तौ गौ मन्दाक्रान्ता घचैः' इति छन्दोऽनुशासनोक्तेः ।

अनुजानीहीत्यादि—अनुजानीहि अनुज्ञां प्रयच्छ । प्रार्थनायां लोट् । येन मयैता राक्षस्यस्तव रक्षिकाः क्षुद्रमानसाः पापाशयाः हन्यन्तां विनाश्यन्ताम् । अत्र विधौ कर्मणि लोट् । तस्मादेतासु मत्सरं गृहाण जनय । प्रार्थनायां लोट् । येन गृहीतक्रोधा मामनुज्ञास्यसि ॥ २ ॥

तृणहानि दुराचारा घोररूपाशयक्रियाः ।
हिंस्रा भवतु ते बुद्धिरेतासु कुरु निष्ठुरम् ॥ ३ ॥

तृणहानीत्यादि—एता दुराचाराः घोररूपाशयक्रियाः क्रूराणि आकाराभिप्रायानुष्ठानानि यासां तास्तृणहानि हनिष्यामि । तदेतासु हिंस्रा हिंसनशीला तव बुद्धिर्भवतु । निष्ठुरं च नैष्ठुर्यं कुरु । भावप्रधानो निर्देशः ॥ ३ ॥

पश्चिमं करवामैतत् प्रियं देवि वयं तव ।
ततः प्रोक्तवती सीता वानरं करुणाशया ॥ ४ ॥

पश्चिममित्यादि—हे देवि ! किमत्र विचारितेन तव पश्चिममन्त्यं प्रियम् एतद्वयं करवाम करिष्यामः । 'अस्मदो द्वयोश्च ।१।२।५९' इत्येकत्वे बहुवचनम् । ततोऽनन्तरं सीता करुणाशया सती वानरं प्रोक्तवती ॥ ४ ॥

उपशाम्यतु ते बुद्धिः पिण्डनिर्वेशकारिषु ।
लघुसत्त्वेषु दोषोऽयं यत्कृतो निहतोऽसकौ ॥ ५ ॥

उपेत्यादि—लघुसत्त्वेषु स्त्रीजनेषु पिण्डनिर्वेशकारिषु पिण्डस्य ग्रासस्य निर्वेशो निष्क्रयः तत्कारिषु ते बुद्धिरुपशाम्यतु सकरुणा भवतु । सर्वत्र विधौ लोट् । किमिति चेत् यत्कृतो यज्जनितोऽयं दोषः ममैताभिः कृतः । असकौ असौ रावणो निहतो व्यापादितः । कुत्सायाम् 'अव्ययसर्वनाम्नामकच् प्राक् टेः ।५।३।७१।' इति अकच् ॥ ५ ॥

नहि प्रेष्यवधं घोरं करवाण्यस्तु ते मतिः ।
एधि कार्यकरस्त्वं मे गत्वा प्रवद राघवम् ॥ ६ ॥

नहीत्यादि—अन्यच्च नहि नैव घोरं प्रेष्यवधं करवाणि करिष्यामीतीत्थम् मतिस्तवाप्यस्तु । 'आशिषि लिङ्लोटौ ।३।३।१७३।' इति लोट् । अतस्त्वं कार्यकरः कार्यकरणे अनुकूलः । आनुलोम्ये टः । एधि भव । 'श्नसोरल्लोपः ।६।४।१११।' 'ध्वसोरेद्धावभ्यासलोपश्च ६।४।११९।' एत्वस्य समानाश्रयत्वाद-

१ करुणः करुणापूर्ण आशयो यस्याः सा । 'अभिप्रायश्छन्द आशयः' इत्यमरः ।

सिद्धत्वे 'हुझल्भ्यो हेर्धिः । ६ । ४ । १०१ ।' कार्यमाह । गत्वा प्रवद राघवं समादेशाद् ब्रूहि ॥ ६ ॥

किं मया वक्तव्यमिति चेत्तदाह—

दिदृक्षुर्मैथिली राम पश्यतु त्वाऽविलम्बितम् ।
तथेति स प्रतिज्ञाय गत्वा राघवमुक्तवान् ॥ ७ ॥

दिदृक्षुरित्यादि—हे राम ! द्रष्टुमिच्छुर्मैथिली सीता अविलम्बितं द्रुतं त्वा त्वां पश्यतु । सर्वत्र प्रार्थनायां लोट् । स पवनात्मजो हनुमान् प्रतिज्ञाय यथाज्ञापयसीति तथेति स्वीकृत्य गत्वा राघवमुक्तवान् ॥ ७ ॥

किमित्याह—

उत्सुकाऽऽनीयतां देवी काकुत्स्थकुलनन्दन ।
क्ष्मां लिखित्वा विनिश्वस्य स्वरालोक्य विभीषणम् ॥ ८ ॥

उत्सुकेत्यादि—हे काकुत्स्थकुलनन्दन ! उत्सुका देवी आनीयतामिति । प्रार्थनायां कर्मणि लोट् । एवमुक्ते रावणवधे महति प्रयासे कृतेऽपि जनवाद-भयात् न तया सह मया वासः कार्य इत्यभिप्रायेण । राघवः क्ष्मामङ्गुष्ठेन लिखित्वा विनिश्वस्य स्वरालोक्य आकाशं दृष्ट्वा । स्वरित्यव्ययम् । विभीषणमुक्तवानिति वक्ष्यमाणेन सम्बन्धः ॥ ८ ॥

उक्तवान् राघवः सीतामानयालङ्कृतामिति ।
गत्वा प्रणम्य तेनोक्ता मैथिली मधुरं वचः ॥ ९ ॥

उक्तवानित्यादि—सीतामलंकृतामानयेति राघवो राम उक्तवान् । विधौ लोट् । इत्येवं रामेणाज्ञायां दत्तायां तेन विभीषेणन गत्वा सीतासमीपं प्राप्य प्रणम्य तां मैथिलीं पुनः प्रणिपत्य च मैथिल्युक्ता मधुरं वचः ॥ ९ ॥

जहीहि शोकं वैदेहि प्रीतये धेहि मानसम् ।
रावणे जहिहि द्वेषं जहाहि प्रमदावनम् ॥ १० ॥

जहीहीत्यादि—शोकं पतिवियोगजं जहीहि परित्यज । जहातेश्च ।६।४। ११६।' इत्यन्यतरस्यामित्वमीत्वं च 'आ च हौ ।६।४।११७।' इत्याकार इति रूपत्रयम् । प्रीतये प्रीत्यर्थं शरीरप्रसाधनद्वारा स्वप्रसादनायेत्यर्थः । पुनर्मानसं चित्तम् धेहि घटयस्व 'घ्वसोरेद्धावभ्यासलोपश्च ।६।४।११९।' रावणे रावणविषये द्वेषं जहिहि तस्य विनष्टत्वात् 'मरणान्तानि वैराणि' इति हि

---

१ 'भूतलम्' 'क्ष्माऽवनिर्मेदिनी मही' इत्यमरः ।

स्थितिः, प्रमदावनम् अशोकवनिकां जहाहि । पत्युरन्तिकं याहीत्यर्थः । सर्वत्र विधौ लोट् ॥ १० ॥

अथ युग्मकम् ।

**स्नाह्यनुलिम्प धूपाय निवस्स्वाविध्य च स्रजम् ।**
**रत्नान्यामुञ्च संदीप्ते हविर्जुहुधि पावके ॥ ११ ॥**
**अद्धि त्वं पञ्चगव्यं च छिन्धि संरोधजं तमः ।**
**आरोह शिबिकां हैमीं द्विषां जहि मनोरथान् ॥ १२ ॥**

स्नाहीत्यादि—स्नाहि स्नानं कुरु । ततः कायशुद्ध्यर्थं सदनुपहतं पञ्चगव्यमद्धि भक्षय । 'हुझल्भ्यो हेर्धिः ।६।४।१०१।' गोरेतानि गव्यानि । सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत् । पञ्च गव्यानि समाहृतानीति पात्रादिदर्शनान्न ङीप् । ततः पवित्रीकृतकाया, सन्दीप्ते पावकेऽग्नौ हविर्घृतं जुहुधि । ततः स्वामिनं रामं गन्तुमनुष्ठितदेवकार्या सती त्वमालिम्प चन्दनादिना शरीरं समालभस्व । ततो निवस्स्व आच्छादय । 'वस आच्छादने' अदादित्वाच्छपो लुक् । धातुसकारस्य परगमनम् । ततो धूपाय धूपितमात्मानं कुरु । धूपेरायप्रत्ययः । आविध्य च स्रजं मालां शिरस्याक्षिप । 'व्यध ताडने' श्यनि 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ।६।१।१६।' इति सम्प्रसारणम् । रत्नान्यामुञ्च विन्यस्येत्ययमर्थवशात् क्रियाक्रमो द्रष्टव्यः । यथा देवदत्तं भोजय स्नापय उद्वर्तयेति । किं च संरोधजम् अस्वतन्त्रीकरणजं तमः शोकं छिन्धि अपनय । हैमीं शिबिकां सौवर्णयानमारोह अधितिष्ठ । सर्वत्र भर्तुर्नियोगकरणे लोट् । तामारूढा द्विषां मनोरथान् हृदये स्थितानभिप्रायान् जहि नाशय । हौ परतो 'हन्तेर्जः ।६।४।३६'॥११॥१२॥

**तृणेढु त्वद्वियोगोत्थां राजन्यानां पतिः शुचम् ।**
**भवताद्धियुक्ता त्वमत ऊर्ध्वं स्ववेश्मनि ॥ १३ ॥**

तृणेढ्वित्यादि—गतायां त्वयि राजन्यानां क्षत्रियाणां पती रामः शुचं शोकं त्वद्वियोगोत्थां त्वद्वियोगप्रभवाम् । 'सुपि स्थः । ३।२।४।' इति कः । 'उदः स्थास्तम्भोः पूर्वस्य ।८।४।६१।' इति पूर्वसवर्णः । तृणेढु हिनस्तु । अतः

---

१ शोकस्यापि तमोरूपत्वादिदं लक्षणयोक्तम् 'राहौ ध्वान्ते गुणे तमः ।' इत्यमरः ।

अस्मात्कालादूर्ध्वं कालं स्ववेश्मनि अयोध्यायाम् अधियुक्ता त्वं भवतात् भूयाः 'तुह्योस्तातङ्ङाशिष्यन्तरस्याम् ।७।१।३५।' इति तातङ् ॥ १३ ॥

दीक्षस्व सह रामेण त्वरितं तुरगाध्वरे ।
दृश्यस्व पत्या प्रीतेन प्रीत्या प्रेक्षस्व राघवम् ॥ १४ ॥

दीक्षस्वेत्यादि—तुरगाध्वरे तुरगसाध्येऽध्वरे । शाकपार्थिवादित्वान्मध्यमपदलोपः । अश्वमेधे रामेण सह त्वरितं शीघ्रं दीक्षस्व दीक्षिता भूयाः भव । आशिषि 'अशिषि लिङ्लोटौ ।३।३।१७३।' इति लोट् । प्रीतेन पत्या दृश्यस्व दृष्टा भव । इह कर्मणि लोट् । प्रीता च सती राघवं रामं त्वं प्रेक्षस्व पश्य इहाप्याशिषि लोट् ॥ १४ ॥

अयं नियोगः पत्युस्ते कार्या नात्र विचारणा ।
भूषयाऽङ्गं प्रमाणं चेद्रामं गन्तुं यतस्व च ॥ १५ ॥

अयमित्यादि—तव पत्युः रामस्यायं नियोगः आज्ञा यत्कृतः स्नानादिव्यापारः । अत्रास्मिन्ननुष्ठेये वस्तुनि विचारणा न कार्या किमेवं न वेति । संशयो न विधेयः । एतत्प्रमाणं चेत् भूषयाङ्गं स्नानादिपूर्वकमवयवमलङ्कुरु । रामं गन्तुं यतस्व चेष्टस्व ॥ १५ ॥

मुदा संयुहि काकुत्स्थं स्वयं चाप्नुहि सम्मदम् ।
उपेह्यूर्ध्वं मुहूर्तात्त्वं देवि राघवसन्निधिम् ॥ १६ ॥

मुदेत्यादि—गत्वा च काकुत्स्थं मुदा हर्षेण संयुहि मिश्रय । 'युमिश्रणामिश्रणयोः' तत्र गमनेन स्वयं च संमर्दं हर्षं प्राप्नुहि 'प्रमदसंमदौ हर्षे ।३।३।६८।' सर्वत्र प्रार्थनायां लोट् । हे देवि ! अस्मान्मुहूर्तादूर्ध्वं राघवसन्निधिम् । राघवः सन्निधीयते यस्मिन् प्रदेशे इति 'कर्मण्यधिकरणे च ।३।३।९३।' इति किप्रत्ययः । तं त्वमुपेहि गच्छ ॥ १६ ॥

ऊर्ध्वं मुहूर्तादह्नोऽङ्ग स्वामिनी स्म भव क्षितेः ।
राजपत्नीनियोगस्थमनुशाधि पुरीजनम् ॥ १७ ॥

ऊर्ध्वमित्यादि—तथा अह्नः मुहूर्तादूर्ध्वं क्षितेः स्वामिनी भव स्म । अङ्गेति [illegible] । अत्र 'स्मे लोट् ।३।३।१६५।' इत्यनेन प्रैषे लोट् । तत्र हि 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ।३।३।१६३।' इति 'और्ध्वमौहूर्तिके'

१ निजप्रासाद इति भावः । २ 'अङ्गं प्रतीकोऽवयवोऽपघनः' इत्यमरः । ३ 'प्रमोदामोदसम्मदाः' इत्यमरः ।

इति च वर्तते । प्राप्तकालतायां लोट् । राघवसान्निधिं गन्तुं क्षितेः स्वामिनी भवितुं प्राप्तकाला देवी । अन्यथा कालातिक्रमे मयि विरक्तेति रामो विरज्यते । अन्यच्च इयमस्माकमाशंसा । त्वं राजपत्नीनियोगस्थं महादेव्याज्ञाकरणतत्परं पुरीस्थमयोध्यावस्थितं जनम् अनुशाधि विधेयीकुरु । 'आशिषि लिङ्लोटौ । ३ । ३ । १७३ ।' इति आशिषि लोट् । 'शा हौ । ६ । ४ । ३५ ।' इति शादेशः । तस्य समानाश्रयत्वादसिद्धत्वे 'हुझल्भ्यो हेर्धिः ।६।४।१०१' ॥ १७ ॥

**उत्तिष्ठस्व मते पत्युर्यतस्वालङ्कृतौ तथा ।**
**प्रतिष्ठस्व च तं द्रष्टुं द्रष्टव्यं त्वं महीपतिम् ॥ १८ ॥**

उत्तिष्ठस्वेत्यादि—तस्मात्प्रार्थयेऽहं पत्युर्मते अभिप्राये मत्समीपमागन्तव्यमिति उत्तिष्ठस्व तदर्थं घटस्व । 'उदोऽनूर्ध्वकर्मणि । १ । ३ । २४ ।' इति तङ् । तथा अलङ्कृतौ अलङ्करणे यतस्व यत्नं कुरु । लज्जया कदाचिन्नोत्सहेतेति पुनःपुनरभिधानम् अविरुद्धम् । यथा स्नाहीत्यादि भूषयाङ्गमिति मन्यते तेन वारद्वयमुक्तमेवम् अलङ्कृत्य त्वं महीपतिं द्रष्टव्यं दर्शनार्हम् । 'अर्हे कृत्यतृचश्च । ३ । ३ । १६९ ।' इति अवश्यद्रष्टव्ये वा आवश्यके 'कृत्याश्च । ३ । ३ । १७१ ।' इति संद्रष्टुं प्रतिष्ठस्व गच्छ । प्रार्थनायां लोट् । 'समवप्रविभ्यः स्थः ।१।३।२२।' इति तङ् ॥ १८ ॥

**अनुष्ठाय यथादिष्टं नियोगं जनकात्मजा ।**
**समारूढवती यानं पट्टांशुकवृतानना ॥ १९ ॥**

अनुष्ठायेत्यादि—श्लोकत्रयम् एवमुक्ता भर्तुर्यथोद्दिष्टं नियोगं स्नानादिकमनुष्ठाय कृत्वा जनकात्मजा मां कश्चिन्माद्राक्षीदिति पट्टांशुकवृतानना यानं शिबिकामारूढवती पत्युरन्तिकं च गत्वा यानादवतीर्येत्यर्थात् ॥ १९ ॥

**लज्जानता विसंयोगदुःखस्मरणविह्वला ।**
**सास्रा गत्वान्तिकं पत्युर्दीना रुदितवत्यसौ ॥ २० ॥**

लज्जानतेत्यादि—लज्जया आनता अधोमुखी विसंयोगदुःखस्य पूर्वानुभूतस्य स्मरणेन विह्वला शोकाकुला सास्रा अश्रुपूर्णनयना दीना सा पत्युरन्तिकं रामस्य समीपं गत्वा सीता रुदितवती दुःखं प्रकटितवती ॥ २० ॥

---

१ स्वमस्या अस्तीति तथोक्ता, अधिष्ठात्रीत्यर्थः । स्वामिन्नैश्वर्ये । ५ । २ । १२६ ।' इति साधुः ।

प्राप्तचारित्र्यसन्देहस्ततस्तामुक्तवान् नृपः ।
इच्छा मे नाददे सीते त्वामहं गम्यतामतः ॥ २१ ॥

प्राप्तेत्यादि—ततोऽनन्तरं नृपो रामः 'रावणः किमस्यां खण्डितचारित्र्यशीलो न वा' इति प्राप्तचारित्र्यसन्देहस्तामुक्तवान् । किमित्याह—हे सीते ! मे ममेयमिच्छा यत्त्वामहं नाददे न गृह्णामि । 'इच्छार्थेषु लिङ्लोटौ । ३ । ३ । १५७ ।' इति लोट् । अतोऽनिच्छातः कारणाद्यथेष्टं गम्यताम् ॥ २१ ॥

किमिति नेच्छाति चेदाह—

रावणाङ्कपरिक्लिष्टा त्वं हृल्लेखकरी मम ।
मतिं बधान सुग्रीवे राक्षसेन्द्रं गृहाण वा ॥ २२ ॥

रावणेत्यादि—रावणाङ्कपरिक्लिष्टा हरणसमये रावणोत्सङ्गे स्थिता सती परिक्लिष्टा परिमृदितवती त्वं मम हृल्लेखकरी चेतःपीडनशीला । 'कृञो हेतुताच्छील्यानुलोम्येषु । ३ । २ । २० ।' इति टः । 'हृदयस्य हृल्लेखयदण्लासेषु । ६ । ३ । ५० ।' इति हृदादेशः । कमहं शरणं यास्यामीति चेदाह—सुग्रीवे मतिं बधान बध्नीयाः उत्पादय, राक्षसेन्द्रं विभीषणं वा अनुगृहाण स्वीकुरु ॥ २२ ॥

अशान भरताद् भोगान् लक्ष्मणं प्रवृणीष्व वा ।
कामाद् वा याहि मुच्यन्तामाशा रामनिबन्धनाः ॥ २३ ॥

अशानेत्यादि—भरताद्वा भोगानशान भुङ्क्ष्व । सर्वत्र 'हलः श्नः शानज्झौ । ३ । १ । ८३ ।' इति शानच् । लक्ष्मणं प्रवृणीष्व वा अङ्गीकुरु । 'वृञ् वरणे' इत्यस्य रूपम् । 'प्वादीनां ह्रस्वः । ७ । ३ । ८० ।' स्वेच्छया वा याहि भवत्यै[1] यत्र रोचते तत्र गम्यताम् । रामनिबन्धनाः पुनरपि रामो मे पतिर्भूयादित्याशाः मुच्यन्तां त्यज्यन्ताम् ॥ २३ ॥

किमिति चेदाह—

क्व च ख्यातो रघोर्वंशः क्व त्वं परगृहोषिता ।
अन्यस्मै हृदयं देहि नाऽनभीष्टे घटामहे ॥ २४ ॥

क्व चेत्यादि—परिशुद्धत्वात्सर्वत्र ख्यातः लोके विदितो रघोर्वंशः क्व । क्व च त्वं परगृहोषिता जातकलङ्कत्वात् । द्वयमप्येतद्दूरं भिन्नम् । सर्वत्र

१ 'रुच्यर्थानां प्रीयमाणः १।४।३३' इति चतुर्थी ।

विधौ घटधातौ लोट् । अतोऽन्यस्मै हृदयं देहि चित्तं परस्मै देहि परास्मिन् यस्मिन् कस्मिंश्चिदभिमतेऽनुरक्ता भवेति भावः । वयम् अनभिमते विषये न घटामहे । निमन्त्रणे लोट् ॥ २४ ॥

**यथेष्टं चर वैदेहि ! पन्थानः सन्तु ते शिवाः ।**
**कामास्तेऽन्यत्र तायन्तां विशङ्कां त्यज मद्गताम् ॥ २५ ॥**

यथेष्टमित्यादि—यथेष्टं चर यथेष्टचारिणी भव । अत्र विधौ लोट् । तत्र च यथेष्टं चरन्त्यास्तव पन्थानो मार्गाः शिवाः निर्विघ्नाः सन्तु भूयासुः । अत्र आशिषि लोट् । किं च कामा अभिलाषास्तवान्यत्र तायन्तां स्फीता भवन्तु । अत्राप्याशिषि लोट् । यथेष्टचारित्वात्किमर्थं करिष्यतीति मद्गतां विशङ्कां भयं त्यज त्यक्ष्यसि । अत्र विधौ लोट् ॥ २५ ॥

**ततः प्रगदिता वाक्यं मैथिलाभिजना नृपम् ।**
**स्त्रीसामान्येन सम्भूता शङ्का मयि विमुच्यताम् ॥ २६ ॥**

तत इत्यादि—ततस्तद्वचनानन्तरं पतिवचनोत्तरमित्यर्थः मैथिलाभिजना[2] मैथिलवंशोद्भवा सीता नृपं वाक्यं प्रगदिता गदितुं प्रवृत्ता । 'आदिकर्मणि क्तः कर्त्तरि च । ३ । ४ । ७१ ।' इत्यारम्भे द्योत्ये क्तः। स्त्रीसामान्येन स्त्रीति कृत्वा या तव मयि शङ्का इयं सती न वेति सा विमुच्यताम् । मिथ्यात्वात् । अत्र प्रार्थनायां लोट् ॥ २६ ॥

**दैवाद्बिभीहि काकुत्स्थ जिह्रीहि त्वं तथा जनात् ।**
**मिथ्या मामभिसङ्क्रुध्यन्नवशां शत्रुणा हृताम् ॥ २७ ॥**

दैवादित्यादि—अन्यच्च हे काकुत्स्थ राम ! अवशां[3] पराधीनां शत्रुणा हृताम् । मिथ्या अभिसंक्रुध्यन् अलीकेन । 'क्रुध-द्रुहोरुपसृष्टयोः कर्म । १ । ४ । ३८ ।' इति कर्मसंज्ञा । दैवात् अनिष्टफलात् बिभीहि भीतो भव । हेरपित्त्वात्कित्त्वे गुणो न भवति । इतश्च जनादिमं जनं वीक्ष्य जिह्रीहि लज्जस्व 'ल्यब्लोपे कर्म्मण्यधिकरणे च' इति पञ्चमी । विधौ लोट् ॥ २७ ॥

त्वय्यसंक्रान्तायां मम कीदृशं भयं लज्जा चेति चेत्तदाह—

**चेतसस्त्वयि वृत्तिर्मे शरीरं रक्षसा हृतम् ।**
**विदांकुर्वन्तु सम्यञ्चो देवाः सत्यमिदं वचः ॥ २८ ॥**

---

१ 'लोट् च'३।३।१६२' इति शास्त्रेण । २ मैथिलोऽभिजनः कुलं यस्याः । 'सां कुलेऽप्यभिजनो जन्मभूम्यामपि' इत्यमरः । ३ न वशः इच्छा, स्वाभिप्रायानुकूला प्रवृत्तिर्यस्याः सा ।'वशः कान्तौ' इत्यमरः ।

चेतस इत्यादि-मे मम सीतायाश्चेतसो वृत्तिरात्मव्यापारः त्वयि भर्त्तरि तिष्ठति अनन्यमनस्कत्वात् । रक्षसा रावणेन हृताया मम न सर्वं हृतम् अपि तु शरीरमेकं हृतम् । नैवेदं मिथ्या । तथाहि हे महाभूताधिष्ठानाः सम्यञ्चः।सर्वत्र वर्तमानाः अञ्चन्तीति क्विप् । अञ्चतावप्रत्यये 'समः समि । ६ । ३ । ९३ ।' इति सम्यादेशः । एते मदर्थिताः मम वचः सत्यं विदांकुर्वन्तु अवगच्छन्तु । जानन्तु । अत्र प्रार्थनायां लोट् । विदांकुर्वन्त्विति निपातनम् ॥ २८ ॥

प्रत्येकं प्रार्थनामाह—

त्वं पुनीहि पुनीहीति पुनन् वायो जगत्त्रयम् ।
चरन् देहेषु भूतानां विद्धि मे बुद्धिविप्लवम् ॥ २९ ॥

त्वं पुनीहीत्यादि—हे वायो ! पुनीहि पुनीहीति जगत्त्रयं त्रिलोकीं पुनः पुनः पुनामि भृशं वा पुनामीत्यभिप्रायः । त्वं जगत्त्रयं पुनन् भूतानां देहेषु चरन् मम बुद्धिविप्लवं बुद्धेरन्यथात्वं विद्धि अवगच्छ । अत्र प्रार्थनायां लोट् । पूर्वत्र 'क्रियासमभिहारे लोट् लोटो स्वौ वा हि च तध्वमोः । ३।४। २।' इति लोट् । तस्य परस्मैपदसम्बन्धी हिरादेशः । क्रियासमभिहारे द्विर्वचनम् । पुनन्निति यथाविध्यनुप्रयोगः । पूर्वस्मिन्नित्यनेन पुनातेरनुप्रयोगः । तत्र हि क्रियासमुच्चयाभावात् ॥ २९ ॥

खमट द्यामटाटोर्वीमित्यटन्त्योऽतिपावनाः ।
यूयमापो विजानीत मनोवृत्तिं शुभां मम ॥ ३० ॥

खमित्यादि—यूयमापोऽतिपावनाः अतिपवित्राः खमट द्यामट उर्वीमट इति वयमन्तरिक्षमटाम देवलोकमटाम भूलोकमटाम इत्येवमभिप्रायः । सर्वत्राटन्त्यो मम शुभां चित्तवृत्तिं विजानीतेति । अत्र प्रार्थनायां लोट् । पूर्वत्र तु आकाशादिकारकभेदात् अनेकाटनक्रियासमुच्चयः । ततश्च 'समुच्चयेऽन्यतरस्याम् । ३ । ४ । ३ ।' इति लोट् । अटेति समुच्चये सामान्यवचनस्येत्यनुप्रयोगः । आकाशाद्युपगामिनीनामटनक्रियायाः सामान्याया अनुप्रयोगात् ॥ ३० ॥

जगन्ति धत्स्व धत्स्वेति दधती त्वं वसुन्धरे ।
अवेहि मम चारित्रं नक्तंदिवमविच्युतम् ॥ ३१ ॥

जगन्तीत्यादि—त्वं वसुन्धरे ! धत्स्व धत्स्वेति अहं पुनः पुनर्दधे भृशं वा दध इति एवमभिप्राया जगन्ति दधती मम चारित्रं नक्तंदिवमविच्युतं

अस्खलितमवेहि जानीहि । अत्र प्रार्थनायां लोट् । पूर्वत्र क्रियासमभिहारे तस्य चात्मनेपदसम्बन्धिनः स्वादेशः ॥ ३१ ॥

रसान् संहर दीप्यस्व ध्वान्तं जहि नभो भ्रम ।
इतीहमानस्तिग्मांशो वृत्तं ज्ञातुं घटस्व मे ॥ ३२ ॥

रसानित्यादि—हे तिग्मांशो ! त्वमपि अहं रसान् भौमान् संहर संहरामीति । दीप्यस्व दीप्ये । ध्वान्तं जहि हन्मि । नभो भ्रम भ्रमामीत्येवमभिप्रायः । ईहमानः जगत्यर्थक्रियासु चेष्टमानः । मम वृत्तं चारित्रं ज्ञातुं घटस्व यतस्व । अत्र प्रार्थनायां लोट् । पूर्वत्र 'समुच्चयेऽन्यतरस्याम् । ३ । ४ । ३ ।' इति तस्य च यथायोगं हिस्वादेशः । ईहमान इति 'समुच्चये सामान्यवचनस्य । ३ । ४ । ५ ।' इत्यनुप्रयोगः । संहरेत्यादीनामीहतेः सामान्यवचनप्रयोगात् ॥ ३२ ॥

स्वर्गे विद्यस्व भुव्यास्व भुजङ्गनिलये भव ।
एवं वसन् ममाकाश संबुध्यस्व कृताकृतम् ॥ ३३ ॥

स्वर्ग इत्यादि—त्वं चाकाश ! स्वर्गे विद्यस्व अहं विद्ये । भुवि आस्व आसे । भुजङ्गनिलये पाताले भव भवामीत्येवमभिप्रायः सर्वत्र वसन् तिष्ठन् मम कृताकृतं युक्तायुक्तं बुध्यस्व अवगच्छ । अत्र प्रार्थनायां लोट् । पूर्वत्र 'समुच्चयेऽन्यतरस्याम् । ३ । ४ । ३ ।' इति तस्य च यथायोगं हिस्वादेशः । वसन्निति 'समुच्चये सामान्यवचनस्य ३ । ४ । ५ ।' इत्यनुप्रयोगः । विद्यमानादीनां वसतः सामान्यवचनस्यानुप्रयोगात् ॥ ३३ ॥

एवं पृथिव्यादीनि महाभूतानि कथयित्वा लक्ष्मणमाह—

चितां कुरु च सौमित्रे व्यसनस्यास्य भेषजम् ।
रामस्तुष्यतु मे वाद्य पापां प्लुष्णातु वानलः ॥ ३४ ॥

चितामित्यादि—हे सौमित्रे ! व्यसनस्यास्य मिथ्यादूषणस्य भेषजं प्रतिक्रियां चितां कुरु । अत्र विधौ लोट् । मम अमौ विशुद्धाया रामो नियोगतस्तुष्यतु । अनलो वा मां पापां नियोगतः प्लुष्णातु दहतु । दहन् मर्त्यलोकान्मोचयात्वित्यर्थः । 'लोट् च ३ । ३ । १६२ ।' इति निमन्त्रणे लोट् । 'प्लुष प्रुष स्नेहनमोचनपूरणेषु' इति क्र्यादिः, मोचने द्रष्टव्यः' अनेकार्थत्वाद्दाहे ॥ ३४ ॥

---

१ 'नभोऽन्तरिक्षं गगनम् ।' इत्यमरः ।

**राघवस्य मतेनाथ लक्ष्मणेनाचितां चिताम् ।**
**दृष्ट्वा प्रदक्षिणीकृत्य रामं प्रगदिता वचः ॥ ३५ ॥**

राघवस्येत्यादि--अथ राघवस्य मतेनानुज्ञातेन 'क्तस्य च वर्तमाने ।२।३।६७।' इति षष्ठी । 'मतिबुद्धिपूजाऽर्थेभ्यश्च । ३ ।२ । १८८ ।' इति वर्तमाने क्तः । तस्य वा मतेनानुज्ञया चितामाचितां रचितां दृष्ट्वा प्रदक्षिणीकृत्य सीता रामं प्रगादिता वचो गदितुं प्रवृत्ता ॥ ३५ ॥

**प्रवपाणि वपुर्वह्नौ रामाहं शङ्किता त्वया ।**
**सर्वे विदन्तु शृण्वन्तु भवन्तः सप्लवङ्गमाः ॥ ३६ ॥**

प्रवपाणीत्यादि—येऽत्र सन्निहिता देवादयः ते सर्वे सप्लवङ्गमा वानरैः सह भवन्तः विदन्तु चेतसा जानन्तु । शृण्वन्तु श्रोत्रविषयीकुर्वन्तु मद्वचनम् । हे राम ! त्वया दुष्टेति शङ्किता अहं वह्नौ वपुः शरीरं प्रवपाणि नियोगतः प्रक्षिपाणि । 'लोट् च ।३।१६२।'इति निमन्त्रणे लोट् ।'आनि लोट् ।८।४।१६' इति णत्वम् ॥ ३६ ॥

**मां दुष्टां ज्वलितवपुः प्लुषाण वह्ने संरक्ष क्षतमलिनां सुहृद्यथा वा ।**
**एषाहं क्रतुषु वसोर्यथाज्यधारा त्वां प्राप्ता विधिवदुदीर्णदीप्तिमालम् ॥३७**

**इति महावैयाकरणश्रीभट्टिप्रणीते रामचरिते तिङन्त-काण्डे लोट्प्रदर्शनो नाम विंशतितमः सर्गः ॥ २० ॥**

मामित्यादि--हे वह्ने ! यद्यहं दुष्टा तदा ज्वलितवपुः ज्वलितशरीरः सन् । मित्त्वाभावपक्षे रूपम् । प्लुषाण देहं मर्त्यलोकात् मोचय । यथा वा क्षतमलिनां विशुद्धां सुहृदिव संरक्ष वा । आमन्त्रणे कामचारकरणे लोट् । एषाहं त्वां विधिवत् शास्त्रानुसारं सम्यक् प्राप्ता क्रतुषु वसोः राज्ञः आज्यधारेव । उदीर्णदीप्तिमालम् उद्गतज्वालासमूहं त्वामिति ॥ ३७ ॥

इति श्रीजटेश्वरापराभिधेय-श्रीजयमङ्गलसूरिविरचितया जयमङ्गला-
ख्यया व्याख्यया समलंकृते श्रीभट्टिप्रणीते रामचरिते काव्ये
चतुर्थे तिङन्त-काण्डे लक्षण-रूपे सप्तमः परिच्छेदः,
लक्ष्यरूपे कथानके 'सीताप्रत्याख्यानं' नाम
विंशतितमः सर्गश्च ॥ २० ॥

---

१ 'प्रहर्षिणी'वृत्तम् 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति वृत्तरत्नाकरोक्तेः'

## एकविंशः सर्गः ।

इतः प्रभृति लृङमधिकृत्य विलसितमाह—तत्र लिङ्निमित्ते लृङ् क्रियातिपत्तौ भविष्यति भूते च । हेतुहेतुमतोर्लिङित्येवमादिकं लिङो निमित्तं क्रियातिपत्तिश्च । कुतश्चिद्वैगुण्यात् क्रियाया अनिष्पत्तिः क्रियातिपत्तिः । वैगुण्यं च विधुरप्रत्ययोपनिपातात् सामग्र्यभावाच्च द्रष्टव्यम् ।

**समुत्क्षिप्य ततो वह्निर्मैथिलीं राममुक्तवान् ।**
**काकुत्स्थ दयितां साध्वीं त्वमाशङ्किष्यथाः कथम् ॥ १ ॥**

समुत्क्षिप्येत्यादि—ततोऽनन्तरं मैथिलीं समुत्क्षिप्य हस्ताभ्यामाकाशे धृत्वा वह्निर्देहवान् राममुक्तवान् । हे काकुत्स्थ ! साध्वीं पतिव्रतामपि दयिताम् असाध्वीति त्वं यदाशङ्किष्यथाः शङ्कितवानसि तत्कथं गर्हितमेतत् न युक्तमाशङ्कितुमित्यर्थः । 'विभाषा कथमि लिङ च ।३।३।१४३ ।' इति । अत्र कथंशब्दो गर्हायां च लिङो निमित्तम् । यतस्तत्र गर्हायामित्यनुवर्तते । तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ लृङ् भविष्यतीत्यधिक्रियते। अत्रासाधुत्वक्रियायाः तद्विरुद्धसाधुत्वाभियोगोपनिपातादतिपत्तिर्गम्यते ॥ १ ॥

तदेव साधुत्वं दर्शयति—

**नाभविष्यदियं शुद्धा यद्यपास्यमहं ततः ।**
**न चैनां यक्षपातो मे धर्मादन्यत्र राघव ॥ २ ॥**

नेत्यादि—यद्यहमेनां नैवापास्यं नैव रक्षितवान् ततोऽरक्षणादियं शुद्धा नाभविष्यत्, न भूता । येनैव मया रक्षिता तेनैवेयं शुद्धेति भावः । 'हेतुहेतुमतोर्लिङ् । ३ । ३ । १५६ ।' इत्यतः हेतुर्हेतुमांश्च लिङो निमित्तम् । तत्र पालनस्य परिशुद्धेश्च हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते नित्यं लृङ् । तत्र 'वोताप्योः । ३ ।३।१४१।'इति विकल्पेनाधिक्रियते । अत्रापालनोपनिपातादतिपत्तिर्गम्यते । तदतिपाताद्धेतुमतोऽपि पक्षपातात् त्वयैवमाचरितमिति चेदाह । हे राघव ! धर्मादन्यत्र अधर्मे न मे पक्षपातोऽनुरागः ॥ २ ॥

इदानीं सीतारावणयोर्यच्चेष्टितमासीत् तच्चानेनावधार्य प्रकाशयन्नाह—

**अपि तत्रारिपुः सीतां नार्थयिष्यत दुर्मतिः ।**
**क्रूरं जात्ववदिष्यच्च जात्वस्तोष्यच्छ्रियं स्वकाम् ॥ ३ ॥**

अपीत्यादि—तत्रारिपुः स भवान् रिपुः स रावणः । भवच्छब्दोऽर्था-द्गम्यते, तेन 'इतराभ्योऽपि दृश्यन्ते ।५।३।१४।' इति त्रल । अपि बाढ नार्थयिष्यत दुर्मतिरदुष्टचेता अभविष्यत् तदा सीतां बाढं नार्थयिष्यत । भार्या मम भवेति न प्रार्थितवान् । 'उताप्योः समर्थयोर्लिङ् । ३ । ३ । १५२' इति । अत्रापिशब्दो बाढार्थः लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते नित्यं लृङ् । तत्र 'वोताप्योः ।३ ।३ । १४१ ।' इति अनुवर्तते । अत्रार्थनक्रियायाः तद्विरुद्धदुर्मतित्वोपनिपातादतिपत्तिर्गम्यते । अर्थनमर्थः याचनम् । तत्करोतीति णिच् । नाहमवकल्पयामि यद्यदुर्मतिरभविष्यत् क्रूरं परुषं जातु कदाचित् नावदिष्यत् नोक्तवान् । श्रियं विभूतिं स्वकानात्मीयान् ईदृशी मे विभूतिरिति नास्तोष्यत् न स्तुतवांश्च । 'जातुयदोर्लिङ् । ३ । ३ । १४७ ।' इत्यत्र जातुशब्दोऽनवक्लृप्तिश्च लिङो निमित्तं तत्र । 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ।।३ । ३ ।१४५।' इति वर्तते । अत्र क्रूराभिधानक्रियाया विभूत्याः स्तवनक्रियायाश्च तद्विरुद्धदुर्मतित्वोपनिपातादतिपत्तिः । केचित् 'लडपिजात्वोः' इत्येतदुदाहरन्ति तदयुक्तं तस्यालिङ्निमित्तत्वात् ॥ ३ ॥

सङ्कल्पं नाकरिष्यच्च तत्रेयं शुद्धमानसा
सत्यामर्षमवाप्स्यस्त्वं राम सीतानिबन्धनम् ॥ ४ ॥

सङ्कल्पमित्यादि—तत्रेयं शुभमानसेति नाहमवकल्पयामि यदीयं शुद्धमानसा नाभविष्यत् । तत्र तस्मिन् रावणे इत्थं प्रीयमाणेऽपि सङ्कल्पमभिप्रायमकरिष्यत् कृतवती स्यात् न च कृतवती शुद्धमानसत्वात् । सत्यामर्षमवाप्स्यस्त्वमिति हे राम ! यद्यशुद्धमानसा अभविष्यत् तदा सीतानिबन्धनं सीताहेतुकम् अमर्षं क्रोधं सत्यसंभूतमवाप्स्यस्त्वं प्राप्तः स्याः नतु सत्यं यतः शुद्धमानसा । 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि । ३ । ३ । १४५ ।' इत्यत्र अनवक्लृप्त्यमर्षयोर्लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते वा लृङ् । तत्र 'वोताप्योः । ३ । ३ । १४१ ।' इत्यधिक्रियते । अत्र सङ्कल्पक्रियायाः सत्यामर्षक्रियायाश्च तद्विरुद्धशुद्धमानसत्वोपनिपातादतिपत्तिः ॥ ४ ॥

अन्यथास्मिन्वस्तुनि नाहमेवैकः प्रमाणं भवानपि प्रमाणमेवेति दर्शयन्नाह—

त्वयाद्रक्ष्यत किं नास्याः शीलं संवसता चिरम् ।
अदर्शिष्यन्त वा चेष्टाः कालेन बहुना न किम् ॥ ५ ॥

त्वयेत्यादि—किं नाम तच्छीलं तच्चरित्रं यदस्याः शीलं चिरं कालं संवसता एकत्र सहवासं कुर्वता त्वया नाद्रक्ष्यत नोपलब्धमेव चेतोधर्मत्वान्नोपलब्धमिति चेत् किं वा नाम चेष्टाः शीलनिबन्धनाः क्रियाः बहुनापि कालेन त्वया नाद्रक्ष्यन्त न दृष्टा अभूवन् । अपि तु दृष्टा एव । 'किंवृत्ते लङ्लृटौ ।३।३।१४४।' इति किंशब्दो विभक्त्यन्तो गर्हा च लिङ्गनिमित्तं तत्र गर्हायामित्येतदनुवर्तते तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते लङ् । कर्मण्येव चिण्वदिट् । अत्र शीलानुपलब्धिक्रियायाश्च तद्विरुद्धचिह्नोपनिपातादतिपात्तिर्गम्यते । तथाहि 'शीलं संवसता ज्ञेयं तच्च कालेन भूयसा' इति ॥ ५ ॥

यावज्जीवमशोचिष्यो नाहास्यश्चेदिदं तमः ।
भानुरप्यपतिष्यत् क्ष्मामक्षोभिष्यत चेदियम् ॥ ६ ॥

यावदित्यादि—अन्यच्च लोकस्याज्ञानमूलं परगृहोषितेत्येतावतैवापरिशुद्धेत्यज्ञानमुत्पन्नमिदं तमः अज्ञानं यदि त्वं नाहास्यः न त्यक्ष्यसि तदास्या वैलक्षण्येन मरणादवश्यं यावज्जीवमशोचिष्यः शोकमेष्यसि । अतो मयाभिधीयमानः स्वयं च विमृशन् परिशुद्धा हीयमित्यवेहि येन न शोचिष्यसि । अत्र भविष्यदज्ञानात्त्यागो हेतुः । यावज्जीवशोचनं हेतुमत् । तयोर्हेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भविष्यति नित्यं लङ् । अत्राज्ञानत्यागक्रियायास्तद्विरुद्धोपदेशकत्वमर्षितज्ञानोत्पादानिपातादतिपत्तिर्गम्यते । अन्यच्च अभूतवस्तूत्पादकसूचक उत्पातो भवति न च तथाभूतोऽस्तीति दर्शयन्नाह । यदीयमक्षोभिष्यत् दुष्टचित्ताभूत् तदा भानुरपि क्ष्मां पृथ्वीमपातिष्यत् गतोऽभूत् । अत्रापि क्षोभो हेतुः भानुपतनं हेतुमत् तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते लङ् । अत्र क्षोभक्रियायास्तद्विरुद्धाक्षोभोपनिपातादतिपात्तिः ॥ ६ ॥

अन्यच्च सत्येन सवित्रा लोकपाला अदुष्टचित्तेषु संनिधीयन्ते इति दर्शयन्नाह—

समपत्स्यत राजेन्द्र स्त्रैणं यद्यत्र चापलम् ।
लोकपाला इहायास्यंस्ततो नामी कलिद्रुहः ॥ ७ ॥

समेत्यादि—स्त्रीणामिदं स्त्रैणं चापलं चारित्र्यबन्धनं तदत्र सीतायां हे राजेन्द्र ! समपत्स्यत संपन्नमभूत् । ततः कारणादमी लोकपालाः एव मादयो मूर्तिमन्तः कलिद्रुहः पापस्य द्रोग्धारः इह नायास्यन् नागता अभूवन । चापलमत्र

हेतुः। लोकपालागमनं हेतुमत् । ततो हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियाऽतिपत्तौ सत्यां भूते लङ् । अत्र चापलाचरणक्रियायास्ताद्विरुद्धाचापलोपनिपातादतिपत्तिः ॥ ७ ॥

अन्यच्च योषित्सामान्येन नेयं द्रष्टव्येति दर्शयन्नाह—

आश्चर्यं यच्च यत्र स्त्री कृच्छ्रेऽवर्त्स्यन् मते तव ।
त्रासादस्यां विनष्टायां किं किमालप्स्यथाः फलम् ॥ ८ ॥

आश्चर्यमित्यादि—यच्च यत्र या भवति स्त्री यत्तव कृच्छ्रे मते सङ्कटेऽभिप्राये अवर्त्स्यत् प्रवृत्तिमती तदाश्चर्यं चित्रमेव वर्तते । नान्येति भावः। 'चित्रीकरणे च । ३ । ३ । १५० ।' इत्यत्र 'यच्चयत्रयोः । ६ । ३ । १४८।' इत्यनुवर्तते । यच्चयत्रशब्द उपपदे गम्यमानं चित्रीकरणं लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियाऽतिपत्तौ सत्यां भूते लङ् । अत्र कृच्छ्राभिप्रायानुवर्तनक्रियायास्तस्यां योषिदनुवर्तनं सामग्र्यभावाद्गम्यते । अन्यच्च स्वभावत एव योषित् कातरा भवति, ततश्च परगृहावस्थितया दुष्टेति क्रोधादहमवधिष्यमिति त्रासादस्यां विपन्नायां प्रच्छन्नविषयं गतायां सत्यां किं किमालप्स्यथाः फलं नाहमवकल्पयामि । किं नाम तत्र फलं यदाप्स्यासि नैवेत्यर्थः। 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि । ३ । ३ । १४५ ।'इत्यत्रापिशब्दात् किं तमनवक्लृप्तिश्च लिङो निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भविष्यति लङ्। अत्र फलप्राप्तिक्रियायास्तद्वदन्यसामग्र्यभावात् गम्यते।'किंकिलालप्स्यथाः फलम्' इति पाठान्तरं तदयुक्तं 'किंकिलास्त्यर्थेषु । ३ । ३ । १४६ ।' इत्येतस्य लिङ्निमित्तत्वाभावात् ॥ ८ ॥

अथवा नाहं दुष्टेत्यवगच्छन्त्या योषितस्त्रास एव नास्ति येन गर्हितं मरणमाचरेदिति दर्शयन्नाह—

यत्र यच्चामरिष्यत्स्त्री साध्वसाद्दोषवर्जिता ।
तदसूयारतौ लोके तस्या वाच्यास्पदं मृषा ॥ ९ ॥

यत्रेत्यादि—गर्हितमेतत् यच्च यत्र या भवति स्त्री दोषवर्जिता शुद्धचरित्रापि साध्वसात् पवित्रासादमरिष्यत् मृताभूत् नैवेत्यर्थः । अदुष्टायाः साध्वसाभावात् । गर्हायामित्यत्र यच्चयत्रशब्द उपपदं गर्हा च लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते वा लङ् । अत्र मरणक्रिया-

यास्तद्विरुद्धसाध्वसे परनिपाताद्विपत्तिर्गम्यते । यदि हि त्रासात् म्रियेत दोष एव स्यादित्याह । तन्मरणं लोकेऽस्मिन्नसूयारतौ सत्स्वपि गुणेषु दोषाविष्करणपरे तस्या अदुष्टाया योषितः वाच्यास्पदं वचनीयाश्रयं मृषा अलीकमेव दुष्टैवेयम् मृषा अलीकमेव येन प्रच्छन्नमृतेति । यदि मरणमकरिष्यत् मृषावचनीयास्पदमभविष्यत् इति क्रियातिपत्तौ योज्यम् । अन्यथा वाक्यमिदमशरीरकं स्यात् इदमवगच्छन्त्यानया प्रच्छन्नमरणं नानुष्ठितम् ॥ ९ ॥

अमंस्यत भवान् यद्वत्तथैव च पिता तव ।
नागमिष्यद्विमानस्थः साक्षाद्दशरथो नृपः ॥ १० ॥

अमंस्यतेत्यादि—यद्वद्यथा भवानमंस्यत दुष्टेति ज्ञातवान् तथैतद्यदि नान्यथा तदा तव पिता दशरथः साक्षात्प्रत्यक्षो विमानस्थः सन् नागमिष्यत् नागतवान् स्यात् । अत्र दुष्टताभवनं हेतुः दशरथागमनं च हेतुमत् । तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते लृङ् । अत्र दुष्टताभवनक्रियायास्तद्विरुद्धादुष्टत्वोपनिपाताद—तिपत्तिः ॥ १० ॥

नाकल्प्स्यत्सन्निधिं स्थाणुः शूली वृषभवाहनः ।
अन्वभाविष्यतान्येन मैथिली चेत् पतिव्रता ॥ ११ ॥

नाकल्प्स्यदित्यादि—मैथिली पतिव्रता सती चेद्यदि त्वत्तोऽन्येनान्वभाविष्यत परिभुक्ताभूत् । चिण्वदिट् । तदायं स्थाणुर्महादेवः शूली वृषभवाहनः व्यक्तचिह्नः सन् सन्निधिं सन्निधानं नाकल्प्स्यत् न कृतवान् स्यात् । 'तासि च क्लृपः । ७।२।६०।' इति चकारात् स्ये च परस्मैपदे लृङ् । अन्यानुभवनं हेतुः । स्थाण्वागमनं हेतुमत् । पूर्ववत् क्रियातिपत्तौ लृङ् । अत्रान्यानुभवनक्रियायास्तद्विरुद्धानन्यानुभवनोपनिपातादतिपत्तिः ॥ ११ ॥

आनन्दयिष्यदागम्य कथं त्वामरविन्दसत् ।
राजेन्द्र विश्वसूर्धाता चारित्र्ये सीतया क्षते ॥ १२ ॥

आनन्दयिष्यदित्यादि—हे राजेन्द्र ! सीतया चारित्र्ये क्षते कुत्सिते कृते सति एष धाता ब्रह्मा विश्वसूः सर्वस्य जगतः स्रष्टा अरविन्दसत् कमलासनः

---

१ भये । 'भीतिर्भीः साध्वसं भयम् ।' इत्यमरः । २ वृषभेण धर्मेण तद्रूपेण नन्दीश्वरेण वाह्यत इति तथोक्त इति केचित् । ३ प्रत्यक्षभूतः ।

सन् आगम्य त्वां कथमानन्दयिष्यत् दर्शनाशीर्वादादिभिरानन्दितवान् गर्हितमेतत् । युक्तमागत्यानन्दयितुमित्यर्थः । 'विभाषा कथमि लिङ् च ।३।३।१४३।' इति कथंशब्दो गर्हा च लिङ्निमित्तं तस्मिन् क्रियातिपत्तौ भूते लृङ् । अत्रानन्दनक्रियायास्तद्विरुद्धचारित्र्यक्षतोपनिपाताद-तिपत्तिः ॥ १२ ॥

प्रणमन् ब्रह्मणा प्रोक्तो राजकाधिपतिस्ततः ।
नाशोत्स्यन्मैथिली लोके नाचरिष्यदिदं यदि ॥ १३ ॥

प्रणमन्नित्यादि—ततोऽनन्तरं राजकाधिपतिः राजसमूहानां पतिः । राजकं राजसमूहः । 'गोत्रोऽक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् । ४।२। २९।' इति वुञ् । रामः प्रणमन् ब्रह्माणमित्यर्थात् । ब्रह्मणा प्रोक्तः मैथिली यदि इदं वह्निप्रवेशनं नाचरिष्यत् नानुष्ठितवती तदा लोके दुराराधे नाशोत्स्यत् न शुद्धाभूत् किन्तु शुद्धा । 'शुध शौचे' दिवादिः । अत्राग्निप्रवेशाचरणं हेतुः अशोधनं च हेतुमत् । तयोर्हेतुहेतुमत्त्वे लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ् । अत्राग्निप्रवेशाचरणक्रियायास्तद्विरुद्धाचरणोपनिपाताद-तिपत्तिः ॥ १३ ॥

नामोक्ष्याम वयं शङ्कामिहाधास्यन्न चेद्भवान् ।
किंवा चित्रमिदं युक्तं भवान् यदकरिष्यत ॥ १४ ॥

नेत्यादि—चेद्यदि भवानिह सीतां नाधास्यत् न रोपितवान् । अन्तर्भावि-तोऽत्र ण्यर्थः । तदा वयं किं शुद्धा नेति शङ्कां नामोक्ष्याम न मुक्तवन्तः । अस्मिन् वस्तुनि अग्निप्रमाणत्वेन लोको गृह्णीयादित्येवमुक्तवान् । अन्यथा ब्रह्मणः सर्ववेदित्वात् कथं शङ्का स्यात् । अत्राधानं हेतुः शङ्कात्यागश्च हेतु-मान् । अस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ् । अत्रानाधानक्रियाया-स्तद्विरुद्धाधानोपनिपातादतिपत्तिर्गम्यते । अथवा नाहमवकल्पयामि यदीदं पर-गृहोषितायाः अग्निप्रवेशशोधनं युक्तं न्याय्यम् तत् भवान् किं चित्रमकरि-ष्यत् विस्मयनीयं कृतवान् । एवं राज्ञः लोकस्य व्यवस्थार्थं विशेषे प्रवर्तनात् 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि । ३ । ३ । १४५ ।' इत्यत्रापिशब्दात् किंवृत्त-मनवक्लृप्तिश्च लिङ्निमित्तं तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते लृङ् । अत्र चित्रीकरणक्रियाया अतिपत्तिस्तद्विरुद्धस्याचित्रीकरणस्योपनिपातादति-पत्तिर्गम्यते । यदि भवान् परीक्ष्य सीतायाः परिग्रहणमकरिष्यत् लोकोऽपि तथाकरिष्यत ॥ १४ ॥

प्रधानानुयायित्वाल्लोकस्येति दर्शयन्नाह–

**प्रावर्तिष्यन्त चेष्टाश्चेदयाथातथ्यवत्तव ।**
**अनुशास्ये त्वया लोके रामावत्र्स्यस्तरां ततः ॥ १५ ॥**

प्रावर्तिष्यन्तेत्यादि–चेद्यदि तव लोकव्यवस्थाकारिणश्चेष्टाः कर्माणि अयाथातथ्यवत् यथा अज्ञाना असमीक्ष्यकारितया प्रवर्तन्ते तद्वत्प्रावर्तिष्यन्त तथा प्रवर्तनात् त्वया अनुशास्ये व्यवस्थायां स्थाप्ये लोके हे राम ! ताश्चेष्टा अवर्त्स्यस्तराम् अतिशयेन प्रावर्तिष्यन्त न च तव प्रवृत्ताः । अत्र रामचेष्टाप्रवर्तनं हेतुः लोकचेष्टाप्रवर्तनं च हेतुमत् । तस्मिन् लिङ्निमित्ते क्रियातिपत्तौ भूते भविष्यति लृङ् । अत्रापि परीक्ष्य स्वीकरणलक्षणक्रियायास्तद्विरुद्धपरीक्षितोपादानानतिपत्तिः । अयाथातथ्यवदिति वतिप्रत्ययान्तं क्रियाविशेषणम् । 'यथातथायथापुरयोः पर्यायेण ।७।३।३१।' इति नञः पर्यायेण वृद्धिः । प्रावर्त्स्यस्तरामिति 'तिङश्च ।५।३।५६।' इत्यातिशयिकस्तरः। 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ५।४।११।' इत्याम् । 'नश्छव्यप्रशान् । ८ । ३ ७ ।' इति रुत्वं पूर्वस्यानुस्वारः ॥ १५ ॥

**प्रणमन्तं ततो राममुक्तवानिति शङ्करः ।**
**किं नारायणमात्मानं नाभोत्स्यत भवानजम् ॥ १६ ॥**

प्रणमन्तमित्यादि—ततो ब्रह्मवचनानन्तरं शङ्करो महादेवः वक्ष्यमाणम् वचनं राममुक्तवान् । प्रणमन्तं तमेव राममित्यर्थात् । किन्नाम तत् यथा आत्मानम् नारायणमजं नित्यं अस्मिन् प्रादुर्भावे भवान्नाभोत्स्यत न बुद्धवान् । अपि तु तथाविधं कर्म कुर्वन् ज्ञातवानेव । अत्र नारायणानवबोधक्रियायाः तद्विरुद्धबोधनोपनिपातादतिपत्तिः ॥ १६ ॥

तदेव दर्शयन्नाह–

**कोऽन्योऽकर्त्स्यदिह प्राणान् दृप्तानां च सुरद्विषाम् ।**
**को वा विश्वजनीनेषु कर्मसु प्राघटिष्यत ॥ १७ ॥**

क इत्यादि—यदि नारायणो न भवान् तदा तस्मादन्यः को नाम सुरद्विषां राक्षसानां दृप्तानां प्राणानकर्त्स्यत् छिन्नवान् । 'कृती च्छेदने' । नैव । विश्वजनीनेषु सर्वलोकहितेषु कर्मसु अनुग्रहलक्षणेषु को नाम प्राघटिष्यत चेष्टितवान् । अत्राच्छेदनक्रियाया अघटनक्रियायाश्च तद्विरुद्धच्छेदनघटनो-

---

१ स्वम् । २ वस्तुदृष्ट्याऽजन्मानमित्यर्थः ।

पनिपातादतिपत्तिः । सर्वत्र 'किंवृत्ते लिङ्लृटौ ।३।३।१४४।' इति क्रियातिपत्तौ भूते गर्हायां लङ् ॥ १७ ॥

दैत्यक्षये महाराज ! यच्च यत्राघटिष्यथाः ।
समाप्तिं जातु तत्रापि किं नानेष्यस्त्वमीहितम् ॥ १८ ॥

दैत्यक्षय इत्यादि-हे महाराज ! नैवेदमवकल्पयामि दैत्यक्षयनिमित्तम् यच्च यत्र त्वमघटिष्यथाः यां पुनरात्मनो घटनां करिष्यसि किन्तु पुनः प्रादुर्भावे घटिष्यसे । तत्रापि प्रादुर्भावत्वमीहितं चेष्टितं जातु कदाचित् समाप्तिं सिद्धिं नानेष्यः किं न नेष्यसि । 'जातुयदोर्लिङ् ।३।३।१४७।' इति जातुयच्छब्दौ अनवक्लृप्तिश्च लिङ्निमित्तं तस्मिन् क्रियातिपत्तौ भविष्यति नित्यं लङ् । अत्राघटनक्रियायाश्चातिपत्तिः ज्ञानेनोपलब्धभविष्यत्प्रादुर्भावसमाप्तिनयनयोस्तद्विरुद्धयोरुपनिपातात् ॥ १८ ॥

तातं प्रसाद्य कैकेय्या भरताय प्रपीडितम् ।
सहस्रचक्षुषं रामो निनंसुः परिदृष्टवान् ॥ १९ ॥

तातमित्यादि—तातं दशरथं कैकेय्या प्रपीडितं सन्तापितं भरताय भरतार्थं राज्येऽभिषिच्यतामिति प्रसाद्य प्रसन्नं कृत्वा तद्विषये चित्तकालुष्यं त्याजयित्वा रामः सहस्रचक्षुषम् इन्द्रं परिदृष्टवान् संदृष्टवान् । निनंसुः नन्तुमिच्छुः ॥ १९ ॥

प्रेता वरेण शक्रस्य प्राणन्तः कपयस्ततः ।
संजाताः फलिनानम्ररोचिष्णुद्रुमसद्रवः ॥ २० ॥

प्रेता इत्यादि—ततः प्रणामानन्तरं शक्रस्य प्रसन्नस्य वरेण कपयः संग्रामे प्रेताः संग्रामे मृताः प्राणन्तो जीवन्तः सञ्जाताः संवृत्ताः । कीदृशा इत्याह—फलिनाः फलवन्तः 'फलबर्हाभ्यामिनच्' अत एव आनम्राः नमनशीलाः रोचिष्णवः दीपनशीलाः ये द्रुमास्तेषु सद्रवः सदनशीलाः । 'दाधेट्सिशदसदो रुः । ३।२।१५९।' इति सदे रुः ॥ २० ॥

भ्रमरकुल कुलोल्बणसुगन्धिपुष्पतरु-
स्तरुणमधूकसम्भवपिशङ्गिततुङ्गशिखः ।

शिखरशिलान्तरालपरिक्लृप्तजलापसरः ।
सरसफलश्रियं स विततान सुवेलगिरिः ॥ २१ ॥

भ्रमरेत्यादि---वरेण च सुवेलगिरिः सरसाम् अभिनवां फलश्रियं विभूतिं विततान विस्तृतवान् । भ्रमरकुलैराकुला व्याप्ता उल्बणाः सुगन्धयश्च सपुष्पास्तरवो यत्र गिरौ । तरुणानाम् अभिनवानां मधूकानां यः सम्भवः तेन पिशङ्गितास्तुङ्गाः शिखाः शिखराणि यत्र । शिखरशिलानामन्तरालेषु परिक्लृप्ता जलापसरा जलधारा यत्र । जलमपसरत्येभ्य इति 'ऋदोरप् ।३।३।५७।' ॥२१॥

संवाद्भिः सकुसुमरेणुभिः समीरैरानम्रैर्बहुफलधारिभिर्वनान्तैः ।
श्च्योतद्भिर्मधुपटलैश्च वानराणामाप्यानो रिपुवधसम्भवः प्रमोदः॥२२॥

संवाद्भिरित्यादि—सम्भवत्यस्मादिति सम्भवः । रिपुवधः सम्भवो यस्य प्रमोदस्य स वानराणामाप्यानः वृद्धिं गतः । व्यवस्थिताविभाषाविज्ञानात् सोपसर्गस्य प्यायतेः पीभावो न भवति । 'ओदितश्च । ८ । २ । ४५ ।' इति निष्ठानत्वम् । कैराप्यानः समीरैः सकुसुमरेणुभिः संवाद्भिः वहद्भिः । वनान्तैः फलभरधारिभिः अत एवानम्रैः । मधुकरपटलैः श्च्योताद्भिः मध्विव-त्यर्थात्[१] ॥ २२ ॥

आयान्त्यः स्वफलभरेण भङ्गुरत्वं
भृङ्गालीनिचयचिता लतास्तरूणाम् ।
सामोदाः क्षितितलसंस्थितावलोप्या
भोक्तॄणां श्रममुदयं न नीतवत्यः ॥ २३ ॥

## इति भट्टिकाव्यापरनामधेये रामचरितकाव्ये तिङन्तकाण्डे लङ्काप्रदर्शनो नाम एकविंशतितमः सर्गः ॥

आयान्त्य इत्यादि---तरूणां लताः स्वफलभरेण भङ्गुरत्वं सुभेद्यत्वमाया-न्त्यः गच्छन्त्यः । सामोदाः अतएव भृङ्गालीनिचयचिताः । क्षितितलसं-स्थितैरेव अवलोप्तुं शक्याः । भोक्तॄणां कपीनां श्रमं चित्तकायक्लेशम् उदयम् वृद्धिं

---

१ अत्र नर्दटकं छन्दः । 'यदि भवतो नजौ भजजला गुरु नर्दटकम् ।' इति वृत्तरत्नाकरोक्तेः । २ अत्रापिमे च पद्ये प्रहर्षिणी वृत्तम् । तल्लक्षणं चोक्तं प्राक् ।

न नीतवत्यः । 'विनीतवत्यः' इति पाठान्तरम् । उत्पूर्वादयतेः कर्तर्यच् । वृद्धिमुपगच्छन्तं श्रममपनीतवत्य इत्यर्थः ॥ २३ ॥

इति श्रीजटेश्वरापराभिधश्रीजयमङ्गलसूरिविरचितया जयमङ्गलाख्यया
व्याख्यया समलङ्कृते श्रीरामचरितापराभिधे भट्टिकाव्ये चतुर्थे
तिङन्तकाण्डे लक्षणरूपेऽष्टमः परिच्छेदः, लक्ष्यरूपे
कथानके 'सीतासंशोधनं' नाम एकविंशतितमः
सर्गश्च ॥ २१ ॥

---

इतः प्रभृति लुटमधिकृत्य विलसितमाह—तत्र भविष्यदनद्यतने लुट् ।

**ततो रामो हनूमन्तमुक्तवान् हृष्टमानसम् ।**
**अयोध्यां श्वः प्रयातासि कपे भरतपालिताम् ॥ १ ॥**

**तत** इत्यादि—ततः सीतासंशोधनानन्तरं रामो हनूमन्तं हृष्टमानसं स्वामिकार्यस्य निष्पादितत्वात् उक्तवान् । हे कपे ! श्वोदिने अयोध्यां भरतपालितां प्रयातासि गन्तासि । 'तासस्त्योर्लोपः ।७।४।५०।' ॥ १ ॥

**गाधितासे नभो भूयः स्फुटन्मेघघटावलि ।**
**ईक्षितासेऽम्भसां पत्युः पयः शिशिरशीकरम् ॥ २ ॥**

**गाधितास** इत्यादि—भूयः पुनरपि नभः गाधितासे प्रस्थातासे । 'गाधृ प्रतिष्ठालिप्सयोः' इत्यनुदात्तेत् । त्वद्गमनवातात् स्फुटन्त्यः खण्डशो भवन्त्यः मेघघटा वलयो मेघसमुदायपङ्क्तयो यत्र नभसि । अम्भसां पत्युः समुद्रस्य पयः शिशिरशीकरम् ईक्षितासे द्रष्टासि ॥ २ ॥

**सेवितासे प्लवङ्ग त्वं महेन्द्राद्रेरधित्यकाः ।**
**व्युत्क्रान्तवर्त्मनो भानोः सहज्योत्स्नाकुमुद्वतीः ॥ ३ ॥**

**सेवितास** इत्यादि—हे प्लवङ्ग ! भानोरादित्यस्य व्युत्क्रान्तवर्त्मन अत्युच्चत्वादतिक्रान्तमार्गस्य महेन्द्राद्रेः अधित्यकाः उपरिभागान् । कुमुद्वतीः विद्यमानकुमुदाः सह ज्योत्स्नया पश्चाद्विशेषणसमासः । सज्योत्स्ना वा कुमुद्वत्यः कुमुदाकरा यासु अधित्यकासु तास्त्वं सेवितासे अनुभवितासि । प्लवेन गच्छतीति कर्तरि खच् ॥ ३ ॥

चन्दनद्रुमसंच्छन्ना निराकृतहिमश्रथाः ।
दर्शितारस्त्वया ताश्च मलयोपत्यकाः शुभाः ॥ ४ ॥

चन्दनेत्यादि—ताश्च पूर्वं दृष्टा मलयोपत्यकाः मलयासन्नाः भुवः शुभाः चन्दनद्रुमसंच्छन्नत्वात् । निराकृतहिमश्रथाः तिरस्कृतचन्द्राः । त्वया दर्शितारः श्वो द्रष्टव्याः । कर्मणि लुट् । चिण्वदिट् चेति सकारलोपः । हिमं श्रथ्नाति मुञ्चतीति हिमश्रथः चन्द्रः । 'श्रन्थ सेचनप्रतिहर्षयोः' इति कर्मण्यण् 'अवोदैधौद्मप्रश्रथहिमश्रथाः । ६ । ४ । ६९ ।' इत्यनुनासिकलोपो निपात्यते ॥ ४ ॥

प्रतन्व्यः कोमला विन्ध्ये सहितारः स्यदं न ते ।
लताः स्तबकशालिन्यो मधुलेहिकुलाकुलाः ॥ ५ ॥

प्रतन्व्य इत्यादि—विन्ध्ये लताः स्तबकशालिन्यः सकुसुमस्तबकोपेताः मधुलेहिकुलाकुलाः भ्रमरकुलसङ्कुलाः प्रतनुत्वात् । कोमलत्वाच्च । गच्छतस्ते तव स्यदं जवं न सहितारः न सहिष्यन्ते । 'स्यदो जवे ।६। ४। २८ ।' इत्यनुनासिकलोपो निपात्यते ॥ ५ ॥

द्रष्टासि प्रीतिमानारात्सखिभिः सह सेविताम् ।
सपक्षपातं किष्किन्धां पूर्वक्रीडां स्मरन्मुहुः ॥ ६ ॥

द्रष्टास्मीत्यादि—किष्किन्धां च आरात् नातिदूरे द्रष्टास्मि । प्रीतिमान् जातप्रीतिः सन् सखिभिर्मित्रैः सह सेविताम् अनुभूताम् । एवं च कृत्वा पूर्वक्रीडां स्मरन् मुहुः । जषत्वेनाविवक्षितत्वात् षष्ठी न भवति । सपक्षपातं सानुरागमिति क्रियाविशेषणम् ॥ ६ ॥

त्वया सन्दर्शितारौ ते माल्यवद्दण्डकावने ।
उपद्रुतश्चिरं द्वन्द्वैर्ययोः क्लिशितवानहम् ॥ ७ ॥

त्वयेत्यादि—माल्यवान् पर्वतः दण्डकावनं दण्डकेतिनाम्ना प्रसिद्धमरण्यं ते त्वया सन्दर्शितारौ । सम् 'दृशिर् प्रेक्षणे' कर्म्मणि लुट् । ययोर्माल्यवद्दण्डकावनयोः व्यवस्थितैः द्वन्द्वैः सीताया वियोगजन्यैर्दुःखैश्चिरं चिरात् उपद्रुतः अभिभूतः सन् अहं रामः क्लिशितवान् पीडामनुभूतवानिति

---

१ 'उपत्यकाद्रेरासन्ना भूमिः' इत्यमरः ।

भावः । 'क्लिशः क्त्वानिष्ठयोः ।७।२।५०।' इतीट् । 'मृडमृदगुधकुषक्लिशवदवसः क्त्वा ।१।२।७।' इति कित्त्वम् ॥ ७ ॥

आप्तारौ भवता रम्यावाश्रमौ हरिणाऽऽकुलौ।
पुण्योदकद्विजाकीर्णौ सुतीक्ष्णशरभङ्गयोः ॥ ८ ॥

आप्तारावित्यादि—सुतीक्ष्णशरभङ्गयो रम्यावाश्रमौ हरिणा आकुलौ पुण्यैः पवित्रैः उदकैः द्विजैः पक्षिभिश्च आकीर्णौ भवता आप्तारौ प्राप्तव्यौ ॥ ८ ॥

अतिक्रान्ता त्वया रम्यं दुःखमत्रेस्तपोवनम् ।
पवित्रचित्रकूटेऽद्रौ त्वं स्थातासि कुतूहलात् ॥ ९ ॥

अतिक्रान्तेत्यादि—अत्रेः तन्नाम्नो मुनेश्च तपोवनम् रम्यत्वात् रमणीयत्वात् त्वया दुःखमतिक्रान्ता अतिक्रमितव्यम् । चित्रकूटे चाद्रौ पवित्रे पुण्ये कुतूहलात् त्वं स्थातासि ॥ ९ ॥

ततः परं भरद्वाजो भवता दर्शितो मुनिः ।
द्रष्टारश्च जनाः पुण्या यामुनाम्बुक्षतांहसः ॥ १० ॥

तत इत्यादि—ततः तदनन्तरं चित्रकूटात् तन्नाम्नः पर्वतात् गच्छता भवता भरद्वाजो नाम मुनिर्दर्शिता द्रष्टव्यः। जनाश्च पुण्या यमुनाया इदं यामुनं तदिदमम्बु जलं तेन क्षतांहसः[1] यमुनाजलस्य स्नानात् पानाच्च क्षपितपापा द्रष्टारो द्रष्टव्या वा चिण्वदिट् ॥ १० ॥

स्यन्त्वा स्यन्त्वा दिवः शम्भोर्मूर्ध्नि स्कन्त्वा भुवं गताम् ।
गाहितासेऽथ पुण्यस्य गङ्गां मूर्तिमिव द्रुताम् ॥ ११ ॥

स्यन्त्वेत्यादि—अथ अनन्तरं या गङ्गा दिवः स्वर्गात् स्यन्त्वा स्यन्त्वा स्रुत्वा स्रुत्वा । 'आभीक्ष्ण्ये णमुल् च । ३।४।२२।' इति चकारात् क्त्वा च आभीक्ष्ण्ये च द्वे भवतः । शम्भोः महेश्वरस्य मूर्ध्नि जटाजूटे स्कन्त्वा गत्वा भुवं पृथिवीम् गता प्राप्ता । 'क्त्वि स्कन्दिस्यन्दोः । ६।४।३१।' इत्यनुनासिकलोपप्रतिषेधः । तां पुण्यस्य मूर्तिमिव द्रुतां द्रवरूपेण स्थिताम् गाहितासे स्नातुं विलोडितासे ॥ ११ ॥

---

1 क्षतम् अंहः पापं येषां ते । 'कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम् ।' इत्यमरः ।

तमसाया महानीलपाषाणसदृशत्विषः ।
वनान्तान्बहु मन्तासे नागराक्रीडसाक्षिणः ॥ १२ ॥

तमसाया इत्यादि---तमसा एतन्नाम्न्याः नद्याश्च वनान्तान् वनोपकण्ठान् महान् असौ नीलमणिः, स एव पाषाणस्तस्य सदृशी त्विट् कान्तिः अतिश्यामत्वात् येषां ते नगरे भवा इति नागराः तेषाम् आक्रीडः क्रीडा, तस्य साक्षिणः साक्षिभूतास्तान् । बहु अत्यन्तम् मन्तासे श्लाघितासे ॥ १२ ॥

नगरस्त्रीस्तनन्यस्तधौतकुङ्कुमपिञ्जराम् ।
विलोक्य सरयूं रम्यां गन्तायोध्या त्वया पुरी ॥ १३ ॥

नगरेत्यादि---नगरवासिन्यः स्त्रिय इति नगरस्त्रियः अयोध्यावनिताः तासां स्तनेषु यत् पूर्वं न्यस्तं पश्चाद्धौतं कुङ्कुमं तेन पिञ्जरां कपिशवर्णाम् अत एव रम्यां रमणीयाम् सरयूं विलोक्य अयोध्या पुरी त्वया गन्ता गन्तव्या ॥ १३ ॥

आनन्दितारस्त्वां दृष्ट्वा प्रष्टारश्चावयोः शिवम् ।
मातरः सह मैथिल्या तोष्टा च भरतः परम् ॥ १४ ॥

आनन्दितार इत्यादि---अयोध्यायां नगर्यां च त्वां दृष्ट्वा मातरः कौसल्यासुमित्राकैकेय्यः आनन्दितारः आनन्दिष्यन्ति । आवयोरामलक्ष्मणयोः सह मैथिल्या जनकनन्दिन्या सीतया शिवं कल्याणं प्रष्टारः प्रश्नं करिष्यन्ति भरतश्च श्रुत्वा परम् अत्यर्थं तोष्टा प्रीतिं कर्ता । आमन्त्रितार इति पाठान्तरम् । तत्रानित्यण्यन्ता इति दर्शनं तेषां णिज् न भवति।अन्यथा 'णेरनिटि६।४।५१' इति णिचो लोपो न प्राप्नोति । ततश्च आमन्त्रयितार इति स्यात् । अथवा आमन्त्रणम् आमन्त्रः इति घञन्तात् आचारे 'सर्वप्रातिपदिकेभ्यःक्विब् वा वक्तव्यः' इति क्विप् । तदन्तात्तासेरिट्' 'अतो लोपः ।६।४।४८।' इत्यतो लोपे च रूपम् । 'सहमैथिल्योः'इति पाठान्तरम् । तत्रापि बहुव्रीहौ 'नद्यृतश्च । ५ । ४ । १५३।' इति कप् न भवति समासान्तविधिरनित्य इति कृत्वा ॥ १४ ॥

आख्यातासि हतं शत्रुमभिषिक्तं विभीषणम् ।
सुग्रीवं चार्जितं मित्रं सर्वाश्चागामुकान् द्रुतम् ॥ १५ ॥

आख्यातासीत्यादि—हतं शत्रुं रावणं लङ्कायामभिषिक्तं विभीषणम् अर्जितं मित्रं च सुग्रीवं विशिष्टमाख्यातासि कथयितासि सर्वांश्चास्मान् द्रुतमागामुकान् आगमनशीलान् ॥ १५ ॥

गन्तारः परमां प्रीतिं पौराः श्रुत्वा वचस्तव ।
ज्ञात्वैतत्सम्मुखीनश्च समेता भरतो ध्रुवम् ॥ १६ ॥

गन्तार इत्यादि—त्वद्वचनं श्रुत्वा पौराः पौरजनाः परमां प्रीतिं गन्तारो गमिष्यन्ति । एतन्मदागमनवृत्तान्तं श्रुत्वा सम्मुखीनः प्रतिबिम्बाश्रय इव सम्मुखो भूत्वा मामेवागमिष्यति भरतो ध्रुवमसंशयम् ॥ १६ ॥

गते त्वयि पथानेन वयमप्यंहितास्महे ।
लब्धाहेऽहं धृतिं प्राप्ते भूयो भवति सम्मुखे ॥ १७ ॥

गत इत्यादि—त्वयि पथा अनेन मयाभिहितेन गते वयमपि अंहितास्महे प्रयातास्मः । 'अहि गतौ ।' भूयश्च पुनरपि भवति त्वयि सम्मुखे प्राप्ते धृतिमहं लब्धाहे प्राप्तोऽस्मि । 'ह एति । ७ । ४ । ५२ ।' इति तासि सकारस्य हकारः ॥ १७ ॥

गते तस्मिन् गृहीतार्थे रामः सुग्रीवराक्षसौ ।
उक्तवान् श्वोऽभिगन्तास्थो युवां सह मया पुरम् ॥ १८ ॥

गते तस्मिन्नित्यादि—तस्मिन् हनूमति गृहीतार्थे अवगतसन्देशार्थे गते सति रामः सुग्रीवराक्षसावुक्तवान् । युवां मया सह श्वः[1] अभिगन्तास्थः पुरमयोध्यां गमिष्यथः ॥ १८ ॥

द्रष्टास्थस्तत्र तिस्रो मे मातॄस्तुष्टाऽन्तरात्मनः ।
आत्यन्तीनं सखित्वं च प्राप्तास्थो भरताश्रयम् ॥ १९ ॥

द्रष्टास्थ इत्यादि—तत्र च पुनः पुर्यां नोऽस्माकं तिस्रो मातॄः कौसल्याद्याः । स्वस्रादित्वान्न ङीप् । शसि प्रथमयोः पूर्वसवर्णदीर्घत्वम् । तुष्टान्तरात्मनः हृष्टमानसाः द्रष्टास्थः । भरताश्रयं च भरतनिबन्धनं च सखित्वं मित्रत्वमात्यन्ती-

---

१ अनागते दिने इत्यर्थः । 'अनागतेऽह्नि श्वः' इत्यमरः ।

नमत्यन्तं गामीत्यस्मिन्नर्थे 'अवारपारात्यन्तानुकामं गामी । ५ । २ । ११ ।' इति खः । प्राप्तास्थः लब्धासाथे ॥ १९ ॥

नैवं विरहदुःखेन वयं व्याघानितास्महे ।
श्रमोऽनुभविता नैवं भवद्भ्यां च वियोगजः ॥ २० ॥

एवं युवां मम प्रीत्यै कल्प्तास्थः कपिराक्षसौ ।
गन्तुं प्रयतितासाथे प्रातः सह मया यदि ॥ २१ ॥

नैवमित्यादि श्लोकद्वयम्—हे कपिराक्षसौ ! प्रातर्मया सह गन्तुं यदि प्रयतितासाथे यत्नं कर्तास्थः एवं सति युष्मद्विरहदुःखेन वयं न व्याघानितास्महे न पीडिता भवितास्मः । कर्मणि लुट् । चिण्वदिट् । 'संयोजितास्महे' इति पाठान्तरम् । न संयोजिता भवितास्मः । युजेर्ण्यन्तस्य चिण्वदिट् । इटोऽसिद्धत्वात् 'णेरनिटि । ६ । ४ । ५१ ।' इति णिलोपः । भवद्भ्यां च वियोगजः श्रमः खेदो नानुभविता । अत्रापि चिण्वदिट् । एवं मम प्रीत्यै युवां कल्प्तास्थः सम्पादितास्थः । 'लुटि च क्लृपः । १ । ३ । ९३ ।' इति तङभावपक्षः 'तासि च क्लृपः ।७।२।६०।' इतीट्प्रतिषेधः । क्लृपि सम्पद्यमाने चतुर्थी ॥ २० ॥ २१ ॥

उक्तवन्तौ ततो रामं वचः पौलस्त्यवानरौ ।
अनुग्रहोऽयं काकुत्स्थ गन्तास्वो यत् त्वया सह ॥ २२ ॥

उक्तवन्तावित्यादि----ततोऽनन्तरं पौलस्त्यवानरौ विभीषणसुग्रीवौ रामं वच उक्तवन्तौ । हे काकुत्स्थ ! त्वया सह यदावां गन्तास्वः गमिष्यावः अयमनुग्रहः प्रसाद इति ॥ २२ ॥

अनुमन्तास्वहे नावां भवन्तं विरहं त्वया ।
अपि प्राप्य सुरेन्द्रत्वं किं नु प्रत्तं त्वयाऽऽस्पदम् ॥ २३ ॥

अनुमन्तास्वहे इत्यादि----किं च सुरेन्द्रत्वं देवेन्द्रत्वं प्राप्यावप्यावां त्वया सह भवन्तमुत्पद्यमानं विरहं वियोगं नानुमन्तास्महे किं पुनस्त्वया प्रत्तं दत्तम् । 'अच उपसर्गात्तः ।७।४।४७।' आस्पदं राज्यं प्राप्तवन्तौ । अत्र सुतरामेव त्वया सह वियोगो न युज्यते । भवन्तं विरहमिति वर्तमानकालः नानुमन्तास्वह इति भविष्यत्कालेन सम्बध्यमानः साधुर्भवति 'धातुसम्बन्धे प्रत्ययाः ।३।४।१।' इति । एतावल्लुड्विलसितम् ॥ २३ ॥

अथ सर्गभङ्गार्थं छन्दोऽन्तरेण तच्छेषभूतमर्थवशात् प्रकीर्णकक्रियाविलसितं दर्शयन्नाह—

ततः[1] कथाभिः समतीत्य दोषामारुह्य सैन्यैः सह पुष्पकं ते ।
सम्प्रस्थिता वेगवशादगाधं प्रक्षोभयन्तः सलिलं पयोधेः ॥ २४ ॥

तत इत्यादि—कथाभिरनन्तरोक्ताभिः दोषां रात्रिं समतीत्य प्रेरयित्वा ततोऽनन्तरं ते रामादयः पुष्पकं विमानमारुह्य सैन्यैः सह आयोध्यां यातुं संप्रस्थिताः । पयोधेः सलिलमगाधमक्षोभ्यमपि वेगवशात्प्रक्षोभयन्तः ॥ २४ ॥

सेतुं महेन्द्रं मलयं सविन्ध्यं समाल्यवन्तं गिरिमृष्यमूकम् ।
सदण्डकारण्यवर्तीं च पम्पां रामः प्रियायाः कथयन् जगाम ॥२५॥

सेतुमित्यादि—सेतुं समुद्रबन्धनं महेन्द्रं तदाख्यं शैलं मलयं सविन्ध्यं विन्ध्यं च । समाल्यवन्तं माल्यवन्तं च ऋष्यमूकं च गिरिम् दण्डकारण्यगतां च पम्पाम् । एष सेतुस्त्वदर्थे मया कारितः एते च महेन्द्रादयः इत्येवं प्रियायाः[2] सीतायाः कथयन् जगाम । अयोध्याभिमुखं गतवान् ॥ २५ ॥

एते ते मुनिजनमण्डिता दिगन्ताः[3] शैलोऽयं लुलितवनः स चित्रकूटः ।
गङ्गेयं सुतनु विशालतीररम्या, मैथिल्या रघुतनयो दिशन्ननन्द ॥२६॥

एते इत्यादि—शोभना तनुः शरीरं यस्याः सा त्वं हे सुतनु ! क्वचिदुकारान्तमपि स्त्रियः प्रोक्तमिति वचनात् नदीसंज्ञकत्वात् सम्बुद्धिह्रस्वत्वम् । 'कृषिचमितनिसर्जिमज्जिभ्यः' इत्यौणादिकस्तनुशब्दः । एते दिगन्ता मुनिजनैस्तन्निवासिभिर्मण्डिताः भूषिताः । अयं स चित्रकूटः यत्र भरतेनागम्य दृष्टोऽस्मि । लुलितवनोऽस्मद्वेगवशात् । इयं च गङ्गा विशालतीरतया रम्या । एवं मैथिल्या दिशन् कथयन् ननन्द मुदितः ॥ २६ ॥

शिञ्जानभ्रमरकुलाकुलाग्रपुष्पाः शाताम्भःप्रविलयसम्प्लवाभिलीनाः ।
एते ते सुतनु पुरीजनोपभोग्या दृश्यन्ते नयनमनोरमा वनान्ताः॥ २७॥

---

१ अत्राग्रिमे च पद्ये उपजातिश्छन्दः । २ सम्बन्धसामान्यविवक्षयात्र षष्ठी
३ अत्राग्रिमे च प्रहर्षिणीवृत्तम् ।

शिञ्जानेत्यादि—सुतनु ! एते वनान्ताः पुर्या दृश्यन्ते शिञ्जानैः कूजद्भिः भ्रमरकुलैः आकुलाग्राणि पुष्पाणि येषां वनान्तानाम् । प्रविलीयतेऽस्मिन्निति प्रविलयः । 'एरच् ।३।३।५६।' इत्यच् । 'निमिमीलियां खलचोरात्त्वं नेति वाच्यम् ।' इति वार्तिकेन 'विभाषा लीयतेः ।६।१।५१।' इत्यात्वं न भवति । शीताम्भसः प्रविलयः कुल्या तेन यः संप्लवः स्नापना तेनाभिलीनाः कुल्यया सिच्यमानमूलत्वात् । अत एव नयनमनोरमाः रमयतीति कर्तर्यच् । पश्चात् षष्ठीसमासः । एवं च पुरीजनानामयोध्यानिवासिनाम् उपभोग्याः ॥ २७ ॥

स्थानं नः पूर्वजानामियमधिकमसौ प्रेयसी पूरयोध्या
दूरादालोक्यते या हुतविविधहविःप्रीणिताऽशेषदेवा ॥
सोऽयं देशो रुदन्तं पुरजनमखिलं यत्र हित्वा प्रयाता
आवां सीते वनान्तं सह धृतधृतिना लक्ष्मणेन क्षपान्ते ॥ २८ ॥

स्थानं न इत्यादि—हे सीते ! असौ पुरी नोऽस्माकं पूर्वजानां स्थानमधिकम् अयोध्या पूः अतएव च प्रेयसी प्रियतमा । दूरादालोक्यते उच्चप्रासादयोगात् । या हुतैर्विविधैर्हविभिराज्यादिभिः प्रीणिताशेषदेवा । यत्र देशे पुरजनमखिलं समस्तं रुदन्तं क्षपान्ते उषसि हित्वा त्यक्त्वा छलेन आवां वनान्तं प्रयातौ सोऽयं देशः सह लक्ष्मणेन धृतधृतिना धृतसौमनस्येन ॥ २८ ॥

तूर्याणामथ निःस्वनेन सकलं लोकं समापूरयन्
विक्रान्तैः करिणां गिरीन्द्रसदृशां क्ष्मां कम्पयन् सर्वतः ।
सानन्दाश्रुविलोचनः प्रकृतिभिः सार्ध सहान्तःपुरः
सम्प्राप्तो भरतः समारुतिरलं नम्रः समं मातृभिः ॥ २९ ॥

तूर्याणामित्यादि—अथानन्तरं भरतो हनूमतः समुपलब्धरामवृत्तान्तत्वात् सानन्दाश्रुविलोचनः सानन्दाश्रुणी विलोचने यस्य तथाभूतः प्रकृतिभिः अमात्यादिभिः सार्धम् । सहान्तःपुरः अन्तःपुरेण समम् । मातृभिः कौसल्यादिभिः

---

१ अत्र स्रग्धरा वृत्तम् 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति वृत्तरत्नाकरोक्तेः ।

सह मातृभिः हनूमता च सह । अयं नम्रः अनुद्धतः 'समीपं मे नाथ आगतः' इति तूर्याणां निःस्वनेन सकलं लोकं मार्गप्राप्तं समापूरयन् व्याप्नुवन् करिणां च गिरीन्द्रसदृशाम् । 'त्यदादिषु दृशोऽनालोचने कञ्च । ३ ।२।६०।' इति चकारात् किन् । विक्रान्तैः पादन्यासैः क्ष्मां कम्पयन् सर्वतो विधूनयन् 'क्ष्मापयन्' इति पाठान्तरम् । तत्र 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ । ७ । ३ । ३६ ।' इति पुक् । सम्प्राप्तः रामसमीपमित्यर्थः ॥ २९ ॥

अथ ससम्भ्रमपौरजनावृतो भरतपाणिधृतोज्ज्वलचामरः ।
गुरुजनद्विजवन्द्यभिनन्दितः प्रविशति स्म पुरं रघुनन्दनः ॥ ३० ॥

अथेत्यादि--अथ भरतसम्प्राप्त्यनन्तरं रघुनन्दनो रामः ससम्भ्रमेण सादरेण सहर्षेण पौरजनेनावृतः । भरतपाणिना धृतमुज्ज्वलं चामरं यस्य । गुरुजनेन द्विजैर्वन्दिभिश्च स्तुतिपाठकैरभिनन्दितोऽभिष्टुतः सन् पुरमयोध्यां प्रविशति स्म प्रविष्टः ॥ ३० ॥

प्रविधाय धृतिं परां जनानां युवराजं भरतं ततोऽभिषिच्य ।
जघटे तुरगाध्वरेण यष्टुं कृतसम्भारविधिः पतिः प्रजानाम् ॥ ३१ ॥

प्रविधायेत्यादि--प्रविश्य च पुरं प्रजानां पती रामः जनानां धृतिं प्रीतिरूपचेतोवृत्तिं परामुत्कृष्टां प्रविधाय कृत्वा भरतं च युवराजमभिषिच्य ततोऽनन्तरम् तुरगाध्वरेणाश्वमेधेन यष्टुं जघटे चेष्टितवान् । कृतसम्भारविधिः संभ्रियत इति सम्भारः द्रव्यगण इत्यर्थः । कृतोऽनुष्ठितः सम्भारस्य विधिरिति कर्तव्यतालक्षणो येन स इति ॥ ३१ ॥

नायकाभ्युदयान्तं महाकाव्यमिति परिसमापय्य तत्र जयमिच्छता अस्मिन्नादरः कर्तव्य इति दर्शयन्नाह--

इदमधिगतमुक्तिमार्गचित्रं विवदिषतां वदतां च सन्निबन्धात् ।
जनयति विजयं सदा जनानां युधि सुसमाहितमैश्वरं यथास्त्रम् ३२

---

१ अत्र शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् । २ अत्र द्रुतविलम्बितं वृत्तम्, 'द्रुतविलम्बितमाह नभौ भरौ ॥' इत्युक्तेः । ३ अत्रौपच्छन्दसिकं वृत्तम् 'यान्ता औपच्छन्दसिकम्' इति च्छन्दोऽनुशासनोक्तेः,'ओजे षण्मात्रायुज्यष्टौ रगणयगणान्ताश्चेत् अवशिष्टं वैतालीयवत्तदौपच्छन्दसिकम्' इति च्छन्दोऽनुशासनकारः ।

इदमित्यादि—इदं महाकाव्यम् । उक्तेर्वचनस्य यो मार्गः पन्थाः सुसंस्कृतशब्दलक्षणः प्रपञ्चितः तेन चित्रं विस्मयनीयम् । सुसमाहितम् अलङ्कारयुक्तम् । अधिगतं परिज्ञातं सज्जनानां विवादिषतां वक्तुमिच्छतां वदतां च वक्तुं प्रवर्तमानानां सदा विजयं जनयति । सन्निबन्धात् शोभनबन्धात्कारणात् । यथास्त्रमैश्वरं पाशुपतम् । अधिगतमुक्तिमार्गम् अधिगतः प्राप्तः प्रज्ञातो मोचनमार्गः क्षेपणमार्गो येन । चित्रं नानावर्णकेन चित्रितत्वात् । सुसमाहितं युधि संग्रामे विजयं विदधाति तद्वत् ॥ ३२ ॥

तस्मादादरः कर्तव्य इति तत्रापि य एव व्याकरणमधीतवान् तस्यैवात्रादरो युक्त इति दर्शयन्नाह—

दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम् ।
हस्तामर्ष इवान्धानां भवेद्व्याकरणादृते ॥ ३३ ॥

दीपतुल्य इत्यादि—अयं प्रबन्धो महाकाव्यसंज्ञकः । प्रबध्यते विरच्यत इति कृत्वा । शब्दलक्षणमेव चक्षुर्येषां तेषां दीपतुल्यः । अत एवैतत्काव्याधिगमात् स्वातन्त्र्येणान्यानपि शब्दान् प्रयोक्तुं क्षमत्वात् । व्याकरणादृते विना हस्तामर्ष इवान्धानां हस्तामर्ष इवावबोधः यथा अन्धानां हस्तेन घटपटादिवत् । स्वपरामृश्यसंस्थानमात्रपरिज्ञानम् यथावस्थितस्वरूपपरिज्ञानमेवमनधीतव्याकरणानां न शब्दस्वरूपपरिज्ञानं अन्यत्र शब्दश्रवणात् ततश्च तत्स्वरूपापरिज्ञानात् कुतोऽप्यन्यशब्दप्रयोग इति ॥ ३३ ॥

व्याख्यागम्यमिदं काव्य मुत्सवः सुधियामलम् ।
हता दुर्मेधसश्चास्मिन् विद्वत्प्रियतया मया ॥ ३४ ॥

एवं च कृत्वा विदुषोऽनुरुध्यमानेन मयेदं काव्यं कृतमिति दर्शयन्नाह—व्याख्यागम्यमित्यादि—व्याख्यागम्यं व्याख्यानाद्विना बोद्धुं न शक्यते । किमर्थमीदृशं कृतमिति चेत् उत्सवः सुधियामलं शास्त्रे क्षुण्णबुद्धीनां परं प्रमोदो जायते । एवं च सत्यस्मिन् काव्ये विषयभूतदुर्मेधसो व्याकरणबाह्याः मया हता नानुगृहीताः । तस्माद्विद्वत्प्रियतया विद्वांसः प्रिया यस्य मम विद्वत्प्रियः तद्भावस्तत्ता तया हेतुभूतयेति ॥ ३४ ॥

---

१ अत्र पुष्पिताग्रा छन्दः 'गान्तं पुष्पिताग्रा' इति छन्दोऽनुशासनोक्तेः । 'अपरवक्त्रमेवौजयुजोर्गान्तं पुष्पिताग्रा' इति तदर्थः । अपरवक्त्रं च नारलगानजत्रा अपरवक्त्रम्' इति ।

यत्रेदं काव्यं कृतं तद्दर्शयन्नाह—

काव्यमिदं विहितं मया वलभ्यां श्रीधरसूनुनरेन्द्रपालितायाम् ।
कीर्तिरतो भवतान्नृपस्य तस्य प्रेमकरः क्षितिपो यतः प्रजानाम् ॥ ३५ ॥

इति महावैय्याकरणश्रीभट्टिप्रणीते रामचरिते भट्टि-
काव्ये द्वाविंशतितमः सर्गः ॥

काव्यमित्यादि—मया-भट्टिकविना, इदं रामचरितं काव्यं विहितं कृतम् । श्रीधरसूनुना नरेन्द्रनाम्ना नृपेण पालितायां रक्षितायां वलभ्यां वलभीनामपुर्याम् । अत एव काव्यविधानाय या कीर्तिः सा तस्यैव राज्ञो भवतात् । आशिषि तातङ् । यतः प्रज्ञानां प्रेमकरः प्रेमानुकूलः। आनुलोम्ये टः ॥ ३५ ॥

इति वलभीवास्तव्यस्य श्रीस्वामिसूनोः श्रीभट्टिकवेर्महावैयाकरणस्य
कृतौ रावणवधे महातिङन्तकाण्डे लुङ्विलसितनाम्नो नवमपरिच्छेदस्य
जटीश्वरज-यदेवापरमनामधेयश्रीजयमङ्गलस्यानेकशास्त्रव्याख्यानकृतौ
जयमङ्गलाख्यायां टीकायां काव्यस्य 'अयोध्या—प्रत्यागमनं'
नाम द्वाविंशः सर्गः ॥

॥ जयमङ्गलकृता टीका समाप्ता ॥

समाप्तश्चायं ग्रन्थः ।

---

१ अत्र चित्रचमत्कृति नाम छन्दः, 'चित्रचमत्कृति विद्धि भौ रयौ चेत् ।' इति लक्षणात् ।